काव्यमाला. ३.

श्री मङ्खककविविरचितं

# श्रीकण्ठचरितम्

जोनराजकृतया टीकया समेतम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम् ।

तच्च

निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८८७



मूल्यं सार्धं रूप्यकद्वयम् ।

# श्रीकण्ठचरितकाव्यस्य सूचीपत्रम् ।

# काव्यमाला।

## श्रीमङ्खकविकृतं

## श्रीकण्ठचरितम्।

जोनराजप्रणीतया व्याख्ययानुगतम्।

### प्रथमः सर्गः।

उदेति यस्यां प्रकटीभवन्त्यां तिरोहितायां गलतीव विश्वम्।
रविप्रभेवास्तु तमो हरन्ती दृशः प्रबोधाय सरस्वती वः॥

श्रीलौलराजसुतपण्डितभट्टनोनराजात्मजः सहृदयैर्विहिताभ्यनुज्ञः।
काव्ये पुरारिचरिते कुरुतेऽभियोगं वाच्यार्थमात्रविवृतिं प्रति जोनराजः॥
शेषार्थयोरिह विहस्तितबालबोधश्रद्धाप्रतीतिररणिस्थहुताशतुल्या।
कष्टेन यस्य सुचिरादुपतिष्ठतेऽन्नं मांसस्पृहा भवति तस्य हि हासहेतुः॥
लक्ष्यादिना क्वचन सौरभमारभेय तद्वाच्यपोषकतयेत्यवसेयमेव।
अर्थव्ययं स्पृशति पर्वसु यद्दरिद्रस्तत्केवलं भवति मङ्गलभङ्गभीतेः॥

परोपकारिणः सन्तो यशःपुण्यविवृद्धये।
सावधाना भवन्त्वत्र मम स्खलितयोजने॥

जीयात्कृतानङ्गपतङ्गदाहः खट्वाङ्गिनो नेत्रशिखिप्रदीपः।
यस्यान्तिके शुभ्रदशानिवेशश्रियं किरीटेन्दुकराः श्रयन्ते॥ १॥

---

१. अयं मङ्खककविः कश्मीरदेशे सुस्सलसूनोर्जयसिंहमहीपालस्य समये समुत्पन्नः. [जय]सिंहस्य राज्यकालस्तु ११२७ मितात्खिस्तसंवत्सरादारभ्य ११४९ मितसंवत्सर[पर्य]न्तमासीत्. तस्मिन्समये बहवोऽन्येऽपि विद्वांसः कश्मीरेष्वासन्नित्यस्यैव ग्रन्थस्य [पञ्च]विंशमितात्समाप्तिसर्गादवगम्यते. कह्लणमहाकविरप्यस्मिन्नेव समये राजतरङ्गिणी[नाम]कं कश्मीरमहीपालेतिहासग्रन्थं प्रणिनाय. मङ्खककविकृतो मङ्खकोषनाम्ना प्रसिद्ध[को]ऽभिधानग्रन्थोऽपि कश्मीरेषूपलभ्यते. २. एतद्ग्रन्थटीकाकारो राजानकजो[नरा]जोऽपि कश्मीरदेश एव बभूव. अनेनैव जैनोल्लाभदीनराज्यसमये कह्लणादनन्तरं [द्वि]तीया राजतरङ्गिणी प्रणीता. जैनोल्लाभदीनराज्यसमयस्तु १४१७ मितात्खिस्तसंव[त्स]रादारभ्य १४६७ मितसंवत्सरपर्यन्तमासीत्. जोनराजकृताः किरातार्जुनीयादि[का]व्यानामपि काश्चन टीकाः कश्मीरेषूपलभ्यन्ते. ३. लक्ष्यव्यङ्ग्ययोः.

किरीटेन्द्रोमौलिचन्द्रस्य करा रश्मयो यस्य नेत्रशिखिनो निकटे शुभ्रदशाया वर्णान्तरसंनिधानाच्छ्वेततराया अवस्थाया वर्तेश्च निवेशस्तच्छोभां श्रयन्ते सेवन्ते सः। अनङ्गः काम एव पतङ्गः कीटविशेषस्तस्य दाहः स कृतो येन सः । खट्वाङ्गिनो महादेवस्य नेत्राग्निरेव प्रदीपो जीयात्सर्वोत्कृष्टो भूयात् । अग्नेरत्र काव्ये वर्णनीयत्रिपुरदाहसाधकत्वाज्जयप्राप्त्यर्थं तद्द्वारा जगतामपि जयप्राप्त्या सतामुत्साहनार्थं जीयादित्याशीःप्रयोगः । नेत्रशिखीति विशेषेण ग्रहणं भगवतस्त्रिपुरदाहेऽन्यानपेक्षत्वद्योतनार्थम् । तस्य भगवदाद्दतत्त्वेन । सर्वासामग्निशक्तीनां तदुत्थत्वात् । कृतानङ्गपतङ्गदाह इति विशेषणं व्यभिचाराभावेऽपि संगतम् । जीयादित्यत्र हेतुरूपतया तस्योपन्यासात् । 'वक्षःस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य' इत्यत्र जगत्प्रसूतेरितिवत् । अत्र नेत्रशिखिनो जीयादित्याशीर्वादेनानङ्गदाहः कारणम् । उपकृतो ह्युपकारिणमाशास्ते । उपकारः पुरदाहलक्षणोऽनुक्तोऽप्या...तः । यो हि मनोभवं पतङ्गवद्दहति तस्य पुरदाहो दण्डापूपिकया[1] सिद्धः । काम...पूर्वकालावस्थाया वा व्यवच्छेदार्थं विशेषणम् । कृततीर्थयात्रो मैत्रो वन्द्य इति...। नह्यकृतकामदाहस्याग्नेर्जयाशिषा प्रकृतपोषकत्वम् । वर्णनीयस्य त्रिपुरदाहस्य तथाविधेन नेत्राग्निना कथंचिदप्यसूचितत्वात् । अथवा समरसोत्सुकस्य कवेः शिखी जीयादित्युक्तौ कृतानङ्गपतङ्गदाह इति विशेषणं हेतुः । तथाहि 'सर्वैः कैश्चन' (१।५७) इत्यादि...त्तरग्रन्थेन स्वस्य शान्तत्वं प्रकाशिष्यते । अनङ्ग इति भविष्यदवस्थानुगुणस्य नाम्नः प्र...गोऽनुप्रासानुरोधात्कृतः । कामस्य सुदहत्वावबोधार्थमुपन्यस्तस्य पतङ्गरूपस्यानुगुण्य...बोधाय नेत्राग्नेर्दीपरूपणम् । खट्वाङ्गिन इत्ययोगव्यवच्छेदः । न त्वन्ययोगव्यवच्छेदः । ...न इति संहारानुगुणं नाम ग्रन्थारम्भेऽपि निर्दिष्टम् । कामदाहानुगुणत्वात् । शुभ्रदशासहितश्च दीपः पतङ्गं दहति ॥

तनोतु भूतिं दहतादघानि स शूलिनो लोचनपावको वः ।
धूमानभिज्ञोऽपि रतेरजस्रमश्रुस्रुतेर्योऽजनि सूत्रधारः ॥ २ ॥

लोकोत्तरप्रभावत्वात्समिन्निरपेक्षमेव ज्वलन्नत एव धूमस्यानभिज्ञोऽपि यो रतेः कामवध्वा बाष्पप्रवाहस्य सूचनात्सूत्रधारः समपादि स हरस्य नेत्राग्निर्भूतिं विस्तारयतु । पापानि दहतात् । भूतिरैश्वर्यं भस्म च । पावकानुगुणत्वाद्दहतादित्याद्युक्त्युपन्यासः । शूलिनः पावको भूतिं तनोतीति वैचित्र्यप्रतीत्यर्थः शूलिशब्दोपन्यासः । अत्र बाष्पहेतौ धूमेऽसत्यपि बाष्पस्य फलस्योत्पत्त्या विभावनालंकारः ॥

भालस्थलीरङ्गतले मृडस्य हुताशनस्ताण्डवकृत्स वोऽव्यात् ।
यस्मिन्रतिप्राणसमः शरीरमुन्मालकायेव निजं मुमोच ॥ ३ ॥

---

१. दण्डापूपिकेति कैमुतिकन्यायस्यैव नामान्तरम्— 'दण्डा...र्षणे तदवलम्बिनामपूपानामाकर्षणं यथार्थसिद्धं तद्वदित्यर्थः' इति कुवलयानन्दटीका।

रतेः प्राणसमः प्रियः कामो नृत्तप्रीतः सन्नुन्मालकाय पारितोषकदानायेव शरीरं यस्मिंस्तत्याज स पावको हरस्य ललाटभूमिरेव रङ्गतलं तत्र ताण्डवमिव ताण्डवं कर्ता युष्मान्प्रीणयतु । रतिप्राणसम इति पर्यायवक्रतया कामुकत्वावगमेनोन्मालकौदार्यप्रतीतिः ॥

तन्नेत्रमासूत्रितवह्निसख्यमाख्यातु वः शर्म शिवस्य यस्मिन् ।
ज्वालावलीपल्लवकेलितल्पे विनैव रत्या मदनो निदद्रौ ॥ ४ ॥

यस्मिन्नेत्रे ज्वालावल्येव वर्णसंनिवेशाभ्यां पल्लवलीलाशयनं तत्र रतिरहितः कामो निदद्रौ दग्धः । तदासूत्रितमुट्टङ्कितं वह्निना सख्यं येन तच्छिवसंबन्धि नेत्रं वः सुखं प्रथयताम् । मदन इति पर्यायवक्रतया कामुकत्वावगतौ सत्यां विनैव रत्येत्येवकारोपन्याससंगतिः । तदुपोद्बलकं च ज्वालावलीनां पल्लवशय्यारूपणम् ॥

भर्गस्य सीमन्तितभालभित्तिः स्वाहापतिर्वो दुरितं दुनोतु ।
यत्तापयुक्त्येव विलीयमानो न पूर्णतामेति किरीटचन्द्रः ॥ ५ ॥

यत्तापयोगेन विलीयमानो विगलन्मुकुटचन्द्रः पूर्णो न भवति सः । भर्गस्य । सीमन्तिता मध्यस्थाने निवेशेन द्विधा कृता भालभित्तिर्येन सः । स्वाहापतिरग्निर्वः पापं दहतु । अत्र मौलीन्दुपूर्णत्वाभावस्य निमित्तभूताया वस्तुगतेर्निमित्तान्तरेण विलयेनोत्प्रेक्षणम् ॥

स किल्बिषं लुम्पतु वः शराग्निरुमापतेरौर्व इव द्वितीयः ।
यो दानवस्मेरदृशां गणस्य बाष्पाम्बुपूरस्य न तृप्यति स्म ॥ ६ ॥

दानवस्त्रीणामश्रुवारिपूरस्य यो नातृप्यत् । भर्तृवधान्नित्यमेवारोदयदित्यर्थः । अत एव द्वितीयो वाडव इव । वाडवो हि जलेन्धनः । स गौरीपतेः शरदहनो दुरितं दहतु । स्मेरदृशामिति पूर्वावस्थानुगुणम् । 'पूरणगुण–' इति ज्ञापकात्तृप्यतिकर्मणः षष्ठी ॥

स पातु वो विश्वगुरुर्गिरीशो यस्मै शिरःस्थाप्यसकृत्प्रयुङ्क्ते ।
आवर्तमालावलनक्रमेण प्रदक्षिणानीव सुरस्रवन्ती ॥ ॥

शिरःस्था शिरसि तिष्ठन्ती मान्या च । सुरस्रवन्ती गङ्गा । पुनः पुनरावर्तभ्रमणस्य क्रमेण छलपर्यवसायिना यस्मै विश्वगुरुत्वात्प्रदक्षिणानीव करोति स गिरीशो वः पातु । शिरःस्थापीति दण्डापूपिकयेतरेषां प्रदक्षिणदानातिशयप्रतिपादनम् ॥

मालिन्यदैन्यं जगतो हरन्तु हरस्य पीयूषरुचोऽट्टहासाः ।
दिशोऽपि शैवत्वमिव स्पृशन्त्यो यैर्गृह्णते भास्मनमङ्गरागम् ॥ ८ ॥

शिवो देवतास्येति शैवः । यैरट्टहासैः शैवत्वमिवाश्रयन्त्यः । एतेन हराट्टहासानां दिग्व्यापित्वोपादानम् । यैर्भस्माङ्गरागमिव दिशो गृह्णन्ति । दिशोऽपीत्यपिशब्देन सचेत-

नानां शैवत्वग्रहणं दण्डापूपिकया सिद्धम्। अथवाट्टहासानां भस्माङ्गरागेणाभेदाद्ध-स्माङ्गरागौज्ज्वल्याच्छैवत्वोत्प्रेक्षणम्। एतेन हि शिवाचारोऽनुष्ठेयः। अमृतश्रियो हराट्ट-हासा मालिन्येन पापवत्तया दैन्यं दीनतां विश्वस्य निवारयन्तु। मालिन्यस्याध्यवसा-नेन पीयूषरुच इति विशेषणसंगतिः। पूर्वव्याख्यायामट्टहासानां सशब्दत्वशुभ्रत्वाभ्या-मुत्प्रेक्षयोः समुत्थानम्॥

अभ्यर्णवर्तिध्वनदभ्रसिन्धुवीचिं स्तुवे शंकरशेखरेन्दुम्।
अभ्याशतः शिक्षितमीश्वरस्य मुखात्प्रयुञ्जानमिवाट्टहासम्॥ ९॥

प्रत्यासत्तेरीश्वरमुखादधीतमट्टहासं कुर्वाणमिव। यतोऽभ्यर्णवर्तिन्यो निकटाः ध्वनन्त्यः शब्दायमानाः। गङ्गालहर्यो यस्य तं हरमौलिचन्द्रं नमामि। शुभ्रत्वसश-ब्दत्वाभ्यामुत्प्रेक्षणम्॥

नीरन्ध्रभस्मौघसखी तनुर्वः शर्वस्य दुर्वारमघं हिनस्तु।
सर्वाङ्गसंसङ्गिभुजंगमुक्तनिर्मोकपट्टैरवगुण्ठितेव॥ १०॥

नीरन्ध्रोऽविरलो यो भस्मौघस्तस्य सखी शर्वस्य तनुर्दुर्वारं पापं विनाशयतु। अतो भगवतः सर्वाङ्गेषु संसङ्गिनो ये भुजंगाः सर्पास्तैर्मुक्तास्त्यक्ता ये निर्मोकपट्टाः कञ्चुकास्तै-रवगुण्ठिता वलितेव। श्वेतत्वेनोत्प्रेक्षणम्॥

स पातु वो मौलिशशिप्रभावस्रवत्किरीटेन्दुमणिद्रवार्द्रम्।
स्वसाम्यसिद्ध्यै तनुते नतानां यः संगलद्गङ्गमिवोत्तमाङ्गम्॥ ११॥

भगवतो मौलौ यः शशी तस्य यः प्रभावस्तेन स्रवन्तो ये किरीटचन्द्रकान्ता-स्तेषां द्रवः प्रवाहस्तेनार्द्रं नतानां शिरः। संगलन्ती गङ्गा यस्य तदिव। यः स्वसाधर्म्याय कुरुते स वः पातु॥

स नीलकण्ठो जयतादमोघमेघो मरुत्तं प्रति हेमवर्षी।
भूषाफणिग्रामफणामणीनां मरीचिभिः कन्दलितेन्द्रचापः॥ १२॥

भूषायै सर्पसमूहस्तस्य फणामणीनां रश्मिभिर्विहितेन्द्रचापः। नानावर्णत्वात्। मरु-त्तनामानं राजानं प्रति सुवर्णवृष्टौ सफलमेघः। स नीलकण्ठो[1] भगवाञ्जीयात्। मेघश्च समयूरः सेन्द्रचापश्च वर्षति मरुत्वन्तं देशं प्रति॥

शंभोः स्तुवे लोचनवीतिहोत्रं यं पात्रमासाद्य जहच्छरीरम्।
अत्यर्थदानप्रथमप्रयोगं पुपोष पुष्पायुधबोधिसत्त्वः॥ १३॥

यं नेत्राग्निं पात्रमाधारं दानयोग्यमर्थिनं च प्राप्य देहं त्यजन्पुष्पायुध एव बोधि-सत्त्वः। अत्यर्थदानस्य दानमहादानाभ्यामधिकस्य। प्रथममनन्यसेवितं प्रयोगं चकार।

---

1. महाभारत आश्वमेधिके पर्वणि चतुर्थाध्यायमारभ्य मरुत्तकथा द्रष्टव्या.

तं हरनेत्राग्निं नौमि । बोधिसत्त्वश्च दानयोग्यमर्थिनं प्राप्य देहदानमकरोत् । ओहाक-स्त्यागार्थत्वाद्विसर्गदानयोस्त्यजनैकलक्षणत्वाज्जहदित्युभयत्र संगतम् ॥

स वोऽवताद्यच्छिरसि द्युसिन्धुडिण्डीरपिण्डावलिराचकास्ति ।
प्राप्तेव वैरिञ्चकपालमुच्चैर्निषेवितुं वाहनहंसपङ्क्तिः ॥ १४ ॥

द्युसिन्धोर्गङ्गाया डिण्डीरपिण्डाः फेनगुलकास्तेषामावलिर्यच्छिरसि वर्तमानं वैरिञ्चं ब्राह्मं कपालं सेवितुं प्राप्ता । यत उच्चैरुन्नतम् । अर्थाद्विरिञ्चसंबन्धिनी वाहनहंसपङ्क्तिरिव विभाति स वो रक्षतात् । शुक्लत्वसाम्यात्संभावनम् । ब्राह्मकपालधारणोक्त्या भगवतः परमेश्वरत्वप्रतिपादनम् ॥

अब्धिप्रवेशे वडवाग्नितापव्यापत्सहिष्णुत्वमिवेहमाना ।
यस्योर्ध्वनेत्राग्नि[illegible]ज्वालानुषङ्गं गङ्गा शिरस्याश्रयते स वोऽव्यात् ॥ १५ ॥

नदीनां सागरो गतिरिति भाविनि समुद्रप्रवेशे वडवाग्निना या तापव्यापत्तस्याः सहिष्णुत्वमभिलषन्तीव गङ्गा यस्य तृतीयनेत्रेऽग्निस्तज्ज्वालानुषङ्गं सेवते । सात्म्यं हि तथा न दोषकारि । स वो रक्षतात् । एतेन भगवन्नेत्राग्निज्वालानां वडवाग्निसाम्यप्रतिपादनम् ॥

गङ्गातरङ्गानिलपूरणोत्थकपालनादच्छलतश्च यस्य ।
विधुर्यथार्थद्विजराजतार्थं त्रयीमिवाभ्यस्यति सोऽवताद्वः ॥ १६ ॥

यो योऽर्थः । यथार्थं सर्वेऽर्था इत्यर्थः । यथाशब्दो हि वीप्सायाम् । यथावृद्धमितिवत् । 'यथासादृश्ये' इति समासः । यथार्थं सर्वेष्वर्थेषु द्विजराजता तदर्थम् । द्विजराजशब्दस्य द्वावर्थौ प्रसिद्धौ । नक्षत्रराजो ब्राह्मणराजश्च । तत्र नक्षत्रराजोऽस्मि । ब्राह्मणराजोऽपि यथा स्यां तदर्थम् । गङ्गावीचीवातपूरणोत्थितकपालशब्दच्छलाचन्द्रो वेदानिव पठति । स वो रक्षतात् ॥

स वोऽवताद्भ्रूकुटिकालरात्रौ कोपान्धकारं विषमं वमन्त्याम् ।
आरुह्य यन्नेत्रहुताशशय्यां कालो निदद्रावपुनःप्रबोधः ॥ १७ ॥

यस्य भ्रुकुटिः सैवोग्रत्वात्कालरात्रिस्तस्यां कोप एव कार्याकार्यविवेकलोपनादन्धकारस्तं दुर्वारं सृजन्त्यां सत्यां यन्नेत्राग्निरेव शय्या तामधिरुह्य कालोऽविद्यमानपुनःप्रबोधो निदद्रौ । दाहान्मृत्युमवापेत्यर्थः । स वोऽवतात् । रात्रौ चान्धकारे सति लोकः शय्यासु शेते ॥

वाहस्थपञ्चास्यभयादिवाराददत्तझम्पो मृगशावकेन ।
देव्याः स वोऽव्याद्वदनेन्दुबिम्बो यश्चन्द्रिकां दन्तरुचा चिनोति ॥ १८ ॥

देव्या वाहस्थः पञ्चास्यः सिंहः तस्माद्भीत्येव मृगपोतकेनादत्ता झम्पा प्लवो यस्मिन् । अकलङ्क इत्यर्थः । देवीमुखस्य चन्द्रारोपाचन्द्रे च शशस्य नित्यवासित्वप्रसिद्धेः शशस्य

देवीमुखाश्रयणप्राप्तौ निषेधः । यो दन्तकान्त्या ज्योत्स्नां चिनोति । स देवी वदनेन्दुबिम्बो वो रक्षतात् ॥

स दण्डपादो भवदण्डपातमुत्खण्डयन्रक्षतु चाण्डकायाः ।
यस्येन्दुलेखा पुरतः स्फुरन्ती त्रुट्यत्तुलाकोटितुलामुपैति ॥ १९ ॥

नाट्यारम्भ ऊर्ध्वोत्क्षिप्तः पादो दण्डपादः । यस्य दण्डपादस्याग्रे चन्द्रकला छिद्यमाननूपुरसाम्यं प्राप्नोति । कलाग्रहणाद्देव्या हरस्य वा किरीटचन्द्रकला । एतेन हि नाट्यकौशलं प्रतिपादितं भवति । अथवा नाट्यकाले लेखामात्रमेवोदितश्चन्द्रः । संध्याकाले हि देवी नृत्यति । अत एव पुरतो ग्रहणम् । स चण्डिकाया दण्डपादः संसारदण्डपतनं खण्डयन्वो रक्षतात् । दण्डो दण्डं सजातीयं खण्डयतीति वैचित्र्यप्रतिपादनार्थं भवस्य दण्डेन रूपणम् । तुलाकोटित्रोटनोक्त्या नृत्तसंरम्भसूचनम् । त्रुट्यदिति विशेषणेन पादस्य परिणाहित्वं चन्द्रकक्षास्थानादप्युपरिगामित्वं वेगवत्त्वं च प्रतिपादितम् ॥

आकाशदेशं विदधद्विचन्द्रं चण्ड्याः कपालं यशसे तदस्तु ।
जूटाहिरत्नद्युतयो यदन्तः कादम्बरीविभ्रममाश्रयन्ते ॥ २० ॥

चण्ड्या जूटे फणिनस्तेषां मणयस्तत्किरणा यस्य कपालस्यान्तर्मध्ये कादम्बर्या मद्यविशेषस्य विलासमाश्रयन्ते । देव्या हि कपालं पानपात्रम् । तच्चण्ड्याः कपालं कर्तृ आकाशदेशं द्वौ चन्द्रौ यस्य तादृशं कुर्वद्यशसेऽस्तु । अत्र विषयस्य कपालस्य निगरणेन विषयिणश्चन्द्रस्याध्यवसानम् ॥

यो वेगपारिप्लववाहहंसवलक्षवालव्यजनैकपात्रम् ।
स व्यापदं लुम्पतु वो विधातुर्निकेतनं पङ्कजचक्रवर्ती ॥ २१ ॥

वेगेन तरला वाहहंसा एव शुभ्रचामराणि तेषामेकं पात्रमाधारो यः पद्मराजः स ब्रह्मणो निवासः । अत एव पद्मानामीश्वरः । विपदं छिनत्तु । लक्ष्मीगृहमिति पद्मस्य प्रसिद्धेर्विच्छेदोक्तेः । महतां च निवासश्चामरपात्रं भवति । विपदं च निवारयति । चक्रवर्ती च चामराणां पात्रं भवति । तेषां राजलक्ष्मीचिह्नत्वात् ॥

सर्वाङ्गसंवाहनकृत्यभृत्यः पद्मः स वः पद्मभुवः पुनातु ।
यः प्रापदुत्कृष्टपुरंध्रिवक्त्रसाम्यक्रियावेतनसंविभागम् ॥ २२ ॥

यः पद्म उत्कृष्टस्त्रीमुखानां साम्यक्रिया एव वेतनं भृतिस्तस्याः संविभागं संविभजनं प्रापत् । यतः पद्मभुवो ब्रह्मणः पद्मोद्भवत्वात्पद्मासनत्वाच्च सर्वाङ्गाणां संवाहनकृत्ये भृत्यः स पद्मो वः पुनातु । भृत्यश्च लवनादिकर्मणि नियुक्तस्तत्सदृशीं भृतिमर्हति । अथवा स्त्रीमुखैः साम्यमेव वेतनम् । अस्यां व्याख्यायां पद्मस्योपमानत्वेनाधिकगुणत्वोक्तिः । परिणामोऽयम् । भृत्यसंभाविनो वेतनस्य प्रौढोक्त्या प्रतिपादनात् । शेषोपपत्तिस्तु प्रपञ्चभिया नेह संदर्श्यते । अत एव सर्वत्रालंकारचर्चा मुक्ता ॥

अव्याद्विधातुः करपुण्डरीकं विमण्डयन्पाण्डुकमण्डलुर्वः ।
पर्यङ्कपङ्केरुहवैरमुक्तेरिवान्तरङ्गो रजनीभुजंगः ॥ २३ ॥

ब्रह्मणः पाणिमेव श्वेतपद्मं भूषयञ्शुभ्रकमण्डलुर्वो रक्षतात् । नित्यविकसितत्वेनासनपद्मे विरोधत्यागादन्तरङ्गः प्रत्यासन्नश्चन्द्र इव ॥

स संगसीष्टाखिलविष्टपेषु सद्यः प्रसादेन कविः पुराणः ।
चित्रैकरूपेऽपि हि सर्गबन्धे यस्य स्थितोऽनेकरसानुवेधः ॥ २४ ॥

चित्रेणाश्चर्येणैकरूपेऽभिन्नरूपे । आश्चर्यमय इत्यर्थः । सृष्टिबन्धे यस्य विधातुरनेकरसानुवेधोऽसाधारणव्यसनानुषङ्गो भवति । स पुराणः कविर्ब्रह्मा सर्वलोकेषु सद्यो निरायासं संगसीष्ट प्रसन्नो दर्शनं दद्यात् । प्रकृत्यादित्वात्तृतीया । अपिर्विरोधद्योतकः । चित्रेण काव्यालंकारविशेषेण । एकरूपेऽपि सर्गाणां बन्धे यस्य कवेरनेकरसानुवेधः स पुराणः कविः प्रसादेन काव्यगुणेन संगसीष्ट । 'समो गमि–' इत्यात्मनेपदे 'वा गमः' इति कित्त्वम् ॥

मुकुन्दकुक्षेः कुहराभिमृष्टसमस्तवृत्तान्त इवातिमात्रम् ।
यो हेलयैवाखिलविश्वसृष्टिमुन्मीलयत्यब्जभवः स वोऽव्यात् ॥ २५ ॥

जगन्निधेरुदरं प्रविश्य । ल्यब्लोपे कर्मणि पञ्चमी । अभिमृष्टा बुद्ध्या दृष्टाः सृष्टिरचनावृत्तान्ता येनेव स ब्रह्मात्यर्थं हेलयैवाशेषस्य विश्वस्य निर्माणं करोति स वोऽव्यात् । विश्वंभरकुक्षौ प्रलयकाले समस्तविश्वावस्थानादुत्प्रेक्षणम् । यः सकललोकसृष्टिं करोति स कथमब्जभव इति साकूतम् ॥

मूर्तिर्मुकुन्दस्य जयत्युदक्तघर्मच्छटा श्रीभुजबन्धनेषु ।
तत्कालनिष्पीडननिर्जिहानसर्वाङ्गसंधिस्थसरित्कणेव ॥ २६ ॥

लक्ष्मीपरिरम्भेषु रागवशादुदक्ता निर्गता घर्मच्छटा यस्याः सा हरेर्मूर्तिर्जयति । अत उत्प्रेक्ष्यते— तत्काल आलिङ्गनावसरे यन्निष्पीडनं लक्ष्मीस्तनयोः पीडनं तेन निर्जिहाना निर्गच्छन्तः सर्वाङ्गसंधिस्थसरितां कणा यस्याः सेव । 'नद्यः सर्वाङ्गसंधिषु' इत्युत्प्रेक्षाबीजम् । आर्द्रं हि पीडितं सत्स्रवति । 'नाञ्चेः पूजायाम्' इतीडभावः ॥

पापानि वो दैत्यचमूकृतान्तो हिनस्तु कान्तामयवामभागः ।
अद्याप्यमुञ्चन्निव केलिपूर्वमजो विशोकावपुषोऽवशेषम् ॥ २७ ॥

केलिपूर्वं लीलया विशोकारूपं यद्वपुस्तस्य भागमद्याप्यत्यजन्निव दैत्यसेनायमो नारायणः कान्तामयो लक्ष्मीमयो वामो भागो यस्य स वः पापानि वारयतु । अमृतं हर्तुकामान्दैत्यान्कपटस्त्रीरूपेण हरिरवञ्चयदिति प्रवृत्तिः । त्याज्यस्यापि चिररक्षणाद्भगवतोऽनुगृहीतेष्यानुकम्पाप्रतिपादनार्थं संभावनम् ॥

स्तुत्यो हरिर्वामनरूपशोभं श्यामं वपुर्लीनगदं दधानः।
येनान्वहध्यानपरः सहेलमानायि सायुज्यमिवारिलोकः ॥ २८ ॥

वामना दुःखाधारा संकुचिता रूपशोभा यस्य। तथा श्यामं यतो लीना गदा रोगा यस्य तद्वपुर्बिभ्रत्। वैरिवर्गो भयवशान्नित्यं नारायणस्मरणपरायणो येन सायुज्यं स्वसमगुणत्वमिवानीतः स हरिः स्तुत्यः। हरिर्हि बलिवञ्चनार्थमभिनीतवामनरूपोऽन्तर्हितगदायुधः स्वतः श्यामश्च। ध्यानपराणां च भगवान्सायुज्यं ददाति॥

दैत्येन्द्रनारीनयनाञ्जनौघहृतेरिवासादितकालिमा यः।
शेषस्य नीलोत्पलमौलिमाल्यं कल्याणकृद्वोऽस्तु स कौस्तुभाङ्कः॥२९॥

विधवाः स्त्रियो नेत्राण्यञ्जनेन न रञ्जयन्ति। अत उत्प्रेक्ष्यते— दैत्यस्त्रीणां नेत्रेष्वञ्जनहरणादिव यः प्राप्तश्यामलिमा सः। शेषशायित्वाच्छेषस्य नीलोत्पलमयं मौलिमाल्यं कौस्तुभाङ्को हरिर्वो मङ्गलकृदस्तु। माल्यस्य मध्ये नायकत्वेनोज्झितस्यारक्तपुष्पादेः कौस्तुभः प्रतिनिधिः। नीलत्वान्मान्यत्वाच्च नीलोत्पलमाल्यरूपणम्.

त्रैलोक्यलक्ष्मीगुरुहारदाम्नि शेषस्य भोगे तरलेन्द्रनीलः।
देवो दितेः संततितन्तुभेदी नेदीयसीं वो विदधातु सिद्धिम् ॥ ३० ॥

त्रिलोकश्रियाः स्त्रीलिङ्गत्वाद्गुरौ महति हारदाम्नि मुक्ताहारे शेषस्य शरीरे मध्यस्थ इन्द्रनीलः। दितेः संततिर्दैत्याः सैव दीर्घत्वात्तन्तुस्तं भिनत्ति। देवो हरिरतिशयेनान्तिकां सिद्धिं करोतु। 'अन्तिकबाढयोर्नेदसाधौ' इति नेदादेशः॥

केशाश्रिताब्दच्युतविद्युदोघसखीर्दधत्कौस्तुभरश्मिरेखाः।
सहस्रशः सिञ्चतु पाञ्चजन्यनाडिंधमो वः पृषतैः सुधायाः ॥ ३१ ॥

'यस्य केशेषु जीमूताः' इति केशाश्रितेभ्यो मेघेभ्यश्च्युतो यो विद्युदोघस्तस्य सदृशीः कौस्तुभप्रभा दधत्पाञ्चजन्यनाडिंधमो नारायणः सुधाकणैर्बहुधा सिञ्चतु। अजरामरान्करोत्वित्यर्थः। उपमोपक्रमोत्प्रेक्षेयम्। तडित्वांश्च जलकणैः सिञ्चति। 'नाडी—' इति खश्॥

निर्मातुमैश्वर्यमयैकसर्गमिवादिकर्तुर्धुरमारुरुक्षुः।
अधः श्रयन्ती विकचारविन्दमनिन्दितं वो वसु वर्षतु श्रीः ॥ ३२ ॥

विभूतिप्रचुरमसाधारणं सर्गं कर्तुं विधातुरधिकारमारोढुकामेव प्रफुल्लं पद्ममासनत्वेन कुर्वती श्रीर्धर्मार्जितत्वान्निन्दारहितं धनं वर्षतु। श्रियो धनवर्षणौचित्यादियमुक्तिः॥

पद्मां नुमः सद्मसरोजसङ्गाद्भृङ्गैः प्रसङ्गेन विनिह्नुताङ्गीम्।
साम्याय पत्युर्नलनीलमूर्तेरिवावहन्तीमसितं शरीरम् ॥ ३३ ॥

सद्माश्रयो यत्सरोजं तस्मिंस्तस्य वा सङ्गाद्भ्रमरैराच्छादिताङ्गीम्। अत एव नलवन्नी-

लशरीरस्य भर्तुर्हरेः साम्यायेव नीलं शरीरमावहन्तीं कुर्वतीं लक्ष्मीं स्तुमः । प्रसङ्गेनेति श्रियोऽङ्गानां पश्चादधिकसौगन्ध्यप्रतिपादनम् । प्रकृष्टो हि सङ्गः प्रसङ्गः । यद्वा प्रसङ्गेनानुषङ्गेणेति भ्रमरसङ्गाज्जातं नीलत्वं जनितत्वेन संभाव्यते । 'कृतौ करोत्यावहति विदधात्यादधाति च' इत्याङ्पूर्वो वहतिः करणे वर्तते ॥

कवीन्द्रपक्षानधिरुह्य नित्यं या विस्फुरत्यस्खलितप्रचारा ।
साशेषवृन्दारकवृन्दवन्द्या सरस्वती यच्छतु वाञ्छितं वः ॥ ३४ ॥

साधयितुमिष्टेन धर्मेण विशिष्टो धर्मी पक्षः पत्रं च । कवीन्द्राणां कालिदासादीनां हंसानां च । पक्षान्मतानि पत्राणि च । आरुह्य निर्निरोधप्रचारा सती योल्लसति सा सकलगीर्वाणगणप्रणमनीया सरस्वत्यभिलषितं ददातु ॥

वैदग्ध्यसिद्धिं विदधातु देवी कवीन्द्रजिह्वाञ्चलनर्तकी वः ।
यां नूपुरस्वानहृतेव नित्यमासेवते वाहमरालपाली ॥ ३५ ॥

कवीन्द्राणां जिह्वाग्रे नर्तकीव देवी सरस्वती विदग्धत्वसिद्धिं करोतु । सजातीयानां शब्दसदृशत्वान्नूपुरशब्देनेव हृता वाहनहंसपङ्क्तिर्यां सेवते । नर्तक्याश्च नूपुरशब्दो भवति । नर्तकीत्वादेव विदग्धत्वविधानोक्तिसंगतिः ॥

या वेगनृत्यद्रथहंसपक्षपुटैरिवाज्ञानिरजः प्रमार्ष्टि ।
सा चित्तकूलंकषदोषशोषं पुष्णातु वाचामधिदेवता वः ॥ ३६ ॥

या सरस्वती वेगेन नृत्यतामिव वाहहंसानां पक्षपुटैरिवाज्ञानिनामज्ञानमेव रजः प्रमार्ष्टि वारयति । रजो बुद्धिगुणः पांसुना व्यवसितः । 'अज्ञानरजः' इति वा पाठः । अत एव मार्जनोक्तेरौचित्यम् । सा वाचां देवी चित्तस्य कूलंकषोपचारात्क्षोभका ये दोषास्तेषां शोषं करोतु । कूलंकषत्वाच्छोषोक्तेरौचित्यम् । कूलंकषशोषं करोति रजो वारयति चेत्याश्चर्यम् । दोषाः कफादयोऽपि । अतश्च शोषोक्तिसंगतिः ॥

सुधाकणानामपरः प्रकारो योऽन्तः कपित्थादिविकत्थनस्य ।
क्षौद्रद्रवोद्रेकवितीर्णमुद्रं व्यनक्तु तं वो रसमुक्तिदेवी ॥ ३७ ॥

योऽमृतबिन्दूनां लोकोत्तरो भेदः । तथा कपित्थादीनां विकत्थनस्य स्तुतेरन्तः समाप्तिः । तेभ्योऽपि सारस्वतरसस्याधिकगुणत्वात् । तथा माक्षिकरसोद्रेके वितीर्णा मुद्रानुद्घाटनीयत्वं येन । तं रसं सरस्वती प्रकाशतु ॥

स प्रागभावो घनविघ्नजातेः स्फातेः पदं यच्छतु वो गजास्यः ।
सिन्दूरभृद्दानवदाननं यो महोत्सवं मूर्तमिव व्यनक्ति ॥ ३८ ॥

स सिन्दूरदानं चात एव मूर्तं महोत्सवमिवाननं यः प्रकटीकरोति स घनविघ्नसंततेः प्रागभावः । उत्पत्स्यमानानामेव विघ्नानां निवारणात् । गजास्यः स्फातेर्वृद्धेः पदं देयात् । महोत्सवश्च विघ्नशान्तिं करोति । गजास्यः प्रागभाव इति कार्यकारणयो रूपकम् ॥

यः कुम्भसिन्दूरविलिप्तदन्तच्छलात्सतां मोहतमोऽपहर्तुम् ।
बिभर्ति संध्यारुणचन्द्रलेखां सुखाय भूयात्स गजाननो वः ॥ ३९ ॥

कुम्भयोः कवाटविषये सिन्दूरेण विलिप्त उपदिग्धो यो दन्तस्तस्य व्याजात्सतामज्ञानान्धकारं निवारयितुं संध्यारुणां चन्द्रकलामिव बिभर्ति स गजमुखः सुखाय स्तात् । चन्द्रेण च तमसि निवर्तिते सुखं जायते ॥

दानाम्बुलुब्धालिकुलैर्निबद्धुं विघ्नान्प्रक्लृप्तायसशृङ्खलेव ।
कुम्भस्थली यस्य विभात्यमेया देयात्स नागेन्द्रमुखः सुखं वः ॥४०॥

मदजले लम्पटैर्भ्रमरसमूहैर्विघ्नबन्धार्थं कल्पितायसी शस्त्रमयी शृङ्खलेव यया सा । मातुमशक्या कवाटभूमिर्यस्य शोभते स गजमुखः सुखं दिश्यात् । दीर्घश्यामसंनिवेशसाम्याद्भ्रमराणां लोहशृङ्खलासंभावनम् ॥

यो दैत्ययोषिज्जनबाष्पवर्षं स्वबर्हिणस्येव मुदे मुमोच ।
स ज्येष्ठमल्लो भृगुनन्दनस्य स्कन्दः सुखं वर्धयतु प्रजानाम् ॥ ४१ ॥

स्वो वाहनत्वादात्मीयो यो मयूरस्तस्य तुष्ट्यर्थमिव यः कुमारो दैत्यस्त्रीबाष्पं जनयामास स स्कन्दः परशुरामस्य ज्येष्ठः प्रधानं मल्लः सुखं वर्धयतात् । कुमारेण हतभर्तृकाः स्त्रियोऽरुदन्नित्यर्थः । मुद इति प्रयोजनसंभावनम् ॥

कुमारभावेऽपि जगत्प्रतीते यः संप्रयातो वयसि प्रतिष्ठाम् ।
स वाञ्छितार्थार्पणकल्पवृक्षो दिश्याद्विशाखः शतशाखमायुः ॥४२॥

कुमार इति नामनि विश्वप्रसिद्धेऽपि सति यो वयसि पक्षिणि मयूरे प्रतिष्ठां यातोऽधिरूढः स विशाखः कुमारोऽभिलषितवस्तुदाने कल्पवृक्षः शतं शाखा वत्सरा यस्य तदायुर्दिश्यात् । कुमारभावे बाल्ये वयसि प्रतिष्ठां वार्द्धकं गत इत्यपिर्विरोधद्योतकः । विगतशाखश्च शतशाखं ददातीति विरोधः ॥

देवस्य यः पङ्कजसौधभाजः समग्रसर्गस्थितिसौविदल्लः ।
स त्रायतां पञ्चशरः सदैव विश्वं वृषाङ्कप्रथमाङ्ककारः ॥ ४३ ॥

पङ्कजमेव सौधं सुधालिप्तं हर्म्यं तद्भजतो देवस्य ब्रह्मणः समग्रा या सर्गस्थितिस्तत्र सौविदल्लः कञ्चुकी । कामानुग्रहं विना सृष्टिप्रच्यावात् । कामस्य सौविदल्लत्वेन रूपणं शब्दोपात्तम् । सर्गस्थितेस्तु स्त्रीत्वेन रूपणमार्थम् । स पञ्चशरः कामो वृषाङ्कस्य परमेश्वरस्य प्रथमः प्रधानमङ्ककारो व्युत्पन्नयोद्धा जगद्रक्षतात् ॥

ज्ञानानपेक्षिण्यपवर्गवीथी यज्ञो विनैवार्थकदर्थनाभिः ।
पयश्छटा नास्तिकपन्नगानां जयत्यसौ शंकरभक्तिचर्चा ॥ ४४ ॥

ज्ञाननिरपेक्षो मोक्षः । तथा धनयाच्ञां विना यज्ञः । ज्ञानस्य यज्ञस्य च यत्फलं तदी-

श्वरभक्त्या प्राप्यत इत्यर्थः । तथा नास्तिका एव सर्पास्तेषाममृतवृष्टिः । भगवद्भक्तिचर्चाश्रवणेनैव धक्ष्यमाणत्वात्(?) । ईश्वरभक्तिचर्चा जयति ॥

या नित्यं क्रममाणचक्रघटना या शिक्षितक्षामता
　न क्षोभेऽपि मधोरधोगतिकरी पत्युर्द्विजानां च या ।
दृष्टा कैरवसादकृत्त्रिजगतो बोधं दिशन्त्यद्भुत-
　श्यामा सा तनुरच्युतस्य कमलोल्लासाय वो जायताम् ॥ ४५ ॥

अच्युततनुर्नित्यं क्रममाणा चक्रघटना सुदर्शनसङ्गो यस्याः । तथा मधोर्दानवविशेषस्य क्षोभे मधुकर्तृकेऽपि युद्धे न शिक्षिता क्षामतासामर्थ्यं यया । तथा द्विजानां पत्युर्गरुडस्य वाहनत्वादधो गतिं करोति । तथा कैस्त्रिजगतोऽवसादं हानिं कुर्वती दृष्टा । न कैश्चिदित्यर्थः । तथा त्रिजगतो बोधं मोहनिवृत्तिं दिशन्ती । अद्भुता लोकोत्तरा श्यामा च । विशेषणोभयपदः कर्मधारयः । हरितनुः कमलाया लक्ष्म्या उल्लासाय जायतामिति हरितनुपक्षे योजना । अद्भुतापूर्वा श्यामा रात्रिरेवंविधा भवति । तत्पक्षे । चक्राश्चक्रवाकमिथुनानि । मधुर्वसन्तः । क्षामता हानिः । द्विजानां पतिश्चन्द्रः । कैरवसादकृदित्येकं पदम् । कैरवाणां कुमुदानां सादं संकोचं करोति । बोधः प्रबोधः । कमलोल्लासः पद्मविकासः ॥

ऊर्ध्वाण्डादप्युपरि परितः प्रोद्गतस्ताण्डवेषु
　प्रेमोत्कर्षं रचयतु सतां चण्डिकादण्डपादः ।
यन्मञ्जीरध्वननकलयाकृष्यमाणा जपस्थं
　ब्रह्माणं द्राग्वहनविहगाः संविदश्चालयन्ति ॥ ४६ ॥

अन्तमात्रेऽपि रुद्धे पटो रुद्ध इतिवदण्डशब्देनात्राण्डैकदेशस्य ग्रहणम् । ऊर्ध्वादण्डादप्युपरि नाट्यावसर उत्थितश्चण्डिकाया दण्डपादः सतां स्नेहाधिक्यं करोतु । यस्य दण्डपादस्य नूपुरशब्दलेशेनाकृष्यमाणा वाहहंसा जपपरं ब्रह्माणं समाधेश्चालयन्ति । नूपुरशब्दे हंसशब्दभ्रमाद्वाहहंसेषु चलितेषु पतनभयाद्ब्रह्मा निरवधानः संपन्न इत्यर्थः । 'कम्पने चलिः' इति मित्त्वाभावाद्र्स्वाभावः ॥

प्रेङ्खोलन्नखघोरहुंकृतिमहासिंहाधिरूढस्थितेः
　पार्वत्याः प्रमदानवद्यविभवं वन्दामहे तन्मुखम् ।
यल्लावण्यकणानवाप्तुमनिशं सेवां विदध्याद्विधु-
　र्न स्यादङ्कनिलीनरङ्कुकभवस्तत्रोपरोधो यदि ॥ ४७ ॥

प्रेङ्खोलन्तश्चपला नखा यस्य सिंहस्य । तथा घोरा दुःश्रवा हुंकृतिर्हुंकारो यस्य सिंहस्य । तत्राधिरूढस्थितेः पार्वत्यास्तन्मुखं नमामः । कीदृशम् । प्रमदानवद्यविभवं प्रमदस्य

हर्षस्यानवद्यो निर्दोषो विभवः समृद्धिर्यस्मात्तत्। अङ्क उत्सङ्गे निलीनो यो रङ्कुस्तस्माद्भवो जन्म यस्य सः। अनुरोधश्चन्द्रस्य। तत्र सेवायां यदि न स्यात्तदा यस्य मुखस्य सौभाग्यकणांल्लब्धुं गौरीमुखस्य सेवां कुर्यात्। यदि सौभाग्यलाभलोभाद्गौरीमुखसेवां करोमि तदा गौरीवाहसिंहो मया लालितं मृगशावं भुङ्क्त इति शङ्किना चन्द्रेण सेवा न कृतेत्यर्थः। चन्द्रादप्यधिकं गौरीमुखमकलङ्कत्वादित्यर्थः। प्रेङ्खोलन्नखेत्यादि विशेषणद्वयं मृगत्रासप्रतिपादनार्थम्। पाठसूत्रलोकागमस्था धातवः। तेषु प्रेङ्खोलतिर्लौकिकः। महाकविभिः प्रयुक्तत्वात्। 'प्रेङ्खोलचापले' इति केचित्॥

संध्यास्तोत्रविधौ भवत्युदितभीर्यत्रेश्वरो यत्र च
त्रस्यत्यद्रिसुता सखीः प्रति रहो विस्रम्भसंभाषणे।
आस्ते यत्र च चित्तभेदविदुषां नो पैशुनोक्तिक्लम-
स्तद्भूयाच्छिवयोः शिवाय रभसादेकीभवद्वो वपुः॥ ४८॥

यत्रैकीभवति गौरीश्वरयोः शरीरे परमेश्वरः संध्यास्तोत्रविधाने जातभीतिर्भवति। संध्यायाः स्त्रीलिङ्गत्वे गौरीकोपशङ्कनात्। सखीषु विश्वासकथावेदने गौरी यत्र वपुषि त्रस्यति बिभेति। ईश्वरस्य द्वितीयार्धस्थत्वेन प्रतिभेदभयात्। चित्तभेदवैमनस्यापादने विदुषां दक्षाणां खलानां पैशुनवचनक्लेशो नास्ते। क्षणमप्ययुतत्वेनासंभवात्। शरीराभेदे चित्ताभेदाद्वा। तदेकीभवद्गौरीश्वरयोः शरीरं कल्याणाय स्तात्॥

तत्तत्ताण्डवडम्बरव्यसनिनो देवस्य चण्डीपते-
र्ज्योतिस्तत्सुविशालभालनयनोद्भूतं नमस्कुर्महे।
यत्तेजःप्रसरेण शोषमुदधिर्हन्तागमिष्यत्क्षणा-
दन्तःप्रज्वलदौर्वदाहसतताभ्यस्तोऽभविष्यन्न चेत्॥ ४९॥

अन्तः प्रज्वलन्यो वाडवस्तत्कर्तृके दाहे नित्याभ्यस्तः समुद्रो यदि नाभविष्यत्तदा यस्य नेत्राग्नेस्तेजसा [समुद्रः] शोषमयास्यत्। तच्चण्डीपतेस्तत्तत्ताण्डवडम्बरे प्रसिद्धे नाट्यप्रपञ्चे व्यसनिनो देवस्य ललाटे स्थितं तेजो नमामः॥

चन्द्रार्कचक्रघटनद्धुरथाधिरूढं
तं चण्डताण्डवदशं गिरिशं प्रपद्ये।
यद्बाहुवातकलया परिताड्यमानो
वज्राहतिं सुखममन्यत शैलवर्गः॥ ५०॥

चन्द्रार्कावेव चक्रे तयोर्घटना यत्र तथाविधे धुरथेऽधिरूढं दुःसहनृत्तं हरं प्रपद्ये। रथाधिरूढश्च लोकैः प्रपद्यते। यस्य भुजयोः पातनलेशेन ताड्यमानो गिरिगणो वज्रेणाघातं सुखममन्यत। यस्माद्वज्रघातादधिको भुजपातः। अधिकदुःसह इत्यर्थः॥

त्रुट्यत्साटोपजूटत्रिदशतटवतीवारिपूराभिरामं
　　कामारेश्चारुवक्षःस्थलमिह महते विभ्रमायास्तु तद्वः ।
यत्र स्वच्छन्दलीलाविहरणहरिणी सर्वदैवाद्रिकन्या
　　विन्यस्याङ्गानि सङ्गादतनु वितनुते कानि न क्रीडितानि ॥ ९१ ॥

स्वच्छन्दं यथेष्टं लीलास्ताभिर्विहरणं खेलनं तत्र हरिणी गौरी यत्र सङ्गात्सक्तत-याङ्गानि क्षिप्त्वा का न क्रीडा कुरुते । सर्वेत्यर्थः । तदीश्वरस्य वक्ष एव स्थलं म-हते विलासायास्तु । यत्त्रुट्यन्पतन्साटोपो यो जूटत्रिदशतटवतीवारिपूरो गङ्गाम्बुपू-रस्तेनाभिरामम् । सजले च स्थले हरिणी क्रीडति ॥

व्यक्तालक्तरुचिं नमत्सुरशिरोमाणिक्यकान्त्या स्तुम-
　　स्तां शंभोर्नखपङ्क्तिमङ्घ्रिकमलश्लिष्यद्बिसांशद्युतिम् ।
यद्भासां प्रसरेण यन्न गमितश्चूडाशशी पूर्णतां
　　तद्विस्तारनिरुद्धसर्वककुभो विस्फूर्जितं वक्षसः ॥ ९२ ॥

यस्या नखपङ्क्तेर्भासामुल्लासेन मौलिचन्द्रः पूर्णत्वं यन्न प्रापितस्तत्स्वविस्तारावृतस-र्वदिशो वक्षसो विलसितम् । वक्षसो व्यवधानं यदि न स्यात्तदा नखप्रभा मौलिचन्द्रं पू-रयेयुरित्यर्थः । तमीश्वरनखपङ्क्तिं स्तुमः । नमदमरमुकुटमणिमयूखैर्व्यक्तालक्तकस्य रु-चिर्यस्याः । पादकमलयोर्लगन्ती मृणालभागद्युतिस्तामित्यारोपः । ईश्वराणां पादनखे-ष्वलक्तकरागौचित्यादलक्तकोत्प्रेक्षणम् ॥

सा शुद्धयेऽस्तु शिवपादनखावलिर्वो
　　भक्ता यदीयरुचिलीढललाटपट्टाः ।
व्यक्तीभविष्यति तृतीयविलोचनाग्नौ
　　व्यञ्जन्ति पूर्वमिव तद्भवभस्मरेखाः ॥ ९३ ॥

ईश्वरेण स्वसाम्यरूपं नेष्यमाणा भक्ताः प्रणामसमये नखमयूखखचितभालतलाः प्र-कटीभविष्यतो ललाटनयनाग्नेः कारणात्पूर्वकालमेव कार्यभूतास्तद्भवा नेत्राग्निजाता भ-स्मरेखा इव वहन्ति । सा शिवपादयोर्नखपङ्क्तिः शुद्धये भवतु । श्वेतत्वात्पावनत्वाच्च भस्मरेखोत्प्रेक्षणम् ॥

सर्वत्रेश्वरपादपद्मसहितो भूयासमित्याशया
　　यद्व्याजात्स्फटिकाद्रिणेव विहितं रूपान्तरं जङ्गमम् ।
यः क्षीराब्धिरिवागतः शिवजटाबद्धं सुतं वीक्षितुं
　　त्रैयक्षः कुशलाय भास्मनरजोगौरः स गौरस्तु वः ॥ ९४ ॥

स्थावररूपे मयि वसत ईश्वरस्य पादसंपर्कपवित्रता ममास्ति । अन्यत्रापि गच्छतः शिवस्य सा मम यथा स्यादिति लोभेन यस्य वृषभस्य व्याजात्कैलासशैलेन जङ्गमं प्रकृत्यन्तरमिव कृतम् । तथा हरजटाबद्धं पुत्रं चन्द्रं प्रत्यवेक्षितुं क्षीरसमुद्र इव य आगतः । बद्धस्य हि प्रत्यवेक्षा युक्ता । स त्र्यक्षसंबन्धी भास्मनरजोभिरिव गौरो वृषभः कुशलाय भूयात् । त्रैयक्ष इति 'न य्वाभ्यां पदान्ताभ्याम्–' इत्यैच् ॥

पुष्पाणामयमाकरस्तदखिलान्यस्यैव गात्रान्तरा-
ण्यासाद्यैव लभामहे कमपि हि प्रीतिप्रकर्षोदयम् ।
इत्थं षट्पदपेटकैरिव रसादासेवितं मेचकं
बिभ्रद्देहमहर्निशं दिशतु वः स्वान्ते वसन्तः सुखम् ॥ ९९ ॥

अयं वसन्तः पुष्पाणामुत्पत्तिस्थानमतोऽस्यैवाङ्गानि । अर्थात्पुष्पाणि । प्राप्य प्रीतिं प्राप्नुम इति भ्रमरसमूहै रसादासेवितमिव श्यामं शरीरं वहन्वसन्तो नित्यं मनसि सुखं देयात् ॥

सर्वैः कैश्चन दूषिताः कवितृभिः प्रस्तीर्य पृथ्वीभृता-
मास्थानापणसीम्नि विक्रयतिरस्कारादनर्घा गिरः ।
देवस्याद्रिभिदुत्तमाङ्गमकरीलिढाङ्घ्रिरेणुस्रजः
कैलासाद्रिसभापतेरिति मया मङ्खेन मङ्खायते ॥ ९६ ॥

कैश्चन कैश्चिदपि । महद्भिरित्यर्थः । सर्वैर्महद्भिः कवितृभिः पृथ्वीभृतां राज्ञां शैलानां च । आस्थानं सद एवापणः पण्यवीथी । तत्र गिरां विक्रेयत्वात् । प्रस्तीर्य प्रकाश्य । विक्रयावमानाद्वाचो दूषिताः । यतोऽनर्घा अमूल्याः । गिरां स्त्रीलिङ्गत्वात्स्त्रीव्यवहारप्रतीतौ विक्रयेण दोषोक्तिसंगतिः । इत्यतो हेतोः । इति वक्ष्यमाणप्रकारेण वा । मया मङ्खेनाद्रिभिद इन्द्रस्योत्तमाङ्गे शिरसि मकर्यो मणिमय्यः प्राणिविशेषाकारा रचनाविशेषास्ताभिर्लीढा उत्पुंसिता अङ्घ्रिरेणुस्रजश्चरणपद्मरजोभारा यस्य । कैलासाद्रौ सभापतेर्देवस्येश्वरस्य मङ्खवद्बन्दिवदाचर्यते । स्तुतिः क्रियत इत्यर्थः । मङ्खेनेति स्वयं स्वनामग्रहणमात्मोत्कर्षप्रतिपादनेन काव्यस्य सचेतसां श्रवणयोग्यताप्रतिपत्त्यर्थम् । अन्ये कवयः पृथ्वीभृतां वाग्विक्रयमकुर्वन् । अहं त्वद्रिभिदा नतस्य बन्दीभवामीति व्यतिरेकालंकार इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्वावर्तसूनोर्महाकवि-
राजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
नमस्कारवर्णनं नाम प्रथमः सर्गः ।

---

द्वितीयः सर्गः ।

वितीर्णशिक्षा इव हृत्पदस्थसरस्वतीवाहनराजहंसैः ।
ये क्षीरनीरप्रविभागदक्षा विवेकिनस्ते कवयो जयन्ति ॥ १ ॥

हृत्पदस्था मानसवासिनी या सरस्वती तस्या वाहहंसैः कृतोपदेशा इव ये क्षीरनीरस्य समाहृतानामुपचारात्काव्यगुणदोषाणां विभजने दक्षा योग्याः । दोषान्निवार्य गुणाना-विष्कुर्वन्तीत्यर्थः । ते कवयो जयन्ति । हंसानां दुग्धजलविभागयोग्यत्वात्संभावनोत्था-नम् । सजातीयेषु कर्तुमुचिताया व्याख्यायाः सूचनार्थं स्वजातिधर्मवशाद्गुरुशिक्षायाः संपूर्णत्वेन संक्रान्तिप्रतीत्यर्थं चोभयार्थवाचकः कविशब्दो निर्दिष्टः । हृत्पदस्थग्रहणं प्रत्यासत्त्या हृदयस्य सम्यगुपदेशसंक्रान्त्यर्थम् ॥

काव्यामृतं दुर्जनराहुनीतं प्राप्यं भवेन्नो सुमनोजनस्य ।
सच्चक्रमव्याजविराजमानतैक्ष्ण्यप्रकर्षं यदि नाम न स्यात् ॥ २ ॥

सतां चक्रं समूहः सच्छोभनं चक्रं च । व्याजं विना विराजमानतैक्ष्ण्यस्य मतिस्थस्य धारास्थस्य चाकुण्ठत्वस्य प्रकर्ष आधिक्यं यस्य । तद्यदि न स्यात्तदा सुमनोजनस्य पण्डि-तसमूहस्य देववर्गस्य च । काव्यमेवामृतं खलराहुणा नीतं सल्लभ्यं न भवेत् । अस्मा-भिरेतत्काव्यं कृतमिति परकृते काव्ये विकत्थमानान्दुर्जनान्बुद्धिचातुर्येण सन्तो यदि न मूकीकुर्युस्तदा सुकाव्यं पण्डिता न लभेरन् । राहुणा च नीतममृतं प्रत्याहृत्य सुदर्शनो देवेभ्यो दत्तवान् ॥

सदैव सत्संगमसंमुखोऽपि खलः स्वचर्यां न जहाति जातु ।
कृत्वापि सूर्याश्रयणं प्रयत्नाद्राहुर्गतः किं विबुधत्वयोगम् ॥ ३ ॥

कार्यवशात्सत्संगमे संमुखोऽपि दुर्जनो दौर्जन्यं न त्यजति । सूर्यस्य रवेः सूरीणां चाश्रयणं कृच्छ्रेण कृत्वापि राहुर्विबुधत्वस्य देवत्वस्य पण्डितत्वस्य च योगं किं गतः । न गत इत्यर्थः ॥

कस्यापि शक्तिप्रभवात्प्रभावाद्रुदेति तत्काव्यमहारहस्यम् ।
क्लिष्टो गुरूणां सदनेषु नित्यं कश्चिद्बुधश्चेतयते न वा यत् ॥ ४ ॥

शक्तिः कवित्वबीजरूपः संस्कारविशेषः । तज्जातात्प्रभावात्कस्यापि लोकोत्तरगु-णस्य तत्काव्यस्य महारहस्यं सारमुदेति । गुरुकुलक्लिष्टोऽपि कश्चित्पण्डितो यतो वेत्ति वा न वेत्ति । विमर्शाख्यायाः शक्तेः प्रभावाद्रहस्यं चोदेति ॥

अज्ञातपाण्डित्यरहस्यमुद्रा ये काव्यमार्गे दधतेऽभिमानम् ।
ते गारुडीयाननधीत्य मन्त्रान्हालाहलास्वादनमारभन्ते ॥ ५ ॥

पाण्डित्यस्य रहस्यं सारभागस्तस्य मुद्रा ग्रन्थिः साज्ञाता यैस्ते काव्यपथे व्यसनं

वहन्ति ते गारुडशास्त्रभवान्मन्त्रानपठित्वा विषभक्षणमारभन्ते । अज्ञानात्काव्यव्यसनममन्त्राद्विषभक्षणमिति वाक्यार्थरूपकम् ॥

तान्यर्थरत्नानि न सन्ति येषां सुवर्णसंघेन च ये न पूर्णाः ।
ते रीतिमात्रेण दरिद्रकल्पा यान्तीश्वरत्वं हि कथं कवीनाम् ॥ ६ ॥

तानि लोकोत्तराण्यर्थरत्नानि श्रेष्ठा अर्था येषां न सन्ति । तथा ये शोभनानां वर्णानामक्षराणां संस्तवेन न पूर्णास्ते दरिद्रप्राया रीतिमात्रेण कवीश्वरत्वं कथं यान्ति । न यान्ति । रीतिः पदरचनामात्रम् । शब्दार्थावेव कवित्वजीवभूतावित्यर्थः । निरर्था नीरत्नाः कनकसंघरहिताश्च रीतिमात्रेणेश्वरा न भवन्ति। रीतिरारकूटाख्यो धातुविशेषः॥

तत्तद्विचारोपनिषद्विमृष्टं काव्यं कवेः पुष्यति निस्तुषत्वम् ।
न रत्नमायाति हि निर्मलत्वं शाणोपलारोपणमन्तरेण ॥ ७ ॥

स स चासौ लोकोत्तरो विचारस्तस्योपनिषत्परा काष्ठा तया विमृष्टं कवेरपि काव्यं निर्दोषत्वमेति । कवेः काव्यं सदोषं कथं भवतीत्याह— शाणोपले घर्षणपाषाण आरोपणं विना रत्नं नैर्मल्यं नायाति । यद्वा युक्तमेतत् ॥

बह्वर्थसिद्धा परिपाकभूमिः कस्यापि वाणी रसवत्युदेति ।
आत्तप्रयत्नं बहवः पुनन्ति मुखं यदुच्छिष्टलवोच्चयेन ॥ ८ ॥

प्रयत्नपूर्वं यस्या वाण्या उच्छिष्टलवानां स्वकृतान्यकृतश्लोकापेक्षया न्यूनत्वादनादरेण त्यक्तानां श्लोकानां संग्रहेण बहवो मुखं पुनन्ति संस्कुर्वते । कविना स्वप्रबन्धमध्यात्तदसमतया त्यक्तानि पद्यान्यधीत्य सभासु मानार्हा भवन्तीत्यर्थः । सा बहुभिर्वाच्यादिभिस्त्रिचतुरादिभिरर्थैर्वा । सिद्धा पक्का । अत एव सरसा । कस्यापि । न तु सर्वेषाम् । उदेति। यस्याश्च रसवत्याः कणोच्चयेन बहवो मुखमास्यं पुनन्ति सफलीकुर्वन्ति। सा रसवती व्यञ्जनादिसामग्री बहुभिर्नानाविधैरर्थैर्द्रव्यैः सिद्धा पक्का कस्यापि संपद्यते । रसवतीति प्रकृताया वाण्या विशेषणत्वादर्थान्तरे विशेष्यत्वाच्च शब्दशक्तिमूलो रूपकध्वनिः ॥

सूक्तौ शुचावेव परे कवीनां सद्यः प्रमादस्खलितं लभन्ते ।
अधौतवस्त्रे चतुरं कथं वा विभाव्यते कज्जलबिन्दुपातः ॥ ९ ॥

शुचौ शुद्धायामेव वाचि परेऽशुचयः खलाः प्रमादेनावधानाभावेन स्खलितं काव्यदोषं लभन्ते । संदिग्धपदे काव्ये दोषाणां यथाकथंचित्समाधानार्हत्वात् । पूर्वार्धसाधकमर्थान्तरं वैधर्म्येणाह— अक्षालिते वस्त्रे पतितः कज्जलः सद्यः कथमिव विज्ञायते । नैव ज्ञायते । क्षालिते तु सद्य एव ज्ञायत इत्यर्थः ॥

अवद्यजम्बालगवेषणाय कृतोद्यमानां खलसैरिभाणाम् ।
कवीन्द्रवाङ्निर्झरनिर्झरिण्यां संजायते व्यर्थमनोरथत्वम् ॥ १० ॥

अवद्यं काव्यदोषस्तदेव मलिनीकरणात्पङ्कस्तस्यान्वेषणार्थं विहितोद्योगानां दुर्जनमहिषाणां निष्फलसंकल्पत्वं कवीश्वरवाग्गङ्गायां संजायते। सामान्यकाव्यवन्महाकाव्येषु दोषलाभलोभादुत्थिता दुर्जना निष्फलप्रयासा भवन्तीत्यर्थः। महिषाश्च पङ्कार्थमेव गङ्गायां मज्जन्ति, न च तत्तत्र लभन्ते। गङ्गाया नभोगामित्वात्॥

कलङ्कशून्यापि रसप्रवाहमपि स्रवन्ती विबुधोपजीव्यम्।
वाणी क्रिमेणाङ्ककलेव धत्ते टङ्कं विना वक्रिमविभ्रमेण॥ ११॥

दोषरहितापि पण्डितैराह्लादकत्वादुपजीव्यमपि रसं स्रवन्ती वाणी चन्द्रकलेव वक्रत्वं विना स्फारं न बिभर्ति। दोषाभावरसवत्त्वाभ्यां वक्रोक्तिरेवाधिकं चमत्करोतीत्यर्थः। चन्द्रकलादि निष्कलङ्कापि देवैरुपजीव्यं रसममृतं स्रवन्त्यपि वक्रत्वेनैव शोभते। प्रसिद्धप्रस्थानव्यतिरिक्तत्वं वक्रिमा॥

विना न साहित्यविदा परत्र गुणः कथंचित्प्रथते कवीनाम्।
आलम्बते तत्क्षणमम्भसीव विस्तारमन्यत्र न तैलबिन्दुः॥ १२॥

साहित्यज्ञेन विना परत्रासाहित्यज्ञे कवीनां गुणो न कथंचित्प्रथते। साहित्यज्ञ एव काव्यौदार्यं जानातीत्यर्थः। यथा जले तैलकणो विस्तारमेति तथा जलादन्यत्र न प्रसरति॥

सद्वृत्तविश्रान्तिमती न जातु कृच्छ्रेऽपि पात्रं परुषाक्षराणाम्।
सत्पुण्यभाजः सततानुवृत्ता कस्याप्यहो सद्गृहिणीव वाणी॥ १३॥

सद्वृत्ते वसन्ततिलकादौ सदाचारे च विश्रान्ता। तथा कृच्छ्रे चित्रकाव्येऽन्नादिसंकोचे च परुषाणामकोमलानामक्षराणां न पात्रम्। सततमनुवृत्ता वश्या। सती। सत्पत्नीव वाणी कस्यापि भवति॥

अत्यर्थवक्रत्वमनर्थकं या शून्यापि सर्वान्यगुणैर्व्यनक्ति।
अस्पृश्यतादूषितया तया किं तुच्छश्वपुच्छच्छटयेव वाचा॥ १४॥

सर्वेऽन्ये गुणा औदार्यादयस्तै रहिता या वाग्रसशून्यत्वान्निष्प्रयोजनमतिवक्रभावं बिभर्ति तया दुर्बोधत्वाद्बोधे सति वा चमत्काराभावात्स्पृश्यत्वाभावेन दूषितया किम्। तुच्छा या श्वपुच्छच्छटा श्वलोमप्रकरस्तया च किम्। सा च गुणैर्मशकवारणादिभिः शून्या तुच्छत्वाद्वक्रत्वं च वहति। वक्रत्वं च यद्यपि गुणस्तथापि केवलं न शोभते। किं तु गुणेन रसेन च परिवृतमेवेत्यर्थः॥

अशिक्षिता या प्रकृतेऽपि मार्गे वागीहते वक्रपथप्रवृत्तिम्।
पदे पदे पङ्गुरिवाप्नुयात्किमन्यद्विना सा स्खलितोपघातात्॥ १५॥

प्रकृते सुगमेऽपि मार्गेऽनभ्यस्ता या वाणी वक्रमार्गे प्रसिद्धप्रस्थानव्यतिरेकिणि मार्गे

---

1. टङ्कः शोभातिशयः.

प्रवर्तते सा पदे पदे स्खलितेनोपघातादन्यत्किमाप्नुयात्। यश्च पङ्गू राजपथेऽप्यशिक्षितो वक्रे संकटादौ मार्गे प्रवर्तते स क्रमे क्रमे स्खलति ॥

जिह्वा कथं नाम खलस्य मा भूत्सतामविच्छिन्नभयाग्रदूती ।
कृता हि तस्या विधिनैव वृत्तिरहर्निशं पैशुनपाशुपाल्यम् ॥ १६ ॥

खलस्य जिह्वा सतां सततं भयस्याग्रदूती प्रथमव्याख्यायिका कथं नाम केन प्रकारेण मा भूत्। सर्वथा भवत्येवेत्यर्थः। सतां दोषारोपणे दुर्जना मा भयं कुर्वन्त्विति तात्पर्यम्। यतो विधात्रा पैशुनं दोषारोप एव पाशुपाल्यं वृत्तिर्वेतनं कृता। वृत्ताविव परदोषे प्रयतन्त इत्यर्थः। आ जन्मनः परेषां दोषारोपणे लाभनिरपेक्षमेव प्रवृत्ता इति तात्पर्यम्॥

दृढप्ररूढा शतपत्रयोनेः कियत्यहो साधुजनेऽनुकम्पा ।
योऽद्यापि विद्यानवपक्षसङ्गं खलप्लवंगस्य न निर्मिमीते ॥ १७ ॥

शतपत्त्रयोनेः पद्मभुवो ब्रह्मणः साधुलोके दया। अहो आश्चर्यम्। कियती दृढं स्थिरं प्ररूढा प्ररोहमाप्ता। अद्याप्या सर्गादियत्यपि काले गच्छति यो ब्रह्मा दुर्जनवानरस्य विद्यैवापूर्वपक्षास्तेषां सङ्गं न कुरुते। खलाः सर्वदैव मूर्खा एवेत्यर्थः। खलाः सविद्या यदि स्युस्तदा साधुषु दोषानारोप्य प्राणानपहरेयुरित्यर्थः। वानरस्य च पक्षा यदि स्युस्तदा विश्वस्योपद्रवं कुर्यात्॥

सतां बतासाधुरबाधितोऽपि बद्धावधानो विधुराक्रियासु ।
यत्क्रौर्यवादेन जितोऽहिवर्गो ह्रियेव पातालतलं विवेश ॥ १८ ॥

अबाधितोऽकृतापकारोऽपि। कृतापकारी दण्डापूपिकया सिद्धः। दुर्जनः साधूनां दोषारोपेषु सावधानः। यस्य खलस्य क्रूरत्वप्रसिद्ध्या पराभूतः फणिगणो लज्जयेव पातालं प्रविष्टः। लज्जितो हि लोकसंनिधौ स्थातुं न शक्नोति। सर्पो हि बाधितो दंशं ददाति। दुर्जनस्त्वबाधितोऽपीत्यर्थः। सर्पस्य पातालप्रवेशो वास्तवः। तत्र लज्जा निमित्तं संभावितम्॥

नीचस्तनोत्वश्रु नितान्तकार्ष्ण्यं पुष्णातु साधर्म्यभृदञ्जनेन ।
विना तु जायेत कथं तदीयक्षोदेन सारस्वतदृक्प्रसादः ॥ १९ ॥

अञ्जनेन सौवीरादिना साधर्म्यं साम्यं बिभर्ति। तथाविधो नीचो दोषारोपजाताद्रोषाद्बाष्पं जनयतु कृष्णतां च करोतु। अनुमतौ लोट्। अनुमत्या सूचितां हितप्राप्तिं दर्शयति—तदीयक्षोदेन खलावमानेन विना सारस्वतदृशः काव्यादिचातुर्याः प्रसादो न जायते। दुर्जनेनारोपितदोषः साधुरप्रमत्तं काव्यं करोति। दोषद्वारेण गुणलाभसंदर्शनान्नीचानां साधुनिन्दया केवलं स्वगतनीचत्वप्रकाशनमेव फलम्। अतस्तैः सतां निन्दैवारम्भणीयेति वैरिणामपि हितोपदेशेन स्वस्य सौजन्यं व्यनक्ति। अञ्जनं च बाष्पजनकं कार्ष्ण्यकारि चास्तु। तच्चूर्णेन विना दृष्टिप्रसादो न भवति॥

निगूढसौजन्यभृतोऽपि केचित्पारुष्यमाहार्यमनुष्ठवन्ते ।
अन्तः सुधाबन्धुरसोऽपि धत्ते बहिर्वपुः कर्कशमिक्षुकाण्डः ॥ २० ॥

अप्रकाशितं साधुत्वं बिभ्रन्तोऽपि केचित्कृत्रिमं काठिन्यमभिनयन्ति । अयाचितमेवो-पकुर्वन्तीत्यर्थः । कीर्तिप्रत्युपकारलोभाभावादिति भावः । अमृतसदृशस्वादोऽपि पुण्ड्र-कादिर्बहिः कठिनां प्रकृतिं धत्ते । प्रकृत्यानभिगम्यत्वमभिनीय साधवोऽसंभावितमुपकारं कुर्वन्तीत्यर्थः ॥

कियद्गतायं कलिकालनामा प्रकम्पहेतुः प्रथितो हिमर्तुः ।
खलिन्यखण्डा रजनीव यस्मिन्साधोर्दिनस्येव दरिद्रमायुः ॥ २१ ॥

कलिकालो नाम यस्य स हमन्तः कम्पस्योत्पत्तिकारणं कियत्प्रसिद्धः । बहुप्रथित इत्यर्थः । भयकृतस्य कम्पस्य शीतकृतेन कम्पेनाध्यवसानम् । यस्मिन्कलियुग एव हे-मन्ते निशेव खलिनी खलकुलमखण्डाक्षया । दिनस्येव साधोरायुर्दरिद्रमल्पम् । हेमन्ते च रात्रिर्दीर्घतरा दिनमल्पं कम्पश्च जायते ॥

एकः पुनर्दुर्जनसारमेयैर्धृतो गुणोऽयं परसूक्तिकोषम् ।
विविक्षतां लुण्ठयितुं भषन्ति यदग्रतः काव्यमलिम्लुचानाम् ॥ २२ ॥

दुर्जना एव सारमेयाः श्वानस्तैरेको गुणस्तु धृतः । यत्परेषां सूक्तयस्तासां कोषस्ता एव वा कोषस्तं लुण्ठयितुं मोषितुमिच्छतां काव्यचौराणामग्रतस्ते भषन्ति । चौर्यं स-भासु प्रकाशयन्ति । सजातीयोन्नतिमपि न सहन्त इति भावः । श्वानश्च परकोषमोष-णार्थं विशतां चौराणामग्रे भषन्ति । शतृप्रत्ययोऽत्राविवक्षितः । प्रकृतस्य भूतकालविषय-त्वात् । भषणं श्वजातिशब्दः ॥

दिव्येन्द्रजालातिशयज्ञमेतं सखे निरीक्षस्व खलं सभासु ।
वह्निं विनैवौषधिमन्त्रतन्त्रं मुखेन यो दुर्विषहं प्रसूते ॥ २३ ॥

सखिवद्धितोपदेशत्वात्सखे इत्यामन्त्रणम् । अपूर्वत्वाद्दिव्यमिव दिव्यम् । दिव्यं य-दिन्द्रजालमद्भुतवस्तुनिर्माणं तस्यातिशयं जानाति । तं खलं निरीक्षस्व विमृशेः । शङ्क-स्वेति यावत् । दूरस्थस्यापि खलस्य भयवशात्प्रत्यक्षस्येवैतमिति निर्देशः । यो वह्नि-जननकारणभूतमोषधीर्मन्त्रतन्त्रं च विनैव सभासु मुखेनाग्निं सूते । दाहकत्वाद्दुर्वचना-नामग्निनाध्यवसानम् । औषधादिबलादैन्द्रजालिका अग्निजननमभिनयन्ति । खलस्त्वौ-षधादि विनैव मुखेनाग्निं वमति । अग्निवद्दुर्जनवचनं दहतीत्यर्थः ॥

अनेकशोऽहं विमृशन्नपीत्थं खलं न वेद्मि स्थिरमस्थिरं वा ।
सत्यं स्थिरश्रेत्क्षणसौहृदः किमथास्थिरः किं युगदीर्घरोषः ॥ २४ ॥

एवं बहुशो विमर्शं कुर्वन्नप्यहं खलं स्थिरमस्थिरं वा न जानामि । यतो यदि खलः

स्थिरस्तदा क्षणं सौहृदं प्रीतिर्यस्य । स्नेहे स्थिरत्वाभावात्खलो न स्थिरः । अथास्थिरस्तत्कथं युगं यावद्दीर्घोऽचलो रोषो यस्य । वैरे दृढ इत्यर्थः ॥

विधेरुपाध्यायधुरामसाधुरपूर्वचारित्रधरोऽधिशेताम् ।
तेनाप्यसृष्टानि सृजत्ययं यत्सतां ललाटेषु दुरक्षराणि ॥ २५ ॥

अपूर्वं विधात्रानिर्मितं चारित्रं धारयति तथाविधोऽसाधुर्विधातुरधिकदर्शित्वं श्रयताम् । अधिकदर्शी ह्युपाध्यायः । यदयं खलो विधात्राप्यनिर्मितानि दुर्वचनानि सज्जनानां ललाटेषु लिखति । अद्भुतानपवादान्सत्स्वारोपयतीत्यर्थः ॥

परेण सामान्यकवेर्वचस्तद्विधीयतामङ्गुलिभङ्गपात्रम् ।
सर्वानवद्यस्तु कथं प्रबन्धः संजायते दुर्जनहन्तकारः ॥ २६ ॥

परेण शत्रुणा खलेन सामान्यस्य सामान्यगुणस्य कवेर्वचनमङ्गुलिभङ्गानां तर्जनानां पात्रं क्रियताम् । सर्वस्मिन्ननवद्यो निर्दोषः प्रबन्धो दुर्जनानां हन्तकारो भिक्षा कथं जायते । मार्कण्डेयपुराणे— 'ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्राच्चतुर्गुणं तत्तु हन्तकारं विदुर्बुधाः' ॥

सरस्वतीमातुरभूच्चिरं न यः कवित्वपाण्डित्यघनस्तनंधयः ।
कथं स सर्वाङ्गमनाप्तसौष्ठवो दिनाद्दिनं प्रौढिविशेषमश्नुते ॥ २७ ॥

सरस्वत्येव कवीनां माता तस्याः कवित्वपाण्डित्याभ्यां हेतुभ्यां घनं कृत्वा स्तनंधयः । कवित्वपाण्डित्ये एव स्तनौ पिबतीत्यर्थः । यः स्तनौ चिरं नापिबत्स सर्वाङ्गमनाप्तमलब्धं सौष्ठवं व्युत्पत्तिगर्भत्वं येन सः । प्रौढिः पदार्थे वाक्यरचना, वाक्ये च पदरचना, इत्यादिका तस्या विशेषं कथमश्नुते । य एव कवित्वपाण्डित्ये एव स्तनावपिबत्स एव प्रौढिपात्रमित्यर्थः । यश्च मातुः स्तनौ चिरं न पिबति स कथं प्रागल्भ्यं प्राप्नोति ॥

बद्धोद्यमापि सतृणाभ्यवहारिवृत्तौ
धन्यस्य कस्यचन हन्त वशंवदा गौः ।
सूते तमद्भुतरसं बहुधा सुधाया
योऽन्यः प्रकार इव विश्वमिदं पुनीते ॥ २८ ॥

सतृण सदसत् । 'अव्ययं विभक्ति-' इत्यादिना साकल्यार्थेऽव्ययीभावः । सतृणमभ्यवहरति सतृणाभ्यवहार्यविवेकी तद्भावे बद्धोद्यमापि निर्विवेकापि । कस्यापि गीर्वाण्यद्भुततरं रसं शृङ्गारादिकं सूते । योऽमृतस्यापरो भेद इव जगन्मानार्हं करोति । तदभ्यासेन सभ्याः स्तुवन्तीत्यर्थः । सुन्दरतरगुम्फनेन कृताभ्यास इत्यर्थः । धेनुश्च सतृणाशिनी रसं क्षीरं सूते । सारस्वतप्रसादादयत्नेनैव काव्यं स्फुरतीत्यर्थः ॥

ये नो पदस्थितिजुषः कवयः कथंचि-
न्नार्थप्रथाप्रणयिनः प्रतिभादरिद्राः ।
काव्यग्रहेण किमरोचकिनोऽपि तेऽन्य-
दल्पीयसो मितरसाच्च बताप्नुवन्ति ॥ २९ ॥

पदानां सुप्तिङन्तानां शब्दानां स्थितिमवसानं ये न जुषन्ते । तथा न च वाच्यादावर्थे परिचिताः । तथा प्रज्ञाहीनाः । तेऽरोचकिनोऽप्यविवेकपूर्वं काव्ये प्रयतमाना अपि काव्यग्रहेणात्यल्पादल्परसाच्चान्यत्किमाप्नुवन्ति । अत्यल्पमल्परसं च प्राप्नुवन्तीत्यर्थः । सरस्वतीप्रसादं विना प्रयत्नेनापि काव्यं न स्फुरति, स्फुरितं वा मानार्हं न भवतीत्यर्थः । ये च पदहीना निरर्थाश्च तेऽरोचकिनोऽप्यल्पमल्परसं चाप्नुवन्ति । एवं श्लोकद्वयेनान्वयव्यतिरेकाभ्यां सरस्वतीप्रसाद एव काव्यस्फुरणमूलमिति युक्त्या प्रतिपादितम् ॥

अर्थोऽस्ति चेन्न पदशुद्धिरथास्ति सापि
नो रीतिरस्ति यदि सा घटना कुतस्त्या ।
साप्यस्ति चेन्न नववक्रगतिस्तदेत-
द्व्यर्थं विना रसमहो गहनं कवित्वम् ॥ ३० ॥

अहो काव्यं गहनं दुर्गाहं दुष्करम् । यतो वाच्यादिरर्थो यद्युल्लिखितस्तर्हि पदानां शुद्धिः संस्कृतत्वं नास्ति । सापि यद्यस्ति तर्हि गुणवती पदरचना नास्ति । सा चेदस्ति घटना कुतस्त्या कुतः । सापि चेदस्ति न नववक्रगतिरपूर्वं प्रसिद्धप्रस्थानव्यतिरेकित्वं नास्ति । तदेतदर्थादि समुदितमपि रसं विना निष्फलम् । रस एव काव्ये प्रधानम् । अन्ये गुणास्तु गुणीभूता इत्यर्थः ॥

काव्यं य एव गहनं क्षमते प्रयोक्तुं
शक्तः स एव रसमप्यसमं प्रणेतुम् ।
भानुर्य एव दहतीह खरैर्मयूखैः
सद्यः स एव जगदाद्रर्णुते पयोभिः ॥ ३१ ॥

गहनं गाढस्वरूपविशेषसहितं काव्यं कर्तुं य एव समर्थः स एवासदृशं रसमपि प्रयोक्तुं शक्तः । गहन एव काव्ये रस इति तात्पर्यम् । यतो य एवार्कस्तीक्ष्णैः करैर्जगद्दहति स एव सद्यो जलैर्जगत्सिञ्चति । तापेनैव वृष्टिर्भवतीत्यर्थः ॥

तैस्तैरलंकृतिशतैरवतंसितोऽपि
रूढो महत्यपि पदे धृतसौष्ठवोऽपि ।
नूनं विना घनरसप्रसराभिषेकं
काव्याधिराजपदमर्हति न प्रबन्धः ॥ ३२ ॥

उपमादीनामलंकाराणां शतैर्भूषितोऽपि। साडम्बरायां शब्दरचनायां रूढोऽपि धृत-व्युत्पत्तिरपि प्रवन्धः साहित्यादिर्घनरसप्रसरेणाभिषेकं विना काव्येष्वधिराज्यं नार्हति। सरसमेव काव्यं महाकाव्यमित्यर्थः। हाराद्यलंकारभूषितोऽपि सिंहासनारूढोऽपि पुरुषोऽभिषेकं विना न राजपदार्हः॥

वाणी प्रयत्नघटनानिपुणस्य रीति-
नैयत्यमल्पकवितुर्भजतां वराकी।
कल्लोलिता पुनरनङ्कुशमुक्तिदेवी
क्वेदृंशि संस्मरति तुच्छविचेष्टितानि॥ ३३॥

प्रयत्नेन। न तु हेलया। घटनायां शब्दार्थयोजने निपुणस्य सामान्यकवेर्वराकी मानानर्हा वाणी रीतौ। न त्वर्थसंदर्भे। नैयत्यं नियतत्वं श्रयताम्। उल्लसिता तु सरस्वती-दृशानि रीतिमात्ररूपाणि तुच्छविचेष्टितानि क्व स्मरति। न स्मरतीत्यर्थः। अल्पस्य कवेः काव्यं रीतिमात्रकमेव। महतस्तु सर्वगुणमयमिति तयोर्महदन्तरमित्यर्थः॥

श्लाघ्यैव वक्रिमगतिर्घनदार्ढ्यबन्धो-
स्तस्याः कविप्रवरसूक्तिधनुर्लतायाः।
कर्णान्तिकप्रणयभाजि गुणे यदीये
चेतांसि मत्सरवतां झटिति त्रुटन्ति॥ ३४॥

घनं यद्दार्ढ्यं दृढत्वरूपस्तेजोविशेषस्तस्य बन्धोः परिचितायाः। कस्या अपि लोकोत्तरायाः। सूक्तिरेव धनुर्लता तस्या वक्रत्वमेव स्तुत्यम्। यस्या गुण औदार्यादौ कर्णसमीपं गते श्रुते सति मत्सरिणां हृदयानि सद्यः स्फुटन्ति। गुणशालि काव्यं श्रुत्वा दुर्जनानां हृदयस्फोटः सद्यो भवतीत्यर्थः। वक्राया धनुर्लतायाश्च गुणे कर्णं प्राप्ते शत्रूणां हृदयानि स्फुटन्ति॥

तत्तत्समग्रबहुशास्त्रविमर्शसिद्ध-
वैदग्ध्यदिग्धमतयो बहवः कवन्ताम्।
यत्किंचिदस्ति तु महाकविवाग्रहस्यं
स्वप्नेऽपि तस्य किल ते न दिशं स्पृशन्ति॥ ३५॥

तेषां तेषां समग्राणां शास्त्राणां विमर्शेन क्षोदेन जातं यद्वैदग्ध्यं चातुरी तेन दिग्धोपचिता मतिर्येषां ते कवयो बहवः कवन्तां काव्ये प्रयतन्तामित्यर्थः। यत्तु किमपि महाकवीनामुक्तिरहस्यं सहृदयगम्यः कोऽपि परमार्थस्तस्य मार्गमपि ते न जानन्ति। आस्तां तावत्सारांशस्पर्शोऽल्पकवीनां तन्मार्गमात्रमपि दुर्लभमित्यर्थः॥

कुर्युस्त्वनुक्षणमशिक्षितलक्षणा ये
　कापेयमाः कविपदाधिगमस्पृहायाः ।
तेऽनुद्गतच्छदपुटा इव पक्षिशावा
　व्यग्रा हठोड्डयनभूम्न्यसकृत्पतन्ति ॥ ३६ ॥

अशिक्षितमनधीतं लक्षणं काव्यसाधनं यैस्ते ये कविरितिपदस्याधिगमस्ततो हेतोः प्रतिक्षणं चपलताम् । आः कोपे । विदध्युः । तेऽसंरूढपक्षाः पक्षिपोतका इव हठेन यथा यदुड्डयनं व्योमगमनं तस्य बाहुल्ये व्यग्रा यथा पतन्ति तथा बहुवारान्पतन्ति । पक्षान्विना यथोड्डयनं तथा लक्षणं विना काव्योद्यम इत्यर्थः । स्पृहाया इति कापेयं प्रति हेतौ पञ्चमी ॥

नो शक्य एव परिहृत्य दृढां परीक्षां
　ज्ञातुं मितस्य महतश्च कवेर्विशेषः ।
को नाम तीव्रपवनागममन्तरेण
　भेदेन वेत्ति शिखिदीपमणिप्रदीपौ ॥ ३७ ॥

बहुशः परीक्षामकृत्वाल्पस्येतरस्य महतश्च कवेर्विशेषोऽन्तरं ज्ञातुं नो शक्यः । '–ज्ञाग्लाघट–' इति शक्नोतावुपपदे जानातेस्तुम् । 'गुणक्रियातोऽपहृतं प्रधानक्रियया क्वचित् । कर्मोच्यते यथा देवः स्तोतुं शक्यो न केनचित्' इति विशेषशब्दात्प्रथमा । सवेगं मरुतं विना को दीपरत्नदीपौ भेदेन जानाति । वेगवता वातेन दीपः शाम्यति । न तु रत्नदीपः । तद्वत्परीक्षया सामान्यकाव्यं त्यज्यते । महाकाव्यं त्वाद्रियत इत्यर्थः ॥

व्युत्पत्तिभूषणमवेहि नितान्ततैक्ष्ण्या-
　न्माधुर्यतो रसमथोन्मिषदिक्षुदीक्षम् ।
रूढा तयोर्यदि मिथो घटना कवीनां
　जातैव तद्वचसि पानकरीतिसिद्धिः ॥ ३८ ॥

नितान्तं तीक्ष्णत्वान्नानाशास्त्रपरिचयं मरिचं जानीहि । मधुरत्वात्काव्ये रसमुन्मिषन्तीक्षुदीक्षा यत्र तं जानीहि । तीक्ष्णत्वमधुरत्वौ रसौ गुणौ च । तयोर्व्युत्पत्तिरसयोः संयोगो यदि भवति तदा काव्ये पानकस्य शर्करामरिचादिकृतपानविशेषस्य रीतिः सामरस्यं तस्य सिद्धिर्जातैव । तथाविधं काव्यं पानकतुल्यमित्यर्थः ॥

अभ्रंकषोन्मिषितकीर्तिसितातपत्रः
　स्तुत्यः स एव कविमण्डलचक्रवर्ती ।
यस्येच्छयैव पुरतः स्वयमुज्जिहीते
　द्राग्वाच्यवाचकमयः पृतनानिवेशः ॥ ३९ ॥

अभ्रंकषमाकाशगाम्युल्लसितं कीर्तिरेव सितच्छत्त्रं यस्य स कविमण्डले चक्रवर्ती स्तुत्यः । यस्य कविचक्रवर्तिन इच्छामात्रेणैव सद्योऽग्रे वाच्यवाचकमयोऽर्थशब्दप्रकृतिः सेनानिवेश उज्जिहीत उत्तिष्ठति । चक्रवर्तिनश्चेच्छया सेनायाति ॥

निष्पीडिता बहुमुखं स्रुवते बहूनां
गावश्चिरान्मितसुभाषितदुग्धधाराः ।
कश्चित्त्वगाधरसशुद्धनवप्रबन्ध-
क्षीरोददानपतिरेति कवीश्वरत्वम् ॥ ४० ॥

बहूनि मुखानि द्वाराणि संस्कृतप्राकृतादीनि यत्रैवं निष्पीडिता दुग्धा वाचो मिताः सुभाषितान्येव दुग्धधाराः स्रुवते स्रवन्ति । अगाधरसो रसमयः शुद्धो यो नवः प्रबन्धः स एव क्षीरोदः क्षीरसमुद्रस्तत्र दानपतिर्हेलया निर्माता कश्चित्कवीनामैश्वर्यमेति । प्रबन्धान्कुरुते । पद्यमात्रकर्तारो बहवः सन्ति । प्रबन्धकर्ता तु कविर्दुर्लभ इत्यर्थः ॥

या वैदर्भपथाध्वनीनभणितिप्रत्यग्रसूत्रान्तर-
प्रोतप्रीतिकृदर्थरत्नघटितः कण्ठे गुणो धीमताम् ।
वाग्देवीनयनाञ्चलाञ्चनचमत्कारं विनोदेति किं
सा वाणी मसृणीकृता निरवधि व्युत्पत्तिशाणाश्मनि ॥ ४१ ॥

वैदर्भ्या अयं वैदर्भो यः पन्थास्तत्राध्वनीना संचरन्ती या भणितिरुक्तिः सैव प्रत्यग्रं यत्सूत्रं तन्मध्ये गुम्फितानि प्रीतिकृन्त्यानन्दकराणि यान्यर्थरत्नान्युत्तमा अर्थास्तैर्घटितः कण्ठे गुणो या विदुषां भवति सा वाणी व्युत्पत्तिरेव शाणाश्मा घर्षणपाषाणस्तत्र मसृणीकृतेव सरस्वत्या नयनाञ्चलस्य नेत्रप्रान्तस्याञ्चनं निःक्षेपणं तेन चमत्कारं विना किमुदेति । तेनैवोदेतीत्यर्थः । मसृणीकृतेवेत्यत्रेवशब्दोऽध्याहर्तव्यः । अन्यथा चमत्काराभावात् । सरस्वतीप्रसादेनोल्लसिताया वाचो व्युत्पत्तिमसृणीकृतत्वासंभवात् ॥

यातास्ते रससारसंग्रहविधिं निष्पीड्य निष्पीड्य ये
वाक्तत्त्वेक्षुलतां पुरा कतिपये तत्त्वस्पृशश्चक्रिरे ।
जायन्तेऽद्य यथायथं तु कवयस्ते तत्र संतन्वते
येऽनुप्रासकठोरचित्रयमकश्लेषादिशल्कोच्चयम् ॥ ४२ ॥

वाग्रहस्यमेवेक्षुलतां निष्पीड्य निष्पीड्य बहुशो विमृश्य ये कवयो रसस्य काव्यसारांशस्य सारस्तस्य संग्रहविधिं चक्रिरे ते गताः । संप्रति पुनस्ते यथोत्तरं जायन्ते ये तत्र वाक्तत्त्वेक्षुलतायामनुप्रासादिरेव शल्कमसारभागस्तत्संग्रहं कुर्वते । सारभागस्य पूर्वैः संगृहीतत्वेनासारांशावशेषत्वात् । कठोरशब्दश्चित्रादीनां विशेषणम् ॥

सर्वः संचरते पथा परकविग्रामस्य कश्चित्तु स

श्लाघ्यः स्वप्रतिभाधनस्य महतः प्रक्रान्तदिव्यव्ययः ।

यद्विश्राणितनव्यवाङ्मयबृहत्सेतुप्रतिष्ठाजुषो

विस्रम्भाद्बहवस्तरन्ति गहने सारस्वतस्रोतसि ॥ ४३ ॥

सर्वः परकविग्रामस्य पथा संचरते । परकविभिरुल्लिखितस्यार्थस्यानुसारेण काव्यं कुर्वन्तीत्यर्थः । 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम् । स तु कश्चित्स्तुत्यः यः स्वमतिधनस्यारब्धोऽपूर्वो व्ययो येन सः । येन विश्राणितं प्रतिपादितं नव्यमुल्लेखरूपत्वाद्वाङ्मयं प्रबन्धः स एव सुखतरणोपायत्वाद्बृहत्सेतुस्तत्र प्रतिष्ठामालम्बनत्वेन ग्रहणं जुषन्ते । तत्कृतप्रबन्धानुसारिणः । सरस्वतीसंबन्धिन्यगाधत्वाद्रसमयत्वादविच्छिन्नत्वात्स्रोतसि प्रवाहे शास्त्रे निःशङ्कं तरन्ति । धनव्ययं कृत्वा येन च दत्तस्य सेतोर्मार्गेण बहवो नदीप्रवाहं तरन्ति स च स्तुत्यः ॥

निर्मर्यादखलोपतापनबृहद्दुष्कर्मनिर्मार्जन-

प्रायश्चित्तसचेतनश्रुतिसुधासेकक्रियादीक्षिताः ।

केषांचित्कृतिनां गिरः परिणतव्युत्पत्तिसीमन्तित-

प्रादुर्भूतनवीनवक्रिमगुणाः कण्ठे सतां शेरते ॥ ४४ ॥

निर्मर्यादं निरवधि कृत्वा यत्खलोपतापनं दुर्जनसंतापनं तदेव बृहद्दुर्वारं पापं तस्य निर्माजनाय निवारणाय प्रायश्चित्तं शुद्धिहेतुर्यः पण्डितकर्णविषयेऽमृतसेकः । सज्जना हि परकाव्यश्रवणादमृतसरसीव मज्जन्ति । तत्र दीक्षिताः कृतनियमाः । खलांस्तापयन्ति, सज्जनानाह्लादयन्तीत्यर्थः । दीक्षा च प्रायश्चित्ते युक्ता । परिणता पक्वा या व्युत्पत्तिस्तया सीमन्तितो विभागेन संनिवेशितः प्रकटीकृतो नवो वक्रभावो याभिस्ताः । केषांचित्कृतिनां वाचः सतां कण्ठे शेरते । अपूर्वत्वात्ता एव पठन्तीत्यर्थः ॥

अधिष्ठायाश्रान्तश्रुतविततसिंहासनधुरा-

महो वीरः कश्चिच्छ्रयति कविसाम्राज्यपदवीम् ।

विलासं गृह्णानो भणितिमयमक्षुण्णमपरै-

र्गिरो देव्या विश्राणितमभिनवं प्राभृतमिव ॥ ४५ ॥

अश्रान्तं गाढाभियोगेनाभ्यस्यमानं यच्छ्रुतं शास्त्रं तदेव विततं सिंहासनं तस्य धुरा धूस्तामाश्रित्य । अहो आश्चर्यं । कश्चिद्वीरः कविषु साम्राज्यं श्रयति । नानाशास्त्राभ्यासेन कविराजो भवतीत्यर्थः । अत एव सरस्वत्या दत्तं ढौकनकमिव भणितिप्रकृतिकं विलासमनन्यप्राप्तं गृह्णन् । सम्राजश्च ढौकनकमुचितम् ॥

व्युत्पत्तिप्रतिपत्तिचतुरवचःसंचारवाचंयमो
वक्रेणैव कलालवेन कुरुते यः काव्यमव्याकुलः ।
मुक्त्वा वर्म विहाय कर्म च समित्कालोचितं सोऽखिलं
विश्वं दारुमयेन जेतुमसिना संरम्भतो जृम्भते ॥ ४६ ॥

व्युत्पत्तिर्नानाशास्त्राणां प्रतिपत्तिः स्वीकारस्तया चतुरो यो वचःसंचारस्तत्र वाचंयमो मौनी । 'वाचि यमो व्रते' इति खश् । नानाशास्त्रेष्वनभ्यस्त इत्यर्थः । वक्रेण प्रसिद्धप्रस्थानव्यतिरिक्तेनोक्त्युत्कर्षेण योऽव्याकुलः काव्यं करोति स कवचं त्यक्त्वा सङ्ग्रामसमययोग्यं कर्म करणकौशलादिकं च विहाय दारुखड्गेन जगज्जेतुं संरम्भेण स्फुरति । अयुध्यमानो यदि जयति तदा व्युत्पत्तिं विना काव्यं करोतीत्यर्थः ॥

वाचां वक्रिमपद्धतिः सुविहितव्युत्पत्तिपारायण-
प्रावीण्यप्रगुणस्य हन्त कवितुः सोल्लासमुन्मीलति ।
क्षीणापीन्दुकला चराचरगुरोर्देवस्य चण्डीपते-
श्चूडासङ्गमवाप्य कुत्र न गता ह्यानवद्यां स्थितिम् ॥ ४७ ॥

सुविहितमवधानपूर्वकं कृतं यद्व्युत्पत्तिपारायणं नानाशास्त्राध्ययनं तेन प्रावीण्यं कौशलं तेन प्रकृष्टगुणस्य कवितुर्वाचां वक्रत्वं सोल्लासं स्फुरति । जगद्गुरोर्देवस्य भगवतो मौलिनिवासमासाद्य क्षीणापि चन्द्रकला ह्यानवद्यां स्थितिं गता । क्षीणापीत्यपिशब्देन क्षीणाचन्द्रकलाविलक्षणाया वाण्या दण्डापूपिकया सिद्धम् । व्युत्पन्नस्य वक्रता शोभत इत्यर्थः ॥

अविहितबृहत्तत्तच्छास्त्रक्रमोपनिषच्छ्रमे
कवितरि गिरि प्रागल्भ्यं नो कथंचिदुदञ्चति ।
ऋतुकृतपरीपाकस्रोतःप्रकर्षमनाश्रिते
कथमिव रसप्रस्यन्दः स्याद्दधित्थशलाटुनि ॥ ४८ ॥

अविहितोऽकृतो बृहतां तेषां तेषां शास्त्राणां क्रमोपनिषद्रहस्यं तत्र श्रमोऽभ्यासो येन तस्मिन्कवौ विषये वाचि सौष्ठवं कथंचिदपि न स्फुरति । व्युत्पत्त्यभ्यासं विना काव्यं न स्फुरतीत्यर्थः । ऋतुना वर्षाकालेन कृतः परीपाको येषां तानि स्रोतांसि यत्रैवं प्रकर्षमुत्कर्षमनाश्रितेऽप्राप्ते दधित्थशलाटुनि कपित्थवृक्षस्यामे फले रसस्रुतिः कथमिव स्यात् । न स्यादित्यर्थः । अव्युत्पत्तिकाव्यं चर्वितं सदामकपित्थवद्वैरस्यं जनयतीत्यर्थः । 'दधित्थे स्युः कपित्थग्राहिमन्मथाः । आमे फले शलाटुः स्यात्' इति कोषः ॥

आटोपेन पटीयसा यदपि सा वाणी कवेरामुखे
खेलन्ती प्रथते तथापि कुरुते नो सन्मनोरञ्जनम् ।

न स्याद्यावदमन्दसुन्दरगुणालंकारझांकारितः
स प्रस्यन्दिलसद्रसायनरसासारानुसारी रसः ॥ ४९ ॥

अतिमहत्या पदरचनया कवेर्वाण्यामुखे । न तु पर्यवसाने । यदपि प्रथते तथापि सा वाणी सतां मनोरञ्जनं चमत्कारं तावन्न कुरुते यावदमन्दसुन्दरगुणा येऽलंकारा उपमादयस्तैर्झांकारितः संमुखीकृतस्तथा प्रस्यन्दी स्रुतिमांल्लसन्यो रसायनरसासारोऽमृतरसासारस्तमनुसरति तथाविधो रसो न स्यात् । आमुख आडम्बरो मनोरमः पर्यवसाने नीरस इत्यर्थः ॥

मधुकणमुचो वाचो येषां विसारि रसं कम-
प्युरुतरपरीपाकोद्रेकाः पिका इव बिभ्रति ।
त इह कवयो मन्ये नान्ये पुनर्दुरतिक्रम-
क्रमकठिनतायोगाद्येषां विमुह्यति शेमुषी ॥ ५० ॥

उरुतरो बहुः पाकोत्कर्षो यासां तथा मधुकणान्माक्षिकबिन्दूनिव याः स्रवन्ति ता वाचः कोकिला इव कमपि लोकोत्तरं विसारि रसं बिभ्रति त इह कवय इति मन्ये । अथवान्वयव्यवधानेऽपि पिका इव ते कवय इति योज्यम् । अन्ये तु मधुरेतरवाचः कवयो न भवन्ति येषां दुरतिक्रमक्रमा दुर्लङ्घ्यक्रमा कठिनता दुर्बोधता तस्या योगाच्छ्रोतॄणां मतिर्मुह्यति । उदारमेव काव्यं काव्यम् । न त्वन्यत् ॥

परश्लोकान्स्तोकान्प्रतिदिवसमभ्यस्य ननु ये
चतुष्पादीं कुर्युर्बहव इह ते सन्ति कवयः ।
अविच्छिन्नोद्गच्छज्जलधिलहरीरीतिसुहृदः
सुहृद्या वैशद्यं दधति किल केषांचन गिरः ॥ ५१ ॥

अल्पान्परश्लोकान्सदाभ्यस्य ये चतुष्पादीं श्लोकमात्रं कुर्युस्त इह बहवः कवयः सन्ति । यत्नेन मितं च काव्यं कर्तुं बहवः समर्था इत्यर्थः । अविच्छिन्नमनाहतमुद्गच्छन्त्यो या जलधिलहर्यस्तासां रीतिः परिपाटी तस्याः सुहृदः सख्यस्तथा सुष्ठु हृद्या मनोरमाः केषांचन विरलानां गिरो वैशद्यं विशदत्वं निर्मलत्वं दधति । प्रबन्धकारिणो विरला इत्यर्थः ॥

दिव्ये वाक्प्रसरक्रमे सुकवितुः प्रत्यक्षवाचस्पतेः
श्रोतुस्तोतृकथासु कः खलु पटुः स्याच्चर्मचक्षुर्जनः ।
लभ्यः शेषफणी कुतोऽत्र स तु यश्चक्षुःसहस्रद्वये-
नाकर्ण्यैनमथ स्तुतौ वितनुयाज्जिह्वासहस्रद्वयीम् ॥ ५२ ॥

स कवेरपूर्वत्वाद्दिव्ये वागुल्लासे विषये श्रोतृत्वे च कश्चर्मचक्षुर्जनोऽल्पदर्शी प्रगल्भः

समर्थः स्यात् । अल्पदर्शिनां दिव्यकाव्यकरणं दूरतोऽस्तु । अन्यकृतं दिव्यं काव्यं श्रोतुमपि ते न योग्याः । कुतः पुनः स्तोतुमिति भावः । स पुनः शेषो नागराजो भूमण्डले कुतो लभ्यः । तस्य नागलोकेश्वरत्वात् । यः शेष एवंविधं वागुल्लासं चक्षुःश्रुतित्वाद्दृष्टिसहस्रद्वयेन श्रुत्वा तत्स्तुतौ दिव्यकाव्यस्तवे जिह्वासहस्रद्वयीं प्रसारयेत् । शेषो हि तत्काव्यं श्रुत्वा साश्चर्यो भूत्वा स्तौतीत्यर्थः ॥

मेण्ठे[1] स्वर्द्विरदाधिरोहिणि वशं याते सुबन्धौ विधेः
शान्ते हन्त च भारवौ विघटिते बाणे विषादस्पृशः ।
वाग्देव्या विरमन्तु मन्तुविधुरा द्राग्दृष्टयश्चेष्टते
शिष्टः कश्चन स प्रसादयति तां यद्वाणिसद्वाणिनी ॥ १३ ॥

मेण्ठनाम्नि कविराजे स्वः स्वर्ग एव द्विरदस्तमधिरोहति । प्रमीत इत्यर्थः । सुबन्धुकवौ विधेर्वशंगते । तथा भारविकवौ निर्वाणे । तथा बाणकवौ विघटिते भग्ने सति । विषादस्पृशः सदुःखायाः सरस्वत्याः । हन्त कष्टे । मन्तुविधुराः शोकग्लाना दृष्टयो व्यापारा विरमन्तु । सरस्वती मा शोचत्वित्यर्थः । यतः स कश्चन शिष्टश्चेष्टते रंहते (?) यद्वाणिरेव सद्वाणिनी शोभना दूती तां सरस्वतीं प्रसादयति । मेण्ठादिमरणदुःखं विस्मारयतीत्यर्थः । कश्चनेति संवृतिवक्रतया स्वात्मानं निर्दिशन्कविर्मेण्ठादिकाव्यात्स्वकाव्यमधिकं द्योतितवान् ॥

त्रयस्त्रिंशत्कोट्यो दधतु विबुधा द्वेषकलुषां
धियं नित्यं काव्ये त्रिदशचरिते के वयममी ।
भुवः खण्डेऽप्यस्मिन्वत स विधिनैकोऽपि विबुधो
न सृष्टो यः काव्यं धृतविमलबुद्धिः कलयते ॥ १४ ॥

त्र्यधिका त्रिंशत्त्रयस्त्रिंशत् । 'त्रेस्त्रयः' इति त्रयस् । त्रयस्त्रिंशत्कोट्यः । सर्वा इत्यर्थः । विबुधा देवाः काव्ये शुक्रे दैत्यगुरुत्वाद्द्वेषकलुषामप्रसन्नां दृशं नित्यं दधतु । अप्रसन्नाः सन्त्वित्यर्थः । यतो देवानां चरिते अमी वयं के कतमे । देवचरितान्वेषणं दूरतस्तिष्ठतु । यतो भूमण्डलेऽपि विधात्रैकोऽपि स पण्डितो न निर्मितो यो धृता विमला निर्दोषा बुद्धिर्येन तथा भूत्वा काव्यं विमृशति । एकोऽपि खण्डेऽपीत्यपिशब्दाभ्यां दण्डापूपिकया स्वर्गे विबुधानां काव्यविषये मत्सरवारणं दुष्करमिति सिद्धम् । काव्यविबुधशब्दयोरुभयार्थवाचित्वाद्वाक्यद्वयोक्तिसंगतिः ॥

शब्दार्थानां परिषदखिला नित्यमाज्ञाविधेया
दास्यं यस्य श्रयति पुरतो भ्रूलतास्पन्दनेन ।

---

१. हयग्रीववधनामकमहाकाव्यस्य कर्ता मेण्ठकविः कश्मीरदेशे विक्रमादित्यसमये वर्तमान आसीदिति राजतरङ्गिणीग्रन्थादवगम्यते.

स श्लाघ्यश्रीर्जगति कथितश्चक्रवर्ती कवीनां
श्वेतच्छत्रच्छविरुपचिता किं च तस्यैव कीर्तिः ॥ ९५ ॥

यस्य भ्रूलतायाः स्पन्दनेन भ्रूकम्पमात्रेण । इच्छामात्रेणेत्यर्थः । शब्दार्थानां सर्वसामग्र्याज्ञाकारित्वादग्रे दासत्वं भजति । न तु हठाद्दासीकृतवन्मनसा द्वेष्टि । स जगति कविचक्रवर्ती ख्यातः । तस्यैव सितच्छत्रशुभ्रा कीर्तिरुपचिता वृद्धिं गता । चक्रवर्तिनश्च सर्वे शासनकारिणश्छत्रं चोचितम् ॥

शैथिल्यस्पृशि संशयावहपदे क्षोदासहिष्णौ कवेः
स्वैरं तत्र सरस्वती निविशते किं काव्यजीर्णौकसि ।
यच्छास्त्रक्रमशिल्पकारुभिरलंभूष्णुप्रकर्षैः परै-
र्न्यस्ताभिः कथमप्युपस्कृतिवचःस्थूणाभिरुत्तभ्यते ॥ ९६ ॥

शैथिल्यं गाढत्वरूपस्यौजोविशेषस्याभावः । अन्ये तु शैथिल्यप्रदो गुणसंप्लवादित्याहुः । तत्स्पृशति । तथा संशयावहानि संदेहकारीणि पदानि यत्र । तथा क्षोदं विमर्शमसहिष्णौ । ईदृशे कवेः काव्यमेव जीर्णौकः पुराणगृहं तस्मिन्किं सरस्वती निविशते । यत्काव्यजीर्णगृहं काव्यक्रमशिल्पकारुभिर्मर्मज्ञैरलंभूष्णुप्रकर्षैः समर्थाधिक्यैः परैः कथमपि कष्टेन न्यस्ताभिर्योजिताभिरुपस्कृतिवचांसि गुणाधायकानि पदान्येव स्थूणाः स्तम्भास्ताभिरुत्तभ्यत उन्नाम्यते । एवंविधे पुराणगृहे च राज्ञी नोपविशति ॥

वाचः काव्यरहस्यवर्त्मनि पराः पुष्णन्तु पङ्गूयितं
तस्याः किं तु गिरः क्व नाम घटते रोधः पदस्फूर्तिषु ।
या सारस्वतपादलेपनिभृतावस्कन्दितानङ्कुश-
स्वाच्छन्द्याखिलवाङ्मयाध्वसु यथाभिप्रायमाचेष्टते ॥ ९७ ॥

परा वक्ष्यमाणोक्तिविलक्षणा वाचः काव्यरहस्यमार्गे पङ्गूयितं पङ्गुवदाचरितं पुष्णन्तु । तस्या वाचः पदस्फूर्तिषु रोधो रुद्धिः क्व नाम घटते जायते । या वाक्सारस्वतो यः पादलेपस्तेन निभृतमविचलमवस्कन्दितं प्राप्तमनङ्कुशमयन्त्रणं स्वाच्छन्द्यं यया सा । समस्तशास्त्रेषु यथाभिलाषं चेष्टते । पादलेपप्रभावाच सर्वपथेषु निर्निरोधः संचारः ॥

तान्संगच्छति भारती भगवती विस्रम्भतः क्रीडया-
नुध्यातैव झगित्यसावपि हठानभ्यासदूरीकृता ।
तत्तद्यत्नशतप्रसादितवचोदेवीप्रसादीकृतं
स्वच्छं संगमनीयरत्नमिव ये शक्त्यद्भुतं बिभ्रति ॥ ९८ ॥

१. 'संगमनीय इति मणिः शैलसुताचरणरागयोनिरयम् । आवहति धार्यमाणः संगममचिरात्प्रियजनेन ॥' इति विक्रमोर्वशी ४।३६.

हठेन चिरकालं योऽनभ्यासस्तेन दूरीकृता भगवती भारती हेलया स्मृतैव द्रुतं विश्वासेन तान्संगच्छति । तानाश्रयतीत्यर्थः । तत्तद्यत्नशतैरध्ययनबोधादिभिः प्रसादिता या वचोदेवी सरस्वती तया प्रसादीकृतं शक्त्यद्भुतं विचित्रं कवित्वबीजं ये बिभ्रति । किमिव । स्वच्छं संगमनीयरत्नं संगमहितं रत्नमिव । संगमनीयरत्ने हि सति सर्वे संगच्छते । शक्तिव्युत्पत्त्यभ्यासरूपात्कवित्वबीजत्वाच्छक्तेरेव प्राधान्यमित्यर्थः । यत्नेन सेवितः स्वामी च प्रसादं करोति । संपूर्वस्य गमेः सकर्मकत्वादात्मनेपदाभाव इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्वावर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये सुजनदुर्जनवर्णनो नाम द्वितीयः सर्गः ।

---

## तृतीयः सर्गः ।

कुबेरसख्याः ककुभो ललाटिका यदेति कश्मीरपदाभिधेयताम् ।
सतीसरोनाम तदस्ति मण्डलं विचित्रसर्गावभृथः प्रजापतेः ॥ १ ॥

कुबेरस्य धनदस्य परिचिता । स्वत्वात् । ककुबुत्तरा दिक्तस्या ललाटिका ललाटभूषणम् । 'कर्णललाटात्कनलंकारे' । उत्तरदिशि वर्तमानानां पदार्थानां मध्ये तस्य देशस्याधिकगुणत्वात् । यन्मण्डलं कश्मीर इति पदेन वाच्यतामभिधेयतामेति । कश्मीरसंज्ञमित्यर्थः । एतेन पुराणप्रसिद्ध्यनुसरणं द्योतितम् । विधातुर्नानाविधसृष्टौ यज्ञान्तस्नानं तत्सतीसरोनाम मण्डलमस्ति । सर्गो यज्ञस्थानीयस्तन्मण्डलं स्नानस्थानीयं शुद्धिहेतुत्वात् ॥

विभान्ति यत्रानघदैर्घ्यसौहृदादहंयुभिर्यूपपरिग्रहैर्दिशः ।
कलेः प्रवेशानवकाशसिद्धये स्वयं मुखेष्वङ्कुरितार्गला इव ॥ २ ॥

यत्र मण्डले दीर्घत्वादुद्धतयूपैर्दिशः क न भान्ति । अत एव कलिप्रवेशस्यावकाशाभावाय स्वयं प्रवेशस्थानेषु संमुखीभूतार्गला इव । यत्र चार्गलव्यापारस्तत्र प्रवेशो न सिद्ध्यति ॥

विभाव्यते सान्द्रहिमार्द्रमूर्तिभिः प्रवर्तिताट्टालकमुद्रमद्रिभिः ।
मणिव्रजैश्वर्यजितेन सूत्रितप्रदक्षिणं क्षीरसरस्वतेव यत् ॥ ३ ॥

घनहिमप्लुताङ्गैः पर्वतैः कृतः प्राकारटङ्को यस्य तन्मण्डलं रत्नसाम्यजितेन क्षीरसमुद्रेण कृतप्रदक्षिणमिव लक्ष्यते । पर्वतपरिवेषोक्तिमुखेन सर्वदेशानां मध्यात्कश्मीरदेशस्य युक्त्या दुर्जयत्वं प्रकाशितम् । न केवलं दुर्जयत्वमेव यावद्रत्नाकरादधिकत्वमपीत्युत्प्रेक्षयोक्तम् । अन्यश्च बलवता जितः संस्तस्य प्रदक्षिणं करोति ॥

तनौ बटूनां प्रकटत्वमानयन्नयत्नकृष्णाजिनसंविधानकम् ।
शिखित्रयीधूमभरोऽखिलं रजः प्रमार्ष्टि यत्रौकसि सोमपीथिनाम् ॥ ४ ॥

द्विजातिपुत्राणां शरीर आयासं विना कृष्णाजिनस्य संविधानकं घटनं प्रकाशयन्ना- हिताग्निशालास्वग्नित्रयीधूमपुञ्जः सकलं पापं वारयति । धूमस्पर्शमात्रात्कृष्णाजिनधार- णपुण्यं द्विजशिशवः प्राप्नुवन्तीत्यर्थः । धूल्यर्थपक्षे धूमेन सह विरोधाभासः ॥

क भान्ति यस्मिन्मधुपानभूमयो न नागरङ्गैः शिशिरे विलासिनाम् ।
शनैर्मनो भङ्क्तुमुपोढधन्वनः स्मरस्य शोणाश्मबृहद्गुलैरिव ॥ ५ ॥

शिशिरसमये यत्र देशे विलासिनां मधुपानस्थानानि नागरङ्गैः क न भान्ति । अना- ज्ञाविधेयानां चित्तभङ्गं विधातुं धृतगुणचापस्य कामस्य शोणाश्ममयैर्बृहद्भिर्गुलैरिव । श- नैरित्यनाकलितम् ॥

स्थलाधिदेवीकुरुविन्दशेखरप्रभाङ्कुरैः कुङ्कुमगर्भकेसरैः ।
करोति यस्य क्षितिरक्षतायुषं जगत्त्रयस्त्रैणविशेषकक्रियाम् ॥ ६ ॥

स्थलदेवताया मुकुटपद्मरागरश्म्यग्रैः कुङ्कुमपुष्पकेसरैर्हेतुभिर्यस्य भूमिर्जगत्त्रये स्त्रैणस्य स्त्रीसमूहस्य तिलकक्रियामक्षतायुषं चिरजीविनीं करोति । कश्मीरकुङ्कुमेनैव त्रिलोक- वनितास्तिलकं सदा कुर्वन्तीत्यर्थः । यद्वा जगत्त्रये यत्स्त्रैणं तस्य यद्भूस्तिलकक्रियां करोति । यद्भूरेव तिलकभूतेत्यर्थः ॥

वितस्तया यत्र लुठत्तटद्रुमप्रसूनसौहार्दभृतोऽलिसंपदः ।
पुरस्क्रियन्ते हठमज्जनोत्सवभ्रमत्सुरस्त्रीकबरीसनाभयः ॥ ७ ॥

पतन्ति यानि तटवृक्षाणां पुष्पाणि तेषां सख्यं बिभ्रति । सौरभलाभेन वृक्षपतितपु- ष्पेभ्योऽनुस्थिता इत्यर्थः । वितस्तया महानद्या भ्रमरपङ्क्तयः प्रकटीक्रियन्ते । अत एव हठेन व्यसनेन मज्जनोत्सवस्तेन भ्रमन्त्यो याः सुरस्त्रियस्तासां कबरी वेणी तस्याः स- नाभयः सदृशः । उपमोपक्रमोत्प्रेक्षेयम् । स्नान्तीनामपि तासामदृश्यत्वात् । एतेन ना- कनद्या अप्यधिकाः पावनत्वादिगुणा द्योतिता इत्यर्थः ॥

रसायनैर्यत्र पुरंध्रिविभ्रमक्रियामयैरात्तनवीनयौवनः ।
पतत्तुषारच्छलतस्तपःक्षणे जहाति मूर्तं पलितं रतिप्रियः ॥ ८ ॥

यत्र रामाणां विलासक्रियाप्रकृतिभी रसायनैः प्राप्तं नवीनं बलवत्त्वं येन स कामो माघमासे पततो हिमस्य व्याजान्मूर्तं जराकृतं केशशौक्ल्यं त्यजति । हेमन्ते सुखिनो नित्यं स्त्रीभोगं कुर्वन्तीत्यर्थः । अन्यश्च तपःक्षणे ब्रह्मचर्यादौ सति रसायनैस्तरुणो भवति । रतिप्रिय इति साकूतम् ॥

व्यनक्ति यत्रोदकतर्षुकैर्वृतं घनैर्महापद्मफणीश्वरः सरः ।
मुकुन्दपादाहतिदोहदोन्मिषच्छिरःसरोजातिथिभृङ्गभङ्गिभिः ॥ ९ ॥

यत्र महापद्मनामा नागराजो जलाभिलाषुकत्वान्मेघैर्वेष्टितमुल्लोलाख्यं सरः प्रकाश-

यति । विष्णोः पादेनाहतिस्तया । दोहदोऽत्र पद्माधानलक्षणः । तेनोन्मिषच्छिरःपद्मं तस्यार्थिनां भ्रमराणां भङ्गिर्विच्छित्तिर्येषां तैः । कालियनागस्य हि विष्णुचरणन्यासेन पद्मोत्पत्तौ तल्लाञ्छनत्वान्महापद्म इति प्रसिद्धिः । समुद्रवद्तोऽपि मेघैर्जलं गृह्यते ॥

विवृण्वती कौतुकतन्तुसंततिं भुवं यदीयामधिगम्य शारदा ।
घनै रजोभिश्चरणारविन्दजैः करोति सारस्वतदृक्प्रसादनम् ॥ १० ॥

कौतुकमेव तन्तुस्तत्संततिं प्रकाशयन्त्याश्चर्यकारिणी शारदा यद्भुवमासाद्य पादपद्मयो रजोभिर्हेतुभिः सारस्वत्या दृशो बोधशक्तेः प्रसन्नतां जनयति । शारदापादपद्मसेवया सुखेन विद्यां प्राप्नुवन्तीत्यर्थः । रजोभिः प्रसादनोक्त्या विरोधाभासः ॥

पिनाकिनो मूर्तिषु सर्पिरर्पितं न यत्र नेत्राग्निवलाद्विलीयते ।
किरीटकोटीगृहमेधिनो विधोः प्रभाभिराश्यानमिवोत्तरायणे ॥ ११ ॥

उत्तरायणे यत्र भगवतो मूर्तिषु विजयेश्वरादिकास्वर्पितं घृतं भगवन्नेत्राग्नितेजसा विलयं न याति । घृतस्य बहुत्वादिहेतुरत्र प्रत्येयः । भगवतः किरीटकोट्यां गृहमेधिनो वसतो विधोश्चन्द्रस्य दीप्तिभिराश्यानम् । 'आस्त्यानमिव' इत्यार्षः पाठः (?) । कठिनीभूतमिवेति संभावनम् । भगवतस्तत्र नित्यसांनिध्यमित्याशयः ॥

वशंवदः शंसितसंततस्थितेरिव श्रियाः कार्मणकर्मयुक्तिभिः ।
विमुच्य दुग्धाब्धिजरत्कुटीरकं पुनाति यच्चक्रधरात्मना हरिः ॥ १२ ॥

शंसिता सुखप्राप्त्या स्तुता संततस्थितिर्यया तस्याः । कश्मीरेषु नित्यं वसन्त्या इत्यर्थः । अब्धिपुत्र्या भर्तृस्नेहात्कृताभिः कार्मणकर्मयुक्तिभिर्वशीकरणप्रयोगैरायत्त इव नारायणः क्षीरसमुद्र एव जरत्कुटीरकं चिरानुभूतं गृहं तत्त्यक्त्वा चक्रधररूपेण यत्पवित्रयति । न्यूनगुणत्वात्क्षीरसमुद्रं त्यक्त्वा यत्रैव हरिर्वसतीत्यर्थः ॥

अवामनानेकसमीपपर्वतच्छलादुदस्ताभयहस्तसंहति ।
यदण्डजाखण्डलभङ्गखण्डनात्करोति कद्रूा अदरिद्रमन्वयम् ॥ १३ ॥

उन्नता बहवो ये निकटपर्वतास्तद्व्याजादुत्क्षिप्ता अभयहस्तपङ्क्तिर्येन तन्मण्डलं कर्तृ अण्डजाखण्डलाद्गरुडाद्भयं तत्खण्डनान्नागकुलमदरिद्रं सुखितं करोति । तत्र वसतां नागानां गरुडाद्भयं नास्तीत्यागमः । तत्रोत्प्रेक्ष्यते—गिरिव्याजान्नागानामभयार्थं हस्तानिवोन्नमयतीत्यर्थः । गरुडभीतिवारणादिति ॥

स यत्र भर्गः कपटेश्वराख्यया निरस्तलोकत्रयकल्मषक्लमः ।
दधद्वपुः काष्ठमयं जले स्वपित्यनुद्भमायेव दृगग्नितेजसः ॥ १४ ॥

लोकत्रयस्य पापेन खेदो निरस्तो येन तथा काष्ठमयीं मूर्तिं दधदत एव नयनाग्नेर्ज्वलनाभावायेव कपटेश्वरनामा महेश्वरो वारिणि गूढं वसति । जलवासित्वात्क्लमहरणोक्तिः ॥

विभर्ति मार्तण्डवपुर्यदन्तिके पदं प्रभुर्ध्वान्तगदैकभेषजम् ।
उपेत्य पौरप्रमदामुखेन्दुभिः स्वकान्तिपूरैर्मसृणीकृतातपः ॥ १५ ॥

मार्तण्ड इति वपुर्मूर्तिर्यस्य स मार्तण्डसंज्ञ इत्यर्थः । ध्वान्तं तमस्तदेव गदो रोगः । ध्वान्तं च गदश्चेति वा । ध्वान्तसदृशो मोहकारित्वाद्यो गदो रोगस्तस्यैकभेषजमौषधं तमोहर्ता प्रभुः सूर्यो यत्पदं बिभर्ति प्रभावेण रक्षतीत्यर्थः । अथवा यत्पदं स्थानमुपेत्य सूर्यो मार्तण्डवपुः कर्म पदं बिभर्ति । अथवा यदन्तिके कपटेश्वरनिकटे सूर्यः पदं बिभर्ति । अत्र च पूर्वश्लोके 'स भर्गः' इति तच्छब्दनिर्देशः । व्याख्यान्तराश्रयणे तु प्रसिद्ध्यर्थः । अन्तिके पौरस्त्रीमुखचन्द्रैः कर्तृभिः स्वकान्तिपूरैर्हेतुभिः करणैर्वा मसृणीकृतो मृदुः संपादित आतपो यस्य । एतेन सूर्यस्य तत्र साक्षात्संनिधानभूमिष्वस्तित्वेन चण्डत्वादसेव्यत्वं परिहृतम् । अन्तिकग्रहणान्मार्तण्डसंज्ञस्य पुरत्वं प्रतिपादयति । अथवा पूर्वश्लोकनिर्दिष्टस्य भगवत्स्वापस्यायं श्लोको हेतुत्वेनोपन्यस्तः । यत्तमोहरोऽर्को निकटे वसत्यतो भगवान्स्वपिति निर्विकल्पमास्ते । भगवद्विधेयस्य तमोहरणस्य सूर्येणैव विहितत्वात् ॥

पुरस्थतीर्थप्रतियातनातिथिर्विगाहते यत्र स धाम वामनः ।
बलेरकाण्डे दययेव बन्धनच्छिदेऽवरोहन्फणिराजविष्टपम् ॥ १६ ॥

पुरस्थमग्रवर्ति यत्तीर्थं जलं तत्र प्रसन्नत्वात्प्रतियातना प्रतिबिम्बस्तस्यातिथिः सखा वामनो यत्र धाम तेजः स्थानं वादत्ते । तत्र संभाव्यते—अकाण्डेऽनिमित्तमकाले वा करुणया बलेर्बन्धनच्छेदाय पातालं प्रविशन्निव । प्रतिबिम्बस्य तटसंमुखत्वमनादृश्योत्प्रेक्षेयम् ॥

वियोगिहृल्लोहितसंविभागवन्मनोभवप्रासविलासबन्धुभिः ।
दिगन्तदूतैर्घुसृणस्य केसरैः करोति यत्कीर्तिसुभिक्षमक्षतम् ॥ १७ ॥

वियोगिनां हृन्दि हृदयानि तेषां संबन्धिनो लोहितस्य रक्तस्य संविभागो येषां ते ये कामस्य प्रासास्तेषां विलासबन्धुभिः सदृशैः । प्रासैरिव तैः कामो जयतीत्यर्थः । दिगन्तेषु दूतैः कीर्तिख्यापकैः कुङ्कुमकेसरैः करणैर्यन्महद्यशः स्वस्योत्पादयति । अथवा कीर्तिसुभिक्षं कर्तृ यदक्षतं सर्वगतं करोति ॥

न जातु यस्मिन्वसुधाविलासिनामकीर्तिजम्बालजनिक्रियाक्रमः ।
यतः स कूटस्थतयैव जृम्भते पुराङ्गनालोकदृशामवग्रहः ॥ १८ ॥

यस्मिन्वसुधाविलासिनां भूपतीनामकीर्तिरेव मलिनत्वात्पङ्कस्तस्य जनिक्रियोत्पत्तिस्तस्याः क्रमो न जातु भवति । यतो यत्पुरस्त्रीजनस्य दृशामवग्रहो वृष्टिप्रतिबन्धः । बाष्पाभाव इत्यर्थः । स कूटस्थतया कालव्यापित्वेन स्फुरति । वृष्टौ हि सत्यां पङ्कं भवति । प्रत्यवेक्षया पौरेषु नित्यसुखितेषु यद्भूभुजां यश एव स्फुरतीत्यर्थः ॥

कटाक्षिते शारदया दयामृतद्रवार्द्रदृष्ट्या श्रुतिशष्कुलीपदम् ।
न शास्त्रभोगानशनव्रतक्रियासहिष्णु बाला अपि यत्र बिभ्रति ॥ १९ ॥

दयैवाप्यायकत्वादमृतं तस्य प्रवाहस्तेनार्द्रा दृष्टिर्यस्यास्तया शारदया कटाक्षिते यत्र शिशवोऽपि कर्णपत्रिकास्थानं शास्त्रभोगस्यानशनव्रतमचर्वणनियमस्तत्सहिष्णु शास्त्रश्रवणायोग्यं न बिभ्रति । शारदाप्रसादादयत्नेनैव विद्याप्राप्तिरित्यर्थः ॥

स संगमो यत्र समुद्रकान्तयोर्विहारवीथी ध्रुवमिन्दुलक्ष्मणः ।
निरन्तरावर्तशतैर्व्यनक्ति यः खुराग्रमुद्रा इव तत्ककुद्मतः ॥ २० ॥

समुद्रकान्तयोः सिन्धुवितस्तयोः संगमो यत्र भवति । पवित्रत्वान्नूनमीश्वरस्य विहरणमार्गः । ईश्वरस्य यो वाहवृषस्तस्य खुरपदवीरावर्तव्याजेन यः संगमः प्रकटयतीति साधनम् ॥

गुणैर्मयूखैरिव शुद्धिमत्तरैर्निकाममुत्तंसितसर्वदिङ्मुखम् ।
धृतप्रसिद्धि प्रवराख्यया पुरं विगाहते यस्य किरीटरत्नताम् ॥२१॥

रश्मिभिरिवातिशुद्धैर्गुणैर्हेतुभिरुत्तंसितानि सर्वदिङ्मुखानि यत्र तत्प्रवराख्यया प्रवरसेननाम्ना प्रसिद्धम् । तन्निर्मितत्वात् । अथवा सर्वनगरेभ्योऽधिकत्वात्प्रवरमित्याख्ययेति व्याख्येयम् । नगरं यस्य मौलिमण्डलभूषणत्वं भजते । मयूखैरिव गुणैः सुवर्णसूत्रैर्भूषितं किरीटरत्नं भवति ॥

जयन्ति ते यत्र चकोरचक्षुषां परं विलासा रतितन्त्रसूरयः ।
वितृण्वते मान्मथशौर्यकत्थनप्रथासु ये तथ्यतया समर्थनाम् ॥ २२ ॥

चकोरचक्षुषां स्त्रीणां विलासाः परमत्यर्थं जयन्ति । रतितन्त्रमेव तन्त्रं व्याकरणादि तत्र सूरयोऽध्यापका ये विलासा मान्मथशौर्यस्य कामपराक्रमस्य कत्थनप्रथा मुनिजयरूपास्तासु समर्थनां वितृण्वते प्रकाशयन्ति । यत्र स्त्रीणां विलासान्दृष्ट्वा मुनयोऽपि भ्रमन्ति । पण्डिताश्चासमर्थान्समर्थयन्ते ॥

प्रदर्शिताश्लेषनिपीडनोल्लसद्रसातिरेकेषु न यत्र जातुचित् ।
कुचेषु नैविड्यमधीरचक्षुषां महाकवीनां च वचःसु शीर्यते ॥ २३ ॥

प्रदर्शितमालिङ्गनेन निपीडनं मण्डलाकारताप्राप्तिस्तेनोल्लसन्रसातिरेको येषु । कठिनो हि स्तन आलिङ्गनेन पीडितो भवति । इति स्तनपक्षे । न श्लेषेण निपीडनमश्लेषनिपीडनं श्लेषाभावस्तेन सरसेषु । इति वचःपक्षे । स्त्रीस्तनेषु काव्येषु च निर्विवरत्वं गाढत्वलक्षणमोजश्च न जातु शीर्यते । यत्र पानाशनगुणेन स्त्रियो नित्ययौवनाः शारदाप्रसादेन कवयः सरसकाव्याश्च भवन्तीत्यर्थः ॥

पयोनिधिप्रेमभुवोर्महासरिद्वितस्तयोर्यत्र चकास्ति संगमः ।
वनं घनावर्तनिभेन योजयन्नवालवालैरिव धर्मगर्मुताम् ॥ २४ ॥

घना य आवर्ता जलभ्रमास्तद्व्याजेन धर्मगर्मुतां पुण्यलतानां वनं जलधारणैः संगम-

यन्निव महत्त्वादविरोधाद्वा समुद्रप्रियश्रीर्महासरिद्वितस्तयोर्महानद्योः संगमो यत्र शोभते । तत्र संगमे स्नानादि महाफलमित्यर्थः ॥

निशासु यस्मिन्वलभीषु विभ्रमादपास्तनीरङ्गिकवक्त्ररोचिषा ।
विलासलोला बहुलेऽपि कुर्वते विधोर्विपत्संगमभङ्गमङ्गनाः ॥ २५ ॥

असूर्यंस्पृष्टत्वान्निशासु विलासव्यसनित्वेन वलभीषु विशिष्टाद्भ्रमात्संचाराद्धेतोरपास्ता निवारिता नीरङ्गिकावगुण्ठनपटो यस्य तद्वक्त्रं तस्य रोचिषा कान्त्या स्त्रियः कृष्णपक्षेऽपि चन्द्रस्य विपत्संगमः कलाक्षयस्तस्य भङ्गं पूर्णतां कुर्वते । यत्र स्त्रीणां मुखं चन्द्रादधिकमित्याशयः ॥

इतस्ततः कुङ्कुमरेणुधोरणीर्वियोगिनीवध्यपटानिव क्षिपन् ।
न यत्र वायुः सहते नतभ्रुवामकाण्डमानग्रहकीर्तिडिण्डिमम् ॥ २६ ॥

विरहिणीनां वध्यपटानिव कुङ्कुमरजःपङ्क्तीः किरन् । वध्यत्वज्ञापनाय रक्ताम्बरेण प्रावृत्य वध्यो हन्यत इत्याचारः । वायुर्यत्र स्त्रीणां पत्यपराधाभावेऽपि मानग्रहणेन या कीर्तिः सैव डिण्डिमः पटहस्तं न सहते । कुङ्कुमवायोः कामोद्दीपनत्वान्मानं न गृह्णन्तीत्यर्थः ॥

मधुव्रतानां श्रवणोत्पलस्पृशां कुलैरुपश्लोकितदैर्घ्यरीतयः ।
हरन्ति यत्रैणदृशां दृशो रतेरसह्यवैधव्यविषादविक्रियाम् ॥ २७ ॥

कर्णोत्पलं जिघ्रतामपि मधुव्रतानां भ्रमराणां कुलैः स्तुतदैर्घ्यगुणाः । स्वाभाविके भ्रमराणां शब्दे स्तुतिसंभावनम् । स्त्रीणां दृशो रतेरसह्यो यो वैधव्यविषादो भर्तृमरणदुःखं तेन विकारं हरन्ति । स्त्रीणां कटाक्षपातमात्रेण कामोत्पत्तिर्भवतीति भावः ॥

सरःसु यस्मिन्बिसदण्डमण्डली चकास्ति शेषेण निजा फणावली ।
स्फुटं विसृष्टेव मुकुन्दसुन्दरीं सरोजपर्यङ्कजुषं निषेवितुम् ॥ २८ ॥

पद्ममेव पर्यङ्कस्तं जुषमाणां लक्ष्मीं निषेवितुम्। पर्यङ्कशायिन्याः श्रियः सेवावसरप्राप्तेः। शेषेणोत्क्षिप्ता स्वशिरःपङ्क्तिरिव मृणालदण्डसंहतिर्यत्र सरःसु शोभते। शेषो हि हरिसेवकः। अतस्तत्प्रियाया अपि सेवोक्तिरुचिता ॥

हिमागमे यत्र गृहेषु योषितां ज्वलद्बहुच्छिद्रसखी हसन्तिका ।
विभाति जेतुं मदनेन शूलिनं धृता ततिर्वह्निमयीव चक्षुषाम् ॥ २९ ॥

हरपराभवाय कामेन धृताग्नेयदृष्टिपङ्क्तिरिव । हरेण ह्येकेनाग्नेयेन नेत्रेण कामो जितः । अतोऽनेकाग्नेयनेत्रत्वाभिनयात्कामेन जेतुमिष्यते । यत्र हिमर्तावन्तःपुरगृहे ज्वलतां निर्गच्छदग्नीनामनेकेषां छिद्राणां परिचिताङ्गारशकटिका शोभते । हसन्तिकागुणैः शीतनिवृत्तौ कामोद्दीपनं भवतीत्यर्थः ॥

विभाव्य यत्राननकेलिकानने विलासचैत्रोत्सवमेणचक्षुषाम् ।
प्रियासखो दीर्घगुणैरभङ्गुरामपाङ्गदोलामधिरोहति स्मरः ॥ ३० ॥

यत्र स्त्रीणां मुखोद्याने विलास एवाह्लादकत्वाच्चैत्रोत्सवस्तं विलोक्य रतिसचिवः कामो दीर्घगुणामपाङ्ग एव दोला तामधिरोहति । यत्र स्त्रीणां कटाक्षपातमात्रेण सर्वे कामवशा भवन्तीत्यर्थः । चैत्रे दोलाधिरोहणमाचारः । तत्पक्षे गुणा रज्जवः ॥

स मन्मथो नाम जगाम तद्भुवि प्रथां प्रसन्नेश्वरदृष्टिभाजनम् ।
न मार्गणानां सुमनोमयात्मनां मनागपि क्षेपकलासु शिक्षितः ॥ ३१ ॥

प्रसन्नायाः सानुग्रहाया ईश्वराणां स्वामिनां दृष्टेर्भाजनं राजप्रसादपात्रं तथा सुमनोमयः पण्डितरूप आत्मा येषां मार्गणानां याचकानां धिक्कृत्य विसर्जनेषु न शिक्षितः । स मन्मथो नाम प्रवरपुरभूमौ प्रसिद्धिमगमत् । कामः प्रसन्नाया हरदृष्टेः पात्रं पुष्पशराणां मोक्षे च न शिक्षित इति शब्दशक्तिमूलो विरोधध्वनिः ॥

अपारिजातप्रसरे प्रदर्शितक्षमास्थितावच्छदयाश्रियाञ्चिते ।
बभार यस्मिन्सततं मनः पिता प्ररोहदानन्दमपूर्वनन्दने ॥ ३२ ॥

अरिजातस्य वैरिव्रातस्य प्रसरोऽपगतो यस्य शत्रुरहिते । यतः प्रदर्शिता क्षमायां क्षान्तौ स्थितिर्येन । अच्छा निर्मला दया तस्याः श्रिया पूजिते । अपूर्वे लोकोत्तरगुणे नन्दने पुत्रे पिता मनः सहर्षमुवाह । अविद्यमानः पारिजातप्रसरो यत्र तथा प्रदर्शिता क्षमायां भूमौ स्थितिर्येन । तथाच्छदयापत्रया श्रियाञ्चिते । अत एवापूर्वभूते नन्दने देवोद्यान इति सादृश्यध्वनिः ॥

सिषेच पुण्यद्रुमकाननानि यः समग्रमक्षालयदान्तरं रजः ।
वृषप्रमोदाश्रुसमानधर्मिभिर्द्विजातिहस्तार्पितदक्षिणाम्बुभिः ॥ ३३ ॥

वृषस्य धर्मस्यानन्दाश्रुजलं तेन समानो धर्मो येषां तैर्ब्राह्मणहस्तेषु दत्तानि यानि दक्षिणाजलानि तैः पुण्यमेव द्रुमवनानि सिक्तवान् । समग्रं चान्तरस्थं रजः पापमक्षालयत् । जलेन सेको रजःक्षालनं चोचितम् ॥

अशेषमाहेश्वरमौलिरत्नतामुपेयिवान्यः स्वयशः प्रयुक्तिभिः ।
प्रसादनायेव विभोः किलाखिलान्नगान्निनाय स्फटिकाद्रिभूमिकाम् ३४

समस्तानामीश्वरसेवकानां मुकुटरत्नत्वं धारयन् । महामाहेश्वर इत्यर्थः । यो मन्मथः कैलासवासिनः स्वामिनः प्रसादापादनायेव सकलान्पर्वतान्स्वयशःप्रयोगैः कैलाससाम्यं निनाय । तद्यशः सर्वत्रैव प्रसिद्धमभूदित्यर्थः ॥

वदान्यमास्त्यानबृहत्कृपारसप्रवाहशङ्काजननैकदक्षिणम् ।
स्वसूक्तिकीर्तिप्रसरैरनश्वरं स विश्ववर्ताख्यमवाप नन्दनम् ॥ ३५ ॥

बहुप्रदमत एवास्त्यानः कठिनीकृतः करुणारस इति संभावनाया जननं एकं दक्षिण-मनुकूलम् । शङ्काया जननं यस्याः सा दक्षिणा धनादिदानं यस्येति वा । अयं मूर्तः करुणारस एवेति संभाव्यते । स्वाकृत्रिमा याः सूक्तिकीर्तयस्तासामुल्लासैरनश्वरमविनाशिनं स्थिरप्रियोक्तियशसं विश्ववर्तनामानं पुत्रं स लेभे ॥

अनेकशो येन धृताङ्कुशा इव प्रचारशान्त्यै कलिदुष्टदन्तिनः ।
अरालसौवर्णविषाणकोटयः कति द्विजेभ्यो ददिरे न धेनवः ॥ ३६ ॥

कलिः कलहः कलियुगं च। स एव दुष्टो मत्तो हस्ती तस्य यः प्रचारो यथेष्टं संचरणं तन्निरोधाय धृतोऽङ्कुशो याभिस्तादृश्य इव । अराला कुटिला सौवर्णी विषाणकोटिः शृङ्गाग्रं यासां ताः। कति न धेनवो नवप्रसूता गावो येन विश्ववर्तेन दत्ताः । विधिपूर्वकस्य गोप्रदानस्य माहात्म्यात्कलिः संकुचतीत्यर्थः ॥

गलत्यविद्यातिमिरे शुभापतद्गुरूपदेशाञ्जनसेवनेन यः ।
विशुद्धदृष्टिः क्व न पारमेश्वरं वपुर्विमुच्य द्वयमेकमैक्षत ॥ ३७ ॥

शुभैरापतञ्छुभ आपतन्वा यो गुरूपदेशः स एवाञ्जनं तत्सेवनेनाविद्यातिमिरेऽज्ञानरूपे नेत्ररोगविशेषे गलति सति विशुद्धा निर्मला दृष्टिर्ज्ञानं यस्य सः । द्वयं द्वैतं त्यक्त्वैकं पारमेश्वरं वपुः क्व नैक्षत सर्वगतं परमेश्वरमपश्यदित्यर्थः । अञ्जनसेवया च तिमिरे शाम्यति सति चन्द्रादि विषयं द्वैताभासं त्यक्त्वैक एव दृश्यते ॥

सहस्रशो भक्तिकथासु वक्षसि स्खलद्भिरानन्दभुवोऽश्रुणः कणैः ।
रराज यो हृद्गतमिन्दुशेखरं भजन्निवानर्गलमर्घमौक्तिकैः ॥ ३८ ॥

परमेश्वरभक्तिचर्चासु सहस्रसंख्यैर्वक्षसि पतद्भिरानन्दजलकणैर्हेतुभिरर्घमुक्ताफलैर्हृद्गतं हरं सेवमानो यः शुशुभे । सहजभक्तिवशादीश्वरकथासु तस्यानन्दाश्रु पततीत्यर्थः ॥

महद्भिरामूर्धतलं दिवः पदं निजैर्विशङ्क्येव भृतं सुकर्मभिः ।
अनुल्बणो यो विनयावरुद्धया धिया सदैवावनताननोऽभवत् ॥ ३९॥

सविनयया बुद्ध्या शान्तो यः पुण्यैः पूरितं नभः शङ्कित्वेव नित्यमेव नतमुखोऽभवत् । अवकाशे हि सति शिर उन्नमयितुं शक्यते । मदहेतुभूतानां धनादीनां संभवेऽप्यनुद्धतकंधर आसीदित्यर्थः ॥

उपेत्य पादद्वितयं जगाहिरे नमत्समग्रामरकेशकौशलम् ।
करालकालोरगकङ्कणस्रजां भुजेषु चक्रुः पुनरुक्तकल्पनम् ॥ ४० ॥
वितेनिरे प्राप्य गलस्थलं शनैरकाण्डरोहद्गरलान्तरभ्रमम् ।
नवोद्गतश्मश्रुनिवेशपेशलं कपोलमूले दधति स्म विभ्रमम् ॥ ४१ ॥

ललाटिकालिङ्गनलीढपार्वतीकुरङ्गनाभीतिलकाङ्कुरायितम् ।
क्रमात्प्रपद्यालिकपट्टवर्त्मनि क्षणावतंसप्रणयं प्रणिन्यिरे ॥ ४२ ॥
शिरःशशाङ्कस्य विवव्रुरन्तिके सभाजनासन्ननिशीथिनीप्रथाम् ।
ययुस्ततो जूटसुरापगातटे जलग्रहव्यग्रपयोदवैदुषीम् ॥ ४३ ॥
समुच्छ्वसद्भक्तिलतानिमन्त्रितद्विरेफपङ्क्तिप्रतिनायकश्रियः ।
अनेकदग्धागुरुधूमराजयो यदर्चनस्यावसरे पिनाकिनः ॥ ४४ ॥ (कुलकम्)

विकसन्त्या भक्तिलतयाहूता या भ्रमरमाला तत्प्रतिनिधिशोभा यत्कर्तृकस्य हरपूजनस्य समयेऽनेका दग्धागुरोर्धूमपङ्क्तयो महेश्वरचरणद्वयं प्राप्य नमतां समग्राणाममराणां संबन्धिनां केशानां कौशलं शोभां प्रापुः । तथेश्वरस्य भुजौ प्राप्य कालसर्पा एव कङ्कणस्रजस्तासां पुनरुक्तकल्पनं द्विर्भावं कल्पयामासुः । सर्पसमा आसन्नित्यर्थः । ततश्च गलतलं प्राप्य धूमरेखा अकाण्डे समुद्रादिमथनव्यतिरिक्तकाले रोहतो गरलान्तरस्य द्वितीयविषस्य भ्रान्तिं चक्रुः । नव उद्गतो भिन्नो यः कूर्चसंनिवेशस्तेन पेशलं मनोरमं विभ्रमं गण्डतले दधुः । ततश्च ललाटिका ललाटभूषणं तदालिङ्गनेऽवलीढः संक्रान्तो यो गौरीकस्तूरीतिलकस्तद्वदाचरितं सादृश्यं प्राप्य ललाटतटेक्षणं भूषणत्वं चक्रुः । पूर्वकालविवक्षा नात्र प्रधानम् । तिलकत्वं चक्रुरिति वा योजना । ततश्च मौलिचन्द्रमसो निकटे धूमलेखाश्चन्द्रस्य नायकत्वात्प्रीतिदर्शनार्थमागता रात्रिस्तद्भ्रान्तिं चक्रुः । ततश्च गङ्गातटे धूमलेखा जलग्रहणागतमेघभ्रान्तिं चक्रुः ॥

पुरः स शृङ्गारमुदारचेष्टितं सुतं प्रपेदे पदमेकमुन्नतेः ।
मुखेन यः सत्यसरस्वतीमयश्रिणार्धनारीश्वरतामिवाग्रहीत् ॥ ४५ ॥

सत्यं च सरस्वती च तन्मयी श्रीर्यस्य तेन मुखेन यः शृङ्गारोऽर्धनारीश्वरभावमिव गृहीतवान् । तथोन्नत्यस्थानं तं पुत्रं प्राप्तवान् । सत्यमीश्वरस्थानीयम्, सरस्वती नारीस्थानीया ॥

कवित्ववक्तृत्वमयैरनुद्रुतं प्रदानभोगादिमयैस्तथोर्मिभिः ।
सरस्वती श्रीश्च मिथः समागते यमाश्रितद्वीपदशां विवव्रतुः ॥ ४६ ॥

कवित्वं च वक्तृत्वं च तन्मयैरूर्मिभिरनुगतं तथा दानभोगप्रकृतिभिस्तरङ्गैरनुगतं यं सरस्वती लक्ष्मीश्च द्वीपदशं चक्रतुः । लक्ष्मीश्च सरस्वती च तस्यास्तामित्यर्थः ॥

अरालयद्भ्रूकुटिकृष्णपन्नगीनिरङ्कुशश्छिन्नपथो यतोऽभवत् ।
अतः प्रतापो युधि हर्षभूभुजश्चकार यात्रामपुनर्निवृत्तये ॥ ४७ ॥
ज्वलत्प्रतापाग्निसमक्षमक्षतं जयश्रियो यो घटयन्करग्रहम् ।
अखण्डजन्यान्तरबद्धपद्धतिः सहेलमैक्षिष्ट कबन्धनर्तनम् ॥ ४८ ॥

अनुक्षणानेकनिपीतशात्रवप्रतापवह्निप्रतिवर्पणादिव ।
असह्यतां कस्य न नाम निष्पतज्जगाम यद्वामविलोचनाञ्चलम् ॥४९॥
वितीर्य पुष्पस्रजमुन्मदालिभिः पुरस्कृतां दैवशुभाक्षरैरिव ।
असूत्रयत्तस्य स सुस्सलक्ष्मापतिर्बृहत्तन्त्रपतित्वकल्पनम् ५० (चक्कलकम्)

अराला वक्रा या यद्भ्रूकुटिः सैव कालोरगी तया निर्निरोधश्छिन्नमार्गा यदभवत्ततो हर्षदेवप्रतापेऽपुनःप्रवेशाय यात्रां चकार । यस्य च प्रस्थानसमये कृष्णसर्पेण मार्गश्छिद्यते तस्य पुनः प्रवेशो न भवति । यद्भ्रुकुटिमात्रेणैव हर्षदेवप्रतापः शान्तोऽभवदित्यर्थः । तथा ज्वलन्यः प्रतापाग्निस्तस्य पुरो जयलक्ष्म्याः करग्रहमखण्डितं कुर्वन्प्रचण्डजन्यस्य युद्धस्य मध्ये बद्धा पद्धतिः संचारो येन स कबन्धानां छिन्नशिरसां कलवराणां नर्तनमैक्षिष्ट । सर्वत्र जयलक्ष्मीं लब्धवानित्यर्थः । अन्यश्च ज्वलतोऽग्नेरग्रे विधिना पत्न्याः पाणिग्रहणं कुर्वञ्जन्यानां तत्कालसहचारिणां मध्ये तिष्ठन्नर्तनमीक्षते । तथानेकेषां प्रतिक्षणपीतानां वैरिप्रतापाग्नीनां वमनादिव । मुहुर्मुहु च यत्पीयते तदवश्यमुद्गीर्यते । एतदेव यस्य क्रुद्धदृष्टिमात्रं दुःसहं कस्य नाभूत् । तेन दृष्टा एव शत्रवो मत्सरात्पलायिता इत्यर्थः। तथा विश्वकर्तुः शुभसूचकैरक्षरैरिव भ्रमरैः सहिताम् । अम्लानामित्यर्थः । पुष्पमालां दत्त्वा यस्य शृङ्गारस्य सुस्सलदेवो बृहत्तन्त्रपतित्वं धर्माधिकारित्वमकल्पयत् । अधिकारार्पणसमये ग्रहीतुर्मालां बध्नन्तीति कश्मीरेष्वाचारः ॥

अदीर्घसूत्रः प्रसरद्भिरङ्कितो गुणैर्बृहत्तन्त्रपतिर्विशेषवित् ।
उपोढशास्त्रप्रकृतिर्मृदुक्रमः करोति यः कौतुककाहलं जगत् ॥ ५१ ॥

अदीर्घसूत्रोऽचिरक्रिय उल्लसद्भिर्गुणैः सौजन्यादिभिरङ्कितो बृहत्तन्त्राधिपतिर्धर्माधिकार्यन्तरज्ञो धृता शास्त्रप्रकृतिर्येन विनीतश्च विश्वं कौतुकेन काहलं सकोलाहलं करोति । अदीर्घं सूत्रं यस्येदृशो यः प्रसरद्भिर्गुणैः सूत्रैरङ्कितः । यो बृहत्तन्त्रस्य स्थूलशास्त्रस्य पतिः स कथं विशेषं रहस्यं जानाति । शास्त्री शस्त्रमयी प्रकृतिर्येन धृता स कथं मृदुरिति विरोधप्रतीतिः ॥

वसन्तमासं क्व न वीक्ष्य यो मुदं बिभर्ति लुम्पन्सुमनःस्वलं रजः ।
विमुद्रपद्माधिगमेऽपि नोज्झति स्पृहातिरेकं मदवारणे चयः ॥ ५२ ॥
स भृङ्ग इत्यस्य गतोऽनुजन्मतां दधत्स्वनाम्नोऽनुगुणामपि श्रियम् ।
अपक्षतित्वे पदमुन्नतोन्नतं विगाहमानो दिशति स्म विस्मयम् ५३ (युग्मम्)

---

१. संबद्धं श्लोकचतुष्टयं चक्कलकमित्युच्यते. यथा समन्वयप्रदीपे—'यत्र वाक्यार्थविश्रान्तिः श्लोकेनैकेन जायते । तन्मुक्तकं युगं द्वाभ्यां त्रिभिः स्यात्तिलकं पुनः ॥ चतुर्भिः स्याच्चक्कलकं पञ्चभिः कुलकं ततः । महाकुलकमित्यार्याः कथयन्ति ततः परम् ॥'. तिलकस्य पर्यायान्तरं विशेषकमिति. चक्कलकशब्दस्तु प्रायः कश्मीरदेशप्रसिद्ध एव.

आप्तं बन्धुं वसन्तं सुखेन कृतवसतिं दृष्ट्वा यस्तुष्यति तथा क्व न सर्वत्र दूरेऽपीत्यर्थः । सुमनःसु पण्डितेषु रजो दारिद्र्यादि छिन्दन्विमुद्रायाः प्रसारिण्याः पद्मायाः लक्ष्म्याः प्राप्तावपि महाविभवेऽपि सति मदत्यागविषयमभिलाषं न त्यजति । श्रृङ्गारस्यानुजो भृङ्ग इति भृङ्गनामा निजनामानुरूपां शोभां वहन्नपगता क्षतिः क्षयो यस्य तद्भावे सत्युन्नतादुन्नतं पदं गच्छन्कस्य नाश्चर्यमदादिति प्रकृतोऽर्थः । अथवा भृज्जति बिभर्ति भृङ्गः । 'भृजी भर्जने'। वसन्तं पुष्पमासमाप्तमागतं वीक्ष्य भ्रमरस्तुष्यति । सुमनःसु रजः कुङ्कुमकेसरान्छिन्दानो यः प्रफुल्लानां पद्मानां लाभेऽपि मदहस्तिन्यभिलाषं करोति, स भ्रमरोऽविद्यमाना पक्षतिः पक्षमूलं यस्य तद्भावेऽप्युन्नते भ्रमन्नाश्चर्यं ददातीति विरोधप्रतीतिः ॥

धृतामिताभं वदनेन्दुमण्डलं प्रसन्नतारागतिरीक्षणद्वयी ।
सुमञ्जुघोषं च वचः परिच्छदः प्रदर्शितश्रीघनविभ्रमग्रहः ॥ ९४ ॥
इतीदृशीं प्रस्तुवतोऽपि सौगतक्रमानुरूपप्रतिपत्तिकल्पनाम् ।
विलोक्यते यस्य कदापि केनचिन्न सौहृदेषु क्षणभङ्गसंगतिः ९५ (युग्मम्)

धृतामितानल्पा भा येन तद्यस्य मुखेन्दुबिम्बम् । तथा यस्य नेत्रद्वयी प्रसन्ना तारागतिः कनीनिकासंचारो यस्या ईदृशी । तथा यस्य मधुरोक्तिसहितं वचः । तथा परिच्छदः परिवारः श्रियो घना ये विभ्रमास्तेषां ग्रहः प्रदर्शितो येन । यत्परिजनोऽपि महाघन इत्यर्थः । एतादृशीमेवंविधां शोभनं गतं गमनमाचारो यस्य तत्संबन्धिनः क्रमस्यानुरूपानुगुणा प्रतिपत्तिः सदाचारस्तत्कल्पनामनुतिष्ठतोऽपि यस्य सौहृदेषु सुहृद्भावेषु क्षणेन भङ्गो नाशः केनापि न लक्ष्यते । स्थिरस्नेह इत्यर्थः । अथ च चन्द्रमण्डलं धृतोऽमिताभस्तथागतो येन तत् । धामत्रयस्थत्वाद्भगवतः । तारा भगवती प्रसन्ना सह मञ्जुघोषेण तथागते वर्तते । तच्छ्रीघनस्य सुगतस्य विलासो दर्शितो येनेदृशं सौगतक्रमं सुगतसंबन्धिनमाचारमनुतिष्ठतोऽपि पदार्थेषु क्षणभङ्गो न दृश्यत इति विरोधः । सौगतानां क्षणिकज्ञानसंतानवादित्वात् ॥

ततः कनीयानजनिष्ट विष्टपत्रयेऽप्यविच्छिन्नगतागतैर्गुणैः ।
श्रयन्नलंकार इति प्ररूढतां सरस्वतीपादरजोतिथौ पथि ॥ ९६ ॥

सरस्वत्याः पादौ तयो रजस्तस्यातिथौ परिचिते सरस्वतीसेविते पथि शास्त्रेऽविच्छिन्नगतागतैरात्मगुणैः सचेतनेत्यादिभिस्त्रिभुवनेऽप्यलंकार इत्यतो हेतोः प्ररूढतां नाम प्ररोहं श्रयन् । अलंकारनामेत्यर्थः ॥

न सूत्रकृद्वार्तिककृन्न चेष्टिकृच्छशाक यल्लक्षणतन्त्रमीक्षितुम् ।
स्वयं तदुन्मीलितवानकल्पयच्चतुर्मुनि व्याकरणस्य वर्त्म यः ॥ ९७ ॥

पाणिनिर्वररुचिः शेषश्च यल्लक्षणतन्त्रं वीक्षितुमपि नाशकत् । किमुत बोद्धुमित्यपिशब्दार्थाध्याहारः । तत्स्वयं गुरुनिरपेक्षं कृतवान्यो व्याकरणपथं चत्वारो मुनयः प्रवर्तयि-

तारो यस्य तादृशं व्यधात् । स्वयं चतुर्थमुनित्वात् । शेषादिसदृश इत्यर्थः । 'संख्या वं-श्येन' इत्यव्ययीभावः ॥

सदा मुखे यस्य निसर्गमाधुरीपरीतनृत्यत्पदसूक्तियुक्तिभिः ।
सरस्वतीसद्मसरोरुहस्पृशां रसायुषां व्यक्तिमुपैति निक्वणः ॥ ५८ ॥

यन्मुखे स्वभावेनायत्नतो मधुरत्वसहिता नृत्यत्पदा याः सूक्तयस्तासां युक्तिभिः प्रयोगैर्हेतुभिः सरस्वतीसद्म यत्सरोरुहं तत्स्पृशां भ्रमराणां शब्दो व्यक्तिं व्यञ्जनं प्राप्नोति । अत्र युक्तिशब्दस्य योजनार्थत्वेऽपि लोकोत्तरमाधुर्यदर्शनादिवचःसंभावनाभावपर्यालोचनया निषेधपर्यवसानादर्थापह्नवः । यन्मुखे सूक्तयो न भवन्ति सरस्वत्यासनपद्मस्थितानां भ्रमराणां शब्द इत्यर्थः । तदेवं सरोरुहं मुख आरोपितं सूक्तिषु भ्रमरशब्दः । तन्मुखे पद्मभ्रान्त्या सरस्वती वसति तत्रायं भ्रमरशब्द एव नोक्तय इति तात्पर्यम् ॥

वहत्यनिर्वेदगतिं न मुञ्चति द्विजाधिराजश्रियि वर्धनोद्यमम् ।
बतोपयुङ्क्ते च बहुप्रमाणतामुपोढलोकायतवृत्ति यद्यशः ॥ ५९ ॥

यस्य यशोऽनुद्वेगकारिणीं स्थितिं वहति । शतशोऽपि श्रुतं यद्यशः श्रोतुमेव मनोऽभिलषतीत्यर्थः । द्विजाधिराजस्य चन्द्रस्य श्रियि शोभाविषये वर्धन उद्योगं न त्यजति । निर्मलत्वाचन्द्रस्य शोभां वर्धयतीत्यर्थः । तथा बहु विपुलं प्रमाणं परिमाणं यस्य तद्भावं भजते । उपोढा धृता लोकेषु भुवनेष्वायतायतिमती वृत्तिर्येन तत् । बतशब्दो विरोधं सूचयति । अनिर्वेदां वेदपातिनीं गतिं धत्ते । द्विजाधिराजस्य भट्टकुमारिलस्य श्रियो दर्शने वृद्धिं करोति । बहूनि प्रमाणानि चार्वाकैरनङ्गीकृतानि तद्भावं धत्ते । तथापि धृता लोकायतस्य चार्वाकस्य वृत्तिर्येन ॥

यदाननेन्दुद्युतिसङ्गसंकुचन्निकेतपङ्केरुहपीडनादिव ।
चिरं पुरस्ताद्वदनेषु जायते विवादिनामाकुलिता सरस्वती ॥ ६० ॥

यन्मुखचन्द्रप्रभायोगेन संकुचन्निकेतपङ्केरुहम् । अर्थात्सरस्वत्या आश्रयपद्मम् । तत्र निपीडनं सरस्वत्याः संकोचेनासनं तस्मादिव प्रतिवादिनां मुखे वर्तमाना सरस्वती तस्याग्रे व्याकुला संपद्यते । प्रतिवदितुं सर्वेऽप्यसमर्था भवन्तीत्यर्थः । परिणामोऽयम् । अन्यथा पद्मसंकोचसंगत्यभावात् ॥

खलीकृता यस्य वचोभिरुद्धतैर्विलुण्ठ्य सर्वप्रतिभामयीं श्रियम् ।
भवन्ति सद्यः प्रतिवादिनां गिरो गभीरमौनह्रदमग्नमूर्तयः ॥ ६१ ॥

सर्वा या प्रतिभोल्लेखबुद्धिस्तन्मयीं लक्ष्मीं विलुण्ठ्य हठेन हृत्वा यद्वचोभिरवमानिताः प्रतिवादिनां वाचो गभीरोऽगाधो यो मौनह्रदस्तत्र बुडितरूपा भवन्ति । मौनान्न निःसरन्ति । तदुक्तिमात्रारम्भे संभावितपराजया वादिनो मौनं भजन्त इत्यर्थः । सभासु पराजयान्मौनं श्रेयः । यश्च श्रियं हृत्वा खलीक्रियते स लज्जावशाद्ध्रदे मज्जति ॥

निवेशिते सुस्सलभूविडौजसा स्वयं गरीयस्यपि संधिविग्रहे ।
विधाय चक्रे स्वयशोमयीं लिपिं स लेखवर्गस्य विमुद्रमाननम् ॥६२॥

गुरुतरे संधिविग्रहे राज्यस्य संधिविग्रहप्रयोगविषये कार्यविषये सुस्सलदेवेन स्वयमप्रेरणया विन्यस्ते निजकीर्तिप्रकृतिं भङ्गिं विधाय लेखानां पण्डितानां वर्गस्य मुखं विमुद्रं मौनमुद्रारहितं यश्चक्रे । गुणिनि गुणिरागिणि चैतस्मिन्महाधिकारिणि सति गुणिनो गुणान्प्राकाशयन्नित्यर्थः । लेखानां देवानां च वर्गस्य मुखं विमुद्रं चक्रे । पूर्वे पारिषदा देवकुलद्वारं परिपन्थिभयान्मृत्तिकया बबन्धुस्तेन तु परिपन्थिषु मथितेषु देवमूर्तीनां भङ्गभयव्यपगमाद्द्वाराण्युदघाटयन् । सुजनानरक्षत्, दुर्जनानतक्षदित्यर्थः ॥

अथोदभूत्तस्य कनिष्ठसोदरः स मङ्खको यस्य शिशोरतन्वत ।
शिरस्युपोढा गुरुपादरेणवः सरस्वतीकार्मणचूर्णनैपुणम् ॥ ६३ ॥

तस्यालंकारस्य कनिष्ठो यवीयान्सोदरो मङ्खनामा जातः । येन शिरसि धृता गुरुचरणरेणवः सरस्वत्याः कार्मणचूर्णं वशीकरणौषधचूर्णं तस्य नैपुणं भ्रमं यस्य विभोर्गुणप्रौढस्य दधुः । गुरुमुखाद्दृष्टसर्वशास्त्रार्थ इत्यर्थः । स्वयमवबोधे व्याख्याभेदस्यापि संभवात् ॥

स्वदेहलीनां दधदुन्नतिप्रथामखर्वसद्धर्म्यगतिप्रतिश्रवः ।
बहिष्कृतानेकपराङ्गनस्थितिर्य एक एवावसथोऽजनि श्रियः ॥ ६४ ॥

स्वाकृत्रिमा देहलीनां शरीरवर्तिनीम् । स्वदेहयोरात्मशरीरयोर्वा लीनाम् । तुङ्गतां दधत् । तथाखर्वाह्रस्वा सती या धर्म्या गतिस्तस्याः प्रतिश्रवोऽङ्गीकारः । मूर्तो धर्म इत्यर्थः । अनेकेषु पराङ्गनेषु परेषामङ्गनेषु चत्वरेषु स्थितिः सा बहिष्कृता त्यक्ता येन । मानित्वात्संतोषशीलत्वात्स्वगुणमहिम्नान्येषां तत्समीपगामित्वाद्वेति भावः । अथवा त्यक्ताः पराङ्गनाः परस्त्रियो यया सा स्थितिर्यस्य सुशीलत्वात् । यो मङ्खक एव लक्ष्म्या एकं स्थानमजनि । लक्ष्मीगृहं च निजा या देहल्यस्तासामौन्नत्यं दधत् । तथा सत्या हर्म्यगतेः प्रतिश्रवः । जिता पराङ्गनानां स्थितिर्येनैवंविधं भवति । अजनीति 'दीपजन–' इति कर्तरि णिच् । 'गृहावग्रहणी देहल्यङ्गनं चत्वराजिरे' इति कोषः ॥

अधीतवैदग्ध्यविशेषमक्रमात्कलासु शास्त्रे व्यवहारकर्मसु ।
विशेषवात्सल्यवतीव यं सुतं मुखैरचुम्बद्बहुभिः सरस्वती ॥ ६५ ॥

कलासु भरतशास्त्रनिर्दिष्टासु, शास्त्रे तर्कव्याकरणादौ, व्यवहारकर्मसु स्मृतिनिर्दिष्टेषु युगपच्छिक्षितवैदग्ध्यं यं सरस्वती सस्नेहेव बहुभिर्मुखैर्भाषाषट्कादिभिरचुम्बत् । माता पुत्रं चुम्बति । 'अक्रमात्' इति वा पाठः ॥

अनन्तरं सुस्सलदेवनन्दनो यमादराच्छ्रीजयसिंहभूपतिः ।
व्यधात्प्रजापालनकार्यपूरुषं रुषं वितन्वन्नविनीतजन्तुषु ॥ ६६ ॥

सुस्सलदेवात्मजो जयसिंहदेवो दृप्तेषु रोषं कुर्वन्नादरात्प्रार्थनात्पूर्वं यं मङ्खकमनन्तरम-

लंकारानिर्विशेषं प्रजापालनकार्यपूरुषं धर्माधिकारिणमकरोत् । सुस्सलदेवनन्दन इति वक्रतापरीक्षकताद्योतनार्थम् ॥

पिता स तेषां जरयापि जर्जरो निपीयमाने श्रुतिसंपुटाध्वना ।
अनेकतत्कीर्तिरसायनेऽभवन्नवीनतारुण्यविशेषवानिव ॥ ६७ ॥

वृद्धत्वेन शीर्यमाणोऽपि स तेषां पिता कर्णमार्गेण बहुनि पुत्रयशोमृते पीते सति नवीनस्तारुण्यविशेषो विद्यते यस्य स इवाभवत् । पुत्रयशःश्रवणसुखेन वृद्धोऽपि तरुण इवासीदित्यर्थः । रसायनपानाच्च पुनस्तारुण्यप्राप्तिः ॥

अनेकमुक्तानुगतात्मनि स्वयं विगाहमाने बहुदानवारिताम् ।
अतिद्रुतं तस्य यियासतो दिवं नवारणस्वामिनि भक्तिरुद्ययौ ॥६८॥

अनेकैर्मुक्तैः प्राप्तमोक्षैरनुगतः प्राप्त आत्मा यस्य प्रलीनमुक्ते । तथा बहूनां दानवानामरितां शत्रुत्वं भजति रणस्वामिनि श्रीप्रवरपुरप्रधानदेवताविशेषे नवा भक्तिस्तस्य स्वर्गे जिगमिषोरुदभूत् । यश्च द्रुतं गन्तुमिच्छति तस्य मुक्ताभिरनुगतात्मनि तथा बहु दानवारि मदजलं यस्य तद्भावं दधति वारणस्वामिनि गजराजे भक्तिर्नोद्याति । काका उद्यात्येवेत्यर्थः ॥

ततः स काले शिवरात्रिपावने मनागिव क्लिष्टशरीरसौष्ठवः ।
दशामगात्तीर्थपथोपपत्तिमत्कुशाग्रशय्यासुखसुप्तिकासखीम् ॥ ६९ ॥

किंचिदिव क्लिष्टं शरीरसौष्ठवं यस्य सः । शरीरसंस्कारजभोगस्य कस्यापि पीडाविशेषस्य ज्ञानिनामप्यवश्यं भावित्वात् । तत्पिता विश्ववर्तः शिवरात्रिरत एव पावनस्तस्मिन्काले तीर्थपथ उपपत्तिमत्युपपन्ना या कुशाग्रशय्या तस्यां सुखसुप्तिका सुखस्वापस्तत्सखीं दशामगात् । शिवरात्रौ ब्रह्मभूयप्राप्तये स दर्भशय्यामाश्रयत् ॥

लीलामुक्तमनुष्यविग्रहमयग्रन्थिग्रहः शार्ङ्गिण-
　स्तीर्थे सोऽथ तिथौ वहत्यवनिभृत्पुत्रीपतेरभ्यगात् ।
वामार्धध्वजराजदण्डजपतित्रस्तापरार्धस्खल-
　त्केलीकङ्कणदन्दशूकबहुलोत्फालावचूलं वपुः ॥ ७० ॥

शार्ङ्गिणस्तीर्थे रणस्वामिप्रासादेऽवनिभृद्धिमाद्रिस्तस्य पुत्री गौरी तत्पतिः शिवस्तस्य तिथौ शिवरात्रौ पुण्यबलाल्लीलया व्याधिं विना मुक्तो मनुष्यशरीरमयो ग्रन्थिग्रहः संविदाश्यानतास्वभावो येन स विश्ववर्तो वामार्धे ध्वजभूतो राजन्योऽण्डजपतिर्गरुडस्तस्माद्भीता अत एवापरार्धे दक्षिणभागे स्खलन्तो लुठन्तः क्रीडाकङ्कणरूपा दन्दशूकाः फणिनस्तेषां बहुला य उत्फाला उत्पतनान्यवचूलो भूषणं यस्य तद्वपुरापतत् । तीर्थकालयोर्माहात्म्याद्धरिहररूपं प्राप्तवानित्यर्थः । हरिहररूपभावप्राप्तिवर्णने च वक्ष्यमाणः स्वप्नः प्रमाणम् ॥

इत्थं याते पितरि झगिति ब्रह्मभूयं य आसी-
दन्तस्तेषां विषमविषमाहंकृतिः शोकशङ्कुः ।
चेतोभित्तेरनुपधिबृहद्बन्धुरेको विवेको
लब्धोद्रेको निभृतनिभृतं तं शनैरुच्चखान ॥ ७१ ॥

पितरि विश्ववर्तं एवं द्रुतं परपदरूपत्वं प्राप्ते सति तत्पुत्राणां चित्ते दुःसहो यः शोक एव शङ्कुः कील आसीत्तं शोकशङ्कुं चेत एव भित्तिः कुड्यं ततो विवेक उदखनत् । अनुपधिप्रत्युपकारनिरपेक्षतया बृहद्बन्धुः । मरणं कालधर्म इति विवेकबलात्, नतु तद्गुणविस्मरणात्तदुःखमत्यजन्नित्यर्थः । शोकस्य शङ्कुत्वारोपणादुत्खनोक्तिः संगता । बन्धुश्चोपदेशैः शोकं वारयति ॥

एकादश्यां व्रतनियमवानेकदा तत्कनीया-
नेकाकी सन्भवनवलभीं मङ्खकः सोऽधिशिश्ये ।
वागीश्वर्या वदनवसतेः केवलं वाहहंसं
व्यञ्जन्गण्डस्थलपरिणमच्चन्द्रबिम्बच्छलेन ॥ ७२ ॥

गण्डस्थले परिणमन्प्रतिबिम्बितो यश्चन्द्रबिम्बस्तद्व्याजेन मुखस्थायाः सरस्वत्या वाहहंसं प्रकटयन् । नायं चन्द्रः । किं तर्हि । वाग्देवीवाहहंस इत्यर्थः । एकादश्यां व्रतस्योपवासस्य नियमो विद्यते यस्य सः । तेभ्यः कनिष्ठो मङ्खकः केवलः सन्भवनस्य गृहस्य वलभीमाशिश्रिये । गण्डाभोगे चन्द्रबिम्बोक्त्यावगताभ्यामुद्भिन्नश्मश्रुनिर्मलत्वाभ्यां नववयस्त्वमपि सरस्वत्याः साक्षान्मुखवासित्वमभिजातत्वं च सूचितम् ॥

स्वप्ने तत्र ददर्श स स्वपितरं देहं वहन्तं मिल-
त्तापिच्छच्छदकेतकच्छविवपुष्खण्डद्वयीकल्पितम् ।
एकार्धेन वमन्तमग्रचरणद्वारेण मन्दाकिनी-
मन्यार्धेन च बिभ्रतं पटुरटद्वीचिं जटावर्त्मनि ॥ ७३ ॥

शंकरनारायणरूपत्वादेकार्धेन वामभागेन पादाग्रमुखेन गङ्गां स्रवन्तम् । द्वितीयार्धेन दक्षिणभागेन पटुरटन्तो वीचयो यस्यास्तां गङ्गां जटाजूटतटे बिभ्रतम् । तथा मिलन्ति मिश्रीभूतानि तापिच्छपत्रैः केतकानि तद्वच्छविः शोभा यस्यास्तया वपुष्खण्डद्वय्याशरीरार्धयुग्मेन कल्पितं देहं बिभ्रतं स्वपितरं मङ्खकः स्वप्ने ददर्श ॥

सुतमथ स तदानीं कल्पितप्रत्यभिज्ञं
लहरिभिरनुगृह्णन्दूरतोऽभीक्ष्णमक्ष्णाम् ।

अमुचदमृतमित्थं कर्णगण्डूषलेह्यं
स्नपनमिव वितृण्वञ्ज्योत्स्नया दन्तपङ्क्तेः ॥ ७४ ॥

हरिहररूपत्वात्कल्पिता संपादिता प्रत्यभिज्ञा 'अहं स विश्ववर्तः' इत्येवंरूपा यस्य तम् । क्रियाविशेषणं वा । पुत्रं हरिहररूपत्वाद्बहूनां नेत्राणामविच्छिन्नपातैर्भजन्स विश्ववर्तो वचनावसरे व्यक्तीभूताया दन्तपङ्क्तेः कान्त्या पुत्रं स्नपयन्निव कर्णपेयं वचनमेवमवोचत् । स्नानपूर्वं च पानाद्युचितम् ॥

द्वैराज्यकारि सुमनोनिवहस्य कर्ण-
पूरश्रियः किमपि वाङ्मयमध्यगीष्ठाः ।
तत्किं पुनासि न सुत क्षणदाकुटुम्ब-
लेखावचूलचटुयुक्तिभिरुक्तिदेवीम् ॥ ७५ ॥

पण्डितानां देवानां वा वर्गस्य कर्णाभरणशोभाद्वैराज्यकरम् । शास्त्रेणापि कर्णानां भूष्यत्वात् । किमपि लोकोत्तरं शास्त्रं त्वमधीतवान् । तस्माद्धेतोर्हे सुत क्षणदा रात्रिः सा कुटुम्बं कलत्रं यस्य स चन्द्रस्तस्य लेखा भूषणं यस्य स ईश्वरस्तस्य चटुयुक्तयो माहात्म्यवर्णनानि ताभिः सरस्वतीं किं न पवित्रयसि । पवित्रयेः । देवानां कर्णभूषणस्य पौनरुक्त्यापादनोक्त्या स्वस्य देवमध्यपातित्वसूचनेन हरिहररूपता प्राप्तिर्विश्ववर्तेन निर्वाहिता ॥

इति सूक्तिमौक्तिकमयीं सुतस्य स प्रकटय्य कर्णभुवि शेखरस्रजम् ।
गगनाध्वलङ्घनघनश्रमस्पृशा शशिना सहैव चतुरं तिरोदधे ॥ ७६ ॥

सदुक्तिमुक्ताफलप्रकृतिं मालां पुत्रस्य कर्णे निधाय स चन्द्रेण समं तिरोहितोऽभूत् । आकाशमार्गोल्लङ्घनेन घनं श्रमं स्पृशतेवेतीवशब्दः प्रतीयमानोत्प्रेक्षार्थोऽध्याहार्यः । चन्द्रास्तमयोक्त्या स्वप्नस्य सत्यत्वं सूचितम् ॥

उद्युक्ते गुणवद्विषादकदनव्यग्रैर्गवामुद्गमै-
र्निर्मातुं भुवनानुरञ्जनविधिं देवे ततो भास्वति ।
तच्छून्यासु विसृज्य दिक्षु सुचिरं निद्रादरिद्रे दृशा-
वुत्कण्ठां च शुचं च विस्मयरसोल्लासं च तुल्यं दधौ ॥ ७७ ॥

गुणवतां पद्मानां विदुषां च विषादकदने संकोचवारणे व्यग्रैः सज्जैर्गवां रश्मीनां वाचां चोद्गमैरुद्भेदैः करणभूतैर्भास्वति देवे सूर्ये भासमाने च भुवनानामनुरञ्जनं पीतवर्णतापादनं प्रीतिपरत्वं च कर्तुमुद्युक्ते प्रवृत्ते सति तेन तथाविधेन पित्रा शून्यासु दिक्षु तत्रैव पितृस्थितिसंभावनया निद्रारहिते दृशौ निधाय चिरदर्शनाभावात्पुनर्दिदृक्षालक्षणामुत्कण्ठां शोकं तथाश्चर्यरसं च दधौ ॥

पितृभारतीविवृतपौष्टिकक्रियाक्रममाणभक्तिसहवासिमानसः ।
इति स प्रबन्धयति मङ्खको गिरं विरचय्य शंकरचरित्रकिंकरीम् ॥७८॥

पितुर्वचनेन संपादिता या पौष्टिकक्रिया पुष्टिप्रयोजनकर्म तया क्रममाणा वर्धमाना या भक्तिस्तया सहवासि मानसं यस्य स मङ्खकविर्गिरं स्ववाचं श्रीकण्ठचरितदासीं संपाद्यैवं प्रबन्धं करोति । एतेन पितुराज्ञया प्रबन्धकरणेऽहं प्रवृत्तो न तु स्वबुद्धिदर्पणेति सूचितवानिति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये देशवंशादिवर्णनं नाम तृतीयः सर्गः ।

---

चतुर्थः सर्गः ।

शशिशुभ्राः किरन्भासो हासो धनपतेर्दिशः ।
गिरिरस्तीह कैलासो निवासो वृषलक्ष्मणः ॥ १ ॥

चन्द्रवत्सिता दीप्तीः क्षिपन् । अतश्च वैश्रवणदिशो हासो हरावासः कैलासो नाम शैलोऽस्ति । धनपतेरिति साकूतम् । धनिस्त्रिया हि हास उचितः ॥

बिम्बितैर्यो मृगैर्भाति स्फुटस्फाटिकसानुषु ।
कौतुकेन कृतो धात्रा राशिभिः शशिनामिव ॥ २ ॥

स्फुटा निर्मला ये स्फटिकसानवस्तेषु प्रतिबिम्बितैः कुरङ्गैर्यो भाति । अतः संभाव्यते जगत्कर्त्रा कौतूहलेन मृगाङ्कसंभारेणेव कृतः । यो हि मृगाङ्कमयः क्रियते स शुभ्रो मध्यस्थहरिणश्च भवति। विधातुश्च कौतुकमेतत्—'मत्कृतेनैकेन चन्द्रेण विश्वमियच्छोभते। यदि चन्द्रराशिं कुर्यां तदा कियन्नु शोभते' इति । चन्द्रलक्षसदृशः कैलास इत्यर्थः ॥

रश्मयोऽभ्रंकषा यस्य श्रयन्ते सरलश्रियः ।
मूले मृणालनालत्वं ब्रह्मासनसरोरुहः ॥ ३ ॥

[रत्नानां त्रासरहितत्वात्] सरला श्रीः शोभा येषां ते तथाभ्रमाकाशं कषन्तो यस्य रश्मयो ब्रह्मासनभूतं यत्सरोरुट् पद्मं तस्य मूले बिसभावं सेवन्ते । मृणालनालं च शुभ्रं सरलं च भवति । उपक्रमोत्प्रेक्षेयम् । तद्रश्मयो ब्रह्मभुवनव्यापिन इत्यर्थः ॥

यदंशुस्रोतसः सङ्गादुत्तमाङ्गेऽपि धूर्जटेः ।
नेन्दुः क्षीरोदकल्लोलनिवासप्रीतिमुज्झति ॥ ४ ॥

हरमुकुटेऽपि तिष्ठंश्चन्द्रः क्षीरसमुद्रलहरीषु वसनेन या प्रीतिस्तां न त्यजति । यद्रश्मियोगात् । क्षीराब्धिलहरीवद्रश्मयो नभो व्याप्नुवन्तीत्यर्थः ॥

सर्वतोऽपि प्रनृत्यद्भिर्यश्चकास्ति गभस्तिभिः ।
लिखन्मुखेषु ककुभां कर्पूरस्थासकानिव ॥ ५ ॥

न केवलमुपर्येव, अपि तु सर्वत्रापि स्फुरद्भी रश्मिभिर्हेतुभिर्यो दिशां मुखेषु कर्पूरतिलकांल्लिखन्निव शोभते । दिशां स्त्रीत्वात्तिलकलिखनोक्तिरुचिता ॥

पादैर्महद्भिराक्रान्तदिगन्तो यः सितद्युतिः ।
बिभर्ति क्षममात्मानं मोक्तुं नवसुधाभरम् ॥ ६ ॥

उन्नतैः प्रत्यन्तपर्वतैः क्रान्ताशः शुभ्रदीप्तिर्यो वसुधाया भूमेर्भरं त्यक्तुं न शक्तः । भुवं धारयतीत्यर्थः । सितद्युतिश्चन्द्रश्च पादै रश्मिभिर्व्याप्तदिगन्तो नवं सुधारसं मुञ्चति ॥

जहाति यस्य लिम्पद्भिः करैराचान्तकालिमा ।
जलदः प्राष्टषेण्योऽपि न शारदपयोदताम् ॥ ७ ॥

यस्य रश्मिभिराचान्तः पीतः कालिमा कृष्णत्वं यस्य । शुभ्रीकृत इत्यर्थः । वार्षिकोऽपि मेघः शारदवारिदभावं न त्यजति । मेघमार्गव्यापिन्यो यद्दीप्तय इत्यर्थः ॥

सगुहां प्रकटाहीनकटकां दधदाकृतिम् ।
सदापिनाकमाक्रम्य स्थितः पादवलद्गणः ॥ ८ ॥
दधानोऽधिगतश्वेतसानुग्रहशरीरताम् ।
स्वसाम्यमिव यो नीतः सेवाप्रीतेन शंभुना ॥ ९ ॥ (युग्मम्)

सह गुहाभिर्वर्तते या, तथा प्रकटा अहीना अन्यूनाः कटकाः शिखराणि यस्यास्तामाकृतिं दधत्, तथा नित्यं स्वर्गमाक्रम्य जित्वा व्याप्य वा स्थितः, पादेषु प्रत्यन्तपर्वतेषु वलन्तः संचरन्तो गणा यस्य, तथाधिगतः श्वेतसानूनां ग्रहो येन तच्छरीरं यस्य तद्भावं दधानः, यः कैलासस्तत्सेवया तुष्टेनेश्वरेण निजात्मनः साम्यमिवापादितः । ईश्वरोऽप्येवंविधो भवति । तत्पक्षे । गुहः कुमारः । अहीनाः सर्पेन्द्राः । कटका वलयाः । पिनाकोऽजगवं धनुः । पादयोश्चरणयोर्वलद्गणः । श्वेते श्वेताख्ये[1] मुनौ सानुग्रहं सप्रसादं शरीरं यस्य तद्भावं दधानः । अन्यश्च सेवया तुष्टो भृत्यं स्वसमं करोति ॥

आबद्धपरिवेषस्य रश्मिभिः स्फटिकाश्मनाम् ।
प्रदक्षिणप्रवृत्तेव राजते यस्य जाह्नवी ॥ १० ॥

स्फटिकरश्मिभिः कृतपरिवेष्टनस्य यस्य कैलासस्य प्रदक्षिणकरणप्रवृत्तेव गङ्गा भासते । श्वेतत्वावजयो बन्धुत्वं वा प्रदक्षिणे हेतुः । अन्योऽपि जितः सन्प्रदक्षिणं करोति ॥

धत्तेंऽशुभिः समालब्धां भर्गनेत्रहविर्भुजः ।
यो मूर्तिं रोहणं जेतुं पद्मरागमयीमिव ॥ ११ ॥

---

१. मृत्युपाशाच्छ्वेतो नाम मुनिर्महादेवेन मोचित इति महाभारते.

हरनेत्राग्निभिररुणितां मूर्तिं रोहणपराभवार्थं पद्मरागमयीमिव यो वहति । तुल्यजातीयत्वाज्जेतृजेयभावः ॥

यत्र स्फटिकतेजोभिर्भर्गस्य च गलत्विषा ।
रजन्यपि दिनंमन्या रात्रिमन्यं भवत्यहः ॥ १२ ॥

स्फटिकदीप्तिभिः प्रकाशमयत्वान्निशाप्यात्मानं दिनं मन्यते । हरकण्ठविषदीप्त्यन्धकारित्वाद्दिनमप्यात्मानं रात्रिं मन्यते । उक्तियुक्तिमात्रमेतत् । न तु तात्त्विकम् । रात्रौ दिवा च स्फटिकांशुकण्ठप्रभाणां निर्विशेषं प्रवृत्तेः । रात्रिदिनयोरचेतनत्वेन सचेतनधर्ममननासंभवादुपचारप्रयोगः ॥

दिक्षु द्युतिभिरेणाङ्कगभस्तिप्रतिवस्तुभिः ।
यशांसि वर्षता येन राजन्वन्तो महीभृतः ॥ १३ ॥

चन्द्ररश्मीनां प्रतिवस्तूनि सदृश्यस्ताभिर्द्युतिभिर्हेतुभूताभिर्दिगन्तेषु यशांसि वर्षता येन पर्वता राजन्वन्तः प्रशस्तो राजा येषां ते भवन्ति । कैलासः शैलानां सुराजेत्यर्थः । राज्ञो यशोवर्षणमुचितम् । 'राजन्वान्सौराज्ये' इति साधुः ॥

नृत्यद्भवपदक्षुण्णयत्क्षोणीरेणुविप्रुषः ।
भनिभेन नभो नूनं नक्तं नक्तमुपासते ॥ १४ ॥

रात्रौ रात्रौ यत्र संध्यासमये नृत्यतो भवस्य पद्भ्यां क्षुण्णाया घृष्टाया भूमे रेणुकणा नक्षत्रव्याजेनाकाशं सेवन्ते । वस्तुगत्या रात्रौ दृश्यमानेषु नक्षत्रेषु स्फटिककणसंभावनोपनिबन्धनेश्वरस्य नित्यसंनिधानसूचनेत्यर्थः । रेणूनामाकाशगमनोक्तिः कैलासस्य मनोहरत्वादीश्वरस्य नृत्यरसद्योतनार्थम् ॥

शिववाहखुरोपज्ञजातरूपसमृद्धिभिः ।
क्षणान्मेरुसहस्रं यः सूते शैलप्रजापतिः ॥ १५ ॥

शिववाहस्य वृषभस्य खराणामुपज्ञाद्यज्ञानं खुरोपज्ञं यानि जातरूपाणि तत्समृद्धिभिः । कैलासे संचरतो हरवृषस्य खुरेभ्यः सुवर्णोत्पत्तिरिति प्रसिद्धिः । यः शैला एव प्रजास्तासां पतिः प्रधानं मेरुशतानि क्षणाज्जनयति । मेरुप्रमाणं सुवर्णं तत्रोत्पद्यत इत्यर्थः । प्रजापतेश्च सृष्टिरायत्ता ॥

यत्र नेत्रानलः शंभोः प्रतिबिम्बावलम्बनात् ।
कल्पतेऽनल्पदावाग्निशिल्पकृद्रत्नसानुषु ॥ १६ ॥

यत्र स्फटिकसानुषु प्रतिबिम्बितो हरनेत्राग्निर्महादवाग्नेः शिल्पकृदपूर्वनिर्माता संपद्यते । पर्वते दावाग्निदर्शनादग्निप्रतिबिम्बे दावाग्निभ्रान्त्युक्तिः ॥

रुद्रोत्तंसविधूद्रेकद्रवच्चन्द्राश्मजन्मभिः ।
प्रवाहैरिव यः सख्यं क्वचिन्नोज्झति निर्झरैः ॥ १७ ॥

रुद्रोत्तंसस्य हरमौलिभूषणभूतस्य विधोश्चन्द्रस्योद्रेकेण गलद्द्रवश्चन्द्रकान्तेभ्यो जन्म येषां तैः प्रवाहैरिव निर्झरैर्यः परिचयं न त्यजति । उपमोत्प्रेक्षा वा ॥

किंस्विद्गौरीहरेर्भीत्या विनीत्या किमु धूर्जटेः ।
दूराद्रथमृगं त्यक्त्वा यं मृदुः सेवतेऽनिलः ॥ १८ ॥

किंस्वित्पार्वतीवाहसिंहभयात् । किंवेश्वरविनयात् । दूराद्रथहरिणमपास्येव वायुर्यं सेवते । यतो मृदुः । देशधर्मत्वान्मन्दं वहतो वायोरार्थ्युत्प्रेक्षा । तन्निबन्धश्च संदेहः । अथवा पर्वतस्य गुणैस्त्यक्तवाहमृगो वायुर्यत्र वहति तद्विषयः संदेहः ॥

दरीषु किंनरीलोकं धत्ते यः क्षोपविह्नवे ।
न्यासीकृतमनङ्गेन भाण्डागारमिव स्वकम् ॥ १९ ॥

दाहोपद्रवावसरे कामेन सदैव पर्वतस्य कामोद्दीपकत्वेन हितत्वं संभाव्य न्यासीकृतं निःक्षेपरूपत्वेन स्थापितं निजं कोषमिव । कामस्य युवत्येकास्त्रत्वात् । गुहासु किंनरीजनं यो धत्ते । उपद्रववांश्च विश्वासाश्रयगृहे सारं न्यासीकरोति ॥

श्वेताश्मकुहरैर्मध्यसुप्तश्यामाभ्रमण्डलैः ।
व्यनक्ति यः शैलवृषा सहस्रमिव चक्षुषाम् ॥ २० ॥

मध्ये स्थायित्वात्सुप्ता इव श्यामा मेघा येषु तैः स्फटिकगर्तैर्यो गिरिप्रधानो नेत्रसहस्रमिव धत्ते । वृषा इन्द्रः । तस्य च चक्षुःसहस्रमुचितम् ॥

अवगूढो दृढं देव्या पौलस्त्यभुजनर्तिते ।
यत्र क्षणं विभुर्लेभे दोलाकेलिरसज्ञताम् ॥ २१ ॥

रावणभुजैः कम्पिते यत्र तत्कम्पेन भयवशाद्गौर्या दृढमालिङ्गितो हरः क्षणं दोलाक्रीडासुखं प्राप । अन्यत्राप्राप्तं दोलाकेलिसुखं भगवांस्तत्रैव प्राप्तवानित्याशयः । तथा रावणकम्पितेऽपि कैलासे प्रभोरक्षोभ्यत्वमेवासीदित्यर्थः ॥

अत्युन्नतस्य पादेषु क्षपासु लुठतेन्दुना ।
यस्य प्रभुरपि स्पर्धां नैति चन्द्रशिखामणिः ॥ २२ ॥

अत्युन्नतत्वात्प्रत्यन्तपर्वतेषु लुठता चन्द्रेण हेतुना चन्द्रमौलिः प्रभुर्यस्य साम्यं नैति । अत्युन्नतस्य पादाग्रे लोठनोक्तिरुचिता ॥

दिक्षु प्रसारितबृहत्प्रभापक्षतिसंपुटः ।
यो मानसे जगल्लक्ष्मीकेलिहंस इव स्थितः ॥ २३ ॥

सर्वासु दिक्षु प्रसारिते बृहती प्रभैव पक्षतिसंपुटे पक्षमूलद्वयं येन स मानसे चेतसि स्थितो जगल्लक्ष्म्याः क्रीडाहंस इव भवति । सर्वगुणमयत्वात्तेनैव विश्वलक्ष्म्या भासनात् । नायिकायाश्च क्रीडाहंसो भवति । तत्पक्षे मानसं सरोविशेषः ॥

योऽ मध्यमध्यसंक्रान्तनवाभ्रकणशारितैः ।
लौहितीकतटैर्भाति स्वप्रशस्तिपटैरिव ॥ २४ ॥

मध्ये मध्ये संक्रान्ताः सक्ता ये मेघकणास्तैः शारितैः स्फटिकतटैर्यो भाति । अतः संभाव्यते : निजैः प्रशस्तिपटैरिव । अभ्रकणा वर्णस्थानीयाः ॥

स्फुलिङ्गभङ्गिभिर्भानोः प्रतिबिम्बैर्य ईक्ष्यते ।
राशिर्भूतेरिव त्र्यक्षप्लुष्टानां विश्वपाप्मनाम् ॥ २५ ॥

अग्निकणशोभैः सूर्यप्रतिबिम्बैर्हेतुभिरीश्वरदग्धानां जगत्पापानां सर्वेषां पापानां वा भस्मनो राशिरिव यः संभाव्यते । भूतिच्छादिताश्च स्फुलिङ्गा भवन्ति ॥

मानसास्कन्दनपटुः स्पृशन्नुत्कटकान्तताम् ।
दधानः सुखदं रूपं सिद्धसाध्यगणाश्रितः ॥ २६ ॥
सालकान्तस्थितिर्नीलकण्ठाध्यासनपावनः ।
य इवाभाति यच्चित्रमहर्यक्षैस्तु सेव्यते ॥ २७ ॥ (युग्मम्)

मानसस्य सरसः, चेतसश्चास्कन्दन आक्रमणे पटुः समर्थः । उच्चैः कटकान्तानि नितम्बरूपाणि, उत्कटश्चासौ कान्तश्च तद्भावं दधत् । शोभनाः खदा द्रोण्यो यस्य, सुखं ददातीति सुखदं रूपं दधानः । पावनत्वात्सिद्धं निष्पन्नं साध्यमाशास्यं येषां तैर्गणैर्मुनिकुलैराश्रितः, सिद्धैः साध्यैर्गणैश्च सहितः । सालैर्देवदारुभिः कान्तस्थितिः, सहालकया नगर्यान्तःस्थित्या वर्तते । नीलकण्ठस्य हरस्य, मयूरस्य चाध्यासनेन पावनः । अहः समस्तं दिनं यक्षैः सेव्यते, हर्यक्षाः सिंहास्तत्सदृशैः प्राणिभिः सेव्यते । पर्युदासे नञ् । यः पर्वतो य इवाभाति । अहरिति 'कालाध्वनोरत्यन्तसंयोगे द्वितीया' । अत्राभेदेऽपि भेदारोपेण द्वित्वकल्पनया साम्योक्तिरुपमानान्तराभावसूचनार्था ॥

क्वचित्कवाचितः सान्द्रनवाम्बुदकदम्बकैः ।
यो विमुद्रयति क्षोणीरञ्जनाद्रिमदद्रुहः ॥ २८ ॥

अञ्जनशैलस्य कृष्णत्वेन मदस्तस्मै द्रुह्यन्ति । अतिनिम्नत्वेन प्रकाशाभावात् । अत एव मरुत्प्रवेशाभावात्कवचिताः कृतकवचा इव । मदद्रुहः कवचितत्वमुचितम् । अथवा साभ्रत्वादञ्जनाद्रिमदहरीर्दरीर्धत्ते । 'कवलितः' इत्यपपाठः ॥

सीमन्तरेखा रोदस्योः क्षौमनीरङ्गिका दिशाम् ।
ककुप्कुञ्जरयूथस्य पुरोमुखपटच्छटा ॥ २९ ॥

द्वितीयभूतिर्भर्गस्य फेनश्रीर्मानसाम्भसाम् ।
भूपन्नगस्त्रीनिर्मोको भाति यत्कान्तिसंततिः ॥ ३० ॥ (युग्मम्)

रोदस्योर्द्यावापृथिव्योः सीमन्तरेखा । 'सीमन्तः केशेषु' इति साधुः । कैलासशिखरं तावद्भूः, अत ऊर्ध्वं द्यौरित्यर्थः । दिशां नायिकात्वावच्छिन्नानां क्षौमनीरङ्गिका पट्टवस्त्रावगुण्ठनपटः । दिग्गजव्रजस्याग्रे मुखपटच्छटा तन्तुमय आच्छादनविशेषः । हरस्य स्वाङ्गभूत्यपेक्षया द्वितीया भूतिः । मानसजलानां फेनः । भूरेव फणिनी तस्याः कञ्चुको यस्य कान्तिः शोभते ॥

संक्रान्तं यो वहत्यन्तर्वपुषि स्फाटिके जगत् ।
आचान्तमिव कल्पान्ते शिक्षया वृषलक्ष्मणः ॥ ३१ ॥

संहारैकसिद्धान्तरूपाद्धरोपदेशात्कल्पात्यये निगीर्णमिव । वृषलक्ष्मण इति पञ्चम्यन्तं व्याख्येयम् । स हि कल्पान्ते जगत्संहरति । एतेन कैलासस्य कल्पान्तेऽप्यविनाशित्वं सूचितम् । स्फटिकतटे प्रतिबिम्बितं विश्वं मूर्तेर्मध्ये यो धत्ते । त्रिजगत्तत्रैव वसतीति तात्पर्यम् । दूरस्थस्य प्रतिबिम्बसंभवाभावात् ॥

बिम्बितार्कधृतापाण्डुशरीरो यो विराजते ।
सान्द्रैरामञ्जरीपुष्पगुच्छोत्तंस इव क्षितौ ॥ ३२ ॥

बिम्बितार्के धृतमापाण्डु शरीरं येन स शैलो भूमेर्भूषणार्थं घनैरामञ्जरीपुष्पगुच्छ इव शोभते ॥

स्फटिकाश्मसु यत्रास्ते बिम्बितो गुहबर्हिणः ।
दत्तयात्र इवाक्रष्टुमहीन्पातालवासिनः ॥ ३३ ॥

प्रतिमितः कुमारमयूरः पाताले वसतः सर्पानाक्रष्टुमुद्युक्त इव भवति । कुमारोऽपि तत्रैव वसतीति भावः ॥

विश्वात्मने स्वनाथाय दिगम्बरदशाजुषे ।
वयतीवाम्बरं दिक्षु यस्ततैरंशुतन्तुभिः ॥ ३४ ॥

दिशोऽम्बरं वस्त्रं यस्य तदवस्थां दधते विश्वात्मने स्वस्वामिने रश्मितन्तुभिर्हेतुभिर्यो वस्त्रं वयतीव । वेञः शपि रूपम् ॥

योऽश्रान्तशशभृत्सङ्गद्रवच्चन्द्राश्मशीकरैः ।
व्यनक्ति भगवत्पादपातानन्दाश्रुदुर्दिनम् ॥ ३५ ॥

भगवतस्तत्र कृतवसतित्वादश्रान्तं नित्यम् । अर्थाद्भगवन्मौलिचन्द्रस्यांशुसङ्गस्तेन गलद्भयश्चन्द्रकान्तेभ्यो जन्मोत्पत्तिर्येषां तैर्जललवैर्हेतुभिर्यो हरचरणस्पर्शहर्षबाष्पजलप्रवाहं प्रकटयति ॥

यो बिभर्ति ज्वलत्तुङ्गपतङ्गाश्मगुहात्मना ।
दत्तां भगवता दृष्टिमह्नि वह्निमयीमिव ॥ ३६ ॥

दिवा ज्वलन्तस्तुङ्गाः पतङ्गाश्मानः सूर्यकान्ता यस्यां सा गुहा यस्य स आत्मा स्वरूपम् । अथवा गुहानामात्मा रूपम् । तेन हेतुना भगवता सेवाप्रीतत्वाद्दत्तामाग्नेयीं दृष्टिमिव धत्ते । नेत्रस्थानीयतत्रत्यगुहानामतिविस्तारात्तन्मध्ये सूर्यांशवः प्रविशन्तीति भावः ॥

ढौकितानन्तकुसुमप्रकरः पार्श्वपादपैः ।
कीर्णार्घो गिरिजासिंहकरजोन्मुक्तमौक्तिकैः ॥ ३७ ॥
धूपधूममभिव्यञ्जन्भरैर्नवपयोमुचाम् ।
दत्तदीपालिकः शृङ्गप्रज्वलत्तपनोपलैः ॥ ३८ ॥
स्नानानि यच्छन्नच्छिन्नमुच्छलद्भिरितस्ततः ।
नित्यनिःष्यन्दमानेन्दुदृषत्सूतिभिरम्बुभिः ॥ ३९ ॥
सधातुनिर्झरारब्धसमालभनविभ्रमः ।
स्तुवन्दरीमुखैर्वातलहरीमुखरीकृतैः ॥ ४० ॥
शुभोपकल्पितबलिर्नानाविधफलर्द्धिभिः ।
तटप्रस्तुतसंगीतभङ्गीको दिव्यचारणैः ॥ ४१ ॥
यो भस्मस्मेरसर्वाङ्गो निभृतां स्थितिमश्नुते ।
नित्यसंनिहितं देवदेवमभ्यर्चयन्निव ॥ ४२ ॥ (कुलकम्)

समीपवृक्षैर्हेतुभिर्ढौकितः सज्जीकृतोऽनन्तः पुष्पचयो येन । गौरीवाहसिंहनखनिर्गतमुक्ताफलैः क्षिप्तार्घः । नवमेघैर्हेतुभिर्धूपधूममिव प्रकटयन् । शिखरेषु ज्वलद्भिः सूर्यकान्तैर्हेतुभिर्दत्ता दीपालयः प्रदीपपङ्क्तयो येन । मौलिशशिसंनिधानान्नित्यविगलच्चन्द्रकान्तजातैर्जलैः स्नानादि ददत् । सधातुभिः सगैरिकैर्झरैरारब्धः समालभनविभ्रमस्तिलकशोभा येन । वायुतरङ्गैर्मुखरीकृतैर्दर्य एव मुखानि तैः स्तुवन् । फलैः कल्पितनैवेद्यः । स्वर्गगायनैस्तटेषु प्रस्तुता आरब्धा संगीतभङ्गी गायनं यस्य । भस्मनेव स्मेराणि सर्वाङ्गाणि यस्य सः । निभृतामकम्पां स्थितिं प्राप्नोति । अत एव नित्यसंनिहितं महेश्वरं पूजयन्निवेति संभावनम् । यश्च भगवतः पूजां करोति स एवंविधावस्थो भवति ॥

धातुपाटलमुत्क्षेपपरिभूत्यपराधिनि ।
योऽद्यापीव मुखं धत्ते सकोपं दशकंधरे ॥ ४३ ॥

उत्क्षेपस्तोलनं स एव परिभूतिरवमानस्तेनापराद्धरि रावणेऽद्यापि कोपारुणमिव मुखं धत्ते । यतो धातुभिः पाटलं रक्तम् । अन्यश्चापराद्धरि कोपारुणं मुखं धातुवद्रक्तं धत्ते ॥

सूर्यग्रावाग्निना दुन्वन्सिञ्चन्निन्दूपलद्रवैः ।
कोपप्रसादसंभेद इव योऽनङ्गदाहिनः ॥ ४४ ॥

सूर्यकान्तानामग्निना तपंश्चन्द्रकान्तानां प्रवाहैः सिञ्चन्यः कामं दग्धवतः प्रभोः कोपप्रसादयोः संसर्ग इव भवति । अनङ्गदाहिन इति साकूतम् । कामस्य प्रथमं कोपं कृत्वेश्वरेण पुनः प्रसादकरणादियमुक्तिः ॥

सोरगाश्लेषनिःशेषतापघ्नस्थाणुसंगतेः ।
श्रीखण्डशैलं कुरुते यः साम्यानुग्रहातिथिम् ॥ ४५ ॥

उरगाणां फणिनामाश्लेषेण योगेन सह वर्तते यः । तथा निःशेषं तापं निदाघसंचारकृतं हन्ति यः स्थाणुस्तत्संगमाद्यो मलयपर्वतं साम्यप्रसादस्य याचकं कुरुते । मलये स्थाणुश्चन्दनच्छेदः । तत्र स्थाणुरीश्वरः ॥

दिवापि पूतासु महेशशेखरप्रजागरूकेण कुरङ्गकेतुना ।
कदाचन प्रोषितभर्तृकाव्रतं शिखासु यस्यौषधिभिर्न शिक्षितम् ॥ ४६ ॥

यस्य शिखरेष्वौषधिभिः प्रोषितः प्रवासस्थितो भर्ता यस्यास्तद्व्रतं कृशत्वमलिनत्वादि कदापि दिवसेऽपि न शिक्षितम् । न प्राप्तम् । महेश्वरस्य मौलौ प्रजागरूकेण प्रबुद्धेन चन्द्रेण । तच्छिखानां पूर्णत्वात् । ओषधीनां चन्द्रो भर्ता तत्साहचर्यं तत्रैव हरसंनिधानान्न व्यपेतम् ॥

शिखराध्वनि यस्य षट्पदद्युतिचौरा नवकेकिबन्धवः ।
ज्वलदोषधिदीप्तिसंपदां दधते संभृतकज्जलश्रियम् ॥ ४७ ॥

भ्रमराभाभाजो नवा मयूरबन्धवो मेघाः कज्जलतया संभाव्यन्ते । सजलानां मेघानां केकिबन्धुत्वेन वेति विशेषणमतिनवत्वद्योतनार्थम् ॥

तनुरनुसरति श्रीसंस्तवं यस्य शृङ्गे-
ष्वनुरजनि सुधांशोर्मूर्तिभिर्बिम्बिताभिः ।
भरसहनभृतान्तस्तोषभर्गप्रसादी-
कृतनिजनृकपालस्रक्सहस्राञ्चितेव ॥ ४८ ॥

निर्मलत्वाद्यस्य शृङ्गेषु प्रतिबिम्बिताभिश्चन्द्रमूर्तिभिः प्रतिनिशं यस्य मूर्तिः शोभापरिचयमेति । अतः संभाव्यते—हरसंबन्धिनो भरस्य वहनेन धृतोऽन्तश्चेतसि तोषो येन तेन भर्गेण प्रसादीकृतानां निजानां नृकपालस्रजां सहस्रेण सहितेव । श्वेतत्वं वर्तुलत्वं चोत्प्रेक्षानिमित्तम् ॥

स्फटिककटककुट्टिमेषु यस्य प्रतिमितयः खरतेजसो जुषन्ते ।
विचरणचणशर्ववाहपादप्रणयसमुद्गतजातरूपशोभाम् ॥ ४९ ॥

स्फटिककटकान्येव कुट्टिमास्तेषु प्रतिबिम्बानि विहरणेन वित्तो यो हरवाहो वृषभ-स्तस्य पादानां योगेन समुद्गतानि यानि जातरूपाणि तच्छोभां भजन्ते। सूर्यप्रतिबिम्बानि जातरूपत्वेन संभाव्यन्त इत्युपमोत्प्रेक्षा वेयम् ॥

यस्याः सौरभकिंकरीकृतमिलन्मत्तालिमालानिभा-
द्व्यज्यन्तेऽनवधिक्रुधो रतिपतेर्भ्रूभङ्गविच्छित्तयः ।
चित्रा चैत्ररथानिलस्य लहरी सा यत्र संजायते
मानानध्ययनाष्टमी शिशुतमीजीवातुभृत्सुभ्रुवः ॥ ५० ॥

यस्याः सौरभेण सौगन्ध्येन हेतुना किंकरीकृताः स्वायत्ताः संपादिता मत्ता भ्रमरमा-लास्तासां व्याजात्कुपितस्य कामस्य संबन्धिनो भ्रूभङ्गाः संभाव्यन्ते । भ्रमरदर्शनेन मानिनीनां मानभ्रंशात्कालत्वाच्च । सा चैत्ररथे वैश्रवणोद्याने वायोर्लहरी शिशुर्यस्तमीजी-वातुर्बालो रात्रिपतिस्तं बिभर्ति हरस्तत्सुभ्रुवो गौर्या मानस्यानध्ययनार्थमशिक्षणार्थमष्टमी जायते । अष्टम्यां ह्यध्ययनपरिहारः । यत्र वायौ वहति सति गौरी मानं मुञ्चतीत्यर्थः ॥

निह्नोतुं क्षणमीशते गणपतेर्येऽत्यूर्जितं गर्जितं
स्वैरं तारकवैरिवाहशिखिनो ये मौनमुद्राभिदः ।
ते यत्र स्तनितोर्मयो जलमुचां देवीहठालिङ्गन-
क्रीडासादरसौख्यदानपतितामायान्ति खट्वाङ्गिनः ॥ ५१ ॥

सुखवशादतिमहद्गणपतेर्गर्जितं छादयितुं ये शक्ताः । ये तारकवैरिणः कुमारसंबन्धिनो वाहमयूरस्य मौनमेव मुद्रां भिन्दन्ति । केकाः प्रकटयन्ति । बृंहितस्य तिरोधायकाः । ते यत्र मेघगर्जिततरङ्गा भयवशाद्देवीकर्तृका या हठेन हरस्यालिङ्गनक्रीडा तया खट्वाङ्गिनः सादरं सौख्यदातृत्वं प्राप्नुवन्ति । गौर्या हठालिङ्गनेनेश्वरस्यादरः सुखं च जातमित्यर्थः ॥

कालुष्यप्रागभावप्रणयिनि निबिडप्रावृडातङ्कनश्य-
द्धंसश्रेणीशरण्ये प्रकटतटलुठद्वीचिलेखाजटाले ।
यो मुख्ये मानसाख्ये परिसरसरसि प्राप्तसंक्रान्तिरन्त-
र्भूलोकालोकनेच्छोज्जिगमिषदुरगाधीशभङ्गीं बिभर्ति ॥ ५२ ॥

स्फटिकमयत्वात्कालुष्यस्य मलिनत्वस्य यः प्रागभावः। न तु सरोन्तरवत्प्रध्वंसाभावः । तस्य प्रणयिनि परिचिते । अत एव घनो वर्षाकृत आतङ्कस्तेन नश्यन्ती पलायमाना हं-सपङ्क्तिस्तस्याः शरण्ये रक्षितरि । यतः प्रकटं तटे लुठन्त्यो या वीचिलेखास्ताभिर्जटाले जटाधर इव । तटव्यापितरङ्गे । मुख्ये प्रधाने मानसनाम्नि निकटस्थे सरसि लब्धप्रति-बिम्बो यो महीलोकस्य दर्शनेच्छयोत्थास्यतीत्याशङ्क्यमानो यः फणिराजस्तच्छोभां धत्ते । भूलोकं द्रष्टुं शेष उत्थित इति संभाव्यत इत्यर्थः। 'आशङ्कायां सन्'। 'रटत्' इति वा पाठः॥

क्व यस्य नक्तंदिनचन्द्रिका न द्युतिर्द्युवीथीमुपतिष्ठमाना ।
संनह्यता कन्दलयत्यशेषवर्णान्तरापह्नवविप्लवाय ॥ ९३ ॥

आकाशमाक्रामन्ती रात्रिदिवज्योत्स्ना यस्य दीप्तिः सर्वेषां वर्णान्तराणामसितादीनामपह्नवो लोपः स एवोपद्रवस्तदर्थं क्व न भवति । सर्वत्र भवतीत्यर्थः । तस्या एव बलीयस्त्वात् । वर्णान्तराणां ब्राह्मणादीनामपह्नव एकवर्णतापादनमिति लेशतो ध्वनितम् ॥

या क्वाप्युदात्ततरदक्षकुलप्रसूति-
र्या सेवते हरिपदाक्रमणक्षमत्वम् ।
तां तारकान्तकरजन्मशुभानुभावां
गौरीं तनुं वहति यो दयितां हरस्य ॥ ९४ ॥

उदात्तानि तरन्ति वर्धमानान्यक्षकुलानि बिभीतकराशयस्तेषां प्रसूतिर्जन्म यस्याः । तथा या हरिपदस्याकाशस्याक्रमणे समर्थतां दधाति । तां तारा दीप्ताः कान्ता मनोहरा ये करा रश्मयस्तेषां जन्मना शुभस्वभावां शुभ्राम् । हरस्य प्रियां मूर्तिं यो दधातीति प्रकृतयोजना । उदात्ततरेऽत्युन्नते दक्षकुले जन्म यस्याः । तथा हरेः सिंहस्य पादाभ्यामाक्रमणेऽधिरोहणे सामर्थ्यं धत्ते । तां तारकासुरस्यान्तकरो हन्ता कुमारस्तज्जननेन शुभप्रभावां हरस्य प्रियां गौरीं यो वहतीति गौरीपक्षे ॥

दन्ता नितम्बभुवि पादतलेऽलकाप्ति-
र्योग्या पयोधरविवृत्तिषु मेखला च ।
यस्यास्तरङ्गितवलीमुखपृष्ठता च
यस्तां समुद्वहति मूर्तिमपूर्वकान्ताम् ॥ ९५ ॥

यस्या मूर्तेर्नितम्बभुवि कटकस्थाने दन्ता विषमपाषाणाः । यस्याः पादतले प्रत्यन्तपर्वतेऽलकाया नगर्या आप्तिः । यस्या मेखला बुध्नस्थानविशेषः पयोधराणां मेघानां विवृत्तयो विवर्तनानि तासु योग्या । उन्नतत्वात् । तरङ्गिता हर्षवशादतिचपला वलीमुखा वानरा यत्र तत्पृष्ठमूर्ध्वस्थानं यस्य तद्भावश्च भवति । अतोऽपूर्वादृष्टपूर्वा कान्ता दृश्या च तां मूर्तिं यो वहति । अथवापूर्वकान्ता एवंविधा भवति—दन्ता यस्या नितम्बे, पादतले केशाः, पयोधरे स्तने मेखला, तरङ्गिताभिर्वलीभिर्युक्तं मुखपृष्ठं यस्यास्तद्भावः ॥

उद्वेल्लत्फलसुण्डखण्डसचिवैरुत्तंसिता मूर्धभिः
प्रेङ्खत्पत्रकराश्रितालिलहरीरुद्राक्षमालाभृतः ।
रोहद्दीर्घजटास्तटेषु तपसि स्थेम्नेव यस्य द्रुमा-
स्ते तिष्ठन्त्यनिरोध एव मरुतामन्तं नयन्तो रजः ॥ ९६ ॥

उद्वेल्लन्ति फलान्येव मुण्डखण्डाः कपालमालास्तत्सचिवैर्मूर्धभिरग्रैरुत्तंसिता भूषिताः । तथा पत्राण्येव करास्तदाश्रिता भ्रमरमाला एव पृथुत्वादिना रुद्राक्षमाला दधतः । तथा रोहन्त्यो दीर्घा जटा मूलानि येषां ते तरवस्तपसि माघमासे मरुतामनिरोध एव संचार एव सति स्थेम्नेव निष्कम्पत्वेनेव तिष्ठन्ति । फलादिकृतगौरववशाद्वृक्षान्कम्पयितुं वायुरसमर्थ इत्यर्थः । रजो मकरन्दमनन्तं स्वरूपं पक्वतां नयन्तः । अन्यत्र वायौ वहति सति वृक्षा दीर्घपत्रत्वाद्धूलिसति रजो धूलिमन्तमनुत्थानं नयन्तः । अन्यत्र वायौ वहति सति वृक्षा दीर्घपत्रत्वाद्धूलिमुत्थापयन्ति । तत्र तु न तथा स्फटिकमयत्वात् । अथवा वृक्षास्तपसि तपोविषये स्थेम्ना स्थिरत्वेन तिष्ठन्तीति व्याख्या । तपस्वी कपालरुद्राक्षजटादिकं धत्ते । मरुतां प्राणादीनामनिरोध एव कुम्भकाभावेऽपि रजो रागं तपोबलेनानन्तं विनाशं नयति ॥

यस्मिञ्जातु न जायतेऽम्बुजवतीकौमारधर्मक्षति-
र्दृष्टो यत्र न वा कदाचिदशनाभिज्ञश्चकोरीजनः ।
तस्मिन्नप्यहिचक्रवर्तिनगरोद्देशोपकण्ठे क्षणं
यन्मूलस्फटिकाश्मरश्मिपटलैः कोऽपि प्रकाशोदयः ॥ ९७ ॥

यस्मिन्पाताले पद्मिनीनां वधूस्थानीयानां कौमारधर्मस्य संकोचस्याक्षतयोनित्वतुल्यस्य क्षतिर्हानिर्न जायते । पाताले सूर्यप्रवेशाभावात् । यस्मिंश्चकोरीजनोऽशनाभिज्ञो न दृष्टः । पाताले चन्द्रप्रवेशस्याप्यभावात् । तत्राप्यहिचक्रवर्तिनः शेषस्य नगरनिकटे यन्मूलरश्मिभिः कोऽप्यपूर्वः प्रकाशोद्भवो भवति । सूर्येन्दुप्रकाशादपि तत्प्रकाशोऽधिक इति भावः ॥

नैर्मल्यतस्तुलितसाधुजनाशयो यः
संक्रान्तकोमलतमालतरुप्रकाण्डः ।
ज्योत्स्नासपत्नरुचिपीततमस्तरङ्ग-
संदर्भगर्भमिव कुक्षिमभिव्यनक्ति ॥ ९८ ॥

निर्मलत्वेन तुलितो विडम्बितः साधुजनाशयः सज्जनहृदयं येन । मलशब्दोऽप्यत्र सितः । अत एव संक्रान्तं प्रतिबिम्बितं कोमलं तमालतरुप्रकाण्डं श्रेष्ठस्तमालतरुर्यत्र । प्रकाण्डशब्दः प्रशस्तवाचकः । स कैलासो ज्योत्स्नायाः सपत्नी समा या रुचिस्तया पीतस्तमस्तरङ्गसंदर्भः स गर्भे यस्य तमिव कुक्षिं मध्यदेशं प्रकटयति । ज्योत्स्नायास्तमःपानं धर्मः । अतस्तत्सादृश्यात्तमालप्रतिबिम्बे तमःपानसंभावनोक्तिः ॥

यो लम्बोदरकुम्भसंभवमदस्रोतःसिरासीकर-
क्षुण्णः स्वःसरिदङ्कपङ्कजरजःसौगन्ध्यबन्धुश्च यः ।
वप्रेषु प्रसरः स यत्र मरुतामोजायते जायते
यत्सेवाप्रवणो गणो मधुलिहां मन्दारमन्दादरः ॥ ९९ ॥

लम्बोदरस्य गजाननस्य कुम्भाभ्यां संभवो यस्य तन्मदस्रोतस्तस्य सिराः सूक्ष्मप्रवाहास्तत्कणैर्युक्तः । तथा स्वःसरितो गङ्गाया अङ्के मध्येऽङ्कभूतानि वा पङ्कजानि तेषां रजः-सौगन्ध्यस्य यो बन्धुः परिचितो भवति । तथा यत्र सौरभशीतलत्वादिभिर्हेतुभिर्भ्रमन्भरो मन्दारेषु दिव्यपुष्पविशेषेषु मन्दादरो निःस्पृहो भवति स मरुतां प्रसर उल्लास ओजायते । ओजायत इति क्यङि विन्मतोर्लोपे रूपम् ॥

यमदूरतस्त्रिजगदेककौतुकव्यवहारसर्गविधिनव्यवेधसम् ।
अलका विसृमरबहुसौधसौहृदादनिमेषलोचनचयेव वीक्षते ॥ ६० ॥

एकं कौतुकव्यवहाराणामद्भुतकर्मणां निर्माणेऽभिनवप्रजापतिं यं तापकरशोताद्यभावा-न्निर्योद्घाटितानि बहूनि सौधानि राजगृहाणि तत्परिचयादनिमिषनेत्रेवालका वीक्षते । अद्भुतं च निमिषरहितत्वेन लोको वीक्षते ॥

यस्याश्चकास्ति कटकेषु सहेलखेल-
　विद्याधरीचरणयावकपङ्कमुद्रा ।
श्रीकण्ठनेत्रपथजानपदार्कसोम-
　सेवाकृते सततसंनिहितेव संध्या ॥ ६१ ॥

यत्र नित्यं वसतो हरस्य नेत्रमार्गे वास्तव्यावर्कसोमौ तयोः सेवार्थं नित्यसंनिधानकरी संध्येव यन्नितम्बेष्वेकान्तवशात्सहेलं निःशङ्कं क्रीडन्त्यो या विद्याधर्यस्तासां पादयोरल-क्तकं तत्पदवी शोभते । रक्तत्वात्संध्योत्प्रेक्षणम् ॥

व्योमोल्लङ्घनजाङ्घिकेन वपुषा निःशेषकाष्ठाहठ-
　क्रीडाश्लेषविटस्य कल्पितवतो ब्रह्माण्डमुत्कर्परम् ।
पातालाधिशयालुमूलमहसः शङ्के न यस्य प्रति-
　स्पर्धावर्धनसाहसे बलभिदः शैलोऽपि संनह्यति ॥ ६२ ॥

व्योम्न उल्लङ्घने जाङ्घिकेन शीघ्रगामिना । व्योम्नोऽप्युपरिव्यापिनेत्यर्थः । देहेन ब्रह्माण्ड-मुत्कर्परमुत्थापितोर्ध्वकटाहं रचयतः । तथा समस्तदिशां स्त्रीत्वान्नायिकास्थानीयानां हठेन क्रोडालिङ्गने विटस्य परिहासशीलस्य । दिग्व्यापिन इत्यर्थः । पातालाधिशयालु पातालव्यापि मूलमहो बुध्नतेजो यस्य तस्य स्पर्धयोपमया वर्धनमृद्धिस्तदेव साहसं तत्र सुमेरुरपि न संनह्यति । असमर्थोऽस्ति बलभिदः शैल इति पर्यायवक्रतयाल्पत्वं सूचि-तम् । इन्द्रस्यापि नियतगतित्वात् ॥

दिवि क्षीरोदन्वान्हिमगिरिरजय्योऽर्कमहसा-
　मजाताधःपातस्त्रिदशसरिदोघः कचति यः ।

वमञ्ज्योत्स्नाजालं दिशि दिशि सपत्नं शशिरुचां
चकोरीजिह्वाभिर्विरचितवृथालेहनविधिः ॥ ६३ ॥

आकाशे क्षीरसमुद्रः । सूर्यरश्मीनामजय्यश्थ्यावयितुमशक्यो हिमाद्रिः । तत्राजातोऽधःपातो यस्य स गङ्गाप्रवाहः । ज्योत्स्नाजालं वमज्जलरूपतया संतन्वन् । चकोरीभिर्ज्योत्स्नाशङ्कया विहितोऽज्योत्स्नात्वाद्वृथा लेहनविधिर्यस्य यः कैलासः शोभते ॥

द्विर्भावश्चन्द्रभासां तरुणकुमुदिनीनाथचूडाट्टहासा-
नुप्रासः शैलपुत्रीनवहसितसुधाविप्रुषां पौनरुक्त्यम् ।
स्वर्गङ्गावीचिवीप्सा रुचिरुपचिनुते चातुरीं यस्य तस्य
क्षोणीभर्तुर्गुणेषु प्रतिपदपठनं को विनिर्मातुमीष्टे ॥ ६४ ॥

द्वौ वारौ द्विश्चन्द्रांशूनां द्विर्भावः । तरुणः कुमुदिनीनाथो बालचन्द्रश्चूडायां यस्य स हरस्तदट्टहासस्यानुप्रासस्तुल्यरूपो द्वितीयः समुदायः । गौर्या नवहसितमेव सुधाविप्रुषस्तासां पौनरुक्त्यम् । स्वर्गङ्गायास्तरङ्गाणां वीप्सा यस्य दीप्तिश्चातुर्यं वर्धयति । यस्य भूभृतो गुणविषयं प्रतिपदपाठं कर्तुं कः समर्थः । द्विर्भावादयो वक्रोक्त्या सादृश्यगमका इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकवि-
राजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
कैलासवर्णनं नाम चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

वृन्दारकाधिपशिरोरुहपारिजात-
स्रग्बन्धुभिर्मधुकरैरुपवीणिताङ्घ्रिः ।
देवः स्वयं जगदनुग्रहकेलिकार-
स्तं बालशीतकिरणाभरणोऽधिशेते ॥ १ ॥

वृन्दारकाणां देवानामधिपः शक्रस्तस्य शिरोरुहेषु केशेषु पारिजातस्रजस्तासां बन्धुभिः परिचितैरलिभिरुपवीणितौ वीणयोपगीतावङ्घ्री यस्य। इन्द्रोऽपि तं नमतीत्यर्थः । यतो जगतामनुग्रह एव केलिस्तत्करो हरः स्वयमप्रार्थितो गुणवत्त्वात्तं कैलासमाश्रयति । केलौ वीणागानमुचितम् ॥

येनाङ्घ्रिपीठहठसंततघृष्टिनिर्य-
त्तिर्यक्किणा जगति कस्य न भालपाली ।
दैवानधीतनवदिव्यशुभाक्षराली ।
न्यासेच्छया निहितकाकपदेव चक्रे ॥ २ ॥

सेवासमय ईश्वरस्य पादपीठे हठेन नित्यं घृष्टिर्घर्षणं तया निर्यन्संपद्यमानस्तिर्यक्ति-रश्चीनः किणो मांसस्य घनीभावो यस्याः सा भालपाली प्रशस्तं भालं दैवेन विधिना नाधीतान्यलिखितत्वादपठितानि दिव्यानि शुभाक्षराणि तेषामालिः पाली तस्या न्यासो लेखनं यत्रेच्छया हेतुभूतया निहितं काकपदं काकचरणाकारः पतिताक्षराभिज्ञानवि-शेषो यस्याः सेव चक्रे । ईश्वरं प्रणमतां पापक्षयेण भाग्योपचयो भवतीत्यर्थः ॥

भक्त्या नतेन पुरतोऽवनिचुम्बिमूर्ध्ना
पुष्पोत्करं विकिरता वनमालयेव ।
दैत्यारिणा चरणयोः कचमेघविद्यु-
दोघैरदायिषत यस्य बलिप्रदीपाः ॥ ३ ॥

भक्त्यावनिचुम्बी दण्डप्रणामवशाद्भूसंस्पर्शी मूर्धा यस्यैवंविधेनात एव वनमालया पुष्पपत्रमय्या मालया वक्षःस्थितया पुष्पसमूहं क्षिपता हरिणा स्वकेशाभ्रविद्युद्भिरेव पूजाप्रदीपा दत्ताः । भक्त्यादायिषतेति वा योज्यम् । भक्तिवशाद्बाह्यपूजोपकरणसंग्रहस्या-वश्यभाविकालातिपातासहिष्णुर्हरिरस्तीत्यर्थः । 'स्यसिच्सीयुट्तासिषु—' इति चिण्व-दिडागमः ॥

पूजासु भक्तिरभसातिरसाधिरूढ-
स्ताम्यन्नशेषकुसुमप्रकरव्ययेन ।
यस्मै चिकीर्षति पुनर्द्रुहिणोऽपि नून-
मभ्यर्चनं निजनिवाससरोरुहेण ॥ ४ ॥

पूजावसरे सकलपुष्पसमाप्त्या ग्लायन्यतो भक्त्युद्रेकयुक्तो ब्रह्मा नूनं वितर्के स्वासन-पद्मेन पुनः पूजां कर्तुमिच्छति । स्वासनपद्मेन पूजायाः साध्यायास्तान्तिः साधनम् ॥

आस्त्याननिर्झरसनाभिगुणाहिराज-
भोगस्य मन्दरगिरेस्त्रिपुरव्ययाय ।
यच्चापतां धृतवतोऽपि शराग्निपुङ्ख-
व्याजाद्दवानलशिखा इव नो विरेमुः ॥ ५ ॥

त्रिपुरसंहारकाले भगवद्धनुर्भावं भजतोऽप्यत एवास्त्यानाः शैत्यवशात्कठिनीभूता ये निर्झरास्तेषां सनाभिः समो निर्झरत्वेन संभावितो गुणो वासुकिभोगो यस्य तस्य मन्दरा-द्रेर्दवाग्निज्वाला इव नो विरेमुर्न विरताः। कस्मात्। त्रिपुरदाहार्थं नियुक्तो यः शराग्निस्त-स्य पुङ्खाः प्रान्तास्तद्व्याजात् । धनुर्भूते मन्दराद्रौ गुणभूतस्य वासुकिभोगस्य निर्झरत्वं संभाव्यते। अथवाग्निरिव पुङ्खः । दीप्तत्वात्। शरस्य हि सालक्तकादिरागः पुङ्खो भवति। धनुर्भावपरिणामेऽपि मन्दरः स्वधर्मं नात्यजदित्यर्थः ॥

क्रोधोत्तमाङ्गधुतिलोलकिरीटसिन्धु-
पाथःपृषत्परिसमूहनसिक्तदिक्के ।
रुद्धान्तिके भ्रुकुटिपक्ष्मकुशस्तरौघै-
र्यो मन्मथाहुतिमदत्त विलोचनाग्नौ ॥ ६ ॥

त्रिपुरसुन्दरीणां क्रोधेनोत्तमाङ्गस्यातिकम्पस्तया लोला या किरीटसिन्धुस्तस्याः पाथः-पृषन्ति जलकणास्तैः परिसमूहनं जलार्द्रेण पाणिनाग्नेः प्रदक्षिणीकरणम् । तत्तु परिषेचनमात्रे वर्तते । उपचारात् । तेन सिक्ता दिशो यस्य । तथा भ्रुकुटिपक्ष्माण्येव कुशस्तरा वह्नेश्चतुर्दिक्षु विकीर्यमाणा दर्भास्तैर्व्याप्ते नेत्राग्नौ यः कामाहुतिमदत्त । कृतसमूहने कीर्णास्तरे चाग्नावाहुतिर्दीयते ॥

नीरन्ध्रबाष्पलहरीपरिवारितानि
वक्त्राणि यः पुरकुरङ्गदृशां चकार ।
कोदण्डदण्डपदवीमधिरोपितस्य
शैलस्य निर्झरजलैरिव पूरितानि ॥ ७ ॥

धनुर्दण्डदशां प्रापितस्य मन्दराद्रेर्निर्झरजलैर्व्याप्तानीव त्रिपुरसुन्दरीणां मुखानि यश्चकार । यतोऽश्रुपूरितानि ॥

यस्योद्धताभिनवकोपपिपासितेन
नेत्राग्निना चुलकिते वपुषि स्मरस्य ।
खेदाद्विवेद रतिरक्षततापभूमि-
र्नामापि नाधररसासवपानगोष्ठ्याः ॥ ८ ॥

यस्योद्धतेपूद्धतो वा प्रत्यग्रो यः कोपस्तेन पिपासितेन संधुक्षितेन नेत्राग्निना कामशरीरे चुलकिते दग्धे सति खेदादक्षतस्य तापस्य दुःखस्य संतापस्य च भूमिः स्थानं सती रतिरधररस एवासवो मधु तत्पानगोष्ठ्या नामापि न ज्ञातवती । रतेः प्रियाधररसपानं दुर्लभमित्यर्थः ॥

मारावरोधसुखशीतकरप्रभातं
श्वेतस्य दीक्षितमथाभयदक्षिणायै ।
अध्यापकं विलिडितेषु[1] युगान्तवह्ने-
र्यो दुःसहं वहति लोचनहव्यवाहम् ॥ ९ ॥

1. विलसितेषु.

मारस्य कामस्यावरोधो रतिस्तस्या मुखचन्द्रस्य प्रभातम् । ओजोहानिकरमित्यर्थः । श्वेतस्य राजर्षेर्यमभयनिवारणार्थं गृहीतनियमम् । तथा कल्पान्ताग्नेर्होहोपाध्यायम् । तस्मादधिकमित्यर्थः । एवंविधं लोचनाग्निं तथा परैर्दुःसहं यो बिभर्ति ॥

लोलाञ्चलानिलविनिर्धुतसिद्धसिन्धु-
नीरन्ध्रसीकरकरालतया चकास्ति ।
सायाह्नताण्डवविधौ गजराजकृत्ति-
र्यस्याधुनाप्यजहतीव कवाटमुक्ताः ॥ १० ॥

सायाह्ने पश्चिमसंध्यायां नाट्ये सति लोलो योऽञ्चलो गजकृत्तिप्रान्तस्तद्वातेन कम्पिता या गङ्गा तस्या घनैः कणैः करालता व्याप्तता तयाद्यापि कवाटमुक्ताफलान्यत्यजन्तीव गजेन्द्रस्य कृत्तिः शोभते । जलकणानां मुक्तात्वेनोत्प्रेक्षणम् ॥

अष्टौ तनूरपि दिदृक्षुरिवैककालं
नीत्वा दृशो नवविकासविलासमष्टौ ।
देवः कुशेशयकुटीचरतापसोऽपि
यस्याग्रतोऽनुदिवसं विनयं प्रयुङ्क्ते ॥ ११ ॥

भक्तिवशाद्युगपदेव क्षितिजलाद्या अष्टावपि मूर्तीर्द्रष्टुकामश्चतुर्मुखत्वादष्टौ दृशो विकासं नीत्वा पद्माश्रयो ब्रह्मा यस्य पुरः प्रत्यहं विनयं करोति । यद्विनयं कुर्वन्ब्रह्मा हर्षवशाद्विकसितदृष्टिर्जात इत्यर्थः ॥

सिद्धां चिरेण विधिसूदहठप्रयत्ना-
त्संरक्षितामथ मुकुन्दपुरोगवेन ।
यः केवलोऽवगिरते निखिलां सलीलं
लोकत्रयीरसवतीं प्रलयोत्सवेषु ॥ १२ ॥

विधिरेव सूदो रसवतीपाचकस्तस्य प्रयत्नाच्चिरेण सिद्धाम् । अथ मुकुन्द एव पुरोगवः सूदाध्यक्षस्तेन पालिताम् । लोकत्रयीमेव रसवतीमन्नव्यञ्जनादिसामग्रीं यः केवलः कल्पान्तोत्सवेष्ववगिरते संहरति । अन्यश्चेश्वरः सूदसाधितां सूदाध्यक्षेण रक्षितां रसवतीं भुङ्क्ते ॥

कुम्भः करे शिरसि वारिगतिः श्रयन्ति
मुक्ताः पदं चरणयोर्नगजा कलत्रम् ।
नागैर्मदोल्बणमुखैर्वृतमङ्गमङ्गं
यस्याद्भुतस्थितिमतः सुरकुञ्जरस्य ॥ १३ ॥

यस्य सुरकुञ्जरस्य महादेवस्य कुम्भः सुधाकलशः करे भवति । वारिगतिर्गङ्गा शिरसि भवति । मुक्ता विरक्ताः पादयोः स्थानं श्रयन्ति । नगजा शैलपुत्री यस्य कलत्रं भवति ! यस्य च विषमदक्रूरमुखैः सर्पैरङ्गमङ्गं वृतम् । अत एवाश्चर्यकारिणः । अथ चाद्भुतस्य हस्तिनः, कुम्भः कवाटः करे, वारिगतिर्गजबन्धनं शिरसि, मुक्ताफलानि पादयोः, गजा हस्तिनी न कलत्रम्, सगदैर्नागैर्हस्तिभिरङ्गमङ्गं वृतम् ॥

पुस्फोट दन्तमुसलं मुकुटेन्दुभासा
दानाम्बु दीप्तनयनाग्निरुचा शुशोष ।
हाराहिभिः श्रवणतालमरुत्पपे च
यस्याग्रतः कथमवल्गि गजासुरेण ॥ १४ ॥

यस्य । चन्द्ररश्मिसंपर्काद्धस्तिनां दन्तस्फोटनं जातिधर्मः । गजासुरस्येश्वरमौलिचन्द्रदीप्त्या दन्त एवायुधं पुस्फोटास्फुटत् । नेत्राग्निज्वालया मदजलमशुष्यत् । हारसर्पैः कर्णतालपवनः पीतः । अतो हरस्याग्रे गजासुरेण कथं वल्गितम् । युद्धारम्भात्पूर्वमेव भग्ननिजायुधत्वात् । योद्धुं गजासुरः समर्थो नाभूदित्यर्थः ॥

भूषोरगेषु तुलितायसशृङ्खलेषु
व्यक्ताङ्कुशश्रियि किरीटशशाङ्कखण्डे ।
आलानदण्डरुचिदोष्णि च यस्य चक्षुः
क्षिप्त्वैव कातरतरः स गजासुरोऽभूत् ॥ १५ ॥

तुलिताः सदृशीकृता आयस्यो लोहमय्यः शृङ्खला यैस्तेषु सर्पेषु । तथा व्यक्ताङ्कुशश्रीर्यस्य । हस्तिदमनार्थायुधविशेषसदृशे चन्द्रखण्डे । तथा गजबन्धनस्तम्भशोभे भुजे च दृष्टिमेव क्षिप्त्वा गजासुरो भग्नोऽभूत् । सर्पादीञ्शृङ्खलादित्वेन संभाव्य युद्धं विनैव गजासुरो भङ्गं प्रापेत्यर्थः ॥

लोकत्रयैकभिषजा विचरन्रणोर्व्यां
येनावलम्ब्य निबिडां करवालयष्टिम् ।
दुर्वारदर्पपटले शमिते प्रयोगा-
दन्धासुरः सकलमैक्षत भीतितत्त्वम् ॥ १६ ॥

लोकत्रयस्यैको भिषग्मलत्रयचिकित्सकस्तेन खड्गयष्टिं गृहीत्वा रणप्रयोगान्मदे नाशिते सति युद्धभूमौ विचरन्भयात्पलायमानोऽन्धकासुरः समस्तं भीतिरहस्यमपश्यत् । यष्टिं कीलिकां च गृहीत्वा वैद्येनौषधप्रयोगात्पटले नेत्ररोगविशेषे शमिते सत्यन्धस्तत्त्वं वस्तुजातं पश्यति ॥

येन क्षतायुषि मखे विमुखेन कोपा-
नष्टार्त्विजीनमुनिलोकविलुप्ततन्त्रे ।
दक्षस्य तत्क्षणविषादभुवा निजेन
बाष्पह्रदेन पृथुनावभृथो विवव्रे ॥ १७ ॥

रोषवशाद्विमुखेन येन दक्षस्य यज्ञे नाशिते सति, अत एव नष्टः पलायमान आर्त्विजीनोऽर्त्विक्कर्मार्होो मुनिलोको यत्र । अत एव विलुप्ततन्त्रे नष्टविधौ दक्षस्य दुःखजातेन स्वेनाश्रुपूरेण यज्ञान्तस्नानं संपादितम् । यज्ञान्ते हि स्नानमुचितम् । दक्षस्येश्वरेण नाशितयज्ञत्वाच्छोकाश्रुणैव स्नानमभूदित्यर्थः ॥

नृत्तोत्सवे स्फुरति यस्य स दण्डपादो
यस्मिन्गते गगनसागरसेतुमुद्राम् ।
दूराध्वलङ्घनघनश्रमवारिबिन्दु-
वृन्दप्रथां चिरमुडूनि कटाक्षयन्ति ॥ १८ ॥

यस्मिन्व्योमसमुद्रस्य सेतुत्वं याते मार्गोल्लङ्घनजातघर्माम्बुकणसंभावनां तारा लभन्ते । स दण्डाकारः पादो यस्य स्फुरति ॥

पार्श्वोपविष्टहरिकेशपयोदयोगा-
द्द्राग्विद्रुतं रथमरालकुलं विचेतुम् ।
आपृच्छ्य यं कमलभूः पृथुहंसयूथे
ताम्यन्बहु भ्रमति रोधसि मानसस्य ॥ १९ ॥

पार्श्वे उपविष्टस्य हरेः केशेषु पयोदा मेघास्तेषां सङ्गात्तूर्णमपसृतं वाहहंससमूहं गवेषयितुं यमापृच्छ्य ज्योत्कृत्य मानसतीरे ब्रह्मा बहु भ्रमति । यतो बहुहंसे ताम्यन्स्विद्यमानः । यमापृच्छ्यान्वेष्टुमिति वा योज्यम् ॥

गौरीमयैकवपुरर्धभृदात्तरागं
केयूरकङ्कणफणीन्द्रमणिप्रभाभिः ।
सेर्ष्यं द्वितीयमपि भागमिवावरुद्धं
यः संध्यया सततवल्लभया बिभर्ति ॥ २० ॥

अङ्गदरूपाणां फणीन्द्राणां मणिदीधितिभिरात्तरागं रक्तं द्वितीयमपि स्वशरीरार्धं नित्यप्रियया संध्ययाक्षमापूर्वमवष्टब्धमिव बिभर्ति । यतो गौरीमयमेकं शरीरार्धं बिभ्रत् । अनेन प्रियायै गौर्यै शरीरार्धं दत्तम्, अहमप्यस्य प्रिया, अतो द्वितीयमर्धं रुणध्मीति रत्नांशुव्याजात्संध्ययेवाक्रान्तमित्यर्थः ॥

यश्चक्षुषः प्रकुपितस्य विकारशान्तिं
चक्रे निजस्य बत पावकशोणभासः ।
कृत्वा स्मरस्य समवर्तिरसाधिरोहं
तत्सुभ्रुवश्च विरचय्य घनाश्रुमोक्षम् ॥ २१ ॥

स्मरस्य समवर्तिरसायां यमभूमावधिरोहं कृत्वा । समवर्तिनो यमस्य रसे संहाराभिलाषे अधिरोहमिति वा । तत्सुभ्रुवो रतेर्घनमश्रुमोक्षं च कृत्वा यः पावकेनाग्निना शोणभासोऽरुणस्य । तृतीयस्येत्यर्थः । नेत्रस्य विकारशान्तिमसौम्यत्वनिवारणं चक्रे । अथ च समा सममात्रा । अविषमा वा । वर्तिस्तूलिका तया रसाधिरोहमन्यस्य कृत्वा । अन्यस्य च बाष्पमोक्षं अग्निरक्तस्य स्वनेत्रस्य विकारशान्तिकरणमद्भुतम् ॥

धत्ते द्विजाधिपमुपर्यजिनावतारं
स्वं गाहतेऽनवममूर्ध्वशयालुशेषः ।
भीमाङ्गदाविरहितां च भुजाग्रवीथीं
पुष्णात्यपूर्वचरितः पुरुषोत्तमो यः ॥ २२ ॥

लोकोत्तरचरितो विपरीतस्वभावश्च, पुरुषोत्तमः पुरुषेषूत्तमः हरो हरिश्च, द्विजाधिपं चन्द्रं गरुडं चोपरि धत्ते, अनवममुत्तमं गजचर्माच्छादनम् । नवमं स्वात्मानमजिनस्य सुगतव्यतिरिक्तस्यावतारमुत्पत्तिं गाहते दधाति । तयोर्ध्वमुपरि शयालुर्निवसञ्शेषो यस्य तथा भीमेन फणिमयत्वादङ्गदेनाविरहितां सहिताम् । भीमां भयानकां गदया विरहितां च बाहुवीथीं पुष्णाति । हरेर्हि वाहो गरुडो नवमश्च बुद्धावतारः शेषे च शेते श्रीभोगार्हत्वात्कोमलान्सगदांश्चतुर्भुजान्धत्ते । अतो नारायणपक्षे विरोधः ॥

द्यामालिलिङ्ग मुखमाशु दिशां चुचुम्ब
रुद्धाम्बरं शशिकलामलिखत्कराग्रैः ।
अन्तर्निमग्नचरपुष्पशरोऽतिपाता-
त्किं किं चकार तरुणो न यदीक्षणाग्निः ॥ २३ ॥

यन्नेत्राग्निर्यो दिवमालिलिङ्ग दिशां च मुखं चुचुम्ब । रुद्धमम्बरं नभो यत्रैवं कृत्वा कराग्रैश्चन्द्रकलामलिखत् । यतोऽन्तर्मध्ये निमग्नचरो दग्धपूर्वः पुष्पशरः कामो यस्य तथा तरुणो दीप्तः । अथ च तरुणो युवा हृदयस्थितकामः सन्किं किं न करोति । कांचिदालिङ्गति कासांचिन्मुखं चुम्बति । रुद्धमम्बरं वस्त्रं यत्र कांचिन्नखैर्लिखति । इति शब्दशक्तिमूलो ध्वनिः ॥

यो मूर्ध्नि धारयति सान्द्रवलत्फणीन्द्र-
फूत्कारधूमलहरि द्रुहिणस्य मुण्डम् ।

आवासतामरसगन्धलवानुवृत्ते-
रद्यापि षट्पदकुलैरिव लिह्यमानम् ॥ २४ ॥

सान्द्रं यथा भवति तथा वलन्त्यः फणीन्द्रफूत्कारधूमलहर्यो यस्य तद्ब्रह्मणः कपालं धारयति। अतः संभाव्यते—ब्रह्मण आवासो यत्तामरसं पद्मं तत्सौरभकणानुवर्तनाद्भ्रमरैरिवास्वाद्यमानम्। गन्धलवानुवर्तनं ब्रह्मशिरसः साक्षादासनपद्मसंपर्काभावात् ॥

रूढिं दृढामसमनेत्रतया विवृण्वं-
ल्लोकत्रयाक्रमणशौण्डशुभैकपत्रः।
आलोकवर्त्मधृतपुष्पवदुद्गमो यः
स्थाणुर्गृहीतपरशुर्दुरितं छिनत्ति ॥ २५ ॥

असमानि त्रीणि नेत्राणि यस्य तद्भावेन प्रसिद्धिं प्रकटयन्। लोकत्रयस्याक्रमणे शौण्डं समर्थं शुभमेकं पत्रं वाहनं वृषभो यस्य। तथालोकवर्त्मनि दर्शनाश्रये नेत्रद्वये धृतः पुष्पवतोरर्केन्द्वोरुद्गमो येन। गृहीतः परशुरायुधविशेषो येन। स स्थाणुर्हरः पापं निवारयति। अथ च। असमानि नेत्राणि मूलानि यस्य तद्भावेन प्रसिद्धिं वहन्। स चैकपत्रः। आलोकवर्त्मनि दृश्ये विषये धृतः पुष्पवानुद्गमो येन। स स्थाणुर्मुण्डवृक्षश्च। गृहीतः परशुः काष्ठच्छेदको येन स च्छिनत्ति ॥

ते कुन्दकुड्मलसगोत्ररुचो मयूखा
यस्यावचूलशशिनोऽनिशमुच्छ्वसन्ति।
आसीदतां दिविषदां मुकुलीभवन्ति
यद्वैभवादिव पुरः करपुष्कराणि ॥ २६ ॥

सेवार्थमुपसीदतां सुराणां करमुकुलानि येषां शशिरश्मीनां वैभवान्माहात्म्यादिव संकुचन्ति, ते कुन्दकुड्मलानां सगोत्रा सदृशी रुग्यस्य हरमौलिचन्द्रस्य किरणा जयन्ति। सेवानिमित्तेऽञ्जलिबन्धे चन्द्रकरमाहात्म्यं निमित्तान्तरमुत्प्रेक्ष्यते ॥

जूटाहिराजफणरत्नमरीचिपूरैः
सीमन्तितं वदनरन्ध्रपथप्रवृत्तैः।
यस्याचकास्ति नृकपालमतीत्य भाल-
माग्नेयमन्यदिव लोचनमुज्जिहानम् ॥ २७ ॥

कपालसंबन्धिना मुखरन्ध्रपथेन प्रवृत्तैर्जूटे फणिनां फणरत्नरश्मिकलापैः शोभितं नृकपालं नरमुण्डो यस्य भालमतीत्य ललाटादन्यत्रोत्तिष्ठदन्यन्नेत्रमिव शोभते। महानसे द्वारेभ्यो यथा शिखा निर्यान्ति तथा कपालस्य नेत्रादिभ्यो द्वारेभ्यः शिखा निर्गच्छन्ति। अतस्तृतीयनेत्रवच्चतुर्थमप्याग्नेयं नेत्रमुत्थितमिति संभाव्यते ॥

यस्याः परो न करपीडनकृन्न नीता
या राहुणा विषयतां दशनक्षतानाम् ।
या दूषिता न शशशावकचुम्बनेन
यस्तां सतीमधिशिरो वहतीन्दुलेखाम् ॥ २८ ॥

यस्याः परोऽर्कादिः करैः रश्मिभिः कराणां रश्मीनां वा पीडनं व्यथां न करोति । दिवसेऽप्यम्लानरश्मिरित्यर्थः । राहुणा दन्तकृतॄणां क्षतानां घातानां स्थानतां न नीता । लेखामात्रत्वादिति हेतुः प्रत्येयः । अत एव मृगपोतकस्पर्शेन या न दूषिता तां सतीं शोभनां चन्द्रलेखां बिभर्ति । अथ च सतीं साध्वीं कश्चिद्वहति यस्याः परः करेण पीडनं कुचादिविमर्दं न करोति । अन्येन रतिदन्तव्रणानां स्थानतां न नीयते । परचुम्बनेन च या न दूषिता ॥

वक्रश्रियो गणपतेर्गतिविभ्रमे च
देव्या विभाव्य हठचौरमसूययेव ।
यः कल्पितद्विपतनुं दनुजं चकार
श्लिष्यन्मदक्षपणलोलशिलीमुखौघम् ॥ २९ ॥

गजमुखस्य गणपतेर्मुखशोभायां गौर्या गमनविलासे च लुण्ठाकं गजासुरं निश्चित्येव जातात्क्रोधाद्यः कल्पिता स्वेच्छया गृहीता हस्तिमूर्तिर्येन तं दनुजं गजासुरं श्लिष्यन्यो मदो दानवारि तस्य क्षपणं खण्डनं तेन हेतुना लोलाश्चटुला अन्यत्र गता भ्रमरा यस्मात्तं चकार। 'कॄ विक्षेपे' इत्यस्य वा प्रयोगः । चकार विक्षिप्तवान् । तदा श्लिष्यन्मदक्षपणे दानास्वादने लम्पटभ्रमरसमूहं तमिति व्याख्येयम् । अथवा श्लिष्यतः सक्तस्य मदस्य दर्पस्य खण्डने लोलः शिलीमुखौघः शरसमूहो यस्येति व्याख्येयम् । चौरं च मदवारणार्थं निखातशरं कुर्वन्ति ॥

न क्षामतां त्यजति पुष्यति पाण्डिमानं
हृद्रूढया परिणमद्विरहोऽङ्कलक्ष्म्या ।
यस्यामृतांशुरसमद्युसरित्तरङ्ग-
शीतोपचारवति जूटतटे शयालुः ॥ ३० ॥

असमा महान्तो ये द्युसरित्तरङ्गा गङ्गालहर्यस्तैः शीतोपचारवति शीतले जूटे वर्तमानश्चन्द्रः क्षामतां कलात्वं न त्यजति । श्वेतत्वं धत्ते । हृदयस्थया कलङ्कलक्ष्म्या च प्राप्तविरहः । हृदयस्थितया च स्त्रिया विरहितः कृशः पाण्डुश्च भवति। शीतले नदीतटे शेते ॥

भालस्थलादहरदग्निशिखानुषङ्गं
चक्रे वलद्भुजगकङ्कणविप्रलोपम् ।

निःसर्वमङ्गलमथारचयच्छरीरं
हर्तुं स्वसाम्यमिव योऽसुरसुन्दरीणाम् ॥ ३१ ॥

असुरस्त्रीणामात्मसाम्यं निवारयितुमिव तासां ललाटादग्निशिखस्य कुङ्कुमस्यानुषङ्गमहरत् । वलन्तो भुजगा बाहुगता ये कङ्कणास्तेषां विप्रलोपं निवारणं चक्रे । तासां शरीरं सर्वमङ्गलेभ्यो निष्क्रान्तं कल्याणरहितं व्यधात् । ईश्वरस्य पुरस्त्रियां चाग्निशिखादिसंबन्धाद्यत्साम्यमभूत्तद्वारणायैवाग्निशिखादिकमपाहरदित्यर्थः । ईश्वरो हि ललाटेऽग्निं वहति । भुजगाः सर्पास्त एव कङ्कणास्तान्वहति । सर्वमङ्गला गौरी तत्सहितं शरीरं वहति ॥

यस्यात्तदाशवपुषः सरुषः सिताश्वे
भालस्थलं श्रमपयःप्रकरं ववर्ष ।
हव्याशनो विषमनेत्रपुटोपविष्टो
यत्पातसंभ्रमभियेव तिरोबभूव ॥ ३२ ॥

आत्तमभिनीतं दाशवपुः किरातरूपं येन । सिताश्वेऽर्जुने सकोपस्य यस्य ललाटस्थलं कर्तृ घर्मजलप्रवाहं ववर्ष । यस्य घर्माम्बुनः पातस्तेन संभ्रमाद्भीत्येव विषमे तृतीये नेत्रपुट उपविष्टोऽग्निरन्तर्दधे । ईश्वरेण स्वरूपस्य प्रकाशनाभावार्थं तृतीयं नेत्रं गोपितम् । तत्र घर्मजलपातभीतिर्निमित्तत्वेनोत्प्रेक्ष्यते ॥

शश्वत्सहेलचरणार्पणमात्रकेण
कुर्वञ्जगज्जनितनिर्भरजातरूपम् ।
क्लेशेन सप्तदिवसानि सुवर्णवर्षं
यं क्लृप्तवन्तमपि वाहवृषोऽतिशेते ॥ ३३ ॥

सहेलं चरणयोरर्पणं पादन्यासस्तावन्मात्रेण नित्यं जनितान्युत्पादितानि निर्भराणि बहूनि जातरूपाणि सुवर्णविशेषा यस्य तदीदृशं जगत्कुर्वन् । वाहवृषो यं कष्टेन सप्ताहानि सुवर्णं वर्षन्तं जयति । ईश्वरो हि सप्ताहानि सुवर्णं ववर्ष, वृषस्तु नित्यं वर्षति, अतो वाहवृषो जयति । स्वभक्तान्स्वस्मादधिकान्करोतीत्याशयः ॥

आलोकमार्गमुपरोद्धुमभग्नसारं
स्वर्लोकपक्ष्मलदृशां नयनोत्पलेषु ।
तत्कालसंभ्रमहठक्षुभितेन धूम-
मुद्गीर्यमाणमिव वाडवपावकेन ॥ ३४ ॥

मन्थाद्रिघट्टनभियेव पलायमानं
पातालतः सुचिरसंभृतमन्धकारम् ।

लुण्ठाकमुज्जिगमिषत्कमलानिवास-
व्याकोशपङ्कजपुरःसरभृङ्गरीतेः ॥ ३५ ॥
योऽम्भोनिधेरुदितमाहितधाम्नि हार-
कालोरगेन्द्रनिबिडायसशृङ्खलाभिः ।
लोकत्रयग्लपनदुर्ललितं स्वकण्ठ-
कारागृहे गरलमुत्तरलं बबन्ध ॥ ३६ ॥ (तिलकम्)

स्वर्लोके स्वर्गे पक्ष्मलदृशां स्त्रीणां नेत्रोत्पलेषु दृश्यं विषयं रोद्धुमकुण्ठशक्ति । स्वतो विस्तीर्णान्यप्यनिमिषस्त्रीणां नेत्रोत्पलानि विषभयात्संकुचितान्यासन्नित्यर्थः । अत एव तत्काले मथनविषये संभ्रमवशादुद्धठेन क्षुभितेन सता वम्यमानं धूममिव । धूमो हि दृष्टि-पथं रुणद्धि । अत एव च मन्थाद्रिणा मन्दरेण घट्टनं घातस्तद्भयेन पातालतः पलायमानं चिरं राशीभूतमन्धकारमिव । तथोज्जिगमिषन्ती समुद्रादुद्गमिष्यन्तीति संभाव्यमाना या कमला श्रीस्तस्या निवासो गृहभूतं विकचं यत्पङ्कजं तस्य पुरःसराः प्रथमोत्थिता ये भ्रमरास्तेषां रीतेः शोभाया लुण्ठाकम् । तथा जगत्त्रयस्य ग्लपनं हर्षक्षपणं तत्र दुर्ललितं व्यसनिनमत्युद्भटं कृत्वा समुद्रादुत्थितं गरलं विषं गले हारभूता ये फणीन्द्रास्त एवा-च्छिदुराः शस्त्रशृङ्खलास्ताभिराहितं धाम स्थानं स्वकण्ठ एव कारागृहं बन्धनधाम तत्र बबन्ध । यश्च लुण्ठाकश्चौरः सर्वग्लपकश्च चपलमुदेति स शृङ्खलाभिः कारागृहे बध्यते ॥

तद्यस्य कैटभजिता घटितैक्यवृत्ते-
र्वक्षः कटाक्षयति कंचन तुङ्गिमानम् ।
यस्मिन्परस्परसभाजनसौख्यमाप-
देकोदरेण मणिना सह कालकूटः ॥ ३७ ॥

एकं साधारणमुदरमुत्पत्तिस्थानं यस्य तेन मणिना कौस्तुभेन सह परस्परं सभाजनं प्रीतिदर्शनं तेन सौख्यं सुखं यत्र कालकूटः प्रापत् । नान्यत्र संक्षिप्तत्वात् । काप्येकत्र तौ नावसताम् । हरिहररूपस्य यस्य वक्षसि विस्तीर्णत्वात्समं वसत इत्यर्थः । कैटभजिता हरिणा घटितैक्यवृत्तिरद्वैतं येन यस्य वा । हरिहररूपस्येत्यर्थः । यस्य तद्वक्षः किमप्यौ-न्नत्यं दर्शयति । तुङ्ग उदारे च वसतोर्भ्रात्रोः सौहार्दं भवति । महद्भिः सह संयोगे महतां तुङ्गत्ववर्णनमुचितम् ॥

गौर्या नतश्चरणयोर्दधदुत्तमाङ्गं
संक्रान्ततद्रथमृगेन्द्रमुखच्छुसिन्धु ।
यः प्रौढिमेति गुरुगर्वशमाय विष्णो
रूपं रसादनुसरन्निव नारसिंहम् ॥ ३८ ॥

यो गौर्याश्चरणयोर्नतः । अत एव संक्रान्तं प्रतिमितं तद्रथमृगेन्द्रमुखं वाहसिंहमुखं यस्यां सा द्युसिन्धुर्गङ्गा यस्य तच्छिरो दधत् । प्रणामसमये हरशिरस्तिरोभूतं सिंहमुखं प्रतिबिम्बितम्, अतो नरसिंहरूपं वहन्निव हरेर्दर्पभङ्गाय सामर्थ्यमेति ॥

यस्यासकृत्प्रणमतो धृतमन्तुतन्तु-
　नम्रानना गिरिसुताश्रुभिरञ्जनाङ्कैः ।
मौलौ नवं लिखति शीतरुचेः कलङ्कं
　पुष्णात्यकाण्डयमुनाप्रणयां च गङ्गाम् ॥ ३९ ॥

रोषनिवृत्तये पुनः पुनः प्रणमतो यस्य संबन्धिनो मौलिचन्द्रस्यापूर्वं कलङ्कं गौरी साञ्जनैरश्रुभिर्लिखति । तथाकाण्डे प्रयागादन्यत्र यमुनायाः प्रणयः परिचयो यस्यास्तां गङ्गामञ्जनाश्रुभिः करोति । सापराधे भर्तरि प्रणमति स्त्रीणां रोषशमेनाश्रुपातः स्वभावतः । अतो गौर्याः पादयोरुपरि नमतो हरस्य मुकुटचन्द्रे पतिता गौरीबाष्पकणाः कलङ्कत्वेन संभाव्यन्ते, गङ्गायां च यमुनात्वेनेत्यर्थः ॥

प्राङ्निग्रहं विरचयन्वपुषः स्वरूपं
　पश्चादनुग्रहदृशा च दिशन्नशेषम् ।
यः सर्गसंहृतिविपञ्चनमक्रमेण
　चक्रे महानयविदां प्रथमः स्मरस्य ॥ ४० ॥

पूर्वं कामस्य शरीरनाशं कुर्वंस्तदनु प्रसाददृष्ट्या विश्ववशीकरणलक्षणं रूपं कामस्य प्रतिपादयन्योऽक्रमेण संहारानन्तरसृष्टिलक्षणेन सर्गसंहृत्योः सृष्टिसंहारयोर्विस्तारणं चक्रे । यतो महानयविदां दर्शनज्ञानामाद्यः । तस्मिन्दर्शने हि संहारानन्तरं सृष्टिः ॥

सख्युः स्मरस्य नवकेतुकृते किरीट-
　स्वःसिन्धुवाहमकरं सहसेव हर्तुम् ।
यस्योत्तमाङ्गभुवि पुञ्जितमूर्तिरिन्दु-
　रास्ते नगेन्द्रतनयाननवर्णचौरः ॥ ४१ ॥

स्वमित्रस्य कामस्य ध्वजकृते मौलिगङ्गाया वाहनभूतं मकरं हर्तुमिव चन्द्रो गौरीमुखकान्तिचौरः पुञ्जितमूर्तिः संकुचितवपुरास्ते । कलामात्रत्वात्संकुचितमूर्तित्वं मकरहरणार्थं संभाव्यते । चौरश्च हरणोद्यतः स्वगोपनार्थं संकुचितमूर्तिर्भवति ॥

यस्मिन्विनिर्मितवति प्रसभं प्रकोपा-
　दत्युग्रनिग्रहनवानुभवोपदेशम् ।
उद्घोष्यते क्रतुषु याज्ञिकतन्त्रविद्भि-
　रद्यापि पिष्टचरुभाजनमञ्जबन्धुः ॥ ४२ ॥

रोषवशाद्यस्मिन्नादित्यस्यातिदुःसहो यो निग्रहो दन्तभङ्गलक्षणस्तस्य नवो योऽनुभव स्तदुपदेशं कुर्वति सति पिष्टचरोः पुरोडाशस्य भाजनं भवन्नद्यापि याज्ञिकैरर्कः पुरोडाश पात्रं वर्ण्यते । यदुन्मूलितदन्तविषया हेतूत्प्रेक्षेयम् ।।

यस्यांशवः सकलकैरववैरकारा
वक्त्रेषु यो मृगदृशामुपमानबन्धुः ।
लीढे मखेष्वसममन्त्रसखं हविर्यो
यः प्रोच्छ्वसत्कुसुमसौरभसार्थवाहः ॥ ४३ ॥

शेषस्य यत्फणभृतो वहदातपत्रं
यद्याचते जलधरं विधुरो मयूरः ।
दीक्षाप्रवेशकृशमर्हति यः शरीरं
यः सर्वतारकनिरर्गलराजमार्गः ॥ ४४ ॥

यस्तन्मयीभिरपि मूर्तिविवर्तनाभि-
स्तिष्ठन्प्रपद्य भुवनत्रयसामरस्यम् ।
पुष्णन्पदं जनिजरामरणानभिज्ञं
शास्त्रेष्वगादि मतिमद्भिरनष्टमूर्तिः ॥ ४५ ॥ (तिलकम्)

यस्य रश्मयः सकलोत्पलानां वैरकराः सोऽर्कः, तथा यः स्त्रीमुखेषूपमानेन बन्धुः परिचितः स चन्द्रः, तथा यज्ञेषु यो मन्त्रपूतामाहुतिं भुङ्क्ते सोऽग्निः, तथा यो विकसतां पुष्पाणां सौगन्ध्यस्य सार्थवाहः सोऽर्थाद्वायुः, तथा यच्छेषाहेराच्छादकत्वाच्छत्रमर्थाद्भूमिः, विधुरः पिपासितो मयूरो बर्हिणो मेघं यद्याचते तज्जलम्, यः शरीरं दीक्षाप्रवेशेन नियमेन तनु बिभर्ति स यजमानशब्दव्यपदेश्यात्मा, यः सर्वेषां तारकाणां निरर्गलोऽनिकृष्टः पन्था अर्थादाकाशः, तन्मयीभिरादित्यादिमयीभिरष्टभिर्मूर्तिविवर्तनाभिः शरीरपरिणामैर्भुवनत्रयसामरस्यं व्यापकावस्थानं प्राप्य तिष्ठञ्जनिजरामरणानां जन्मजरामृत्यूनामनभिज्ञं पदं पुष्णञ्शास्त्रेषु वेदादिषु मतिमद्भिर्ब्रह्मादिभिर्यो भगवानष्टमूर्तिरविनाशिरूपोऽगादि गदितः । अपिर्विरोधद्योतकः । यो मूर्तीनामष्टकेन जगन्ति व्याप्नोति स कथमनष्टमूर्तिः । नाष्टौ मूर्तयो यस्येति तत्पक्षे वाक्यम् ॥

ऊर्ध्वं व्रजत्कमलजाकलितस्फुलिङ्गं
लिङ्गं तदग्निमयमाविरवीभवद्यः ।
गच्छन्नधोऽवधिदिदृक्षुतया मुकुन्दो
यत्राग्रहीन्मुहुरवाङ्मुखधूमरेखाम् ॥ ४६ ॥

अग्निलिङ्गस्योर्ध्वावधिदर्शनेच्छयोर्ध्वं गच्छन्कमलजो ब्रह्मा स एवाकलितः स्फुलिङ्गो वह्निकणो यत्र । तथाधोऽवधिदर्शनेच्छयाधो गच्छन्नारायणोऽवाङ्मुखस्य बुध्नगामिनो धूमस्य भङ्गिमग्रहीत् । तदग्निमयं लिङ्गं यः प्रकटयामास । हरिब्रह्मणोर्धूमाग्निकणत्वारोपद्वारेण लिङ्गावधिभावः सूचितः । धूमस्फुलिङ्गयोरदूरगामित्वात् ॥

यो वाहिनीं सुमनसां घटितार्धचन्द्रां
कुर्वन्पुराणकवितुर्मुखभङ्गहेतुः ।
भोगैर्वपुः परिचरन्निजमेव चित्रं
पुष्णाति सेव्यगुणसंपदमद्वितीयाम् ॥ ४७ ॥

सुमनसां देवानां वाहिनीं नदीं गङ्गां घटितः संक्रान्तोऽर्धचन्द्रो यस्यास्तां कुर्वन् । पुराणकवितुर्ब्रह्मणो मुखभङ्गस्य शिरश्छेदस्य हेतुः । भोगैः सर्पशरीरैरेव निजं वपुः परिचरन् । यः सेव्यस्य सेवनीयस्य राजादेर्गुणास्तेषां संपदमद्वितीयामसदृशीं धत्ते । चित्रशब्दो विरोधद्योतकः । यः सुमनसां पण्डितानां गणं घटितोऽर्धचन्द्रः खलीकारार्थं गलहस्तिका यस्यास्तां करोति । पुराणस्य कवेर्मुखभङ्गेऽवमाने हेतुः । भोगैर्मृष्टान्नपानाद्यैर्निजमेव वपुः परिचरति स सेव्यगुणान्बिभर्तीति विरोधः ॥

द्राक्संधिष्विव पञ्चिषु व्यवहृतिं संचारयन्पञ्चसु
व्यञ्जन्नारभटीं शनैरुपनमत्सर्वाङ्गहाराकुलैः ।
निर्वाह्य स्ववधाख्यनाटकविधिं मीनावचूलो विश-
न्यन्नेत्राग्निशिखावलीजवनिकां तात्पर्यतोऽन्तर्दधे ॥ ४८ ॥

मुखादिषु पञ्चसु संधिष्विव तापनाद्येषु पञ्चसु शरेषु व्यवहारं लक्ष्यपातं दर्शयन् । आरभटीं संरम्भम्, रौद्रवृत्तिविशेषं च प्रकटयन् । उपनमतां सर्वाङ्गाणां दाहात्मकेन हारेणाकुलः, अङ्गहारैः करणविशेषैश्चाकुलः । स्ववधनामनाटकं संपाद्य यन्नेत्राग्नेर्ज्वालापङ्क्तिरेव तिरोधायकत्वाज्जवनिका तिरस्करिणी तां विशन्मीनावचूलः कामः, विशेषणसाम्यात्वच्छिन्नः शैलूषश्चान्तर्दधे ॥

तरलविवलनाभिः पङ्क्तयस्ताः शिखानां
यदलिकनयनान्तर्वर्तिनः पावकस्य ।
रविजमनसिजादिप्लोषशौटीर्यबन्धो-
ररुणजयपताकाटङ्कमुन्मीलयन्ति ॥ ४९ ॥

यद्भालनेत्रान्तःस्थितस्य यमकाममुखानां प्लोषे दाहे शौटीर्यबन्धोर्धृष्टस्याग्नेस्तरलं कृत्वा विवलनाभिः स्पन्दैर्हेतुभिर्ज्वालामाला रक्तानां जयध्वजानां भङ्गिं बिभ्रति । ब-

लिवो हि जयपताका उचिताः । अग्निश्च यमकामदाहाद्बली, अतो ज्वाला रक्तध्वजत्वेन संभाव्यन्ते ॥

स प्रीतिं च कुतूहलं च जगतां पुष्णातु यस्य स्वयं
वामार्धक्रमणोत्सवो गिरिजया यत्र क्षणं जायते ।
संभिन्नोभयवाहनाग्रिमखुरन्यासक्रियानिःसर-
न्मुक्तादन्तुरजातरूपविपुलालंकारवत्युर्वरा ॥ ९० ॥

यत्रोत्सवे गौरीश्वरावस्थायां स्वामिसंभेदात्संभिन्ने एकीभूते ये उभे वाहने सिंहवृषभौ तयोर्यावग्रिमखुरौ तयोर्या न्यासक्रिया संचरणं तेन निःसरन्ति निर्गलन्ति यानि मुक्तादन्तुराणि समौक्तिकानि जातरूपाणि । सिंहस्य करिकवाटपाटनान्मौक्तिकानि, हरवृषस्य वस्तुधर्मत्वात्काञ्चनानि; तान्येव विपुला अलंकारा विद्यन्ते यस्याः सा भूमिर्जायते । स गौर्या स्वयमप्रेरणया हरवामार्धाक्रमणमेवोत्सवो विश्वस्य प्रीतिम्, विचित्रत्वात्कौतुकं च वितनोतु । उत्सवे चालंकारधारणमुचितम् ॥

नाट्यारम्भे क्षुभितमभितो यो दधानः शरीरं
सर्वाङ्गेभ्यः प्रसभमुदयद्भास्मनं रेणुजालम् ।
पश्चाल्लोकत्रितयविपदां द्रागिवोत्सारितानां
दिक्षु न्यस्यत्यनिभृतशिरःसिन्धुपाथःसनाथम् ॥ ९१ ॥

नृत्तारम्भे क्षुभितं लोलं शरीरं दधानः, अत एव समस्तावयवेभ्यस्तरसोत्तिष्ठत् । तथानिभृता या शिरःसिन्धुर्गङ्गा तस्याः पाथो जलं तेन सनाथं युक्तं भस्मरेणुजालं यो विपदामिव पश्चात्क्षिपति । यतो दिक्षु दिगन्तेषु निष्कालितानाम् । दुष्टस्य देशान्निष्कालितस्य पुनः प्रवेशाभावार्थं पश्चाद्भस्मजलं क्षिप्यत इत्याचारः ॥

दन्तोदन्ततिलाञ्जलौ दिनपतेरम्भोजयोनेः शिरो-
दारिद्र्ये नयनोद्धृतौ भगवतो लीढासुरेन्द्रायुषः ।
किं चाशेषवपुर्व्यये रतिपतेर्यः कारणत्वं भज-
न्नप्यायाति न कुत्र नाम जगतः सर्वाङ्गसिद्ध्यङ्गताम् ॥ ९२॥

दिनपतेः सूर्यस्य दन्तानामुदन्तः कथा तस्य तिलाञ्जलौ, वक्रोक्त्या निःशेषतयोन्मूलने । तथा ब्रह्मशिरोदारिद्र्ये मूर्धच्छेदे । तथा लीढं निगीर्णमसुरेन्द्रायुर्येन तस्य भगवतो हरेर्नेत्रोद्धरणे । कामस्य समस्तशरीरनाशे च हेतुभावं भजन्यः सर्वाङ्गायाः संपूर्णायाः सिद्धेरङ्गतां साधनत्वं कुत्र नायाति । अपिर्विरोधद्योतकः । यो दन्तादीनामङ्गानां भङ्गहेतुः स सर्वाङ्गाणां सिद्धावङ्गतामायातीति चित्रम् ॥

स्वयं बभ्रुर्बिभ्रद्विषमनयनस्थेन शिखिना
द्रढीयः सौहार्दं सततमनुरुद्धौषधिपतिः ।
जटाजूटो यस्य त्रिभुवनमनःकौतुककृतः
स धत्ते विश्रब्धावसथपथरीतिं फणभृताम् ॥ १३ ॥

स्वयं रागं विना कपिशः । विषमनयनस्थेन शिखिनाग्निना दृढतरं परिचयं बिभ्रत् । सदानुरुद्ध ओषधिपतिश्चन्द्रो येन । स त्रिजगदाश्चर्यकारिणो यस्य जटाजूटः सर्पाणामाश्वस्तावस्थानभङ्गिं धत्ते । अथ च यः स्वयं बभ्रुर्नकुलः । शिखिना मयूरेण यः सौहार्दं बिभर्ति । ओषधीनां नागदमनीप्रभृतीनां पतिर्येन धृतः स कथं सर्पाणामाश्वासस्थानम् । नकुलमयूरौषधिपतयो हि प्रत्येकं वैरिणः, किं पुनः समुदिता इति कौतुकम् ॥

द्वैधस्यान्तं व्यधित वपुषोर्यस्तमन्द्रीन्द्रपुत्र्या
साकं स्थानं कुसुमधनुषोऽनुग्रहात्यादरस्य ।
सौन्दर्याख्यानवधिमदिरानिर्भरे यत्र नेत्रै-
र्लेभे वृन्दारकमृगदृशां स्वैरमापानकेलिः ॥ १४ ॥

स्वसंबन्धिनोः शरीरयोर्द्वैधस्य द्विरूपत्वस्यान्तमेकरूपतां यः शैलपुत्र्या सह चकार । कर्तृसाहित्यान्नौर्यप्यकरोदित्यर्थः । कुसुमधनुषः कामस्य योऽनुग्रहो दग्धस्याप्यनुग्रेयाङ्गत्वं स एवात्यादरस्तस्य स्थानम् । स्त्रीपुंसयोः शरीरैक्यं हि कामाज्ञानुष्ठानलक्षणम् । सौन्दर्याख्या सौन्दर्यव्यपदेश्या, अनवधिः पीयमानत्वेऽप्यक्षया मदिरा तया निर्भरे यत्र शरीरैक्ये देवस्त्रीणां नेत्रैरापानक्रीडा प्राप्ता । गौरीश्वराभ्यां स्वशरीरैक्ये संपादिते सति देवस्त्रियः साभिलाषमवसन्नित्यर्थः । दृष्टेर्विस्तारान्मनसः सानुरागत्वाच्च मृगदृशामित्युपन्यस्तम् ॥

बिभ्रत्या प्रभुशक्तितां रतिपतेरेकत्र भागे कृत-
प्रत्यादेशमगाधिराजसुतया यस्तद्वपुः पुष्यति ।
वामो यत्र कुचोर्ध्वविस्फुरदुरःशेषाहिरत्नान्तरे
संक्रान्तो नयतीव दक्षिणमपि प्रत्यक्षसंलक्ष्यताम् ॥ १५ ॥

रतिपतेः कामस्य प्रभुशक्तितां दधत्या गौर्यैकत्र वामे भागे कृतः प्रत्यादेशः स्वयमाक्रमणेन निराकरणं यस्य तच्छरीरं बिभर्ति । प्रभुशक्तिमांश्च स्वयमाक्रामति । शरीरे यदर्धे सामर्थ्याद्दक्षिणं तत्र विस्फुरन्नुरःस्थो यः शेषाहिस्तद्रत्नमध्ये प्रतिबिम्बितो वामः स्तनो गुप्तमपि दक्षिणं स्तनं प्रत्यक्षं दृश्यतामिव नयति । दक्षिणार्धाभरणीभूतस्य फणिपतेः फणरत्नमध्ये वामस्तनः प्रतिबिम्बितो दक्षिणस्तनतया संभाव्यत इत्यर्थः ॥

स्त्रीपुंसैकात्म्यकल्मापितगति घटयन्यो वपुस्तन्निमेष-
क्लेशावेशान्न केषां सुचिरमुदहरत्पर्षदं लोचनानाम् ।

वामाङ्गोत्तंसगारुत्मतमणिकिरणापह्नुतार्धो रजन्या
प्रेयस्या यत्र चूडाविधुरपि वहतीवार्धनारीश्वरत्वम् ॥ ९६ ॥

यत्रैकीकृते वपुषि वामार्धस्योत्तंसो मूर्धाभरणं ये गारुत्मतमणयस्तेषां किरणैरपह्नुतं छादितमर्धं यस्य तथाविधः सन्मौलिचन्द्रो राज्या वल्लभया सहार्धनारीश्वरत्वमिव प्राप्नोति । मरकतरत्नरश्मिभिरसितत्वाद्रात्रित्वेन संभावितैश्चन्द्रस्याच्छादितत्वादर्धनारीश्वरता संभाव्यत इत्यर्थः । स्त्रीपुंसयोरैकात्म्यमेकरूपतापादनं तेन कल्माषिता शबलिता गतिर्यस्य तद्वपुः संपादयन्केषां न नेत्रपङ्क्तिं निमेषत्वकर्तृकात्क्लेशादुदहरदुद्धृतवान् । सर्व एव लोकोत्तरत्वाद्गौरीश्वररूपं निर्निमेषतयापश्यन्नित्यर्थः ॥

देहद्वन्द्वैकशेषं सममभवनिभृतः कन्यया निर्मिमाणो
यस्तं शस्तं प्रयुङ्क्ते प्रतिरजनिमुखं नाट्यलीलारहस्यम् ।
श्राम्यन्तो दक्षिणार्धाभरणफणभृतो यत्र फुल्लत्फणाग्रं
क्लाम्यद्वामार्धनिर्यत्सुरभिमुखमरुत्पानगोष्ठीं जुषन्ते ॥ ९७ ॥

नाट्यवशात्खिद्यमाना दक्षिणार्धाभरणं ये फणभृतः सर्पाः, अबलत्वात्क्लाम्यत्प्राप्तखेदं यद्वामार्धं ततो निर्यन्तो मुखमरुतस्तेषां पानार्थं गोष्ठीमासनबन्धनं फुल्लत्फणाग्रं व्यादीर्णफणं कृत्वा सेवन्ते तं देहद्वन्द्वस्यैकशेषं द्वितीयार्धेन निर्वृतिं गौर्या सह कुर्वाणो यः प्रदोषे नाट्योत्सवं कुरुते तमित्येकशेषविशेषणस्य यत्रेति प्रतिनिर्देशः । एकशेषनिर्देशेन गौरीश्वरयोः सरूपत्वं सूचितमिति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
भगवद्वर्णनं नाम पञ्चमः सर्गः ।

---

## षष्ठः सर्गः ।

अलिव्रजस्यानशनव्रतान्तो मानोग्रशापावधिरङ्गनानाम् ।
अथैकदानङ्गमदानुकूलः पुष्पावचूलः समयो जजृम्भे ॥ १ ॥

अथ भगवतः कैलासाश्रयणादनन्तरम् । अथग्रहणं तत्रैवेति प्रतिपादनार्थम् । एकस्मिन्समये पुष्पावचूलः समयो वसन्तो जजृम्भ उल्लास । शिशिरे पुष्पाभावाद्भ्रमरकुलस्यानशनं भोजनाभाव एव व्रतं तस्यान्तः समाप्तिः । वसन्ते मकरन्दोद्भवात् । स्त्रीणां मान एवोग्रः शापस्तस्यावधिः समाप्तिसंकेतः । वसन्ते मानं वोढुमशक्तेः । अतोऽनङ्गस्य मदस्तस्यानुकूलः ॥

क्रमादवाचीं मलयाद्रिबन्धुमुदीक्षमाणां पवनं युवानम् ।
उपोढतापं प्रथयञ्शरीरं प्रियोऽम्बुजिन्याः शिथिलीचकार ॥ २ ॥

मलयाद्रेर्बन्धुं नववायुं प्रतीक्षमाणामवाचीं दक्षिणां दिशं नलिन्या नायकः सूर्यः क्रमादशिथिलयत्। वसन्ते सूर्यस्योत्तरदिग्गमनात्। मेघापायाद्देहस्य तापं वहन्। शिथिलीकरणोक्त्या वसन्तस्य प्रौढत्वं सूचितम्। अथ च विशेषणसाम्यावच्छिन्नत्वाक्षिप्तां नायिकां महतः कस्यचिद्बन्धुं तरुणमभिप्रायेणेक्षमाणामम्बुजिन्याः सखीत्वव्यवहृताया वल्लभः स्वदेहमीर्ष्यया तापेन युक्तं वहञ्शिथिलां करोति। अनुभूतस्नेहां चित्तादवरोहयतीत्यर्थः॥

कश्मीरकान्ताननकिंकराणि पङ्केरुहाणि क्व न पल्वलेषु।
अथाविरासन्सहसोपगन्तुं वसन्तलक्ष्म्या इव विष्टरत्वम्॥ ३॥

कश्मीरस्त्रीमुखानां किंकराणि पद्मानि तडागेषु क्व नाविरासन्। अत उत्प्रेक्ष्यते— वसन्तलक्ष्म्या आसनत्वं गन्तुमिव। लक्ष्म्याः पद्मासनत्वात्। पद्मेष्वेव वसन्तलक्ष्मीरवसदित्यर्थः॥

अखण्डषाड्गुण्यपथेषु विद्वान्वसन्त एको रसपार्थिवस्य।
अन्यर्तवो मान्मथपुस्तकेषु न ग्रन्थिमुन्मोक्तुमपि क्षमन्ते॥ ४॥

रसपार्थिवस्य कामस्याखण्डं यत्षाड्गुण्यं जगद्विषयः संधिविग्रहादिव्यवहारस्तन्मार्गेषु वसन्त एको विद्वान्बभूव। पार्थिवत्वात्षाड्गुण्योक्तिः। वसन्तादन्ये ऋतवो ग्रीष्मादयः कामतन्त्रेषु ग्रन्थिमात्रमपि निवारयितुं न शक्ताः। अपिशब्देन दण्डापूपिकया कामशास्त्रावबोधो दुष्कर इति सूचितम्। सौन्दर्यातिशयेन वसन्तो यथा कामकथान्तरङ्गो न तथा ग्रीष्माद्या इति कविना प्रौढोक्त्या वर्णितम्॥

स्फुरत्पलाशोष्ठपुटो विलोलद्विरेफमालातरलीकृतभ्रूः।
फुल्लाब्जनिःस्पन्दृगास्त नूनं शृङ्गारकाव्योन्मुखधीर्वसन्तः॥ ५॥

स्फुरन्ति चपलानि पलाशान्येवौष्ठपुटं यस्य। विलोलालिपङ्क्तिरेव कम्पिता भ्रूर्येन। फुल्लान्यब्जान्येव निःस्पन्दा दृग्यस्य। अतो नूनं मन्ये वसन्तः शृङ्गारकाव्ये कामवीर्यप्रबन्धे संमुखी धीर्यस्य स आस्त। सर्वाभिर्विच्छित्तिभिर्वसन्तः कामं प्रकाशितवानित्यर्थः। अन्यश्च काव्यं कुर्वन्नेवंविधो भवति॥

चिरानुभूतोष्णमयूखसख्यप्रवृद्धतापग्लपनेच्छयेव।
दिग्दक्षिणा चन्दनसौरभार्द्रमरुत्तरङ्गप्रणयं पुपोष॥ ६॥

चिरमनुभूतं कृतानुभावं यदुष्णमयूखसख्यं दक्षिणायनकृतः सूर्यसंयोगस्तेन प्रवृद्धो यस्तापस्तस्य ग्लपनं खण्डनं तत्रेच्छयेव दक्षिणा दिक्चन्दनसौरभेणार्द्रस्तत्क्षणस्पृष्टो यो मरुत्तत्परिचयं पुपोष। वस्तुगत्या वसन्ते मलयमरुद्वहति। दक्षिणदिशस्तत्सेवनं तापनिवारणेच्छानिमित्तत्वेन संभाव्यते। उष्णमयूख इति साकूतम्। अन्योऽपि तापार्तश्चन्दनं पवनं च सेवते॥

शनैः शनैर्मानवतीकवोष्णश्वासोर्मिभिः सार्धमवर्धताहः ।
निशीथिनी कार्श्यदशां वियोगिजीवाशया सार्धमपि प्रपेदे ॥ ७ ॥

मानिनीनामतनुतापवशात्कवोष्णाः किंचिदुष्णा ये निःश्वासास्तैः सह क्रमेण दिनं ववृधे । दिनेषु वृद्धेषु विरहवशान्मानिन्यो बहून्निःश्वासानमुञ्चन्नित्यर्थः । विरहिणां जीवे जीवन आशया साकं रात्रिर्दुर्बलतामापत् । वसन्ते रात्रिष्वल्पीभूतासु विरहिणो जीवाशामत्यजन्नित्यर्थः ॥

पलाशरक्तार्द्रनखे वसन्तकण्ठीरवे मानगजोऽङ्गनाभ्यः ।
भीतो ययौ साञ्जनबाष्पपङ्क्तिच्छलाद्विमुक्तायसशृङ्खलालिः ॥ ८ ॥

वसन्त एव कण्ठीरवः सिंहः । पलाशानि किंशुकान्येव रक्तार्द्रा नखा यस्य तस्मिन्सति भीतो मान एव हस्ती स्त्रीभ्यः सकाशाद्ययौ पलायितः । साञ्जनाश्रुव्याजाद्विमुक्ता त्यक्तायसी लोहमयी शृङ्खलापङ्क्तिर्येन । सिंहे च पलाशे पलं मांसमश्नाति, अत एव रक्तार्द्रनखे सति भीरुश्छेदितशृङ्खलो गजोऽपसरति ॥

दिग्दक्षिणार्कं न शशाक हातुं तत्संगतः सोऽपि सदाल्पतापः ।
परस्परं किं तु तयोस्तदानीं न वेद्मि कः पैशुनमाचचार ॥ ९ ॥

दक्षिणा दिगर्कं त्यक्तुं शक्ता नाभूत् । षण्मासान्रवेर्दक्षिणदिक्स्थत्वात् । तथा दक्षिणदिशासंगतः संगच्छमानस्तत्संगमाद्वा स रविश्च सदाल्पतापोऽभूत् । दक्षिणायने हिममयत्वात् । तयोरर्कदक्षिणदिशोरन्योन्यं भेदकं पैशुनमसत्यदोषारोपणं कश्चकारेति न जाने । लिङ्गविशेषाद्विशेषणसाम्याच्च दिगर्कयोः कामुकमिथुनव्यवहारप्रतीतिः । तत्पक्षे दक्षिणानुकूला ॥

ये तस्थुरुद्यानपथेऽतिवेलमनेलमूकाः शिशिरेऽन्यपुष्टाः ।
ऋतुक्षितीशस्य त एव चित्रमास्थानविद्यापतयो बभूवुः ॥ १० ॥

उद्यानान्तर्ये शिशिरेऽनेलमूका वक्तुं श्रोतुं चासमर्थास्तस्थुस्त एव कोकिला वसन्तस्यास्थाने विद्यापतयः पण्डिताश्चित्रं बभूवुः । राजानुगुणोक्तिरियम् । अनेलमूकाश्चान्यपुष्टा भवन्ति ॥

उद्यद्रजोभिर्घनपत्रशोभै रुन्धद्भिराशाः परपुष्टनादैः ।
अध्वन्यलोकः सुरभेर्बिभाय कंदर्पसैन्यैरिव बालचूतैः ॥ ११ ॥

उद्यद्रजो मकरन्दः, धूलिश्च येषु । तथा घना पत्राणां [किसलयानाम्], वाहनानां च शोभा येषु । तथा परपुष्टनादैः पिकशब्दैः, परमत्यर्थं पुष्टैर्नादैश्च करणैराशा दिशः, जयाशाश्च रुन्धद्भिः । कामकटकैरिव चूतवृक्षैर्हेतुभिर्वसन्तात्पथिकलोको भीतो बभूव ॥

वियोगिभिः प्रोच्छ्वसदट्टहासवासन्तिकाशिक्षितसाहसानि ।
अकाण्डवैतण्डिककोकिलानि कैरप्यसह्यन्त न काननानि ॥ १२ ॥

प्रोच्छ्वसन्नट्टहासो विकासो यासां ता वासन्तिका माधव्यस्ताभिर्हेतुभिः शिक्षितं साहसं विरहिवधादिर्यैर्येषु वा । तथाकाण्डे रात्रावपि वैतण्डिका बहुजल्पाकाः कोकिला येषु तानि वनानि कैरपि विरहिभिर्न सेहिरे ॥

विष्ण्वता सौरभरोरदोषं बन्दिव्रतं वर्णगुणैः स्तुशन्त्याः ।
विकस्वरे कस्य न कर्णिकारे घ्राणेन दृष्टेर्ववृधे विवादः ॥ १३ ॥

कर्णिकारे सौरभरोरं सौगन्ध्याभाव एव दोषस्तं प्रकाशयता घ्राणेन सह दृष्टेर्विवादो ववृधे । यतः कर्णिकारवर्णगुणैर्हेतुभिः स्तुतिं कुर्वन्त्याः । दृष्टिनासिकयोः स्वविषये गुण-दोषदर्शनात्तन्निराकरणसमर्थहेतूपन्याससामर्थ्याभावेन निर्णयरहिते विवादे समाप्तिर्नासी-दित्यर्थः । कर्णिकारस्य वर्णसौभाग्यं सौगन्ध्याभावश्च कविना युक्त्या प्रतिपादित इति कर्णिकारमङ्ख इति प्रसिद्धिः ॥

शशाक नो यः किमपि ग्रहीतुमध्याप्यमानोऽपि वराङ्गनाभिः ।
उद्यानलीलान्यभृतस्तदानीं स सिद्धसारस्वततां प्रपेदे ॥ १४ ॥

वरा उत्तमा उपाध्यायकर्मणि निपुणा या अङ्गनास्ताभिः पाठ्यमानोऽपि यः कोकिलः किंचिदप्यध्येतुं नाशकत्, स तदानीं वसन्तकाले सिद्धं स्वयं निष्पन्नं न तु साध्यं सरस्वती-संबन्धि वाग्भवकौशलं यस्य तद्भावं प्रपेदे। 'पुराङ्गनाभिः' इति वा पाठः । नगरस्त्रीभिः। न तु ग्राम्याभिरित्यर्थः । पुरेति भिन्नं पदं वा । समन्तादन्यदा पठने प्रेरितोऽपि जाड्य-मेव योऽभजत्, स कोकिलो वसन्ते स्वयमुपाध्यायनिरपेक्षतया वाक्कौशलशाली बभूवेत्यर्थः॥

व्यक्तानलोल्काकृतिमध्यमध्यसमुच्छलद्गुच्छगवाक्षिताङ्गी ।
कङ्केल्लिवल्लिस्तुहिनात्ययेऽपि बभावनङ्गस्य हसन्तिकेव ॥ १५ ॥

व्यक्ताः फुल्ला अनलोल्काकृतयोऽग्निज्वालारूपत्वेन व्यवस्थिता मध्यमध्य उत्पन्ना ये गुच्छाः स्तबकास्तैर्गवाक्षितानि जालयुक्तान्यङ्गानि यस्याः सा कङ्केल्लिवल्लिरशोकलता बभौ । अनङ्गस्य हिमाभावेऽपि [अङ्गार]शकटिकेव । हसन्तिका च जालयुक्ता शस्त्रमयी मन्नाग्निः ॥

स्वपक्षलीलालडितैरुपोढहेतौ स्मरे दर्शयतो विशेषम् ।
मानं निराकर्तुमशेषयूनां पिकस्य पाण्डित्यमखण्डमासीत् ॥ १६ ॥

स्व आत्मीयः कोकिलस्य पक्षस्तल्लडितैरुपोढा हेतिरायुधं येन पिकपक्षविक्षेपैरेव का-मस्य धनुष्कार्यसिद्धेः । कामे बलोपोद्बलनाद्विशेषमाधिक्यं दर्शयतः कोकिलस्य पा-

१. रोरशब्दो दारिद्र्यवाचकः. 'पात्रेषु रोरशिखिभागिषु' इति राजतरङ्गिणी (५।१५).
२. एतच्छ्लोकनिर्माणादेव मङ्खस्य 'कर्णिकारमङ्खः' इति नाम जातम्. एवमेव तत्त-दपूर्वकल्पनायुक्तश्लोकनिर्माणात् दीपशिखाकालिदासः, छत्रभारविः, घण्टामाघः, ताल-रत्नाकरः, यमुनात्रिविक्रमः, इत्यादिविशिष्टनामानि कवीनां जातानीति ज्ञेयम्.

ण्डित्यं शत्वं तरुणानां मानं वनितोपेक्षां निवारयितुमखण्डमभूत् । अथ च सिसाधयिषितधर्मविशिष्टो धर्मी पक्षः । हेतुः साधनोपन्यासः । हेतुबलेन स्वपक्षे परपक्षादुत्कर्षं दर्शयतः कस्यचित्पण्डितानां मानं प्रत्यक्षादि निराकर्तुं शत्वमस्ति ।

सिन्दूरितानङ्गमतङ्गजास्यं यद्व्यानशेऽशोकरजो जगन्ति ।
तन्मानिनीमानतमोऽङ्क(न्त)कारं बालातपाहंकृतिमारुरोह ॥ १७ ॥

सिन्दूरितं सिन्दूरवत्कृतं कामकरिमुखं येन तदशोकानां रजो जगन्ति व्यानशे व्याप्या जगृहे यत्ततो हेतोर्मानिनीनां मानतमसोऽङ्क(न्त)कारं विनाशकं बालातपस्य धर्मामाप । यथा बालातपोऽन्धकारं निराकरोति तथाशोकरजो मानं निराचकारेत्यर्थः ॥

नीरन्ध्रनिर्यत्सुमनोनिकायकाषायपट्टप्रणयादशोकः ।
जग्राह भिक्षुव्रतमध्वगानां मनःसु शून्यत्वमिवोपदेष्टुम् ॥ १८ ॥

नीरन्ध्रं निर्विवरं कृत्वा निर्यन्नुद्भिद्यमानो यः सुमनोनिकायः पुष्पसमूहः स एव काषायपट्टस्तस्य प्रणयात्परिचयादशोको भिक्षुव्रतं शाक्यदर्शननिर्दिष्टमाचारमिव जग्राह । किं कर्तुम् । पान्थानां चेतःसु शून्यत्वं किंकर्तव्यतामूढत्वमुपदेष्टुम् । भिक्षवो हि काषायधारिणः शून्यत्वमनुपपद्यमानरूपत्वमुपदिशन्ति ॥

वियोगिनीरोषकषायितेव नेत्रद्युतिर्विस्फुरिता स्मरस्य ।
प्राप्ता पलाशेषु बभौ शुकाग्रचञ्चुस्तुतिस्तेयनिरङ्कुशेषु ॥ १९ ॥

मानवशात्प्राप्तविरहासु यो रोषस्तेन कषायिता रक्ता कामस्य दृष्टिदीप्तिः पलाशेष्विव प्राप्ता शुशुभे । यतः शुकानामग्रचञ्चोश्चञ्च्वग्रस्य रक्तत्वेन या स्तुतिस्तस्याः स्तेयं हरणं तत्र निरङ्कुशेषु निरवग्रहेषु । पलाशानां नैसर्गिकं रक्तत्वं नास्ति, किं तु मानिनीक्रोधारुणा कामस्य दृष्टिः पलाशेषु पतिता । लोहितत्वात्स्मरोद्दीपकत्वाच्च संभावना । स्तेनेषु च क्रुद्धा राजदृष्टिः पतति ॥

कामप्रशस्त्यक्षरसंप्रदायो वियोगिहालाहलबीजमुष्टिः ।
द्विरेफराजी रुरुचे लतानां ग्रैवेयगारुत्मतरत्नमाला ॥ २० ॥

कामस्य यशःप्रशस्तिस्तत्राक्षराणि तेषां संप्रदायः परम्परागतः क्रमः । कृष्णत्वान्मालारूपत्वाच्च । तथातएव विरहिणां विषबीजमुष्टिः । अथवा हालाहलशब्देन दुःखं लक्ष्यते । तथा लतानां ग्रैवेयं ग्रीवाभरणं चासौ गारुत्मतरत्नानां माला । लता अत्र नायिकास्थानीयाः ॥

सत्यं वसन्तक्रकचक्षतानां शल्कं निशानामलयो बभूवुः ।
न चेत्कथं पान्थनितम्बिनीनां व्यधुर्दृशोरान्ध्यनवोपदेशम् ॥ २१ ॥

वसन्तेन कर्त्रा क्रकचेनेव करणेन क्षतानां तनूकृतानां रात्रीणां शल्कं चूर्णं भ्रमरा

नूनमभवन् । भ्रमराश्च शल्कं यदि नाभवंस्तत्कथं पान्थस्त्रीणां दृष्टेरन्धभावोपदेशमकार्षुः । चूर्णमेव हि दृष्टेरान्ध्यं करोति । आन्ध्यं हि विरहजनितं चूर्णकृतं च दृष्टिविघातार्थम् ॥

कंदर्पकर्णेजपभूमिकासु मधुव्रता धैर्यमधीतवन्तः ।
विलुप्तकोपाः[1] सुमनःशतानामचीकरन्निग्रहमध्वगानाम् ॥ २२ ॥

कंदर्पस्य कामस्य कर्णेजपभूमिकासु पिशुनरूपग्रहणावस्थासु धैर्यं धृष्टभावं शिक्षितवन्तो भ्रमरास्तथा सुमनःशतानां पुष्पसमूहानां विलुप्तो भुक्तः कोपो मकरन्दो यैस्ते पन्थानां दुःखानुभवरूपं निग्रहं वसन्तेन कारयामासुः । अथ च केचिद्राज्ञोऽग्रे पैशुनमाचरन्तो देवानां हृतगञ्जा अध्वगानां सन्मार्गगामिनां निग्रहं कारयन्ति ॥

द्विजाधिराजेन गवां प्रसादात्प्रतिक्षपं कारितभूमिसेकः ।
पान्थप्रियाणामृतचक्रवर्ती नेत्रेष्ववग्राहमपाचकार ॥ २३ ॥

गवां रश्मीनां प्रसादान्नैर्मल्याद्विजाधिराजेन चन्द्रेण कर्त्रा कारितो भूमिसेको येन हेतुकर्त्रा स ऋतुचक्रवर्ती वसन्ते विरहिणीनां नेत्रेषु वर्षप्रतिबन्धनं निवारयामास । ता अरोदयदित्यर्थः । अथ च द्विजाधिराजेन ब्राह्मणवरेण गवां धेनूनां प्रसादेन कारितः क्षीरेण भूमिसेको येन स चक्रवर्ती स्वदेशेषु वर्षप्रतिबन्धं निहन्ति । अण्यन्तावस्थायां करोतेः कर्तृपदभूतस्य द्विराजशब्दस्य ण्यन्तावस्थायाम् 'हृक्रोरन्यतरस्याम्' इति पाक्षिकं कर्तृत्वम् । कर्तुस्तेनानभिहितत्वात्तृतीया । 'अवग्रहो वर्षप्रतिबन्धे' इति वा घञ् ॥

गलत्तुषाराम्बुकणान्किरन्ती दैर्घ्यं नयन्ती पिककूजितानि ।
वियोगिनीनामवनी तदानीं किं रोदनाय व्यधितोपदेशम् ॥ २४ ॥

विरहचिन्तया भुवं लिखन्तीनां विरहिणीनां तापवर्षक्रन्दिताविर्भावः । अतो वसन्ते तापवशाद्गलत्तुषारं हिमं यस्या अतोऽम्बुकणान्स्रवन्ती, अतः शीतलत्वात्कोकिलशब्दान्दीर्घीकुर्वती, भूमिर्विरहिणीनां रोदनोपदेशं किमकार्षीदिति संदेहः ॥

सपक्षपाता निरुपाधिबन्धोश्चिराय वेगादुपरि भ्रमन्ती ।
अकल्पयच्चूततरोः स्वदेहमारात्रिकायेव मधुव्रताली ॥ २५ ॥

निरुपाधि भ्रमरकृतमुपकारं विना बन्धोरुपकारकस्य चूतवृक्षस्योपरि सौरभलोभाद्भ्रमन्ती, सह पक्षाभ्यां करणाभ्यां पातेन गमनेन वर्तते या सा भ्रमरमाला चूतवृक्षस्यारात्रिकाय पूर्णपात्राय भूतादिदोपशमनहेतोः स्वदेहमकल्पयदिव । अकारणबान्धवस्य च स्वदेहमारात्रिकाय सपक्षपातो जनः कल्पयति ॥

न मानभङ्गाय बभूव केषां लोलालिमालाभ्रुकुटिच्छटाभिः ।
विश्वैकजिष्णोर्मदनस्य नव्यसाचिव्ययोगान्मधुरुन्मदिष्णुः ॥ २६ ॥

---

1. लुण्ठितकोपाः.

एकस्य विश्वजेतुः कामस्य नवमन्त्रित्वाद्वृतो वसन्तो लोलाश्चपला या भ्रमरपङ्क्तयस्ता एव भ्रुकुटिच्छटास्ताभिः केषां न यतीनामपि मानखण्डनाय बभूव । तदा यतयोऽपि मानमत्यजन्नित्यर्थः । नवसचिवश्च भ्रुकुटिभिः सर्वेषां मानखण्डनं करोति ॥

पुष्पावृताङ्गो निबिडालिनादः केलीवनेपून्नतचम्पकोऽभूत् ।
चैत्रश्रियो नूपुरनिःस्वनाङ्को नृत्तोद्यताया इव दण्डपादः ॥ २७ ॥

विश्वविजयरूपकार्यसिद्धिदर्शनान्नृत्तप्रवृत्तायाश्चैत्रलक्ष्म्याः समञ्जीरशिञ्जितो दण्डपाद इवोन्नतचम्पकवृक्षः क्रीडावनेष्वभूत् । यतः पुष्पैरावृतान्यङ्गानि यस्य, तथा अत एव निभृतभ्रमरशब्दः । विश्वं जित्वा नृत्यन्त्याश्चैत्रलक्ष्म्या दण्डपादत्वेन चम्पकः संभाव्यते॥

निष्पन्नपुष्पातिथिभिर्द्विरेफैरुपास्यमानस्तिलकश्चकासे ।
एणीदृशां दोहददृष्टिपातैरिवाञ्जनेनाहितसंविभागः ॥ २८ ॥

निष्पन्नानि रूपसौरभसंनिवेशवन्ति यानि पुष्पाणि तेषामतिथिभिर्मकरन्दभोगार्थमभ्यागतैर्भ्रमरैः सेव्यमानस्तिलकद्रुमः शुशुभे । अत उत्प्रेक्ष्यते—एणीदृशां स्त्रीणां दोहदरूपा विकासोपायभूता ये दृष्टिपाताः कटाक्षास्तैरञ्जनेन कृतसंविभाग इव । कटाक्षविक्षेपेण सक्ताञ्जन इव तिलक इति संभाव्यते । तिलकतरोर्वरनारीकटाक्षैर्दोहद इति प्रसिद्धिः ॥

पुष्पोद्गमैराभरणप्रयोगं प्रारेभिरे वामदृशां युवानः ।
ततो विना कार्मुककर्मसिद्धिं पुष्पायुधस्यागमदस्त्रमोक्षः ॥ २९ ॥

रमणीनामाभरणं तरुणाः पुष्पैरारब्धवन्तस्ततो भूषणकरणादनन्तरं हेतोर्वा धनुष्कार्येण विना कामस्य शरमोक्षः सिद्धिं गतः । स्त्रीपुंसयोः परस्परं प्रेमरूपं यत्कार्यं स्मरशरैः साध्यं तत्पुष्पभूषणसंपादनात्सिद्धमित्यर्थः । उक्तनिमित्ता विभावना । निमित्तं चात्र परस्परानुरागोद्दीपकं पुष्पाणामाभरणीकरणम् ॥

तनूरशोकस्य पदा घ्नतीभिः पुरंध्रिभिः पुष्पशरास्त्रशाला ।
श्लिष्यन्नवालक्तकपङ्कटङ्कात्सिन्दूरमुद्रासचिवेव चक्रे ॥ ३० ॥

लीलारसादशोकस्य तनुं मूर्तिं पदा चरणेन घ्नतीभिस्ताडयन्तीभिः पुरंध्रिभिरुत्तमनायिकाभिरशोकवृक्षतनूः सिन्दूरमुद्रायुक्तेव चक्रे । कस्मात् । श्लिष्यन्संक्रामन्नवो योऽलक्तकपङ्कस्तस्य टङ्को भङ्गिस्ततः । यतः कामस्यास्त्रशाला । अस्त्रशालायां हि सिन्दूरमुद्रान्यासो युक्तः । 'स्त्रियां मूर्तिस्तनुस्तनूः' इति कोषः । अथवा पदा घ्नतीभिः स्त्रीभिरशोकतनूः कामास्त्रशाला चक्रे इति योज्यम् । अत एवालक्तकश्लेषात्ससिन्दूरेवेति च योज्यम् । एवं योजनया कामास्त्रशालात्वं पादाघातेऽपि प्रतिपादितं स्यात् ॥

---

१. 'पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलिङ्गितः कुरबकः कुरुते विकासमालोकितस्तिलक उत्कलिको विभाति ॥'.

यद्न्यस्यति स्म स्मयवत्यशोके पदं नदन्नूपुरमुत्पलाक्षी ।
स्वैरं स चक्रे तत एव मूर्ध्नि पदं बताशेषमहीरुहाणाम् ॥ ३१ ॥

स्मयवती सस्मरदर्पा स्त्री चरणमशोकवृक्षे यन्न्यस्तवती ततः पादन्यासादेव स्वैरं स्वातन्त्र्येण समस्तवृक्षाणां शिरसि पादमशोकश्चकार । पादाघातात्फुल्लः सन्नशोकवृक्षः सर्ववृक्षेभ्योऽधिक आसीदित्यर्थः ॥

अनुन्मिषद्दृष्टि निषेदुषीणामास्थाय रम्भादलदर्भशय्याम् ।
वियोगिनीनां द्विजपुंगवेन पुंस्कोकिलेनाधिजगेऽन्तकालः ॥ ३२ ॥

अनुन्मिषन्त्यौ संकुचन्त्यौ दृष्टी यत्रैवं कृत्वा निषेदुषीणामुत्ताननिषण्णानां कदलीपत्रदर्भास्तरणमाश्रित्य निषण्णानां विरहिणीनां मरणकालः पक्षिमुख्येन कोकिलतरुणेनाधीतः । कोकिलशब्दं श्रुत्वा विरहिण्यो मुमूर्षवो जाता इति तात्पर्यम् । दर्भोपरि निवेशितस्य संकुचन्नेत्रस्य मुमूर्षोर्ब्राह्मणेन मन्त्रैरन्तकालो गीयते ॥

उद्भूष्णुना कस्य न नाम यात्रा वसन्तनाम्ना रुरुधे ठकेन ।
प्राणास्तु कण्ठेषु चिराय चक्रुर्वियोगिवर्गस्य गतागतानि ॥ ३३ ॥

उद्भूष्णुना बलवता वसन्तनाम्ना ठकेन हठमोषकेण[1] कस्य न प्रस्थानं रुद्धम् । प्रस्थानसंकल्पेऽपि विरहव्यथाभूदित्यर्थः । विरहिणां प्राणाः कण्ठेषु गमनागमनानि चक्रुः । विरहिणो मुमूर्षव आसन्निति तात्पर्यम् । सर्वेषां यात्रानिरोधः कृतः, विरहिप्राणानां च गमनानुगुण्यं कृतमिति चित्रम् ॥

सेकोऽम्बुना सौष्ठवमाततान प्रतानिनीनामथ मानिनीनाम् ।
सङ्गोऽश्रुपूरैर्बत पत्त्रवल्लीः कपोलयोराकुलयांचकार ॥ ३४ ॥

अम्बुना सेको जलकर्तृकं सेचनं प्रतानिनीनां लतानां सौष्ठवं बलं विस्तारयामास । अथ बाष्पपूरैर्योगो मानिनीकपोलोल्लिखिताः पत्त्रलता व्यनाशयत् । अम्बुसेको लतानां सौष्ठवं करोति, स एव बाष्परूपः पत्त्रवल्लीशब्दवाच्यानां तासां निःसौष्ठवं करोतीति विरोधो बतशब्देन प्रतिपादितः ॥

प्रसारिता दूरमतिग्मभासा करा निरीयाभ्रतिरस्करिण्याः ।
वियोगिनामन्तकराजधानीमपावृतद्वारपुटां प्रचक्रुः ॥ ३५ ॥

अभ्राण्येव तिरस्करिणी जवनिका ततो निरीय निर्गत्यातिग्मभासा चन्द्रेण प्रसारिताः प्रसरन्तः प्रयुक्ताः करा रश्मयः पाणयश्च यमनगरीमुद्घाटितद्वारपिधानां चक्रुः । चन्द्ररश्मिदर्शनेन विरहोद्दीपनात्पान्था आसन्नमरणा अभवन्नित्यर्थः ॥

---

१. 'ठग' इति देशभाषाप्रसिद्धेन वञ्चकविशेषेण.

मानग्रहानध्ययनोन्मुखीनामासेदुषीणां दयितोपकण्ठम् ।

वामभ्रुवां लोचनचक्रवालमभ्यस्तलीलाकुलविद्यमासीत् ॥ ३६ ॥

माने ग्रहोऽभिनिवेशस्तस्यानध्ययनं वर्जनं तत्र संमुखीनां मानं त्यजन्तीनाम् । अतो दयितानामुपकण्ठं गलतलं प्राप्तवतीनां रामाणां नेत्रसमूहोऽभ्यस्ता लीलैव कुलविद्या येन तदासीत् । रमणनिकटे लब्भाः कटाक्षविक्षेपं चक्रुरित्यर्थः । अथ च मानग्रहाणामभिमानानामित्यर्थः । अत एवानध्ययने संमुखानां तथा दयिताया रमण्या निकटं प्राप्तानां कुलविद्याभ्यस्ता भवतीत्याश्चर्यम् ॥

सुखोऽनिलः खं विशदं जलानि रम्याणि तेजस्तरुणं नवा भूः ।

अहो मधोः काचन शौर्यलक्ष्मीश्चकार भूतेष्वपि या विकारम् ॥३७॥

या शौर्यलक्ष्मीर्भूतेषु पृथिव्यादिष्वपि विक्रियां चक्रे, सा वसन्तस्य विक्रमसमृद्धिः काचन लोकोत्तरासीत् । तमेव विकारं पृथिव्यादीनां विशेषणमुखेन पूर्वार्धे दर्शयति— अनिलो मरुत्सखः सुखकार्यासीन्मेघापायेन शीतलत्वात्, खं नभो विशदं मेघाभावात्, जलानि रम्याणि प्रसन्नत्वात्, सूर्यादिकं तेजस्तरुणमभ्रविमुक्तत्वात्, नवा भू रसार्द्रत्वात् । अपिशब्देन दण्डापूपिकया भूतेभ्य इतरेषां तु सिद्ध एव । सर्व एव विकारवन्तोऽभूवन्नित्यर्थः ॥

मलीमसश्रीर्मधुपानसक्तो भेजे लताः पुष्पवतीः स्फुटं यः ।

स एव चैत्रेण बत द्विरेफः पुष्पेषुराज्ये विहितः पुरोधाः ॥ ३८ ॥

मलीमसातिकृष्णा श्रीर्यस्य । तरुण इत्यर्थः । वृद्धत्वे हि स्वस्ववर्णापचयो भवति । दृश्यते हि व्यभिचाराभावेऽपि विशेषणोपन्यासः पारम्पर्येणार्थान्तरद्योतनार्थः । यथा 'आकाशमसिश्यामम्' इत्यसिश्यामत्वेन दूराकाशोत्प्लवनप्रतीतिः। दूराकाशस्यैव श्यामत्वदर्शनात् । असिश्यामं निरभ्रं वा । तच्च मङ्गलसूचनार्थम् । तथा मधुनो मकरन्दस्य पाने सक्तो यः प्रफुल्लां लता भेजे । चैत्रेण पुष्पेषोः कामस्य राज्य ऐश्वर्यदर्शी कृतः । पुष्पेष्विति सप्तम्यन्तं वा । चन्द्रादिभ्योऽधिकं कामोद्दीपनो भ्रमर एवासीदित्यर्थः । अथ च मलिनलक्ष्मीको मद्यपायी च पुष्पवती रजस्वलाः स्त्रीः सेवते स राज्ये पुरोहितः क्रियत इत्याश्चर्यं बतशब्देन सूचितम् ॥

शुद्धं दधत्पान्थपुरंध्रिबाष्पपूरैरिव क्षालितमंशुजालम् ।

स्मेरेण चन्द्रो मुरलाङ्गनानां[1] मुखेन सापत्नकमाललम्बे ॥ ३९ ॥

वसन्ते मेघापायाच्छुद्धं निर्मलं रश्मिसमूहं दधत् । अत एव पान्थवनिताश्रुप्रवाहैः क्षालितमिवेति संभाव्यते । क्षालितमेव हि शुद्धं भवति । चन्द्रो हसता मुरलनामजनपदविशेषवनितानां मुखेन सापत्नकं स्पर्धां जग्राह । अन्यथान्यस्याः समानः पतिर्यस्याः

---

१ प्रगल्भाङ्गनाः.

सा सपत्नीति मुख्योऽर्थः । तस्याश्चान्यस्यां प्रति प्रायशो द्वेष इति सपत्नीशब्दो द्विष्मात्रवचनः । द्वेषश्च सदृशेन सदृशस्येति लक्षितलक्षणया सदृशमात्रवृत्तिः । अतः सापत्नशब्दः स्पर्धावाची ॥

संकोचितायव्यय एव यः प्रागनेहसा पुष्पमितंपचेन ।
सदा स किंजल्कमहासुभिक्षे लीलाः शिशिक्षे कति न द्विरेफः ॥४०॥

पुष्पाणां मितंपचोऽल्पनिर्माता कालः शिशिरस्तेन हेतुना करणेन वा संकोचितावायव्ययावुत्पत्तित्यागौ येन स प्राक्शिशिरे य आसीत्स तदा वसन्ते किंजल्कस्य महासुभिक्षं समृद्धिस्तस्मिन्सति कति न क्रीडाः शिशिक्षे । बहुलीलाज्ञ आसीदित्यर्थः । शिशिरे यः परिमिताशनमात्रेण प्राणसंधारणमकार्षीत्स भ्रमरो वसन्ते सर्वलीलापारंगम आसीदिति । सर्वर्तुभ्यो मधावधिक आसीदित्यर्थः । 'मितनखे च' इति खश् ॥

दिक्षु क्षतस्वापरसैरशोकैः कृतप्रतापानलसूत्रपातः ।
गाढाभिमानग्रहिलो जगन्ति तृणाय मेने न झषावचूलः ॥ ४१ ॥

दिक्षु क्षतः खण्डितः स्वापे संकोचे रसो यैः । प्रफुल्लैरित्यर्थः । अशोकै रक्तवर्णत्वात्कृतः प्रतापाग्नेः सूत्रपात आसूत्रणिका यस्य सः । तथा गाढेऽहंकारे ग्रहिलोऽभिनिविष्टो मीनध्वजो जगन्ति तृणाय न मेने । तृणवदनादरणीयान्यकरोदित्यर्थः । 'मन्यकर्मणि—' इति चतुर्थी ॥

समीरणश्चन्दनशैलराजजन्मा स्मरस्य प्रथमोऽङ्गरक्षः ।
वियोगिनीनिःश्वसितानिलेन प्रत्युद्गतो गौरवमाससाद ॥ ४२ ॥

चन्दनशैलराजान्मलयपर्वताज्जन्मोत्पत्तिर्यस्य स समीरणो मरुत्कामस्य महाञ्शरीररक्षिता विरहिणीनिःश्वासवायुना कृतप्रत्युत्थानो गौरवं महत्त्वं प्राप । संमानेन हि सर्वस्य वृद्धिर्भवति । राज्ञश्च प्राणरक्षको गौरवं मान्यतां प्राप्नोति ॥

हृत्वेव पाण्डुव्रतमाचरिष्णोः कपोलमूलात्पथिकाबलानाम् ।
रुचं कचत्काञ्चनवर्णचौरीं व्यधत्त चैत्रो नवचम्पकेषु ॥ ४३ ॥

पाण्डौ पाण्डिम्नि गुणे व्रतं तत्प्राप्त्यर्थं नियममाचरिष्णोः सेवमानात्पथिकस्त्रीणां गण्डतटादिवानीय चैत्रः कचतो दीप्तस्य काञ्चनस्य यो वर्णस्तच्चौरीं रुचं दीप्तिं फुल्लचम्पकेषु निहितवान् । चैत्रे प्राप्ते सति विरहिणीनां गौरत्वं मुखाद्गतम् । मुखानां पाण्डुत्वप्राप्तेः । चम्पकेषु गौरी दीप्तिर्दृश्यते । अतः संभाव्यते—विरहिणीगण्डेभ्यो गौरत्वमपहृत्य चैत्रश्चम्पकेषु स्थापितवानिति ॥

दाक्षिण्यदक्षः पवनैर्नवीनमासूत्रयन्साप्तपदीनतन्त्रम् ।
गण्डूषिताशेषजगज्जयोऽभूद्देवः स्वयं कामुकलोकपालः ॥ ४४ ॥

दाक्षिण्ये दक्षिणदिग्वर्तित्व आनुकूल्ये च दक्षैर्मरुद्भिः । मलयागतैरित्यर्थः । साप्त-

पदीनतन्त्रं सख्यमासूत्रयन्संपादयन्कामुकलोकपालः कामो गण्डूषितोऽशेषजगतो जयो येन तादृशोऽभूत् । मलयानिलभयात्कामस्य विश्वमायत्तमभूदित्यर्थः ॥

स्मराग्निधूमप्रतिमालिमाले वहद्रजोरूषितचूतवायौ ।
पान्थप्रियाणां नयनोत्पलेषु बाष्पो वसन्ते सुलभो बभूव ॥ ४५ ॥

स्मर एव तापकत्वादग्निस्तस्य धूमस्तस्य प्रतिमा यस्या अलिमालायास्तथाविधा भ्रमरमाला यत्र । धूमाग्निन्यायेन स्मरस्य ध्वजत्वं भ्रमराश्चकुरित्यर्थः । तथा वहद्यद्रजस्तेन रूषित आच्छुरितश्चूतवायुर्यत्र । तस्मिन्वसन्ते पान्थस्त्रीणां नेत्रेष्वश्रु सुलभं बभूव । विरहिण्यो भ्रमरादीन्दृष्ट्वारुदन्नित्यर्थः । धूमे रजोयुक्ते वायौ च सति बाष्पोत्पत्तिरुचिता ॥

वनानि चैत्रानिलचातुरीभिश्चकाशिरे ताण्डवितच्छदानि ।
ससौष्ठवंमन्यमसूययेव मनो मुनीनामपि तर्जयन्ति ॥ ४६ ॥

चैत्रानिलस्य चातुर्यश्चातुर्याणि ताभिस्ताण्डविताश्चपलत्वेन नृत्तप्रवृत्ताश्छदाः पल्लवा येषु तानि वनानि बभासिरे । अतः संभाव्यते—ससौष्ठवमात्मानं मन्यमानम् । न तु तदा सौष्ठवसहितम् । मुनिमनोऽपि तर्जयन्तीव । यश्च तर्जनां करोति सोऽङ्गुल्यादिकं तरलयति ॥

लतानताङ्गीषु सहेलमात्तलोलालिपुञ्जासितचामरासु ।
बभूव कण्ठः कलकण्ठयूनामास्थानदानोन्मुखरागराजः ॥ ४७ ॥

लता एव नताङ्ग्यः । अत्र चामरवाहिन्यः । तास्वात्तानि गृहीतानि लोलान्यलिमाला एव कृष्णचामराणि याभिस्तासु सतीषु पिकतरुणानां कण्ठ आस्थानस्य सर्वदर्शनावसरस्य दानं तत्रोन्मुखो रागराजः पञ्चमाख्यो रागो यस्य सहेलम्, न तु यत्नेन, बभूव । चूताङ्कुरास्वादेन कषायत्वात्कोकिलानां कण्ठेषु पञ्चम एव स्वर उच्चरति स्मेत्यर्थः । एतच्च राजवृत्तान्तभङ्ग्या वर्णितम् ॥

शनैः शनैरात्तवता नवीनजगत्त्रयोल्लेखमहाकवित्वम् ।
चैत्रेण चक्रे बत चम्पकौघैरभ्यस्तसौरभ्यसुवर्णसर्गः ॥ ४८ ॥

उल्लेखोऽपूर्वनिर्माणविषयः प्रज्ञोल्लासस्तत्र महाकविर्निर्माता तस्य भावो जगत्त्रय उल्लेखेषु महाकवित्वं गृह्णता । अपूर्वं रागादिकं कुर्वतेत्यर्थः । चैत्रेण चम्पकसमूहैर्हेतुभिरभ्यस्तसौरभ्यं विधृतसौगन्ध्यं यत्सुवर्णं तस्य सर्गः सृष्टिश्चक्रे । चम्पकानि पीतवर्णानि सुगन्धीनि भवन्ति । अतो ज्ञायते चैत्रेण सुगन्धि सुवर्णं कृतम् । कविना च सुवर्णः सर्गः क्रियते ॥

विकोषकंदर्पकृपाणधाम्ना व्यञ्जन्समालब्धमिवाङ्गमङ्गम् ।
जल्पाकतोत्सेकमियाय चूतसौरभ्यसभ्यो मधुपायिलोकः ॥ ४९ ॥

विकोषः कोषादाकृष्टो यः कंदर्पकृपाणः स्मरासिस्तस्य धाम्ना तेजसा समालब्धं लिप्तमिवाङ्गमङ्गं व्यञ्जन्भ्रमरवर्गो जल्पाकता बहुजल्पत्वं तत्रोत्सेक उद्रेकस्तमियाय, यतश्चूतानां सौरभ्यं तत्र सभ्यश्चर्वयिता । चूतरजो भुक्त्वोपचितो बलवान्भ्रमरवर्गोऽशब्दायतेत्यर्थः । भ्रमराणां कृष्णे वर्णे कामखड्गप्रभालेपोत्प्रेक्षणाद्भ्रमराणां कामशस्त्रधरत्वावगमेन कामप्राणरक्षत्वं सूचितम् । राज्ञश्च प्राणरक्षकः खड्गादिकं शस्त्रमुद्धृतमुद्वहति, जल्पाकश्च भवति, दुर्लभवस्तुभोगं च करोति । 'जल्पभिक्षकुट्ट–' इति षाकन् ॥

श्रीखण्डशैलानिलरात्रिराजपुंस्कोकिलादिप्रविभक्तराज्यः ।
हठादृतूनामधिपश्चकार जगत्सगर्वः स्मरवीरभोग्यम् ॥ ९० ॥

सगर्वः साहंकारो ऋतुपतिरत एव श्रीखण्डशैलानिलो मलयवायुः, रात्रिराजश्चन्द्रः, पुंस्कोकिलः कोकिलतरुणः, तदादिषु प्रकर्षेण विभक्तं विभागेन दत्तं राज्यं येन स जगत्कामवीरस्य भोग्यं चकार । यश्चाधिपतिः स्वयमत्रलिप्तत्वाद्राज्यभारोद्वहनं स्वयं न करोति, सोऽन्येषां हठाद्राज्यं विभज्य स्वमण्डलं वीरभोग्यं करोति । वसन्तप्रभावात्कामस्य विश्वमायत्तमभूदित्यर्थः । 'सगर्वस्मरवीरभोग्यम्' इत्येकपदतया पाठे प्रविभक्तमिति कर्मकर्तरि क्तः । स्वयं पक्का माषा इतिवत् । विभक्तं राज्यं यस्येति वाक्यम् । यस्य चाधिपते राज्यं बहुधा विभक्तं स स्वमण्डलं हठाद्वीरभोग्यं करोति ॥

इन्दिन्दिरैर्निर्भरगर्भमीषदुन्मेषवच्चम्पकपुष्पमासीत् ।
हिरण्मयं शासनलेखहेतोः सज्जं मषीभाण्डमिव स्मरस्य ॥ ९१ ॥

इन्दिन्दिरैर्भ्रमरैर्निर्भरो गर्भोऽन्तरं यस्य तच्चम्पकपुष्पमीषद्विकासवदभूत् । ईषद्विकासेऽपि भ्रमरैर्भृतान्तरत्वोक्तिः परिमलातिशयसूचनार्थम् । आज्ञालेखाद्धेतोः सज्जं संनद्धं कामस्य संबन्धि सुवर्णमयं मषीभाण्डं मषिधानमिव । तदेव स्मरस्याज्ञालेखेष्वङ्गमभूदित्यर्थः ॥

मधुश्रियः कुङ्कुमपत्रभङ्गानध्यावसत्किंशुककुड्मलानि ।
अलिस्तदीयैश्च घनै रजोभिः प्राणाग्निहोत्रक्रममन्वतिष्ठत् ॥ ९२ ॥

वसन्तलक्ष्म्याः कुङ्कुमपत्रभङ्गांस्तद्रूपाणि किंशुककुड्मलानि भ्रमरोऽध्यावसदध्यतिष्ठत् । तदीयैः किंशुकसंबन्धिभिर्घनै रजोभिः केसरैर्भ्रमरः प्राणा एव ग्रासकत्वादग्निस्तस्य होत्रं होमस्तस्य क्रममास्वादनपरिपाटीं चान्वतिष्ठत् । किंशुककुड्मलानां भिन्नलिङ्गपत्रभङ्गैकरूपणम् । भ्रमरस्यावासदाता ग्रासदाता च किंशुक एवाभूदित्यर्थः । मधुश्रीर्नायिकास्थानीया ॥

रराज मूर्त्या कुरवो नवोद्यत्पुष्पोपहूतैर्वृतयालिजालैः ।
सद्योऽङ्गनालिङ्गनतः प्रसक्तकुचाग्रकस्तूरिकपङ्क्येव ॥ ९३ ॥

स्त्रीपरिरम्भान्नवं कृत्वोद्यन्त्युत्पद्यमानानि यानि पुष्पाणि तैरुपहूतैराकारितैर्भ्रमर-

जालैर्वेष्टितया मूर्त्या कुरवकवृक्षो दिदीपे । अतः संभाव्यते—आलिङ्गनात्प्रसक्तं संक्रान्तं कुचाग्रविषयं कस्तूरिकापङ्कं यस्याः सा तथेव । कृष्णत्वाद्भ्रमराः कस्तूरीत्वेन संभाव्यन्ते । यद्वा वास्तवे पुष्पसौरभे कस्तूरीसौरभसंक्रामणसंभावनेयम् ॥

नतभ्रुवोऽग्रेऽरुणपुष्परेणुकाषायपट्टो मधुमासभिक्षुः ।
मानस्य चेतोगृहनिर्गतस्य चकार यात्रामपुनःप्रवेशाम् ॥ ९४ ॥

नतभ्रुवो रामायाः संबन्धिनश्चेतोगृहान्निर्गतस्य मानस्याग्रे पुरो मधुमास एव भिक्षुर्वसन्तश्रमणो यात्रां प्रस्थानमर्थान्मानस्यापुनःप्रवेशां चकार । रामाचित्ते मानः पुनः कदाचिन्न प्रविष्टः । वसन्तगुणस्मरणेन पुंनर्निरासभयादित्यर्थः । अरुणः पुष्पाणां रेणुरेव कषायरक्तः पट्टो यस्य । गृहान्निर्गतस्य पुरुषस्य [संमुखे] वर्तमानो भिक्षुर्यात्रामपुनःप्रवेशां करोतीति शकुनज्ञाः । तदुक्तम्—'विमुक्तकेशकाषायनग्नेन्धनबुभुक्षितैः' इत्यादि ॥

रसायुरुत्सङ्गनिलीनजानिरनङ्गभोगावलिपाठवन्दी ।
किंजल्कतल्लेऽजनि साहकारे निमज्जनोन्मज्जनकेलिकारः ॥ ९५ ॥

उत्सङ्गेऽङ्के निलीना गाढाश्लेषेण लग्ना जाया भ्रमरी यस्य । 'जायाया निङ्' इति निङ् । तथानङ्गस्य कामस्य भोगावलिरुपभोगवर्णना तत्पाठे बन्दी । जगज्जित्वा कामो भोगान्करोतीतीव रुतव्याजेन वर्णयतीत्यर्थः । रसायुर्भ्रमरः साहकारे चूतसंबन्धिनि किंजल्क एवागाधत्वात्तल्लस्तडाकस्तत्र निमज्जनोन्मज्जनरूपां केलिं करोतीत्येवंविध आसीत् । कश्चिच्च शृङ्गारी रामामङ्के गृहीत्वा तडाकमध्ये केलिं करोति । 'तल्पे' इत्यपपाठः । तत्र निमज्जनाद्यसंभवात् ॥

मध्येनभः कौशिकवद्द्वितीयं किं स्वर्गसर्गं मदनस्ततान ।
दोलाधिरूढप्रमदापदेशाद्यस्मिन्नवा अप्सरसो विरेजुः ॥ ९६ ॥

नभसो मध्ये मध्येनभः । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । मदनः कौशिकवद्विश्वामित्रवद्द्वितीयां स्वर्गसृष्टिं किं चकार । विश्वामित्रः किल त्रिशङ्कुस्नेहेन द्वितीयं स्वर्गं निर्ममे । यस्मिन्द्वितीये सर्गे नवा अप्सरसो विरेजुर्बभुः । दोलाधिरूढा दोलाकेलिकृतो याः प्रमदास्तासामपदेशाद्व्याजात् । स्वर्गे ह्यप्सरसो भवन्ति । तत्र दोलावेगेनोपरिगच्छन्त्यः स्त्रियोऽप्सरस्त्वेन संभाव्यन्ते । पुरा स्त्रीणामप्सरोभ्यो नभःसंचारमात्रेण भेदोऽभवत् । तदा तु दोलाधिरूढेरप्सरःसदृश्य एवाभवन्नित्यर्थः ॥

आरूढवत्यः क्षणमन्तरिक्षं यान्ति स्म दोलास्तरलास्तरुण्यः ।
वक्त्रद्युतिद्रोहविधातुरिन्दोरास्कन्दहेतोरिव दत्तयात्राः ॥ ९७ ॥

तरला लोला दोलाः कर्मभूता आरूढवत्यस्तरुण्यः क्षणमाकाशं यान्ति स्म । अतः संभाव्यते—तरुणीनां मुखकान्तिद्रोहकर्तुश्चन्द्रस्यास्कन्दहेतोर्हठपातनकारणाद्दत्तयात्राः

कृतप्रस्थाना इव । चन्द्रस्य पूर्वं दूरतया मुखसादृश्यं निश्चितं दोलाधिरोहे तु प्रत्यासत्त्या मुखेन चन्द्रो जित इत्यर्थः । द्रोग्धरि च हठपातनं युक्तम् ॥

अभिनवविभवाप्तौ बन्धनान्माननाम्नो
　निखिलशशिमुखीनां मोचयन्मानसानि ।
अभजत सहकारस्यन्दसान्द्राभिषेकै-
　रधिपरभृतकण्ठं सौष्ठवं रागराजः ॥ ५८ ॥

प्रसरणनिरोधेन मानाख्याद्बन्धनात्सर्वस्त्रीणां चित्तानि मोचयन्रागराजः पञ्चमो रागः कोकिलकण्ठे चूतरसाभिषेकैः सौष्ठवं बलमभजत । चूतरसं भुञ्जानस्य कोकिलस्य कषायकण्ठत्वात्पञ्चम उदचरदित्यर्थः । राजा च नवराज्यलाभे बन्धनस्फोटं कुर्वन्राज्याभिषेकैः सौष्ठवं भजते ॥

उन्मीलत्कुसुमभराधिकावनम्रा बिभ्रत्यो निखिलशिलीमुखोन्मुखत्वम् ।
चापत्वं भुवनजयाभियोगभाजः सेवायै जगृहुरनन्यजस्य वल्ल्यः ॥ ५९ ॥

भुवनजयार्थमभियोगमुद्योगं भजतोऽनन्यजस्य कामस्य सेवार्थं धनुर्भावं लताश्चक्रुः । लताभिरेव कामस्य धनुष्कार्यमभवत् । लता दृष्ट्वैव जगत्कामस्यायत्तमभूदित्यर्थः । यत उन्मीलन्ति विकसन्ति कुसुमानि तैर्भारस्तेनावनम्राः । तथा अत एव निखिला ये शिलीमुखा भ्रमरास्तत्संबन्धि संमुखत्वं वहन्त्यः । धनूंषि चारोपितगुणत्वान्नम्राणि शिलीमुखानां शराणां संमुखत्वं वहन्ति ॥

मलयपरिमलाढ्यंभावुकः केरलीनां
　विपुलपुलकवेधा मान्मथग्रन्थकारः ।
दिशि दिशि पृषदश्वो दाक्षिणात्यः शिशिक्षे
　रसपरिवृढसख्याहंकृतश्चापलानि ॥ ६० ॥

मलयस्यार्थाच्चन्दनस्य संबन्धी परिमलस्तेनाढ्यंभावुकः समृद्धिमान् । केरलस्त्रीणामभिलाषजननाद्रोमाञ्चनिर्माता । मन्मथसंबन्धिनो ये ग्रन्था येषु मन्मथो वर्णनीयस्तान्करोति । मन्मथवृत्तान्तप्रकाशक इत्यर्थः । रसपरिवृढः शृङ्गारापरनामधेयः कामदेवस्तेन सख्यं मैत्री तेनाहंकृतः साहंकारः । कामोद्दीपनसमर्थ इत्यर्थः । दाक्षिणात्यो मरुच्चापलानि दिशि दिशि शिशिक्षे । सर्वत्र ववावित्यर्थः । राजमैत्र्या साहंकारश्चाढ्यो भवति । स्त्रीणां च रागं जनयति । राजवृत्तान्तप्रकाशकश्चपलश्च भवति ॥

विश्वाक्रान्त्याहवसरभसानङ्गयोधैरशोकै-
　र्दध्रे सास्त्रव्रणमुखसखी प्रोच्छ्वसत्पुष्पमाला ।

आसीदन्ती निबिडनिबिडं पद्धतिः षट्पदाना-
मग्रे यस्याः सममघटत श्यामला पट्टिकेव ॥ ६१ ॥

विश्वस्य कर्मभूतस्याक्रान्तिर्वशीकरणं स एवाहवः सङ्ग्रामस्तत्र समर्थकत्वात्कामभटैरशोकवृक्षैः सास्राणां रुधिरार्द्राणां व्रणानां रणक्षतानां सखी सदृशत्वात्तत्त्वेन संभाव्यमाना प्रोच्छ्वसतां विकसतां पुष्पाणां माला दध्रे । यस्याः पुरः समं युगपदतिनिबिडमासीदन्त्यासीना भ्रमरपङ्क्तिः श्यामला कृष्णा पट्टिका व्रणाच्छादनमिवाघटत घटिता । योधाश्च रुधिरार्द्रेषु व्रणेषु पट्टिकां बध्नन्ति ॥

रोहत्कन्दुककेलयस्तरलितैर्ये नारिकेलीफलै-
र्ये श्लिष्यद्भ्रमरोर्मिभिर्बहुविधाभ्यस्तासिधेनुक्रियाः ।
ये कल्लोलितपांसुखेलनरसा वासन्तिकारेणुभि-
स्ते कर्णाटसमीरणाः कमिव न क्रीडारसं चक्रिरे ॥ ६२ ॥

रोहन्ती कन्दुककेलिर्गेन्दुकाख्यक्रीडनकक्रीडा येषां ते कम्पितैर्नारिकेलफलैर्ये पवना भवन्ति । तथा श्लिष्यन्तः सज्जन्तो ये भ्रमरा रोलम्बास्तैर्बहुविधाभ्यस्तासिधेनुक्रिया छुरिकाक्रिया यैस्ते भवन्ति । तथा वासन्तिकानां माधवीनां रजोभिर्ये कल्लोलितस्तरङ्गितः पांसुस्तत्खेलने रसो रजःक्रीडारागो यैः । ते कर्णाटसमीरणा मलयवायवः कमिव न क्रीडारसं चक्रिरे । बाल्यादिवयोवस्थोचिताः क्रीडाश्चक्रुरित्यर्थः । पांसुखेलनं हि बाल्ये क्रियते । छुरिकाक्रियाक्रीडा यौवने । तत्संधौ कन्दुकादिनिर्बन्धः ॥

पृष्ठभ्रमत्सजवषट्पदचक्रचिह्नं
यत्प्रोच्छ्वसत्कुसुममाविरभूल्लतानाम् ।
मानस्य पक्ष्मलदृशां सहसैव पेष्टुं
तत्स्पष्टमान्मथघरट्टविलासमासीत् ॥ ६३ ॥

पृष्ठे चक्राकारतया घूर्णमानाः सजवा वेगसहिता ये भ्रमरास्तेषां चक्रं तच्चिह्नमङ्को यस्य तत् । लतानां संबन्धि यत्पुष्पं प्रोच्छ्वसद्विकसत्प्रकटमभूत्, तत्स्त्रीणां मानस्य सद्यः पेष्टुं दलयितुं स्पष्टो निःसंशयो मन्मथसंबन्धिनो घरट्टस्य विलासो यस्य तदासीत् । घरट्टः पेषणार्थं चक्रकद्वयमुच्यते । दलितं न पुनः प्ररोहति । अतो मानदलनार्थं घरट्टोऽस्तीति संभाव्यते । सभ्रमरं लतानां पुष्पं दृष्ट्वा स्त्रीणां मानः पिष्टप्रायोऽभूदित्यर्थः । घरट्टस्य चोर्ध्वे चक्रं भ्रमति । पेष्टुमिति 'जासिनिप्रहण–' इति कर्मणि षष्ठी ॥

पङ्क्तिः पुष्पलिहामशेषवनितामानावसानक्रिया-
गर्वोन्नद्धवसन्तबद्धविततश्मश्रुश्रियं बिभ्रती ।

आलानापसरत्स्मरेभविधुतायःशृङ्खलोल्लेखभू-
विस्रब्धं कथमप्यहो विरहिभिर्न प्रेक्षितुं चक्षमे ॥ ६४ ॥

अशेषवनितानां संबन्धी यो मानस्तस्यावसानक्रिया समाप्तिस्तया गर्वस्तेनोद्धतो यो वसन्तस्तेन बद्धं श्मश्रु कूर्चस्तच्छोभां बिभ्रती । नेयं भ्रमरपङ्क्तिः, किं तु वसन्तस्य बद्धकूर्च इति संभाव्यते । 'संधा' इति वा पाठः । संधा प्रतिज्ञा । तथालानाद्बन्धनस्तम्भादपसरन्मुच्यमानो यः स्मरेभः कामहस्ती तेन विधुता कम्पितायःशृङ्खला लोहशृङ्खला तस्या उल्लेखो भङ्गिस्तस्य भूः सा भ्रमरपङ्क्तिर्विरहिभिर्विश्वस्ततया द्रष्टुमपि न चक्षमे । समर्थैरभावि । उपमोपक्रमोत्प्रेक्षा । भयवशान्न चक्षम इत्युक्तिसंगतिः ॥

ये गात्रे ययुरध्वगोत्पलदृशामङ्गारवर्षप्रथां
ये संभोगरसालसालसवधूनेत्राञ्चलैरञ्चिताः ।
श्रीखण्डाद्रिगुहागृहान्तरभुवः शृङ्गारिषु प्रोन्मिष-
च्छापानुग्रहशक्तयो ववृधिरे तेऽहंयवो वायवः ॥ ६५ ॥

अध्वगोत्पलदृशां विरहिणीनामङ्गे ये वायवोऽङ्गारवर्षः स्फुलिङ्गवृष्टिस्तत्ख्यातिं ययुः । अग्निकणवर्षवद्विरहिणीनां व्यथां चक्रुरित्यर्थः । तथा संभोगरसेन रतिक्रीडयालसालसा ये वधूनेत्राञ्चलाः स्त्रीकटाक्षास्तैः सादरं धार्यमाणत्वेन पूजिताः । संभोगोपकारकत्वात् । ते मलयाद्रिगुहोत्थिता वायवो ववृधिरे वृद्धिं गताः । कामिषु विषये प्रोन्मिषन्त्युल्लसन्तो शापानुग्रहशक्तिः कोपप्रसादसामर्थ्यं येषाम् । संयोगिषु प्रसादः, वियोगिषु निग्रहः । अतोऽहंयवः साहंकाराः । 'अहंशुभमोर्युस्' इति युस् ॥

आगच्छन्मलयानिलः स रुरुचे कोदण्डदण्डग्रह-
व्यग्रिम्णा पुरतः प्रसारित इवानङ्गेन दीर्घो भुजः ।
सौगन्ध्यस्पृहयालुमांसलमिलद्भृङ्गावलिव्याजतो
व्यक्तिं यत्र जगाहिरे परिणमन्मौर्वीकिणग्रन्थयः ॥ ६६ ॥

कोदण्डदण्डस्य धनुर्दण्डस्य ग्रहो ग्रहणं तत्र व्यग्रिमा व्यग्रत्वं तेन हेतुना कामेन पुरतः प्रसारितः स्वो दीर्घो बाहुरिवागच्छन्मलयवातो दिदीपे । पुरतोग्रहणं सबलत्वावबोधकम् । स्वबाहुनेव मलयवायुना कामो जगदजैषीदित्यर्थः । यत्र वायुभुजे सौगन्ध्ये स्पृहयालुरभिलाषवती मांसला घना मिलन्त्युपविशन्ती भृङ्गावलिस्तस्या व्याजात्परिणमन्तः परिणामं गच्छन्तो ये मौर्वीकिणग्रन्थयो ज्याघातलेखा व्यक्तिं प्रथां जगाहिरे प्रापुः । वीराणां भुजेषु हि मौर्वीकिणा भवन्ति । अतो मौर्वीकिणत्वमलीनां संभाव्यते । परिणतौ मौर्वीकिणानां श्यामत्वं भवतीति परिणमद्ग्रहणम् ॥

चिरादसमपत्त्रिणो भुजमकाण्डकण्डूलतां
नयन्मलयवीरुधां परिमलस्य वैतालिकः ।

निदेशकृदनेहसः कनककेतकीलक्ष्मणः
स दक्षिणसमीरणो मुनिशमापमृत्युर्ववौ ॥ ६७ ॥

असमपत्रिणो विषमबाणस्य कामस्य संबन्धिनं बाहुं चिरादकाण्डे सदृशभटलाभाभावे कण्डूलतां प्रहर्तुमभिलाषवत्त्वं नयन् । मलयवायुबलात्कामो दुःसह आसीदित्यर्थः । मलयवीरुधां चन्दनलतानां संबन्धिनः परिमलस्य सौगन्ध्यस्य वैतालिको बन्दी । प्रकाशक इत्यर्थः । वसन्ते सुवर्णकेतक्यो भवन्तीति प्रसिद्धेस्तल्लक्ष्मा कालो वसन्तस्तस्य निदेशमाज्ञां जगल्लङ्घनलक्षणां करोतीति तादृशः । मुनिशमस्यापमृत्युरकस्माद्विनाशकः स दक्षिणवातो ववौ ॥

कैलासाधिशयालुशंकरशिरोलंकारकाकोदर-
ग्रासायासभयादिवानुचरतां हित्वोत्तरस्या दिशः ।
वातोऽसेवत दक्षिणापथमथ श्रीखण्डखण्डोच्छ्वस-
त्सर्पालीरसनावलेहचकितस्तूर्णं ततोऽप्याययौ ॥ ६८ ॥

कैलासमधिशयालुरधिवसन्यः शंकरस्तस्य शिरोलंकारा मुकुटभूषणानि ये काकोदराः सर्पास्तत्कर्तृको ग्रासो निगरणम् । सर्पाणां वातभक्षत्वात् । तेनायासस्ततो भयादिवोत्तरस्या दिशोऽनुचरत्वं त्यक्त्वा मरुद्दक्षिणापथमसेवत । वसन्ते हि दक्षिणो मरुद्वहति । तत्रोत्तरदिक्त्यागे सर्पभयं कारणत्वेन संभाव्यते । अथ दक्षिणागमनादनन्तरमेव ततोऽपि दक्षिणापथादपि मरुदाययौ । श्रीखण्डानां चन्दनतरूणां खण्डे समूह उच्छ्वसन्ती वायुपानोन्मुखी या सर्पपङ्क्तिस्तस्या रसनाभिर्जिह्वाभिरवलेहः पानं ततश्चकितो भीत इवेति विशेषणमुखेन हेतुः । सर्वत्र प्रसरन्वसन्तवात आसीदित्यर्थः ॥

विकसितसितपुष्पच्छत्रमासाद्य तस्थौ
तरुषु यदलिचक्रं प्रोषितप्रेयसीनाम् ।
पिशुनयितुमसह्यं दुर्निमित्तं दिनेऽपि
स्फुटमजनि स एवानेकचन्द्रोपरागः ॥ ६९ ॥

वृक्षेषु विकसितानि प्रफुल्लानि सितानि पुष्पाण्येव प्रत्येकं छत्रं प्राप्य यद्भ्रमरचक्रं तिष्ठति स्म, स एव प्रोषितप्रेयसीनां पान्थस्त्रीणां दुर्निमित्तं मरणलक्षणं सूचयितुं दिनेऽप्यनेकचन्द्रग्रहो जातः । सभ्रमराणि पुष्पाणि दृष्ट्वा प्रोषितप्रेयस्यो मुमूर्षवो जाता इत्यर्थः । दिवसेऽनेकचन्द्रोपरागो यदा भवति तदारिष्टानि भवन्ति । कार्ये कारणोपचाराद्दुर्निमित्तशब्दः प्रयुक्तः ॥

मदनगणनास्थाने लेख्यप्रपञ्चमुदञ्चय-
न्विचकिलबृहत्पत्रन्यस्तद्विरेफमषीलवैः ।

कुटिललिपिभिः कं कायस्थं न नाम विसूत्रय-
न्व्यधित विरहिप्राणेष्वायव्ययावधिकं मधुः ॥ ७० ॥

मदनस्य गणनास्थानम्, यत्र तदीयं कृताकृतं विविच्यते, तत्र लेख्यप्रपञ्चमक्षरविन्यासमुदञ्चयन्नुल्लासयन्। कैः। विचकिलानां बृहन्ति पत्राण्येव पत्राणि तेषु न्यस्ता ये द्विरेफा भ्रमरास्त एव मषीलवा मषीकणास्तैः। तथा कुटिला वक्राः समस्तैर्वाचयितुमशक्या या लिपयो भङ्ग्योऽक्षरविन्यासाश्च कं न कायस्थं शरीरिणमायव्ययाधिकृतं च विसूत्रयन्विह्वलयन्मधुर्विरहिणां प्राणेषु प्रवेशनिर्गमौ चक्रे। प्रियसंगमे प्रवेशोऽन्यदा व्ययः ॥

घनकुन्दकुड्मलविशोषणच्छलात्तुहिनापचारचरुभाण्डयज्वना ।
तिमिरद्रुहोऽम्बुदनिचोलगोलकं महसा विहाय जगृहे कठोरता ॥ ७१ ॥

वसन्ते कुन्दानि शुष्यन्ति। अतो घनं कुन्दानां यद्विशोषणं शोषः शुष्ककुन्दव्याजात्तुहिनस्य हिमस्याभिचारे विनाशहेतुभूतायां कृत्यायां चरुभाण्डानि यत्र तत्र यज्वना यजमानेन तत्कर्त्रा। तिमिरद्रुहो रवेर्महसा तेजसा कठोरत्वं गृहीतम्। अम्बुदा मेघा एव निचोलगोलकं प्रावरणमण्डलं त्यक्त्वा। शिशिराभावान्मेघान्निर्गत्येत्यर्थः। अत्र लौकिकेऽभिचारे शास्त्रप्रसिद्धवस्तुव्यवहारसमारोपः ॥

यत्कंदर्पयशोनुवादविदुषां मल्लीदलानां कुलं
गुञ्जद्भृङ्गभरश्च यो विरहिणीप्राणाध्वगुञ्जा तयोः ।
एकेनाजनि पान्थपक्ष्मलदृशां क्रूरं विषं चक्षुषो-
रन्येनाथ च पप्रथे श्रवणयोर्बाणावलीदुर्दिनम् ॥ ७२ ॥

कंदर्पस्य कामस्य यशस्तस्यानुवादोऽनुकरणेन वदनं तत्र विदुषां पण्डितानाम्। शुभ्रत्वात्कामयशोऽनुकरणानां मल्लीदलानां कुलं यदभूत्। तथा गुञ्जन्तो रुवन्तो ये भृङ्गास्तेषां भरश्च योऽभूत्, स शब्दत्वाद्विरहिणीप्राणानामध्वगुञ्जा निर्गमनपटहः। तयोर्मल्लीपत्रराशिभ्रमरभरयोः। निर्धारणे षष्ठी। एकेन मल्लीपत्रराशिना हेतुना पान्थस्त्रीणां दृष्ट्योः क्रूरं विषमजनि। अन्येन भ्रमरभरेण पान्थस्त्रीणां कर्णयोः शरपङ्क्तिप्रसरः पप्रथे। मल्लीपत्राणि पश्यन्त्या दृष्टेर्विषमिव लग्नम्, भ्रमररुतानि शृण्वतोः कर्णयोः शरा इव प्रविष्टा इत्यर्थः ॥

अभ्यस्ताशङ्कलङ्कापरिसरसरणिक्रीडितात्तत्रिकूट-
प्रान्तप्रोतद्रुमालीमुकुलपरिमला भृङ्गसौभाग्यभाङ्गिः ।
आश्वस्तो मातरिश्वा मलयविटपिनामाययावात्मनीनो
मीनाङ्कस्याङ्कपालीं दधदतिरभसादर्णसां ताम्रपर्ण्याः ॥ ७३ ॥

अशङ्कं शङ्कारहितं यल्लङ्कापरिसरसरणौ लङ्कानिकटमार्गे क्रीडितं शनैर्गमनमभ्यस्तं पुनः पुनः कृतं यत्क्रीडितं तेनात्ता गृहीता त्रिकूटपर्वते प्रोता स्वर्गादानीय रोपिता या वृक्षपङ्क्तिस्तस्याः कुड्मलसौगन्ध्यसंस्कारेण सौभाग्यभङ्गिर्येन । लङ्कानिकटे त्रिकूटपर्वतोऽस्ति, अतो लङ्कायां वहनात्रिकूटस्थवृक्षाणां सौगन्ध्यं वायोः संक्रान्तं तेन वायोर्मनोहरत्वं जातमित्यर्थः । मलयवृक्षाणामाश्वस्तो निकटावस्थानात् । मीनाङ्कस्य कामस्यात्मनीनः । ताम्रपर्ण्या नद्या जलानामङ्कपालीमालिङ्गनं दधद्धारयन् । तत्संपर्काच्छीतल इत्यर्थः । सुभगश्च स्त्रीभिरालिङ्ग्यते । मातरिश्वा वायुराययौ वहति स्म । वायोर्विशेषणैः सौगन्ध्यमन्दवहनशीतलत्वादयो गुणा वर्णिताः ॥

नवमसृणतृणौघश्यामलायामिलाया-<br>
मथ शिशिरमपास्तोद्रेकमुद्रं निदद्रौ ।<br>
अभजत च वसन्तोऽनङ्गसर्वस्वरक्षा-<br>
विधिषु मधुपनादाहंकृतो यामिकत्वम् ॥ ७४ ॥

अथ वसन्त उद्रिक्ते सति नवोऽतो मसृणः सुकुमारत्वाच्छ्लक्ष्णो यस्तृणौघस्तेन श्यामलायामिलायां भूमौ शिशिरं कर्तृ निदद्रौ । यतोऽपास्ता त्यक्तोद्रेकमुद्रा महिमटङ्को येन । यः परिभूतः स हि लीनो भवति। शिशिरस्य च वसन्तेन पराभवकरणाद्भूमिलीनत्वोक्तिः। अतो भ्रमरनादेनाहंकृतः साहंकारः । अहंकारी हि नदति । वसन्तोऽनङ्गस्य सर्वस्वानि सर्वप्रयोजनानि सर्वस्वं सर्वं धनं वा तेषां तस्य वा रक्षाकर्मसु यामिकत्वं जागरूकत्वमभजत । अथवा रक्षासु मधुपनादाहंकृत इति योज्यम् । यामिकेषु कश्चिन्निद्राति द्वितीयो जाग्रन्नादान्मुञ्चतीति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये साधारणवसन्तवर्णनं नाम षष्ठः सर्गः ।

---

## सप्तमः सर्गः ।

इति रतिपरिणेतुरन्तरङ्गीं कुसुममये समये वहत्यभिख्याम् ।<br>
स्फटिकशिखरिणः श्रियं दिदृक्षुर्निरगमदद्रिसुतासखः स देवः ॥ १ ॥

रतिपरिणेतुः कामस्यान्तरङ्गीं योग्यत्वेन ग्राह्यामभिख्यां शोभां कुसुममये समये वसन्ते वहति सति कैलासस्य श्रियं द्रष्टुकामोऽद्रिसुतासखो गौरीसहितः स देवो निरगमत् । अत्र त्रिषु पादेषु स्त्रीपुंलिङ्गावच्छिन्नस्त्रीपुंसव्यवहारो भगवतोः सह दर्शनसंभाव्यमानदोषनिवृत्त्यर्थः ॥

रुचिभिरलिकशायिनः कृशानोर्हिममहसश्च किरीटकिंकरस्य ।<br>
उपवनतरुपङ्क्तिमीश्वरोऽद्रौ किसलयितामथ पुष्पितां चकार ॥ २ ॥

अलिके ललाटे शायिनोऽग्ने रुचिभिर्हेतुभिर्भगवानुद्यानवृक्षपङ्क्तिं संजातपल्लवां चकार। तथा मौलिस्थस्य चन्द्रस्य दीप्तिभिस्तां संजातपुष्पां चकार । अग्निदीप्तयो रक्तास्तद्योगात्संजातपल्लवत्वम् । चन्द्ररश्मयः श्वेतास्तद्योगात्संजातपुष्पत्वम् ॥

विषमनयनदृग्भिरञ्चितायां वनभुवि शैलभुवश्च दृष्टिपातैः ।
रतिकमितुरशोकमूलधाम्नो मनसि भयाभयसंधिकार्यमासीत् ॥ ३ ॥

त्रिनेत्रस्य दृग्भिस्तथा गौर्याश्च दृष्टिपातैरञ्चितायां शोभितत्वेन पूजितायां वनभुवि सत्यामशोक एव मूलधाम प्रधानगृहं यस्य तस्य कामस्य चित्ते भयाभययोः संधिः संघटनं तत्कार्यमासीत् । अशोकावासः कामो हरदृष्टिपातैर्भीतोऽभूत् । गौरीदृष्टिपातैस्त्वभयमभजत । देवी सोत्कर्षमपश्यदित्यर्थः ॥

प्रसरमवसरस्य तस्य चञ्चद्विचकिलकुड्मलविभ्रमस्मितस्य ।
प्रभुरचलभुवः स्म तत्र नेत्रैश्चुलकयति स्म सविस्मयप्रमेयम् ॥ ४ ॥

तस्यावसरस्य वसन्तस्य प्रसरमुल्लासमचलभुवः प्रभुर्हरो नेत्रैश्चुलकयति स्म । साभिलाषमपश्यदित्यर्थः । सह विस्मयेन प्रमेयेन ज्ञातव्येन वर्तनं यत्र तदिति क्रियाविशेषणम् । चञ्चन्ति फुल्लानि विचकिलान्येव विभ्रमस्मितं यस्य । चुलकेन गिरतीति कर्तृकरणार्थे णिचि रूपम् ॥

मलयपवनदोलिताञ्चलाभिः सविधलताभिरिवोपदिश्यमानम् ।
अभिसुरभि भवस्य कौतुकेन क्व न किल कम्पमशिक्षतोत्तमाङ्गम् ॥ ५ ॥

सुरभेर्वसन्तस्याभिमुखमभिसुरभि कौतुकेन हेतुना भवस्योत्तमाङ्गमशिक्षत । विचित्रः पदार्थदर्शनादाश्चर्येण हरः शिरोऽकम्पयत् । अत उत्प्रेक्ष्यते—मलयपवनेन दोलितकम्पितोऽञ्चलः प्रान्तो यासां ताभिर्निकटलताभिरुपदिश्यमानमिव । मलयवायुकम्पिताभ्यो लताभ्य इव हरशिरसा कम्पः शिक्षित इत्यर्थः ॥

अधिककुतुकलोलमौलिमुक्तैः सुरसरितः सलिलैस्ततो हरेण ।
निकटकटकशाखिनामयत्नात्सुचिरमरच्यत सेचनोपचारः ॥ ६ ॥

वसन्तगुणदर्शनादधिकं यत्कुतुकमाश्चर्यं तेन हेतुना लोलो यो मौलिः शिरस्ततो मुक्तैः पतितैर्गङ्गाजलैर्हेतुभिः करणैर्वा हरेण कर्त्रा स्वनिकटशिखरवृक्षाणां सेचनोपचारः सेकेन वर्धनार्थं परिचरणमयत्नाज्जलानयनादिरूपं प्रयत्नं विना कृतः ॥

दिशति दृशमयुग्मलोचनेऽभूदखिललतापटली वनस्थलीषु ।
अधिवसदसमास्त्रगुप्तयेऽग्रे ग्रथिततिरस्करिणीव रेणुजालैः ॥ ७ ॥

न युग्ममयुग्मं लोचनानि यस्य तस्मिन्पश्यति सति वनभूमिसंबन्धिनी सकला लतापङ्क्तिः, अर्थाद्वनभूमिष्वधिवसन्योऽसमास्त्रः कामस्तस्य गुप्तये निह्नवाय परागजालैः कृता

तिरस्करिणी जवनिका यया । बद्धजवनिकेवासीदित्यर्थः । प्रफुल्ला लता दृष्ट्वा त्रिनेत्रोऽपि कामे कोपं विसस्मारेत्यर्थः ॥

समुदितमुकुटामृतांशुनेत्रज्वलनमहःप्रसरेण माधवस्य ।
अतनुत समशीततापयोगे भुवनगुरुर्भगवानिवोपदेशम् ॥ ८ ॥

मुकुटेऽमृतांशुश्चन्द्रो नेत्रे ज्वलनस्तयोः समुदितं मिश्रीभूतं यन्महस्तेजस्तस्य प्रसरेण हेतुना भुवनगुरुर्भगवानीश्वरो माधवस्य वसन्तस्य समयोः शीततापयोर्योग उपदेशमिवाकरोत् । वसन्ते शीततापावस्था वास्तवी तत्रोत्प्रेक्ष्यते । धृतनेत्राग्निश्चन्द्रमौलेरुपदेशादिव जाता । अत एव 'भुवनगुरुः' इति समुचितः पाठः ॥

इति परिमलमालभारिणस्तच्चरितमृतोरुपनीय नेत्रमैत्रीम् ।
भणितिमणिवतंसमेवमीशो गिरिदुहितुः श्रुतिवर्त्मनि व्यधत्त ॥ ९ ॥

परिमलमालां बिभ्रत ऋतोर्वसन्तस्य चरितं लताविकासादिकं नेत्रमैत्रीमुपनीय वीक्ष्य गिरिपुत्र्याः कर्णे हर एवं भणितिरुक्तिरेवातिमनोहरत्वान्मणिवतंसं रत्नभूषणं चक्रे । गौर्या वसन्तगुणान्दर्शयितुमुवाचेत्यर्थः । 'इष्टकेषीकामालानाम्—' इति मालाशब्दस्य ह्रस्वः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यवशब्दस्याकारलोपः ॥

सुरभिमनुगृहाण देवि नृत्यन्मधुकरकेतकबन्धुभिः कटाक्षैः ।
भवतु शबलमन्तिकं वनानां विहरदनङ्गविलासकृष्णसारैः ॥ १० ॥

देवीति महत्त्वोचितमामन्त्रणम् । नृत्यन्तो मकरन्दभोगानन्देनेतस्ततः प्रसरन्तो मधुकरा येषु तेषां केतकानां सदृशैः कटाक्षैर्वसन्तमनुगृहाण । वसन्तकृतं लताविकासादिकं पश्येत्यर्थः । अनुगृहाणेति देवीत्यामन्त्रणानुगुणम् । अनङ्गस्य विलासार्थं कृष्णसारैर्मृगैर्वनानामन्तिकं शबलं विचित्रं भवतु । भ्रमराः कृष्णमण्डलस्थानीयाः, केतकानि शुक्लमण्डलस्थानीयानि ॥

स्तबकयति यथायथं कठोरद्युतिनिकरस्तरणिस्तवायताक्षि ।
स्मरकरिकरसीकराङ्ककारैः श्रमजलबिन्दुभिराननेन्दुबिम्बम् ॥ ११ ॥

यथायथं यथोत्तराधिकं कठोरो दुःसहो द्युतिनिकरो यस्य स तरणिः सूर्यस्तव मुखचन्द्रं घर्माम्बुकणैः स्तबकयति स्तबकवन्तं करोति । स्मरकरिणः करसीकराः कराम्बुकणास्तेषामङ्ककारैः स्पर्धाकारैः । घर्मजलकणान्नैर्मल्यात्पुष्पगुच्छाकारान्सूर्यः स्वरश्मिभिर्दर्शयतीत्यर्थः । आयताक्षीत्यामन्त्रणं स्वाभाविकनेत्रविकासद्योतनार्थम् ॥

रचय चटुललोचनच्छटानामतिथिमथ श्लथनिद्रमब्जखण्डम् ।
ऋतुकुलपतिरेतु किं च ताभिर्विधुतसितासितकेलिचामरत्वम् ॥ १२ ॥

चटुलानां नेत्रच्छटानामतिथिं दर्शनविषयं विकसितं कमलकुलं कुरु । वीक्षस्वेत्यर्थः ।

पद्मेभ्यो नेत्राणामधिकगुणत्वं युक्त्या प्रतिपादितम् । अथ ऋतुकुलस्य पतिर्वसन्तो विधुते वीजिते सितासिते केलिचामरे यस्य तद्भावमेतु । दृष्टीनां सितासितत्वाच्चपलत्वाच्च चामरत्वम् । राज्ञश्च चामरवीजनमुचितम् ॥

मुखमनुसृतदीर्घमत्सरं ते सहजरुचिप्रतिवादतोऽम्बुजेषु ।
प्रभवति गिरिराजपुत्रि सोढुं कथमपि तत्सुहृदो न पादपातम् ॥१३॥

मुखस्य सहजा स्वाभाविकी या रुचिस्तस्याः पद्मैरकृत्रिमशोभया प्रतिवादः स्पर्धा तस्मात्पद्मेष्वनुसृतः प्राप्तो दीर्घो मत्सरो रोषो येन तन्मुखं कर्तृ तत्सुहृदः पद्मबन्धोः सूर्यस्य पादपातं रश्मिस्पर्शं चरणताडनं च सोढुं न प्रभवति न शक्तम् । गिरिराजपुत्रीत्यामन्त्रणं सौकुमार्यख्यापनार्थम् । मित्रबलेनार्जितया शोभया वास्तव्याः शोभायाः स्पर्धया कस्मिंश्चिज्जातमत्सरः कश्चित्प्रतिपक्षमित्रचरणेन ताडनं न सहते । तत्पक्षे राजपुत्रीति साभिमानत्वख्यापनार्थम् ॥

तदुपरि परिवारधारितं ते नवघनचक्रसगोत्रमातपत्रम् ।
स्पृशतु शुभवपुर्निधानरक्षापरिचितमण्डलितासितोरगत्वम् ॥१४॥(तिलकम्)

तत्तस्माद्धेतोस्तवोपरि परिवारेण धारितं नवघनचक्रस्य सगोत्रं समं तापवारणात् । आतपत्रं छत्रं तव शुभं यद्वपुस्तदेव निधानं निधिस्तस्य रक्षार्थं परिचितः संनिहितोऽतो मण्डलितो मण्डलीकृताकारो योऽसितोरगः कृष्णसर्पस्तद्भावमेतु । निधेश्च रक्षार्थं समीपे कृष्णसर्पो वसति ॥

विघटय घुसृणेऽधुनाधिकारं रचय च सूत्रितसङ्गमङ्गमङ्गम् ।
मलयरुहरसैः स्मरप्रतापज्वलनविलीनशशिप्रभासपत्नैः ॥ १५ ॥

इदानीं शैत्याभावात्त्वं घुसृणे कुङ्कुमेऽधिकारं प्रस्तावं विघटय वारय । कुङ्कुमं ह्युष्णवीर्यम् । अतः स्मरप्रतापाग्निना विलीना याः शशिप्रभास्तासां सपत्नैः समैर्मलयरुहरसैश्चन्दनद्रवैः सूत्रितष्टङ्कितः सङ्गो यत्र तदङ्गमङ्गं कुरु । अधुना तापोद्रेकः, अतः प्रत्यङ्गं चन्दनलेपं कुरु ॥

मलयजरजसा हृतावकाशं तनुषु चकोरदृशामसूययेव ।
स्तवककपटतोऽद्य धीरमास्ते विरचितपाशमशोकमञ्जरीषु ॥ १६ ॥

चकोरदृशां स्त्रीणां तनुषु तापवशान्मलयजरजसा चन्दनरसेन हृतोऽवकाशो यस्य तद्धीरं कुङ्कुममशोकगुच्छच्छलादशोकलतासु रुषा कृतोद्बन्धनमिवास्ते । यस्य च स्त्रीदेहे भोगानवकाशः सोऽसूयया पाशमुद्बन्धनं करोति ॥

पथिकयुवतिभिः कृताभिषेको नयनजलैः सकलर्तुचक्रवर्ती ।
त्वदधरदलकान्तितस्करीभिः स्थितमथ पाटलिभिर्दरिद्रनिद्रम् ॥१७॥

पान्थवधूभिर्विरहव्यथया नेत्रवारिभिर्ऋतुचक्रवर्ती वसन्तः कृताभिषेकोऽभिषिक्तः । विरहिणीरोदनेन वसन्तस्याज्ञाप्रतिहताभूदित्याशयः । अथानन्तरं त्वदोष्ठपल्लवशोभायास्तस्करीभिश्चौरीभिः पाटलिभिः पुष्पविशेषैर्दरिद्रा नष्टा निद्रा संकोचो यत्र, एवं कृत्वा स्थितम् । विकासो लब्ध इत्यर्थः । चक्रवर्तिनश्चाभिषेके सति चौरा भयवशाद्दिवानिशं निद्रारहितत्वेन तिष्ठन्तीत्युचितम् । स्थितमिति 'नपुंसके भावे क्तः' ॥

निबिडितकुचकुड्मलास्तरुण्यो विदधति यस्य तरोर्हठावगूढम् ।
भवति वृततनुः स पुष्पपूरैरुपनमदद्भुतभृङ्गसाधुवादः ॥ १८ ॥

यस्य तरोः सामर्थ्यात्कुरबकस्य तरुण्यो हठेन निबिडमवगूढमालिङ्गनं कुर्वन्त्यत एव निबिडितानि चक्ररूपाणि संपादितानि कुचकुड्मलानि तुङ्गत्वान्मुकुलाकाराणि यासां ताः। स कुरबकः पुष्पपूरैर्वृततनुर्व्याप्तमूर्तिर्भवति । रामालिङ्गनेन कुरबकस्य विकासलाभात् । अत एवोपनमन्नाप्नुवन्नद्भुतोऽभूतपूर्वो भृङ्गानां भ्रमराणां साधुवादो यस्य । सस्पृहमागच्छतां भ्रमराणां गुञ्जितं साधुवादत्वेन रूपितम् । यस्य च सौभाग्यलोभात्तरुण्यो हठेनालिङ्गनं कुर्वन्ति, तं भृङ्गाः कामुकाः स्तुवन्ति तस्मिन्पुष्पाणि च मुञ्चन्ति ॥

मलयगिरिभुवां लतारजोभिर्विरचितनेत्रपटोपकल्पनानाम् ।
भवति युवजनः समीरणानां क्व न पृथुमान्मथसंप्रदायशिष्यः ॥ १९ ॥

मलयगिरेर्भूरुत्पत्तिर्येषां तथा लतारजोभिः करणभूतैर्विरचिता अर्थाद्युवजनस्य नेत्रपटोपकल्पना नेत्राच्छादनवस्त्रकल्पना यैस्तेषां समीरणानां वायूनां तरुणलोकः पृथोर्महतो मान्मथस्य मन्मथसंबन्धिनः संप्रदायस्य परम्परागतस्य रहस्यक्रमस्य शिष्यः क्व न भवति । मलयवायौ वहति सति तरुणाः कामवशं गता इत्यर्थः । शिष्यस्य च रहस्योपदेशसमये गुरवो नेत्रपटं बध्नन्ति ॥

इह कचति पलाश एष मूर्त्या पवनचलारुणवर्णपुष्पपङ्क्त्या ।
विरहिमृगदृशामकालमृत्युर्बहुहतसंभृतपान्थजीवयेव ॥ २० ॥

पवनेन चला, न तु स्वतो गुच्छरूपत्वेन, गौरववशात् । अरुणवर्णा लोहिता पुष्पपङ्क्तिर्यस्याः । अतः संभाव्यते—बहवो हता राशीभूताः पान्थजीवाः पथिकजीवितानि यस्यास्तयेव मूर्त्या, इह विरहिणीनां मृगदृशामकालमृत्युरकस्मान्मरणादपमृत्युः, एष पलाशः कचति दीप्यते । पलाशः पलमश्नाति राक्षसः । स च बहूञ्जीवान्संहरति, तस्य च शोणानि चपलानि च नेत्राणि भवन्ति । 'पर्णपङ्क्त्या' इत्यपपाठः । नहि पलाशस्य पर्णान्यरुणानि, अपि तु पुष्पाण्येव । रक्तत्वाच्चपलत्वाच्च जीवोत्प्रेक्षणम् । जीवो हि ज्योतीरूपश्चपलश्च ॥

मदसहचरगन्धनिर्धुतैलापरिमल एष विशेषतो जगन्ति ।
मदयति मलयानिलोऽतिवेलं मदनमदद्विपकर्णतालवायुः ॥ २१ ॥

मदस्य गजसंबन्धिनः सहचरः सदृशो यो गन्धः सौरभ्यं तेन हेतुना निर्धुतो जित एलापरिमलो येन । तथा मदन एव मदगजस्तस्य कर्णतालौ । तालशब्दः प्रशंसावचनः । तयार्वायुरेष मलयवायुरतिवेलं भृशं जगन्ति मदयति मत्तानि करोति । मलयानिलस्पर्शाद्बहुलीभूतरागाः शृङ्गारिणो रात्रावुचितां क्रीडां दिवा कुर्वन्तीत्यर्थः । मलयवायोः कर्णतालवायोश्च जातिभेदाभावेऽपि व्यक्तिभेदमाश्रित्य रूप्यरूपकभावोक्तिः ॥

मुखमरुदिव चन्दनाचलस्य स्मितमुखि दक्षिण एष गन्धवाहः ।
मुखरयति जयाय मीनकेतोः परभृतगारुडरत्नशङ्खपालीः ॥ २२ ॥

चन्दनाचलस्य मलयस्य मुखमरुदिवैष दक्षिणो गन्धवाहः पवनो मीनकेतोः कामस्य जयार्थं परभृताः कोकिला एव गारुडरत्नशङ्खपाल्यः प्रशस्ता गारुडरत्नशङ्खास्तान्मुखरयति । मलयवायौ वहति सानन्दाः कोकिलाः कूजन्तीत्यर्थः । माङ्गलिकत्वाच्छङ्खशब्देन जयो भवतीति शकुनशास्त्रविदः । गण्डपालीवत्पालीशब्दः प्रशंसायाम् ॥

शशिकरमृगतृष्णिकाधिकाराद्विचकिलरेणुषु विप्रलब्धजिह्वः ।
भरमपि परमार्थचन्द्रिकाया दशति न पश्य चिरं चकोरशावः ॥२३॥

विचकिलानां पुष्पविशेषाणां रजःसु शुभ्रत्वात्सर्वत्र स्थितत्वाच्च शशिकरा इति मृगतृष्णिका भ्रमस्तस्याधिकारात्प्रस्तावाद्विप्रलब्धा प्राप्तविसंवादा जिह्वा रसना यस्य स चकोरशावः सत्यज्योत्स्नाया अपि भरं न पिबति त्वं पश्य । पश्येत्यस्य वाक्यार्थः कर्म । एते चन्द्ररश्मय इति मत्वा चकोरशिशुना विचकिलरेणून्भोक्तुं प्रारब्धं ततोऽप्राप्तास्वादः सत्यज्योत्स्नामपि तथैव मत्वा नास्वादयतीत्यर्थः । चकोरशाव इति साकूतम् ॥

सपदि रविजदिग्भुवः समीरा विषमशराजगरस्य फूत्कृतानि ।
विरहिहरिणचक्षुषां शरीरं निदधति हालहलस्य दीर्घिकासु ॥ २४ ॥

रविजो यमस्तस्य दिग्दक्षिणा दिक्, ततो भूरुत्पत्तिर्येषाम् । तथा विषमशरः कामः स एवाजगरः सर्पस्तस्य फूत्कृतानि फूत्काराः समीरा वाता विरहिणीनां शरीरं हालाहलस्य विषभेदस्य दीर्घिकासु वापीषु निदधति निहितवन्तः । मलयवायुस्पर्शाद्विरहिण्यो विषव्यथां प्राप्नुवन्तीत्यर्थः । रविजदिगिति साकूतम् ॥

मदनहुतवहेऽध्वगोत्पलाक्षीजनहृदयाहुतिदानदीक्षितस्य ।
अलिततिरियमाज्यधूमराजिः सुरभिमुनेर्बकुलोटजादुदेति ॥ २५ ॥

मदनः कामः स एव दाहकत्वाद्धुतवहोऽग्निस्तत्राध्वगोत्पलाक्षीजनस्य विरहिणीलोकस्य संबन्धि यद्धृदयं सैवाहुतिस्तस्या दानं कामाग्नौ प्रक्षेपस्तत्र दीक्षितस्य कृतनियमस्य सुरभिमुनेर्वसन्तर्षेः संबन्धिनो बकुलोटजाद्बकुलवृक्षपर्णशालासकाशादियमलिततिर्भ्रमरपङ्क्तिराज्यधूमराजिर्हविर्धूमरेखोदेति । धूमेन यथाहुतिदानं तथा भ्रमरपङ्क्त्या कामाग्नौ हृदयहोमो लक्ष्यते ॥

विटपिभटजनोऽयमुन्मदिष्णुर्मधुकरपद्धतिलोहवर्मबन्धात् ।
नयति मकरलक्ष्मणो नियोगं सकलसुरासुरशेखराग्रशय्याम् ॥ २६ ॥

मधुकरपद्धतिर्भ्रमरपङ्क्तिरेव श्यामलत्वाल्लोहवर्म शस्त्रकवचस्तद्योगादुन्मदिष्णुर्दृप्तो विटपिभटजनो द्रुमयोधलोको मकरलक्ष्मणः कामस्य संबन्धिनं नियोगमाज्ञां सकलसुरासुराणां शेखरा मौलयस्तेषामग्राणि तान्येव शय्या विश्रान्तिस्थानं तां नयति । समरान्वृक्षान्दृष्ट्वा मदनमोहिता जाता इत्यर्थः । बद्धकवचा भटाश्च प्रभोराज्ञां जगन्मौलिं नयन्ति ॥

य इह पथिकविप्रयोगदीर्घीकरणवशादुदभून्मधोरधर्मः ।
मुकुलितरजनैः स चक्रनाम्नां विरहतनूकरणेन तस्य शान्तः ॥ २७ ॥

पथिकानां विप्रयोगदीर्घीकरणं विरहबाहुल्यजननं ततो हेतोर्वसन्तस्य योऽधर्मः समजनि मुकुलितात्पीकृता रजनिर्निशा येन तस्य वसन्तस्य चक्रवाकानां विरहतनूकरणेन सोऽधर्मः शान्तो व्यपेतः । मधोः स्वाधिकारे वर्तमानस्य पथिकविरहवर्धनेनोत्पन्नस्याधर्मस्य चक्रवाकविरहाल्पीकरणान्निवृत्तिरिति समताख्योऽलंकारः । लब्धविभवो वसन्तो यथेष्टमचेष्टतेत्यर्थः ॥

वहति मुहुरदक्षिणः समीरो भवति निशा च नितान्तदीर्घयामा ।
वपुषि पुलककम्पसंपदास्ते मधुसमयः शिशिरर्तुरेव तस्याः ॥ २८ ॥

वहतीत्यादि नवभिः कुलकम् ।। विरहव्यथावर्धनाद्भृशमत्यर्थमदक्षिणोऽप्रतिकूलः समीरो वायुर्वहति । निशा रात्रिश्च नितान्तमत्यर्थे दीर्घा यामा यस्याः । विरहस्य दुरतिवाहत्वात् । तस्या वपुषि पुलको रोमाञ्चः कम्पश्च तयोः संपदास्ते । त्वद्भोगभावनाबलात् । एवं सति तस्यास्त्वत्प्रियायां वसन्तः शिशिरर्तुरेव भवति । शिशिरवद्वसन्तेऽपि प्रियसङ्गस्य भावनात् । शिशिरर्तौ चादक्षिण उत्तरदिग्भवो वातो वहति, रात्रिश्च दीर्घप्रहरा, पुलककम्पौ च शिशिरः करोति ॥

शयनमपि सरोजिनीपलाशैर्मनसिजसैन्यसितेतरातपत्रैः ।
अमृतकरतनोस्तनोति तस्या घटितविधुंतुदसंततिप्रतिष्ठाम् ॥ २९ ॥

मनसिजसैन्यस्य कामकटकस्य धवलत्वलक्षणार्थे सितेतराणि कृष्णान्यातपत्राणि च्छत्राणि तैः सरोजिनीपलाशैर्नलिनीदलैरपि शयनं शय्या घटिता लग्ना या विधुंतुदसंतती राहुश्रेणिस्तस्याः प्रतिष्ठां पर्यवसानं करोति । कस्याः । अमृतकरसदृशी मूर्तिर्यस्यास्तस्यास्त्वत्प्रियायाः । त्वत्प्रिया चन्द्रसदृशी तस्या नलिनीदलैरपि शय्या राहुवद्व्यथां करोति । त्वद्विरहादिति प्रतीयमानो हेतुः । पद्मिनीपत्राणां बहुत्वात्संततिरुक्ता ॥

वपुषि शुचिमुपोढगाढतापे दृशि च भृशोदकवर्षभाजि वर्षाः ।
वहति कृशतनुर्हठापकारिण्युपचितमन्तुतयेव सा वसन्ते ॥ ३० ॥

वल्लभा शुचिमाषाढं शरीरे वहति । यत उपोढो दृढो गाढो दुर्वारस्तापो येन । आषाढो हि गाढतापलक्षणः । तथा सा दृशि दृष्टौ वर्षाः प्रावृषं वहति । यतो भृशमुदकवर्षमश्रुरूपं भजन्त्याम् । अत एव कृशतनुर्दुर्बला । अत उत्प्रेक्ष्यते—विरहोद्दीपकत्वाद्धठेनापकारिण्यपकर्तरि वसन्त उपचितो वृद्धिं गतो मन्तुर्मन्युर्यस्य तद्भावेनैव वसन्तस्तस्या विरहव्यथां वर्धयति । अतो मन्तुनेव सा वसन्तप्रतिद्वन्द्विनो ग्रीष्मादीञ्शरीरादौ धारयति । अमित्रसंबन्धी च शत्रुर्लोके मान्यः ॥

अधिकरतलमाननस्य निद्रा परमुरसो नयनाम्भसावगाहः ।
श्वसितपवनपानमेव तस्यास्तव विरहादियती शरीरयात्रा ॥ ३१ ॥

तव विरहाद्भवतः संगमाभावात्तस्याः शरीरयात्रा देहगतिरियती । तामेव दर्शयति—अधिकरतलं हस्ततल आननस्य मुखस्य निद्रा संवेशः । नयनाम्भसाश्रुणा केवलं वक्षसोऽवगाहनं स्नानम् । श्वसितं निःश्वासः, अधरयोः पानमेव शोषकम्, स्नानपाननिद्राः प्राणिनां शरीरगतिः । तस्याश्च त्वद्विरहे ता एव भवन्ति । अतः प्रत्यासन्नमरणेति सूचितम् ॥

विवृतसहजसौरभाभिषेकश्वसितवशंवदभृङ्गवेणिभङ्ग्या ।
असितरविजपाशदन्दशूकैः प्रथयति सा हठलिह्यमानमायुः ॥ ३२ ॥

विवृतः प्रकाशितः सहजोऽकृत्रिमः सौरभाभिषेकः सौगन्ध्यस्नानं यैस्तानि निःश्वसितानि निःश्वासास्तेषां वशंवदायत्ता या भृङ्गवेणिः । मालात्वाद्वेणिरूपणम् । तद्व्याजादसिताः कृष्णा ये रविजपाशदन्दशूका यमपाशसर्पास्तैर्हठेन तरसा लिह्यमानमास्वाद्यमानमायुः प्राणान्प्रथयति प्रकाशयति । भ्रमरपङ्क्तैर्विरहोद्दीपकत्वान्मुमूर्षुः सा भ्रमररूपैः कृष्णैर्यमसंबन्धिभिः पाशसर्पैः पीयमानप्राणेव संभाव्यते । वाताहारत्वमुत्प्रेक्षाबीजम् ॥

श्रवणपुटतटाभिघातमक्ष्णोर्मलयमरुद्घनमोहतन्त्रवायः ।
रथहरिणमपत्रपानभिज्ञं रचयितुमिच्छुरिवोच्छिनत्ति तस्याः ॥ ३३ ॥

तस्या अक्ष्णोर्नेत्रयोः श्रवणपुटतटेन कर्णद्वयान्तेनाभिघातं प्रसरणनिरोधं मलयवायू रचयति । यतो घनस्य मोहस्य मूर्छायाः कुविन्दः । कर्तेत्यर्थः । मोहं पटस्थानीयं यस्तन्त्रयति स तन्त्रवायकः । तस्या दृष्टिः कर्णान्तव्यापिन्यासीत् । अद्य पुनर्मलयवायोर्विरहोद्दीपकत्वान्मूर्छायां दृष्टिर्नोन्मीलतीत्यर्थः । अत उत्प्रेक्ष्यते—स्वं रथमृगमपत्रपाया दृष्टिकीर्तिपराजयजाताया अनभिज्ञमज्ञातारं कर्तुमिच्छुरिव । मद्रथमृगस्य दृष्टिविस्तारकीर्तिमेषातिविस्तीर्णया स्वदृष्ट्या मा हार्षीदितीव वायुस्तद्दृष्टिं निमीलयतीति वाक्यार्थः ॥

भ्रमरकलकलासहिष्णुरास्ते चिरमबला निमितेक्षणा कुचाग्रे ।
हृदयगृहविहारिणः कथंचित्तव वचनश्रवणाभिवाञ्छयेव ॥ ३४ ॥

हृदये धृतस्य तव वाक्यं श्रोतुमिच्छयेव भ्रमरकोलाहलमसहमाना साबला स्तनाग्रे निश्चलदृष्टिरास्ते। अधोमुख्यास्त इत्यर्थः॥

भृशकृशमहरिष्यदेव तस्या वपुरपसव्यसमीरणो रयेण।
यदि न समजनिष्यतोज्जिहानस्तनजघनस्थलगौरवान्तरायः॥ ३५॥

विरहवशाद्भृशं कृशं तनूकृतं तस्याः शरीरमपसव्यो दक्षिणः समीरणो मरुद्रयादहरिष्यदेव यदि नोज्जिहानमुन्नतमुद्गच्छत्पृथु यत्स्तनजघनस्थलं तेन गौरवं तदेवान्तरायो देहहरणे विघ्नः [यदि न] समजनिष्यत समुदपत्स्यत॥

विषममृतसनाथमुद्गिरन्त्यो युवतिमहाविरहार्तिकीर्तनेन।
अभिदधति रसाञ्चितैर्वचोभिर्युवजनमित्यचिरादुपेत्य सख्यः॥ ३६॥

युवतीनां तरुणीनां महती विरहार्तिर्विरहव्यथा तस्याः कीर्तनेन निवेदनेनामृतसमेतं विषमुद्गिरन्त्यः। अमृतसहितत्वं विरहव्यथया दुःखस्याश्वासस्य च जननत्वात्। रसेनाञ्चितैः शोभितत्वेन पूजितैः पूर्वोक्तैर्वचनैर्वल्लभलोकं सख्य एत्याभिदधति कथयन्ति॥ कुलकम्॥

मनसि धृतिलतां विबाधमानो मुकुलबृहत्करकौघदुर्दिनेन।
कुसुमशरयशश्छटाविवर्तस्तुदति वियोगिजनस्य सिन्धुवारः॥ ३७॥

मुकुलानि कलिकास्तान्येव बृहत्करकौघो वर्षोपलप्रवाहस्तस्य दुर्दिनेन वर्षेण विरहिजनस्य चित्ते वर्तमाना धृतिर्धैर्यं सैवाल्पत्वाल्लता तां बाधमानः। कोरकाणां वर्णसंनिवेशाभ्यां करकाभी रूपणम्। करकाश्च लतां बाधन्ते। कुसुमशरस्य कामस्य संबन्धिनीनां यशश्छटानां विवर्तः परिणामः सिन्धुवारो विरहिजनस्य तुदति। वियोगिजनस्येति कर्मणः शेषत्वविवक्षायां षष्ठी। 'न माषाणामश्नीयादितिवत्क्रियाश्रुतावपि कारकत्वपरिहारेणा संबन्धमात्रस्याविवक्षितत्वात्षष्ठी' इति न्यासकारः॥

प्रकृतिमभिसरन्निजां कथंचिद्घनहिमदुर्दिनगर्भवासमुक्तेः।
जगदुपवदते शनैरुदञ्चत्सरसिजभर्तुरयातयाममोजः॥ ३८॥

घनहिमं यद्दुर्दिनं मेघच्छन्नमहस्तदेव गर्भवासस्ततो मुक्तेर्निष्क्रमणात्स्वां प्रकृतिमभिसरदनुसरदयातयाममपर्युषितम्। नवमित्यर्थः। शनैः क्रमेणोदञ्चद्वृद्धिं गच्छत्सरसिजभर्तुः सूर्यस्य संबन्धि तेजो जगदुपवदते सान्त्वयति॥

चटुलितसिचयाञ्चलच्छटाभिर्मुरलपुरन्ध्रिकुचेषु पुष्पकेतोः।
भुवनविजयकीर्तिवैजयन्तीर्मरुदयमुत्क्षिपतीव दाक्षिणात्यः॥ ३९॥

मुरला दाक्षिणात्या जनपदविशेषा एतत्स्त्रीस्तनेषु चटुलिताः कम्पिता याः सिचयाञ्चलच्छटा वस्त्रान्तपङ्क्तयस्ताभिः करणभूताभिः पुष्पकेतोः कामस्य भुवनविजयेन या की-

तिस्तस्या वैजयन्तीः पताका इव दाक्षिणात्यो मरुन्मलयवायुरुत्क्षिपति । वायुना कम्पितानां मुरलस्त्रीवस्त्रप्रान्तानां कामोद्दीपकत्वात्पताकात्वेन संभावनम् ।।

युवजनघनकेलिसूत्रधारो विरहिशरीरनवीनवह्निवर्षः ।
स्खलति बत न सैंहलो नभस्वान्क्षणमपि मानशरव्यसव्यसाची।।४०।।

युवजनस्य तरुणलोकस्य घनकेलेरनवरतक्रीडायाः सूत्रधारः सूचकः । तथा विरहिणीनां शरीरस्य नवीनो वह्निवर्षः । अग्निवर्षवद्व्यथां करोतीत्यर्थः । सैंहलः सिंहलदेशादागतो वायुः स न स्खलति । माननाम्नो लक्ष्यादपराद्धो न भवति । मानशरव्ये मानलक्ष्ये सव्यसाची वामदक्षिणयोधी । वर्षशब्दः पुंस्यपि वर्तते ॥

ज्वलितदलदशोकयातनाग्निस्तरलतमालतरुच्छदासिपत्त्रा ।
निरयति गुरुमानदुष्कृतानामुपवनभूमिरवामनस्तनीनाम् ।। ४१ ।।

दलन्ति विकसन्ति यान्यशोकानि स एव यातनाभिर्नरकतीव्रपीडाभिर्ज्वलितो यत्र । तमालतरुच्छदा एवासिपत्त्राणि नरकोचितक्रकचपत्त्राणि चपलानि यस्यां सा उपवनभूमिरुद्यानभूर्गुरुर्दुर्वारो यो मानः स एव वल्लभकदर्थनाद्दुष्कृतं पापं यासां तासामवामनस्तनीनामुन्नतकुचानां तरुणीनां निरयति निरय इवाचरति । 'सर्वप्रातिपदिकेभ्यः क्विप्' इति क्विप् । उद्यानभूमिः कामोद्दीपनत्वात्तरुणीनां नरकव्यथा संपद्यत इत्यर्थः । गुरुमानदुष्कृतानामिति विशेष्यपदे वा तदा फलत्वेनेत्यर्थायोज्यम् ।।

रतिरमणनटस्य पान्थनारीजनवधनाटकनर्तनोन्मुखस्य ।
व्रजति जवनिकालिपिं पुरस्तात्पवनविसारितचूतपांसुपट्टः ।। ४२ ।।

पान्थानां पथिकानां नारीजनस्तस्य वधः स एव नाटकं तत्र नर्तनं तत्र संमुखस्य । रतिरमणः कामः स एव नटः शैलूषस्तस्य पुरस्तादग्रे पवनेन विसारिता विकीर्णा ये चूतानां पांसवस्त एव पट्टो जवनिकायास्तिरस्करिण्या लिपिं भङ्गिं व्रजति । चूतरजोभ्यः प्रादुर्भूय कामः पान्थस्त्रीर्हन्तीत्यर्थः । नटश्च जवनिकाया निर्गत्य नाटकं संपादयति ।।

विनमदसमबाणचापमौर्वीरवबधिरीकृतसप्तलोकरन्ध्रे ।
मुखरमधुकरेऽस्त्यमुत्र चैत्रे कथमिव मानवतीजनस्य निद्रा ।। ४३ ।।

मुखराः शब्दायमाना मधुकरा भ्रमरा यत्र । अतः संभाव्यते—विनमद्यदसमबाणचापं कामधनुस्तस्य मौर्वी गुणस्तस्या रवः शब्दस्तेन बधिरीकृतानि सप्तलोकरन्ध्राणि सप्तभुवनान्तराणि यस्मिन्नमुत्र चैत्रे मानिनीलोकस्य निद्रा कथमिवास्ति । अथवा विश्वस्य बधिरीकरणात्स्मरोद्दीपनाच्च निद्राया अभावः । 'विनमदित्यत्राव्यभिचारगतार्थत्वादप्रयुज्यमानमधःप्रदेशमिति कर्मपदमत्र योज्यम् । अन्यथा 'न दुहस्नुनमां यक्चिणौ' इति [यक्चिणोः प्रतिषेधेऽपि] कर्मवद्भावादात्मनेपदं स्यात् । 'नमते दण्डः' इतिवत्' इति केचित् ।।

शिखरिदुहितुरुत्तरङ्गसूक्तिव्यवहृतिभिः शशिखण्डमुण्डमाल्ये ।
इति भगवति कंचन प्रसादं कृतवति कर्णरसामृतप्रपाभिः ॥ ४४ ॥

मधुमुपनयता रदांशुतन्त्रैरभिनवकेतकसूचिसख्यरेखाम् ।
भगवदभिमुखं शनैरथेत्थं विशदमगादि शिलादनन्दनेन ॥४५॥ (युगलकम्)

शिखरीत्यादि श्लोकद्वयेन संबद्धार्थेन युगलकम् । कर्णयो रसार्थमास्वादार्थममृतप्रपाभिः सुधाशालिकाभिः । अथवा कर्णयो रस आस्वादः स एवामृतं तस्य प्रपाभिः पानस्थानैरुत्तरङ्गाः सोल्लासा याः सूक्तिव्यवहृतयो वसन्तगुणवर्णनानि ताभिः शिखरिदुहितुः पार्वत्याः शशिखण्डमुण्डमाल्ये चन्द्रार्धमुकुटभूषणे भगवति महेश्वरे कमपि प्रसादं कुर्वति सति भगवदभिमुखं महेश्वराग्रे शिलादनन्दनेन नन्दिना विशदमगादि स्फुटमभाणि । अतो रदांशूनां दन्तरश्मीनां तन्त्रैः प्रपञ्चैर्मधुं वसन्तमभिनवमपूर्वं यत्केतकसूचिभिः सूचीकरपत्रत्वात्सूचिभिः सख्यं परिचयस्तद्भङ्गिमुपनयता । केतकानां वार्षिकत्वाद्वसन्तसख्यमपूर्वम् । भगवदभिमुखमिति भगवदुक्तेः सकाशान्नन्युक्तेरधिकगुणत्वं सूचितम् ॥

पिबदिव दिनलक्ष्मीं क्षीबतामेति चक्षु-
स्तरुणतपनसङ्गाद्गात्रमत्रस्तमास्ते ।
किमपरमनिमित्तोत्कण्ठया देव दृष्ट्वा
नवसुरभिविलासं माति न क्वापि चेतः ॥ ४६ ॥

सादरं निरीक्षणाद्दिनशोभां पिबदिव चक्षुर्मदविकारसदृशं विकासं घूर्णमानत्वमेति। तथा तरुणः सद्योमेघमुक्तस्तपनः सूर्यस्तत्परिचयाद्गात्रमङ्गमत्रस्तं त्रासरहितमास्ते । वसन्ते रवेः शीतोष्णरूपत्वाच्छीतोष्णत्रासरहितमङ्गमित्यर्थः । किमन्यत् । नव उद्भूष्णुर्यः सुरभिर्वसन्तस्तस्य विलासं दृष्ट्वा, अनिमित्तालम्बनशून्या योत्कण्ठा रुहरुहिका तया हेतुभूतया चेतः क्वापि न माति न वर्तते । तमः कृतसंकोचनिरासाद्वैपुल्यं भजत इत्यर्थः ॥

दूरं दृशां प्रहिणु नाथ मनाक्पतंग-
स्वाहाभुजंगशशिसङ्गभृतां तरङ्गान् ।
संजायतां समुदिताभिरथ प्रभाभि-
स्तासां दिशां घुसृणचन्दनलेपसंधिः ॥ ४७ ॥

हे नाथ स्वामिन्, पतंगः सूर्यः, स्वाहाभुजंगोऽग्निः, शशी चन्द्रः, तेषां सङ्गं योगं बिभ्रति तासां दृशां दृष्टीनां तरङ्गानुल्लासान्मनाग्दूरं प्रहिणु । किंचिद्दूरं पश्येत्यर्थः । अथ ततः समुदिताभिस्तासां प्रभाभिर्दृष्टिरश्मिभिर्दिशां स्त्रीत्वान्नायिकात्वेन व्यवहार्याणां घुसृणचन्दनाभ्यां लेपावङ्गरागौ तयोः संधिः सहावस्थानं संजायतां संपद्यताम् । चन्द्रस्य

प्रभाः श्वेताः, अग्न्यादित्ययो रक्ताः, अतः कुङ्कुमचन्दनाभ्यामुत्प्रेक्षणम् । चन्दनाश्च कुङ्कुमलेपोचिताः । नाथेत्यामन्त्रणप्रयोगात्प्रार्थने लोट् ॥

लिम्पन्नभो मरकतद्रवनिम्नगाभि-
　श्चान्द्रं महश्च घटयन्स्फटिकाश्मकूटैः ।
तन्वन्दिशां परिमलाद्वयवाददीक्षां
　पश्योल्लसत्ययमृतुः कुसुमावतंसः ॥ ४८ ॥

मरकतरत्नानां द्रवा युक्तिसाधिताः प्रवाहास्तेषां निम्नगास्ताभिर्नभो लिम्पन्नुपदिहानः। आकाशं श्यामलयन्नित्यर्थः । तथा स्फटिकाश्मनां कूटै रश्मिभिश्चान्द्रं महश्चन्द्रसंबन्धि तेजो घटयन्योजयन् । शशिरश्मीन्निर्मलयन्नित्यर्थः । अतिशयोक्तिद्वयम् । तथा परिमलस्याद्वयवादः परिमलैकमयत्वं तत्र दीक्षां नियमं दिशां तन्वन्नयं कुसुमावतंसः पुष्पभूषणमृतुर्वसन्तः स्फुरति । त्वं पश्येति वाक्यार्थः कर्म ॥

दिङ्मण्डली कनककेतकसिन्धुवार-
　कङ्केल्लिवल्लिपटलीशबलीकृतेयम् ।
चैत्रेण विश्वविजयाय झषध्वजस्य
　सज्जीकृताममरचापततिं व्यनक्ति ॥ ४९ ॥

कनककेतकानि सिन्धुवाराणि श्वेतानि कङ्केल्लिवल्लिरशोकलता विकसितपुष्पत्वाद्रक्ता तासां पटली समूहस्तेन शबलीकृता चित्रितेयं दिङ्मण्डली चैत्रमासेन कामस्य विश्वजयार्थं ढौकितामिन्द्रधनुःपङ्क्तिं प्रकाशयति । केतकादीनां विचित्रवर्णत्वादिन्द्रचापपङ्क्तिं व्यनक्ति ॥

प्राग्दक्षिणां दिशमशिश्रियदुष्णरश्मि-
　रभ्यग्रहीत्प्रणयितां मरुदुत्तरस्याः ।
उन्निद्रचूतसुहृदेष तयोस्त्विदानी-
　मन्योन्यदिग्विनिमयं समयः करोति ॥ ५० ॥

वसन्तात्पूर्वं हेमन्त उष्णरश्मिः सूर्यो दक्षिणां दिशमशिश्रियत् । तदैव मरुद्वायुरुत्तरस्या दिशः प्रणयितां परिचितत्वमग्रहीत् । उन्निद्राणां विकासिनां चूतानां सुहृत्सखैष समयो वसन्तस्तयोः सूर्यमरुतोरन्योन्यस्य स्वस्य संबन्धिन्योर्दिशोर्विनिमयं परिवृत्तिमिदानीं करोति । सूर्य उत्तरां दिशं प्राप्तः, वायुर्दक्षिणामित्यर्थः । एतेन वसन्तस्य प्रभुत्वं सूचितम् । राज्यरक्षार्थमुन्निद्राणां भटानां सखा राजा च भृत्यैः क्रान्तानां विषयाणां परिवृत्तिं करोति ॥

हेलावहन्मसृणदक्षिणगन्धवाह-
प्रेङ्खोलचम्पकशिखामधिरूढवन्ति ।
प्रेङ्खाविलासमधुना मधुनामुना य-
त्पश्य द्विरेफमिथुनान्यपि शिक्षितानि ॥ ९१ ॥

गण्डप्रभाभिरपहस्तितचम्पकाभि-
र्व्योम्नोऽतसीकुसुमसाम्यमपह्नुवाना ।
युष्मन्निदेशमधिगम्य विलासलोला
दोलातलं भगवती तदलंकरोतु ॥ ९२ ॥ (युगलकम्)

हेलया यत्नं विना वहन्मसृणो मन्दो दक्षिणो गन्धवाहो वायुस्तेन प्रेङ्खोलानि कम्पमानानि चम्पकानि तेषां शिखामग्रमारूढवन्ति द्विरेफमिथुनानि भ्रमरयुगलान्यप्यमुना वसन्तेन प्रेङ्खाविलासं दोलालीलां यच्छिक्षितानि ततो हेतोर्युष्मन्निदेशं भवदाज्ञामधिगम्य प्राप्य भगवती गौरी दोलातलमलंकरोतु शोभयतु । यतो विलासलोला लीलारसिका अतोऽपहस्तितानि निर्जितानि चम्पकानि याभिस्ताभिर्गण्डप्रभाभिः कपोलकान्तिभिः करणभूताभिर्हेतुभिः [हेतुभूताभिर्वा] व्योमस्यातसीकुसुमसाम्यं नीलत्वमपह्नुवाना छादयन्ती । गण्डकान्तियोगेनाकाशस्य [गौरत्व]प्रतिपादनात् ॥

आपीय स श्रुतिमुखेन सुधासनाभि
तन्नन्दिनो वचनमिन्दुकलाकिरीटः ।
देवीमवोचत दिशन्दशनांशुपूरै-
र्भूयोऽप्युपोढहिमतामिव दिङ्मुखेषु ॥ ९३ ॥

अभिप्रेतदोलाक्रीडोपदेशात्सुधासनाभ्यमृतसदृशं तन्नन्दिनो वचनं श्रुतेः, न तु लेखादेः, मुखेनापीय श्रुत्वेन्दुकलाकिरीटश्चन्द्रमौलिर्भूयोऽपि देवीमवोचत । अतो दशनानां दन्तानामंशुपूरै रश्मिभरैर्हेतुभिरुपोढहिमतां सतुहिनत्वं दिङ्मुखेषु भूयोऽपि दिशन्निव ॥

नन्दी यदिन्दुवदने मदनेन्द्रजाल-
दिव्योपदेशवति वक्ति तदद्य युक्तम् ।
आदत्स्व तत्परिकरं सुचिरं कुरुष्व
मल्लोचनान्यनुसृतामृतपारणानि ॥ ९४ ॥

मदनस्येन्द्रजालमद्भुतकर्म तत्संबन्धी दिव्यो लोकोत्तर उपदेशः शिक्षा विद्यते यस्यास्तस्या आमन्त्रणम् । कीदृशि । इन्दुवदने चन्द्रमुखि, नन्दी यद्वक्ति तदद्य वसन्ते युक्तमुपपन्नम् । त्वं तस्या दोलायाः परिकरं संभारमादत्स्व गृहाण । त्वं मन्नेत्राणि

प्राप्तामृतपारणानि कुरु । त्वद्दोलाक्रीडादर्शनेन मद्दृष्टेरमृतपारणं जायताम् । यावत्त्वदीयदोलादर्शनं न जातं तावन्नेत्रयोरुपवासोऽभूत् । जाते तु दोलाक्रीडादर्शने पारणं भविष्यतीत्यर्थः ॥

दोलां मदाशयमिवानुबधान नाके
मद्दृष्टिभिः सह विधेहि गतागतानि ।
त्वत्कण्ठमौक्तिकततिप्रतिपत्तिभिः खे
संजायतामितरतारकवर्गसर्गः ॥ ९९ ॥

मदाशयं मम हृदयमिव दोलां नाके स्वर्गेऽनुबधान । पार्वत्यां स्नेहवशादीश्वरहृदयं बन्ध्यत्वे साधारणे धर्म उपमानम् । मम दृष्टिभिः सह त्वं दोलाभिर्गतागतानि कुरु । यथा यथा पार्वतीदोला गतागतानि कुरुते तथा तथा भगवद्दृष्ट्योऽपीति सहार्थः । एतेन भगवत्संबन्धी कौतुकप्रेमसंकरो द्योतितः । दोलोत्फालावसरे त्वत्कण्ठमौक्तिकानां प्रतिपत्तिभिः स्वीकारैः खे नभसीतरः प्रजापतिकृतादन्यो यस्तारकवर्गस्तस्य सर्गः संजायतामाविर्भवतु । त्वद्धारमुक्तास्तारात्वेन संभाव्यन्त इत्यर्थः । दोलादर्शनोत्कण्ठयास्माकमतिप्रेरणया तारापथं तावद्गच्छेत्युक्तियुक्त्या दोलालीलायामुत्साहयति ॥

ध्वानेन दोलनविलोलपदारविन्द-
संदानितौ मुखरतामखिलं नयन्तौ ।
त्वन्नूपुरौ रचयतां क्षणमन्तरिक्षं
प्रत्यक्षसिद्धनिजशब्दगुणप्रसिद्धि ॥ ९६ ॥

दोलाक्रीडया विलोले चपले ये पदारविन्दे पादपद्मे तयोः संदानितौ बद्धौ, अतो ध्वानेन शब्देन समस्तमन्तरिक्षं मुखरतां शब्दायमानत्वं नयन्तौ त्वन्नूपुरौ तव तुलाकोटी अन्तरिक्षमाकाशं प्रत्यक्षसिद्धः शब्दो गुण इति प्रसिद्धिर्यस्य तत्क्षणं रचयतां कुरुताम् । आकाशस्य शब्दो निजो गुण इति प्रसिद्धिरनुमानाश्रयाप्यधुना क्षणं प्रत्यक्षसिद्धा इन्द्रियप्राप्यास्तु । दोलायां वेगवशाद्दृष्टेरगोचरं दूरं गच्छन्त्यां त्वयि सत्यां केवलनूपुरशब्दश्रवणात् ॥

अन्तर्वसन्मदनसायकपुष्पगन्ध-
मभ्युद्धरन्निव घनस्तदनु श्रमेण ।
श्वासस्तव द्युसरिदब्जवनं वियोग-
मिन्दिन्दिरैर्नयतु सौरभचाटुकारैः ॥ ९७ ॥

तदनु दोलाखेलनमनु श्रमेणायासेन घनोऽनवरतः श्वासो निःश्वसितं द्युसरिदब्जवनं गङ्गापद्मवनमिन्दिन्दिरैर्वियोगं भ्रमरै रहितत्वं नयतु । यतः सौरभस्य सौगन्ध्यस्य चाटु-

कारैर्लुब्धैः। अथवा सौरभस्य श्वाससंबन्धिनश्चाटुकारैः प्रसिद्धिकारकैः। अतः संभाव्यते—अन्तर्मनसि वसन्नित्यं निवसन्मदनः कामस्तस्य सायकभूतानि च तानि पुष्पाणि तेषां संबन्धिनं गन्धमभ्युद्धरन्नूर्ध्वमाकर्षन्निव। नैसर्गिकं सौरभं सौगन्ध्यमत्र हेतुः। अस्माभिस्तथा दोलोत्फाल्यते यथा गङ्गानिकटमपि गच्छसीत्यर्थः। इति युक्त्योत्साहयति। श्रमे सत्यपि श्वासानां सौगन्ध्यवर्णनं पार्वत्या लोकोत्तरगुणत्वप्रतिपादनेनानुरागद्योतकम्॥

दोलेयमुम्भितवपुर्मणिभिर्विनिर्य-
न्निर्यन्त्ररश्मिनिकरेण सुसंहतोरु।
आरोढुमिद्धमनसे रभसेन तुभ्यं
दूरात्पुरो वितरतीव करावलम्बम्॥ ५८॥

हे सुसंहतोरु सुसंहतौ निबिडौ पीवरौ वा ऊरू यस्यास्तस्या आमन्त्रणम्। 'संहित–' इत्यूङ्। साकूतमामन्त्रणम्। विनिर्यन्प्रसरन्निर्यन्त्रो निर्निरोधो यो रश्मिनिकरस्तेन करणेनेयं दोला तुभ्यं पुरोऽग्रे करावलम्बं हस्तावलम्बं पाणिस्वीकारं दिशतीव। यतो दोलामारोढुमिद्धमनसे तत्परिचितायै मणिभी रत्नैरुम्भितवपुः पूरितमूर्तिः। पीवरस्य च त्वरया पर्यारोढुकामस्य हस्तस्वीकारो युक्तः॥

किं चेयमञ्चितमरुद्बलतो वलन्ती
दूरोच्छलत्कनकपीठमरीचिबाहुः।
आसन्नतावकपदप्रणयप्रमोदा-
त्पश्य प्रिये नभसि लास्यमिव प्रयुङ्क्ते॥ ५९॥

अञ्चितो मृदुत्वेन पूजितो यो मरुत्तद्बलेन वलन्तीतस्ततो गच्छन्ती, अत एव कनकपीठस्य सुवर्णचक्कलस्य मरीचयस्त एव बाहवो दूरमुच्छलन्तः प्रसर्पन्तो यस्याः सेयं दोला तावके त्वत्संबन्धिनी पदे चरणौ तयोः प्रणयः परिचयः। आसन्नोऽचिरभावी यः परिचयस्तेन प्रमोदो हर्षस्तस्माल्लास्यं नृत्तमिव करोति। अपूर्वप्राप्त्या तुष्टो यो नृत्यति तस्य च बाहुप्रसारणं भवति॥

एनां समीरवलनक्षणवाग्मिनीनां
नादैर्घनैश्चटुलकाञ्चनकिङ्किणीनाम्।
अभ्यर्थनामनुमुहूर्तमिवाचरन्ती-
मध्यासनादनुगृहाण गलद्विलम्बम्॥ ६०॥

समीरणस्य वातस्य वलनक्षणश्चलनावसरस्तदा वाग्मिनीनाम्। चटुला वायुवशाच्चपला याः काञ्चनकिङ्किण्यः सुवर्णसूक्ष्मघण्टिकास्तासां घनैर्नादैर्ध्वनिभिः प्रतिक्षणमारोहणरूपामभ्यर्थनां याच्ञां कर्मभूतामाचरन्तीं कुर्वन्तीमिवैनां दोलां गलद्विलम्बं कालातिपातरहितत्वेनानुगृहाण। अचिरेणैवारोहेत्यर्थः। प्रार्थयितुश्च महान्तोऽनुगृह्णन्ति॥

इति वचनमनीचोदञ्चिरोमाञ्चसूची-
सचिववपुरुमा तद्व्याहृतं वल्लभेन ।
श्रुतिपथमुपनीय प्रीतिकल्लोलिताक्षी
चिरविरलितलज्जा तां शनैरध्यरुक्षत् ॥ ६१ ॥

वल्लभेन भगवतेति पूर्वोक्तयुक्त्या व्याहृतमुक्तं वचनं कर्णान्तमुपनीय रसेन श्रुत्वा अनीचा उन्नता उदञ्चन्त्य ऊर्ध्वचारिण्यो या रोमाञ्चसूच्यः पुलककण्टकास्तासां सचिवं वपुर्यस्याः सा । अथवा रोमाञ्चसूच्यः सचिवाः सहभाविनो यस्य तद्वपुर्यस्याः । तथा प्रीत्यानन्देन कल्लोलितं तरङ्गितमक्षि नेत्रं यस्याः सोमा चिरेण विरलिता किंचिच्चलिता लज्जा यत्रैवं दोलां शनैः, न तु त्वरया, अध्यरुक्षत् ॥

अङ्गैः काञ्चनभङ्गभङ्गिभवनैर्भान्ती परं पार्श्वयो-
रुन्मीलन्मणिकर्णपूरकिरणैरुन्मुद्रितेन्द्रायुधा ।
आचस्कन्द तदेन्दुमौलिदयिता दोलाविलासक्रिया-
यातायातशतैरनभ्रगगनाविर्भूतविद्युद्द्युतिम् ॥ ६२ ॥

काञ्चनस्य भङ्गश्छेदस्थानं तस्य भङ्गिर्विच्छित्तिस्तस्या भवनैराश्रयैरङ्गैरवयवैर्भान्ती शोभमाना । तथा मणिकर्णपूरयो रत्नाभरणयोर्ये किरणाः । उन्मीलन्तो निर्गच्छन्तो ये किरणास्तैः पार्श्वयोः परमत्यर्थमुन्मुद्रितं टङ्कितमिन्द्रायुधमिन्द्रचापं यस्या यया वा सेन्दुमौलिदयितेश्वरी तदा वसन्ते दोलाविलासक्रिया [दोला]खेलनं तया यातायातानि गतागतानि तेषां शतैः करणभूतैरनभ्रं मेघरहितं यद्गगनमाकाशं तत्राविर्भूता प्रकटा संपन्ना या विद्युत्तस्या द्युतिं शोभां प्रापत् । परमुत्कृष्टमिति पूर्वविशेषणेन वा योज्यम् ॥

आलिम्पन्ती सकलककुभामन्तरालं विशालं
तस्या व्योम्नि व्यसरदसमा कापि लावण्यसिन्धुः ।
दोलोत्फालावपतनकलाडम्बरेण स्वयं सा
स्वैरं यस्यामसकृदकृतोन्मज्जनं मज्जनं च ॥ ६३ ॥

सकलककुभां सर्वासां दिशां संबन्ध्यन्तरालं मध्यमालिम्पन्ती व्याप्नुवती कापि लोकोत्तरा लावण्यमेवाविच्छिन्नप्रवाहत्वात्सिन्धुर्व्योम्नि नभसि विशालं व्यसरन्निरगमत् । यस्यां लावण्यसिन्धावसकृत्पुनःपुनर्मज्जनमुन्मज्जनं च सा स्वयमप्रेरिताकृता व्यतनोत् । दर्शनाभावान्मज्जनमन्यदुन्मज्जनम् । केन । स्वैरं दोलाया उत्फालावपतने ऊर्ध्वाधोगमने तयोर्वैदग्ध्यं तत्प्रपञ्चेन । दोलाक्रीडयात्यर्थं शोभामापदित्यर्थः ॥

शिखरिदुहितुः प्रेङ्खोत्फालक्रियावसरे गत-
श्रवणसरणेरग्रं वक्त्रप्रभावजयादिव ।

चटुलिततुलाकोटिध्वानोपहूतसितच्छद-

च्छविविचयनं चक्रे तत्र क्षणं क्षणदाकरः ॥ ६४ ॥

दोलोर्ध्वाक्रमणकाले शिखरिदुहितुः पार्वत्याः संबन्धिना वक्रेणावजयात्पराभवादिव चरणसरणेः पदपद्धतेरग्रं गतः क्षणदाकरश्चन्द्रश्चटुलितौ यौ तुलाकोटी नूपुरौ तयोर्ध्वानं रणनं तेनोपहूत आकारितो यः सितच्छदो हंसस्तस्य शोभा तस्या विचयनमनुकरणमकरोत् ॥

यस्तस्याः श्रमनीरसीकरभरः क्रीडातिरेकक्रमा-

दासीत्तं जवनो जहार पवनो लोलः कपोलस्थलात् ।

हेलानर्तितजागरूककनकाम्भोजाधिवासाकरं

स्वर्गङ्गाजलविन्दुवृन्दममुचत्तन्निष्क्रयायेव च ॥ ६५ ॥

तस्याः पार्वत्या दोलाक्रीडानुबन्धाच्छ्रमेण खेदेन नीरसीकरा घर्मकणास्तेषां भारो य आसीत्तं घर्मकणसमूहं कपोलस्थलाज्जवनः, न तु मन्दः, लोलः पवनो मरुज्जहार । लोलश्च हरति कमलनालम् (?) । हेलानर्तितानि जागरूकाणि यानि कनकाम्भोजानि विकासीनि सुवर्णपद्मानि तेषामधिवासो गन्धस्तस्याकरं स्थानं स्वर्गङ्गाजलविन्दूनां वृन्दं भरं पवनस्तस्य हृतस्य घर्मकणभरस्य निष्क्रयाय [मूल्य]प्रतिपादनायेवामुचत् । यश्च किंचिद्धरति स सवृद्धि तत्प्रतिददाति ॥

वेल्लल्लोलोत्तरीयाञ्चलमलसवलत्काञ्चिसंचारितोच्च-

क्काणं मञ्जीरमञ्जुस्वनितमुखरिताखण्डदिङ्मण्डलं च ।

यातायातानि दोलाविधिभिरधिनभोऽनङ्कुशं दर्शयन्ती

सा पुष्पास्त्रस्य लोकत्रयजयपिशुना वैजयन्तीव रेजे ॥ ६६ ॥

वेल्लन्नुच्चसंल्लोलश्चल उत्तरीयाञ्चल उत्तरीयवस्त्रप्रान्तो यत्र तथा नितम्बस्य गुरुत्वादलसं वलन्ती चलन्ती या काञ्ची रशना तया संचारितः प्रक्रमित उच्चोऽनीचः क्काणो रणनं यत्र । तथा मञ्जीरयोः पादाभरणविशेषयोर्मञ्जु मधुरं यत्स्वनितं तेन मुखरितं सशब्दं कृतमखण्डं सर्वं दिङ्मण्डलमाशावलयो यत्रैवं कृत्वा दोलाविधिभिर्दोलाक्रीडाकरणैः करणभूतैरधिनभो व्योम्नि निर्निरोधं गमनागमनानि दर्शयन्ती पार्वती लोकत्रयस्य भुवनत्रयस्य यः कामकर्तृको जयस्तस्य पिशुना सूचिका वैजयन्ती पताकेव रेजे । कामपताकात्वेन संभावितेत्यर्थः । पताका च कम्पमानवस्त्रप्रान्ता ससूक्ष्मकिङ्किणीशब्दा सपटहशब्दं जिष्णोः संबन्धिभिरनुजीविभिर्जयप्रकाशनार्थं नगरमध्ये संचार्यत इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकवि-
राजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
दोलाक्रीडावर्णनं नाम सप्तमः सर्गः ।

अष्टमः सर्गः ।

चिरखेलनखेदवद्भिरङ्गैरवरूढा विरहय्य केलिदोलाम् ।
रभसादपि साधिवाहुयन्त्रं गिरिपुत्री जगृहे महेश्वरेण ॥ १ ॥

चिरं यत्खेलनं प्रकृतत्वादर्थाद्वा दोलाविषयं क्रीडनं तेन खेदो ग्लानिर्विद्यते येषां तैर-ङ्गैर्हेतुभिः क्रीडादोलां विरहय्य त्यक्त्वावरूढा पार्वती रभसात्तूर्णं बाहुयन्त्रोपरि महेश्वरेण जगृहे । अवरोहन्ती भुजालिङ्गनसंस्थाने पार्वती भगवता गृहीता । दोलायाः सकाशाद-वरुह्य यावत्कैलाससानुं न प्राप्ता तावदेवातिस्नेहादालिङ्गितेत्यर्थः ॥

घनकेलिविमर्दकीर्णकर्णप्रणयीन्दीवररेणुसीकरेषु ।
हृतपीतनघर्मविन्दुवृन्दैरधिगण्डस्थलि वुब्रुडे मृडान्याः ॥ २ ॥

अधिगण्डस्थलि कपोलोपरि घनानवरता या केलिः क्रीडा तया तस्यां वा विमर्दः संमर्दस्तेन कीर्णाः प्रसारिता ये कर्णप्रणयिनां कर्णाभरणीभूतानामिन्दीवराणामुत्पलानां संबन्धिनो रेणुसीकराः परागकणास्तेषु हृतं पीतनं कुङ्कुमं यैस्तैर्घर्मविन्दुवृन्दैर्बुब्रुडे ब्रुडि-तम् । परागकणाः पीताः, तेषु कुङ्कुमघर्मकणा व्यक्तिं न गता इत्यर्थः । चौरैश्चाभिनीतवे-षादिसाधर्म्यैर्जलमध्ये स्थीयते ॥

क्लमसङ्गिभिरङ्गकैः सती सा परिरेभे सुभगं चलद्दुकूला ।
वहुशः पृषदश्वमष्टमूर्तिप्रियमूर्त्यन्तरमित्यपास्तशङ्कम् ॥ ३ ॥

अयं वायुरष्टमूर्तेः परमेश्वरस्य प्रियं मूर्त्यन्तरं भवतीत्यपास्ता त्यक्ता शङ्का यत्रैवं कृत्वा क्लमहरत्वात्सुभगं मनोहरं पृषदश्वं वायुं सा सती देवी क्लमसङ्गिभिः सखेदैरङ्गकैरनुकम्पि-तैरङ्गैः परिरेभ आलिलिङ्ग । अष्टमूर्तेरिति साकूतमभिधानम् । अपास्तशङ्कमिति वायोर्वा विशेषणम् ॥

हिमवद्दुहितुस्तदावहद्भिः स्मृतिशेषश्रमसीकरं शरीरम् ।
हरशेखरनिम्नगोर्मिभङ्गैरनुसस्रे सितचामराधिकारः ॥ ४ ॥

हरस्य शेखरो मौलिभूषणं या निम्नगा गङ्गा तस्या ऊर्मिभङ्गास्तरङ्गखण्डास्तैः सित-चामराणामधिकारः कर्तव्यतानुसस्रे प्राप्ता । यतो हिमवद्दुहितुः शरीरं वपुः स्मृतिशेषा-स्तदानीमविद्यमानत्वाच्छ्रमसीकरा घर्मकणा यस्य तदावहद्भिः कुर्वद्भिः । संनिवेशेन श्र-मनिवारणरूपेण कार्येण च चामरैः साम्यम् ॥

घटिताग्रकरः पपौ स तस्याः श्रमजं निर्भरजृम्भमाणमम्भः ।
गिरिशस्य शिखेन्दुरूर्ध्वनेत्रज्वलनासङ्गभुवा पिपासयेव ॥ ५ ॥

घटिता योजिता अग्रकरा रश्म्यग्राणि पाण्यग्राणि च येन स गिरिशस्य शिखेन्दुश्चू-डाचन्द्रस्तस्याः पार्वत्याः श्रमजं खेदजातं निर्भरजृम्भमाणमत्यर्थमुद्भवदम्भो घर्मजलं पपौ पीतवान् । अतः संभाव्यते—ऊर्ध्वनेत्रज्वलनाग्निस्तस्यासङ्गः प्रत्यासत्तिस्तस्या भूरुत्पत्तिर्य-

स्यास्तया पिपासयोदन्यया तृष्णयेव। यस्य चाग्नितापेन पिपासा भवति स घटिताग्रकरो योजितहस्तपुटो जलं पिबति। प्रेमवशाद्भगवांस्तत्रैव संनिहित आसीदित्यर्थः॥

विजयाकरनर्तितैर्मुहूर्तात्कुचकुम्भातिथिघर्मवारि तस्याः।
अनिलो नलिनीदलैरशेषं चषकैर्मारकतैरिवाचचाम॥ ६॥

विजया पार्वतीसखी तया करेण स्वहस्तेन नर्तितैश्चालितैर्नलिनीदलैः पद्मपत्रैः करणै रनिलो वायुः कुचकुम्भातिथिघर्मवारि स्तनकलशयोरतिथिरपूर्वागतं स्वेदजलं मुहूर्तादाचचाम निगीर्णवान्। अत उपमीयते—मारकतैश्चषकैः पानपात्रैरिव। कुचयोः कुम्भत्वारोपेण पृथुत्वे प्रतिपादितेऽपि घर्मजलस्यातिथित्वोक्त्या महिमोत्कर्षः प्रतिपादितः। अतिथिः पुंलिङ्गः, अतो घर्मवारिशब्देन सहैकपद्यम्॥

क्षणशिक्षितवेगतारतम्यैः श्वसितैरात्तवती गतागतानि।
व्यतनोदिव वीजनोपचारं निजचूर्णालकमालिकापि तस्याः॥ ७॥

क्षणं शिक्षितं पुनःपुनः स्वीकृतं वेगतारतम्यं रयप्रकर्षो यैस्तानि तैः श्वसितैर्निःश्वासैर्गतागतान्यात्तवती गृह्णती निजा चूर्णालकमालिका चूर्णकुन्तलपङ्क्तिर्वीजनेन श्रमनिवर्तनेनोपचारं परिचरणमिव व्यतनोत्। चूर्णशब्दः कुञ्चितवचनः॥

वचनाधिकमाधुरीपु शिष्यः पिकलोकोऽन्तिकचूतजागरूकः।
उपवीजयति स्म तां क्रमार्तिक्षतिदीक्षागुरुभिर्गरुत्समीरैः॥ ८॥

अन्तिके पार्वत्या निकटवर्तिनि चूते जागरूकः। चूताङ्कुरास्वादावहित इत्यर्थः। तथा वचनानामर्थात्पार्वतीसंबन्धिनां या अधिकमाधुर्यः प्रकृष्टमधुरत्वानि तासु शिष्यः। प्रकर्षवत्यास्तस्या उपजीवक इत्यर्थः। पिकलोकः कोकिलसमूहः क्रमेन दोलाकृतेन यार्तिः पीडा तस्याः क्षतिर्निवारणं तत्र दीक्षा नियमस्तत्र गुरव उपदेष्टारस्तैर्गरुत्समीरैः पक्षवातैस्तां पार्वतीमुपवीजयति स्म। शिष्यश्च महागुरुं स्वल्पगुरुभिः सह परिचरति॥

अथ लोलकपोलपाटलिम्नि स्खलितस्वेदपृषद्वरिम्णि तस्याः।
निभृतश्वसिते च विग्रहेऽभूद्विधुताशेषपरिच्छदः सखेदः॥ ९॥

लोलो निवर्तनाभिमुखत्वेन चटुलः कपोलपाटलिमा गण्डारुणिमा यस्य। स्खलितः स्वेदपृषद्वरिमा घर्मकणबाहुल्यं यस्मात्। निभृतानि निवृत्तवेगानि श्वसितानि यस्य। तस्मिन्विग्रहे पार्वत्याः शरीरे सखेदो विधुतोऽशेषः परिच्छदः परिवारः। स चात्र निवृत्तो वर्णितः॥

यदुवाह वपुस्तदा मृडानी निबिडक्रीडनशीर्णसर्वभूषम्।
अधिकाधिकभूषणामथैतां बत मेने तत एव चन्द्रचूडः॥ १०॥

मृडानी पार्वती वपुर्निबिडक्रीडनेनानवरतदोलाक्रीडया शीर्णा विच्छिन्नाः सर्वा

भूषा भूषणानि यस्य तद्यदुवाह यद्बभार तत एव हेतोश्चन्द्रचूडो भगवानेतां पार्वतीमधिकाधिकानि भूषणानि यस्यास्तां मेने । बतशब्दो वितर्के । भूषणेषु दोलावेगाद्भ्रष्टेषु निजलावण्यप्रादुर्भावात् । भूषणभ्रंशे भूषणाधिकत्वमिति विरोधो बतशब्देन सूचितः ॥

मृडमौलिशशाङ्करश्मिभिर्यन्मुखपङ्केरुहमुन्मिमील तस्याः ।
ननु जृम्भित एष तत्र जैत्रो मदनस्याद्वयवादसंप्रदायः ॥ ११ ॥

मृडस्य भगवतो मौलौ शशाङ्कस्तस्य रश्मिभिस्तस्याः पार्वत्याः संबन्धि मुखपद्मं यदुन्मिमील स्वेदनिवर्तनाद्यद्विचकास, एष चन्द्रांशुभिः पद्मविकासो मदनस्याद्वयवादसंप्रदायो जृम्भितः । कामस्याद्वयवादो विरुद्धयोरप्येकत्ववचनम् । चन्द्रप्रभया हि पद्मस्य विकासोऽन्यत्र विरुद्धः, अत्र तु स एव सिद्ध इति ध्रुवं कामाद्वयवादः ॥

गिरिराजभुवः शशाङ्ककान्तं वदनं प्रोच्छ्वसदच्छरश्मिपङ्क्ति ।
मुहुरुग्रकराभिमर्षयोगाद्विरतस्वेदजलप्रबन्धमासीत् ॥ १२ ॥

प्रोच्छ्वसन्त्य उल्लसन्त्योऽच्छा निर्मला रश्मिपङ्क्त्यो यस्य तत् । तथा शशाङ्ककान्तं चन्द्रसुन्दरं गिरिराजभुवः पार्वत्या मुखं मुहुः पुनःपुनरुग्रस्य भगवतः करौ हस्तौ तयोरभिमर्षः स्पर्शस्तेन योगाद्विरतो निवृत्तः स्वेदजलप्रबन्धो यस्य तदासीत् । स्वयं हरः स्वेदजलोत्पुंसनमकार्षीदित्यर्थः । अथ च शशाङ्ककान्तं रत्नमुग्रकरस्य सूर्यस्य योगान्निवृत्तजलं भवति ॥

सुचिरं शिशिरोपचारतन्त्रैरिति देहात्प्रतिमुक्ततान्तितन्तुः ।
कुसुमोच्चयनेन सा लतानां सफलीकर्तुमियेष चैत्रमैत्रीम् ॥ १३ ॥

इति पूर्वोक्तयुक्त्या सुचिरं शिशिरो य उपचारः परिचरणं तस्य तन्त्रैः प्रपञ्चैर्हेतुभिर्देहात्प्रतिमुक्तो वारितस्तान्तिरेव संतानेन वर्तमानत्वात्तन्तुर्यस्याः । वीतखेदेत्यर्थः । सा पार्वती कुसुमोच्चयेन पुष्पावचयेन लतानां चैत्रमैत्रीं पुष्पोत्पत्तिलक्षणां सफलीकर्तुं सफलयितुमियेष । उत्तमनायिकाया पुष्पाणामवचयेन सफलता भवति ॥

सुमनोनिवहं ग्रहीतुमिच्छञ्जितमुक्ताशबलेन्द्रनीलभासः ।
प्रतिपण्यतयेव दृष्टिपातानमुचत्सा प्रथमं महीरुहेषु ॥ १४ ॥

सा पार्वती महीरुहेषु वृक्षेषु दृष्टिपातानमुचत् । वृक्षानद्राक्षीदित्यर्थः । यतः सुमनोनिवहं पुष्पभरं ग्रहीतुमिच्छुः । अतो विकासाज्जिता मुक्ताशबलानामिन्द्रनीलानां शोभा यैः । श्वेतमण्डलस्थानीया मुक्ताः कृष्णमण्डलस्थानीयानीन्द्रनीलानि । अतः संभाव्यते—प्रथमं प्रतिपण्यतयेव । प्रतिपण्यं प्रतिविक्रेयं येन पण्यं क्रीयते । यश्च किंचित्क्रीणाति स प्रतिपण्यं ददाति ॥

श्वसितेषु सृजत्सु तत्र तस्याः प्रसरत्सौरभसारसत्रदानम् ।
अलितर्कुकलोकभूमजन्मा कुसुमानां विरलीबभूव भारः ॥ १५ ॥

तत्र कैलासोद्याने तस्याः पार्वत्याः श्वसितेषु निःश्वासेषु प्रसरद्दिग्व्यापकं यत्सौरभसारं तदेव सत्रं तस्य दानं सृजत्सु सत्सु कुसुमानां पुष्पाणामलय एत्र तर्कुकलोको याचकजनस्तस्य भूमा बाहुल्यं तस्माज्जन्मोत्पत्तिर्यस्य स भारो विरलीबभूवाल्पोऽभूत् । श्वसितेभ्यः पूर्वं भ्रमराः पुष्पेष्वेवासन्, निःश्वासेषु निर्गतेषु तु पुष्पेभ्यश्चलित्वा तत्रैव गताः । श्वासानामधिकसुगन्धित्वात् ॥

अथ तामनुजग्मुरुन्मिषद्भिर्मणिमञ्जीररवैरुदीरयन्त्यः ।
मदनाभ्युदयोत्सवाग्रवाद्यं विजयाद्याः प्रमथाग्रणीरमण्यः ॥ १६ ॥

उन्मिषद्भिः स्फुरद्भिर्मणिमञ्जीराणां रत्ननूपुराणां रवैः शब्दैर्मदनस्याभ्युदयोत्सवेऽग्रवाद्यमुदीरयन्त्यः। नूपुरशब्दाः कामस्योदयोत्सववाद्यभूता जाता इत्यर्थः । यथा वाद्यान्युत्सवं सूचयन्ति तथा नूपुरशब्दाः कामोदयं सूचितवन्त इति तात्पर्यम् । विजयाख्या देव्याद्या यासां ताः प्रमथाग्रणीनां देवप्रधानानां संबन्धिन्यो रमण्यस्तामनुजग्मुरनुययुः ॥

लतिका लतिका व्यलोकि देव्या तरला केरलमारुतच्छटाभिः ।
पृथुवेपथुमद्वपुर्भविष्यत्सुमनोलुण्ठिभिया विवृण्वतीव ॥ १७ ॥

केरलाख्यो दक्षिणापथे जनपदविशेषस्तस्य मारुतच्छटाभिस्तरला सकम्पा लतिका लतिका देव्या व्यलोकि विलोकिता । अतः संभाव्यते—भविष्यन्ती भाविनी या सुमनोलुण्ठिः पुष्पहठहरणं ततो भिया पृथु बहु वेपथुमत्कम्पसहितं वपुर्विवृण्वती प्रकाशयन्तीव । यस्य च धनादि हरिष्यते स भयात्कम्पते ॥

निभृतं प्रतिकेलिवल्लि तस्या नवशोभाविभवाद्भुतेन चक्षुः ।
भ्रमरावलिलोहशृङ्खलानां विनिवेशैरिव बध्यमानमासीत् ॥ १८ ॥

नवो यः शोभाविभवः स एव लोकोत्तरत्वादद्भुतमाश्चर्यं तेन हेतुना सर्वासु क्रीडालतासु निभृतं निश्चलं चक्षुर्दृष्टिर्भ्रमरावलय एव वर्णसंस्थानाभ्यां लोहशृङ्खलास्तासां विनिवेशैर्निवेशनैर्बध्यमानमिवासीत् । यश्च शृङ्खलाभिर्बध्यते स निश्चलो भवति ॥

तरुसंकटसीम्नि कर्णिकारैस्तनुलेखा परिपस्पृशे सुरीणाम् ।
अधिगन्तुमिवाङ्गनाङ्गसङ्गान्नवसौरभ्यमगोचरं विधातुः ॥ १९ ॥

तरुभिर्वृक्षैः संकटा संबद्धा या सीमा तत्र कर्णिकारैः सुरीणां देवीनां तनुलेखाङ्गरेखा संकटत्वादेव पस्पृशे स्पृष्टा । अतः फलोत्प्रेक्षा—अङ्गनानामङ्गेन सङ्गात्सौरभं सौगन्ध्यमधिगन्तुं प्राप्तुमिव । यतो विधातुः स्रष्टुरगोचरमविषयम् । विधात्रा तेषां निःसौरभाणां निर्माणात् । 'अङ्गरागसङ्गात्' इति वा पाठः ॥

अधिनोद्बकुलः सदाधिकं यो मधुगण्डूषसमर्पणेन भृङ्गीः ।
स तदा गिरिजानुयायिभृङ्गीमधुगण्डूषरसं बताचकाङ्क्ष ॥ २० ॥

मधु मकरन्दस्तस्य गण्डूषश्चुलकं तस्य समर्पणेन दानेन यो बकुलो भृङ्गीर्भ्रमरीर-

धिनोदप्रीणयत्स तदा गिरिजायाः पार्वत्या अनुयायिन्योऽनुचर्यो या भृङ्ग्यः कामुक्य-स्तासां मधुगण्डूषमासवचुलकं तद्रसमाचकाङ्क्षाकाङ्क्षितवान् । य एव मधुना भृङ्गीस्त-र्पितवान्स एव भृङ्गीभ्यो मधु याचितवानिति बतशब्दसूचितो विरोधोऽर्थभेदात्समाहितः। अधिनोदिति 'धिन्विकृण्व्योर च' इति लङि रूपम् ॥

तिलकोऽग्रपथस्थितोऽमरीषु प्रकिरन्तीषु यदृच्छयैव दृष्टिम् ।
कमपि श्रममन्तरेण सद्यः शरकारः कुसुमायुधस्य जज्ञे ॥ २१ ॥

अमरीषु देवीषु यदृच्छयैव हेतुं विनैव दृष्टिं क्षिपन्तीषु सतीषु सद्यस्तिलकवृक्षः क-मपि श्रममल्पमपि शरानयनघटनादिरूपमायासमन्तरेण विना, कुसुमायुधस्य पुष्पेषोः [शरकारो] जज्ञे जातः । रामाणां कटाक्षपातेन तिलकस्य विकसनीयत्वात् । तिलकपु-ष्पाणि पुष्पेषोः शरा जाता इत्यर्थः ॥

विशतो विबुधीजनस्य सम्यक्चरणस्पर्शमिवाप्तुमश्रमेण ।
प्रतिबिम्बनिभाद्विलीय तस्थौ मणिमय्यां विपिनावनावशोकः ॥२२॥

वनं विशतो देवीजनस्याश्रमेण देवीकृतं यत्नं विना पादस्पर्शं प्राप्तुमिवाशोको मणि-मय्यां वनभूमौ प्रतिबिम्बव्याजेन निलीय तस्थौ निलीनः । पूर्वकालो विवक्षितः । अनेन मार्गेण यास्यन्त्यो देव्यो मां सम्यक्पादाभ्यां स्पृशन्त्वितीवाशोको भूमौ प्रविष्टः ॥

चरणाहतिभिः प्रसूय नीत्वा विकचत्वं ललना नखैर्लुनन्त्यः ।
समकालमशोकपुष्पजातेर्बत सर्गस्थितिसंहृतीर्वितेनुः ॥ २३ ॥

पादाहननैरशोकपुष्पाण्युत्पाद्य तान्येव विकचत्वं विकासं नीत्वा तान्येव नखैर्लुनन्त्य-श्छिन्दन्त्यो ललना देव्यो बताशोकपुष्पजातेर्युगपत्समकालं सर्गस्थितिसंहृतीः सृष्टि-स्थितिसंहारांश्चक्रुः । सर्गादीनां समकालस्यासंभवाद्बताश्चर्यद्योतकम् । जातेर्व्यक्तिद्वा-रेण सर्गादिसंबन्धः ॥

सुचिरं विरसक्रमापि खेलत्पदसंपर्करसैरशोकपाली ।
सहसा विबुधाधिपावरोधैरथ चक्रे मधुपौघकामधेनुः ॥ २४ ॥

चिरकालं विरसक्रमा रसरहिताप्यशोकपङ्क्तिर्विबुधाधिपानामवरोधै रमणीभिर्मधुपौ-घस्य भ्रमरकुलस्य कामधेनुः सद्य एव चक्रे । कैः । खेलतां विहरतां पादानां चरणानां संपर्को हननं तत्र रसैः करणैः । विशेषणं वैतत् । रामाणां चरणाहननाद्विकसितो-ऽशोको भ्रमरानतर्पयदित्यर्थः ॥

बकुलो द्विजजातिसंस्तुतोऽपि प्रमदोच्छेषणमद्यपीत आसीत् ।
बत गाढनिषेवितस्वशाखैरपि पातित्यमथान्वभावि कुन्दैः ॥ २५ ॥

द्विजानां भ्रमराख्याणां पक्षिणां जातिः समूहस्तया संस्तुतोऽशोकः प्रमदानां नायि-कानामुच्छेषणमद्यमुच्छिष्टां सुरां पिबति स्म पीत आसीत् । 'भुक्तपीतौ कर्मकर्तरि' इति

कर्मकर्तरि क्तः। मद्यं पीतमनेनेति 'वाहिताग्न्यादिषु' इति पीतशब्दस्य परनिपातो वा व्याख्येयः। गाढं निबिडं कृत्वा निषेविता स्वशाखा लता यैस्तैः कुन्दैस्तदा पातित्यं पतितस्य भावः पतनमन्वभावि प्राप्तम्। बतापिशब्दौ विरोधद्योतकौ। येन मद्यं पीतं स द्विजैः स्तुतो यः स्वां शाखां स्वाध्यायविशेषं सेवते स पातित्यमाचारभ्रंशमनुभवति॥

रमणी चरणं दधत्यशोके सहसोदस्तमपि प्रसूनखण्डम्।
तरुणारुणरत्ननूपुरांशुस्तबकच्छन्नतनौ चिरादबोधि॥ २६॥

अशोकवृक्षे स्वयं पादं ददती रामा, अतः सद्य एवोदस्तं जातं पुष्पखण्डं चिरादबोधि ज्ञातवती। यतोऽरुणरत्नानि पद्मरागास्तन्मयौ यौ नूपुरौ तयोरंशवो भासस्त एव स्तबका गुच्छास्तैश्छन्ना तनुर्यस्य। रूपसाम्यं चिरबोधे हेतुः। अशोकपुष्पाणां शोणस्वभावात्॥

हठताडितमूर्तिरङ्घ्रिणाग्रे मुखरीभूतविलासनूपुरेण।
अधरद्युतितस्कराण्यशोकः सुदृशामाशु पुपोष कुड्मलानि॥ २७॥

मुखरीभूतः शब्दायमानो विलासनूपुरो लीलामञ्जीरो यस्य तेनाङ्घ्रिणा चरणेन हठेन तरसा ताडिता हता मूर्तिर्यस्य सोऽशोकः सुदृशां संबन्धिनोऽधरस्य या द्युतिः कान्तिस्तस्यास्तस्कराणि सादृश्यात्कृतचौर्याणि कुड्मलानि कलिकाः पुपोष। हठताडितमूर्तित्वादिव कोपकरणादधरद्युतितस्कराणीति ध्वन्युपमानोत्प्रेक्षा॥

श्रवणाभरणीकृतं वधूनामुपकारान्तरमादधावशोकम्[1]।
नवकुङ्कुमपत्रभङ्गभासा प्रतिबिम्बेन विमण्डयत्कपोलम्॥ २८॥

श्रवणयोः कर्णयोराभरणीकृतं भूषणतां नीतमशोकं कर्तृ वधूनामुपकारान्तरमन्यमप्युपकारं गण्डमण्डनरूपमादधौ जनयामास। यतो नवकुङ्कुमेन पत्रभङ्गः पत्ररचना तद्वद्भा यस्य तेन प्रतिबिम्बेन कपोलं गण्डं विमण्डयद्भूषयत्। एतेन वधूनां विशदगण्डत्वं युक्त्या वर्णितम्॥

स सुरप्रमदाजनस्तदानीं वनपर्यन्तपथप्ररोहभाजि।
करजक्षतकर्मणा विकारानतिमुक्ते सुमनस्यपि व्यधत्त॥ २९॥

वनपर्यन्तपथे प्ररोहं जन्म भजत्यतिमुक्तकनामनि पुष्पे करजैर्नखैः क्षतकर्मणा करणेन स सुरप्रमदाजनो देवीलोको विकारान्विक्रिया व्यधत्ताकार्षीत्। अथ च मुक्ते वासनाबन्धरहिते सुमनसि पण्डिते वनस्थिते नखक्षतैः कामजननमित्यपिर्विरोधद्योतकः प्रयुक्तः॥

सहकारमथो विधाय काचित्क्षतपुष्पव्रजसंपदं पिकानाम्।
वसतिच्छिदया वचोऽनुवादक्रमवैरप्रतियातनं चकार॥ ३०॥

---

१. अशोकपुष्पम्. 'द्विहीनं प्रसवे सर्वम्' इत्यमरः.

सहकारवृक्षमवचितोच्चिता पुष्पसंपद्यस्य तं विधाय वसतिच्छिदया सहकारपुष्पच्छेदेन पिकानां कोकिलकर्तृको यस्तद्वचसामनुवादोऽनुकरणं तेन क्रमेण यद्वैरं तस्य प्रतियातनं शोधनं चकार काचित् । वैरिणश्च वैरं प्रतिवैरेण महान्तः शोधयन्ति । कोकिलमधुरवादिन्यस्ता युवतय इत्याशयः ॥

अवचित्य करेण कापि दध्रे शिरसा पुष्पमशोकपादपस्य ।
अपनेतुमिवाङ्घ्रिघातहेलाविनयातिक्रमजं क्रुधः प्रबन्धम् ॥ ३१ ॥

अशोकवृक्षस्य पुष्पं करेणावचित्याहृत्य काचिच्छिरसा दध्रे । करग्रहणं स्कन्धात्प्रभृत्यशोकस्य पुष्पितत्वज्ञापनार्थम् । अत्र फलोत्प्रेक्षा—अङ्घ्रिणा पादेन घातो हननं तेन हेला स चासौ विनयातिक्रमोऽविनय औद्धत्यं ततो जातं रुषः प्रबन्धं संततिमपनेतुं वारयितुमिव । 'प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम्' ॥

निदधे सविधे श्रुतेर्वधूभिश्च्युतनिद्रं नवचम्पकप्रसूनम् ।
अथ काञ्चनकर्णिकाकपोलस्थलयोस्तस्य च सामरस्यमासीत् ॥ ३२ ॥

च्युतनिद्रमसंकुचितं नवचम्पकपुष्पं वधूभिः कर्णनिकटे निहितं ततः काञ्चनकर्णिका सुवर्णकर्णाभरणं कपोलस्थलं गण्डतटं तयोस्तस्य चम्पकस्य चेति त्रयाणां सामरस्यं गौरत्वानुगमाद्विभागाभावोऽभूत् ॥

मुखरं कुहरद्विरेफनादैस्तुलितानङ्गमहेभहेमघण्टम् ।
प्रियगात्रसगोत्रमित्यजस्रं चतुरा काचन चम्पकं ददर्श ॥ ३३ ॥

कुहरेऽभ्यन्तरे द्विरेफास्तेषां नादैर्मुखरमतस्तुलितानुकृतानङ्गमहेभस्य मदनमतङ्गजस्य संबन्धिनी हेमघण्टा सुवर्णकिङ्किणी येन तच्चम्पकपुष्पं काचन प्रियगात्रस्य वल्लभाङ्गस्य शोभया सगोत्रं सदृशमित्यतो हेतोरजस्रं ददर्श । प्रियाङ्गसादृश्यपरिज्ञानाच्चतुरा ॥

कबरीभुजगी तथामरीभिस्तगरैरञ्चितकञ्चुकेव चक्रे ।
अभिपत्य यथा मधुव्रतानां प्रकरो वेणिभरान्तरं ससर्ज ॥ ३४ ॥

अमरीभिर्देवीभिः कबर्येव रूपसंनिवेशाभ्यां भुजगी तगरपुष्पैरञ्चितः शोभया पूजितः कञ्चुको निर्मोको यस्याः सा तथा चक्रे यथा कबरीमभिपत्य मधुव्रतानां प्रकरो भ्रमरभरो वेणिभरान्तरं द्वितीयं कबरभरं ससर्ज । अन्तरशब्देन सहजस्य तगरैश्छादनाद्द्वितीयमुच्यते ॥

नवकिंशुककर्णपूरमन्या दयितेन स्वकरार्पितं बभार ।
बत तत्क्षणमेव तत्सपत्न्याः प्रकटापाटलमाननं बभूव ॥ ३५ ॥

भर्त्रा स्वकरेण निजहस्तेनार्पितं दत्तं नवकिंशुकैः कर्णपूरं कर्णाभरणमन्या बभार । बताश्चर्ये । तत्क्षण एव तस्याः संबधिन्याः सपत्न्या आननं मुखं प्रकटं व्यक्तमापाटल-

मरुणं बभूव । सकोपत्वात् । लौहित्यकारणं किंशुकधारणमन्यत्र लोहितमन्यदित्यसंगतिर्वतशब्देन द्योतिता ॥

इतरा कुसुमं ग्रहीतुमैच्छद्विटपादुच्चतरादुदस्तपार्ष्णिः ।
भरतो वपुरानमय्य तस्याः कुचभारस्तु मनोरथं बभञ्ज ॥ ३६ ॥

स्वदेहापेक्षया वृक्षविटपस्योन्नतत्वात्तदधस्तादुन्नतौ पार्ष्णी पादाधोभागौ यया सा उन्नताद्विटपात्स्कन्धात्कुसुमं पुष्पं ग्रहीतुमैच्छत् । भरतो भरात्तस्या वपुरानमय्य प्रह्वीकृत्य कुचभारस्तस्याः पुष्पप्राप्तिविषयं मनोरथं बभञ्ज । पार्ष्ण्योर्मृदुत्वेन स्तनभारासहत्वान्नम्रत्वे पुष्पं न प्रापेत्यर्थः ॥

श्रवणाग्रनिवेशिसिन्दुवारं घटमानप्रतियातनं कपोले ।
उदगच्छदकृत्रिमप्ररूढस्मितगुच्छच्छविचौरतां परस्याः ॥ ३७ ॥

कर्णाग्रे निवेशि निविशमानमतः कपोले घटमाना संपद्यमाना प्रतियातना प्रतिबिम्बं यस्य । सिन्दुवारं कर्तृ । अकृत्रिमः सहजः प्ररूढोऽचलो यः स्मितगुच्छो हासस्तबकस्तस्य च्छविः कान्तिस्तच्चौरतां स्वीकारं बभार । चौरशब्दः स्वीकारार्थमभिदधत्सादृश्ये पर्यवसितः ॥

कुसुमान्यपहृत्य यस्य शाखा मुमुचे ताभिरवाञ्चिताञ्चलस्य ।
नमनापगमे जवादुदञ्चन्स रुषेवाथ तरुश्चिरं चकम्पे ॥ ३८ ॥

पुष्पहरणसमाप्तावत्राञ्चितो नमितोऽञ्चलः प्रान्तं यस्य तस्य तरोर्वृक्षस्य कुसुमान्यपहृत्य लुण्ठित्वा ताभिः शाखा लता मुमुचे हस्तात्त्यक्ता स वृक्षो नमनस्यापगमे वेगादुदञ्चन्नूर्ध्वशाखो भवन्रुषेव चिरं चकम्पे । वस्तुवृत्तेन पुष्पावचयार्थं शाखा गृहीत्वा त्यक्ता ततः कम्पो जातः स कोपहेतुकत्वेनोत्प्रेक्षितः ॥

परया दुधुवे द्रुमः सहेलं रजसापूर्य दृशौ क्रुधेव तस्याः ।
अथ तद्दयितस्य तेन तेने परकान्तापरिरम्भणोपलम्भः ॥ ३९ ॥

परया द्रुमो वृक्षः सहेलं हेलया दुधुवे धुतः । अथ हेलाकम्पनजातया क्रुधेव तस्या दृशावापूर्य पूरयित्वा तेन द्रुमेण तद्दयितस्य परकान्तयान्यरमण्या यत्परिरम्भणमालिङ्गनं तस्योपलम्भः प्राप्तिस्तेन संपादितः ॥

उदजृम्भत वीरुधां रजस्तद्विबुधाधीशपुरंध्रिभिर्धुतानाम् ।
मधुमन्मथयोर्निसर्गसख्यात्प्रचुराकल्पत येन पांसुकेलिः ॥ ४० ॥

विबुधानां देवानामधीशाः स्वामिनस्तेषां पुरंध्रिभिर्नायिकाभिः पुष्पलोभाद्धुतानां कम्पितानां वीरुधां लतानां रजो रेणुरुदजृम्भतोदलसत् । येन रजसा करणेन मधुमन्मथयोर्वसन्तकामयोर्निसर्गेणाकारणं सख्यं तस्मात्प्रचुरो बहुः पांसुकेली रजःक्रीडाकल्पत

संपन्ना । बालानां पांसुक्रीडा भवति । प्रकृते पुष्परजोगतत्वेन वसन्तकामयोः सहभावित्वख्यापनार्थं वर्णिता ॥

प्रसभं परिरेभिरे तथा ता अधिरोढुं वरशाखिनं सुमुख्यः ।
अथ तत्र यथा द्युसद्युवानो द्रुमजन्मप्रणिधानमेव चक्रुः ॥ ४१ ॥

दिवि सन्तश्च ते युवानो द्रुमजन्मनि प्रणिधानं प्रार्थनामेव चक्रुः । यथा वरशाखिनं श्रेष्ठवृक्षमधिरोढुमारोढुं प्रसभं बलेन देव्यः परिरेभिर आलिलिङ्गुः । वृक्षाधिरूढालिङ्गनदर्शनादात्मनो वृक्षजन्म देवैः काङ्क्षितमित्यर्थः ॥

अधिरोहणसज्जया कयाचिन्निदधत्या चरणौ तरुस्तरुण्या ।
अवजेतुमशोकमुज्जिहानस्तवकस्तद्द्रुचिसंचयेन चक्रे ॥ ४२ ॥

अधिरोहणे सज्जयोद्यतयातो वृक्षे चरणौ निदधत्या क्षिपन्त्या कयाचित्तरुण्याशोकवृक्षमवजेतुं वृक्षस्तयोः पादयोर्दीप्त्योज्जिहाना उत्पद्यमानाः स्तवका गुच्छा यस्य स चक्रे । प्रतीयमानोत्प्रेक्षा ॥

अतिमुक्तकमौक्तिकैर्विवव्रे कुचकुम्भेषु वधूजनस्य हारः ।
समधत्त तदन्तरेऽप्ययत्नादलिपुञ्जस्तरलेन्द्रनीललीलाम् ॥ ४३ ॥

वधूजनस्य कुचकुम्भेष्वतिमौक्तिकान्येव वर्णसंनिवेशाभ्यां मौक्तिकानि तैर्हारो विवव्रे हारशोभा प्रकटीकृता । विप्रकीर्णान्यतिमुक्तकानि मुक्ताकाराणि समाहृत्य स्तनोपरि स्थापितानि हारवद्बभुवुरित्यर्थः । तस्यातिमुक्तकहारस्यान्तर्मध्येऽलिपुञ्जो भ्रमरभरोऽपि यत्नेन विना तरलो हारमध्यगो य इन्द्रनीलस्तच्छोभां समधत्त संपादितवान् ॥

परया बकुलस्य पुष्पलोभप्रसरत्पाणिनखांशुमण्डलेन ।
वितरीतुमिव द्रुमाधिराज्यं विदधे मूर्धनि पट्टबन्धसंधिः ॥ ४४ ॥

पुष्पेषु लोभस्तेन प्रसरन्नितस्ततो गच्छन्यः पाणिर्हस्तस्तस्य नखांशवस्तद्व्याजेन बकुलस्य द्रुमेषु वृक्षेष्वधिराज्यं साम्राज्यं वितरीतुं दातुं परया मूर्धनि पट्टबन्धस्य राज्यप्राप्त्युचितस्य संधिः संधानमिव विदधे चक्रे । नखरश्मिभरः पट्टबन्धत्वेन संभावितः॥

विधुतः करपुष्करेण दूरान्निपतद्भिः कुसुमैरधश्चरन्तीम् ।
तरुणीमितरस्तरुश्च कांचिच्चिरमानर्च मनोभवाधिदेवीम् ॥ ४५ ॥

कयाचित्कर एव पुष्करं पद्मं तेन विधुतः कम्पितः पूर्वापेक्षयेतरस्तरुस्तस्य वृक्षस्याधो बुध्ने चरन्तीं कांचिद्दूरान्निपतद्भिः कुसुमैरानर्च पूजितवान् । यतो मनोभवस्य सिद्धिदायित्वादधिदेवीम् । इष्टदेवता च पूज्यते ॥

स पुरंध्रिजनः कृतोपकारं सहकारं कुसुमार्पणोपदाभिः ।
रजसा जनितैर्दृगम्बुपूरैरसिचत्प्रत्युपकर्तुमिच्छयेव ॥ ४६ ॥

कुसुमानामर्पणं दानं तदेवोपदा ढौकनिकास्ताभिः कृतोपकारं सहकारवृक्षं स स्त्रोलोको रजसोत्पादितैर्बाष्पपूरैरसिचत् । अतः संभाव्यते—प्रत्युपकर्तुमिच्छयेव । अस्माकं सहकारेण पुष्पाण्यर्पितानि वयमपि सेकेन प्रत्युपकुर्म इतीवासिचदित्यर्थः ॥

अवतंसितमल्लिकाधिवासप्रबले गण्डतले विलासिनीनाम् ।
घटिता कुटिलालिपङ्क्तिराधान्मृगनाभीमकरीषु पौनरुक्त्यम् ॥ ४७ ॥

अवतंसिता भूषणीकृता या मल्लिका तस्या अधिवासस्तेन प्रबले सनाथे सुराङ्गनानां गण्डतले कुटिला घटितोपविष्टालिपङ्क्तिर्गण्डलिखितासु मृगनाभ्याः कस्तूरिकाया मकर्यो मकर्याकाराः संनिवेशास्तेषु पौनरुक्त्यं पुनर्भावमाधादकरोत् । भ्रमरपङ्क्तेस्तत्सादृश्यात् ॥

गणपक्ष्मलचक्षुषां तदानीं रजसार्द्रं सुमनोभिरर्पितेन ।
निपतत्कठिनार्कतापयोगद्रुतलावण्यमिवाङ्गमङ्गमासीत् ॥ ४८ ॥

सुमनोभिः पुष्पैरर्पितेन प्रतिपादितेन रजसा द्रवरूपेण मकरन्देनार्द्रं गणपक्ष्मलचक्षुषां गणस्त्रीणां संबन्ध्यङ्गमङ्गं निपतन्यः कठिनांशुतापः सूर्यातपस्तद्योगाद्द्रुतं द्रवरूपतां प्राप्तं लावण्यं सौन्दर्यं यस्य तदिवासीत् ॥

करवीरमधीरलोचनाभिर्जगृहे यत्सविलासमग्रहस्तैः ।
प्रसरत्करजांशुसूत्रसख्यात्स्रजि तद्बद्धमिवाप्रयत्नतोऽभूत् ॥ ४९ ॥

अग्रहस्तैः कराग्रैः करणभूतैरधीरलोचनाभिर्योषिद्भिः सविलासं कृत्वा यत्करवीरपुष्पं जगृहे गृहीतं तत्करवीरं प्रसरन्तः स्फुरन्तो ये करजांशवो नखप्रभास्त एव सूत्रं तद्योगात्स्रजि बद्धं मालायामुम्भितमिवासीत् ॥

सकलाध्वगलोकनिर्निमित्तक्षपणाख्याभ्यधिकापराधवन्ति ।
निबिडं रसराजकिंकरीभ्यो ललनाभ्यः कुसुमानि बन्धमापुः ॥ ५० ॥

सकलो योऽध्वगलोकस्तस्य निर्निमित्तमहेतुकं क्षपणं वधस्तदाख्या नाम यस्य सोऽभ्यधिकोऽपराधो विद्यते येषां तानि कुसुमानि रसराजकिंकरीभ्यः शृङ्गारमुखप्रेक्षणीभ्यो ललनाभ्यो बन्धमुम्भनमापुः। अध्वगानां मार्गस्थितानामुपद्रवकारी च राजकिंकरैर्बध्यते ॥

अभग्ननैसर्गिकसौकुमार्ये निःशेषभूषाग्रथनास्पदेषु ।
चक्रे शरीरे गणसुन्दरीभिरुदात्ततत्तत्सुमनःसमाजः ॥ ५१ ॥

अभग्नं नैसर्गिकमकृत्रिमं सौकुमार्यं पेलवत्वं यस्य तस्मिञ्शरीरे निःशेषाणि यानि भूषाग्रथनास्पदान्यलंकरणबन्धनस्थानानि कण्ठादीनि तेषु गणस्त्रीभिरुदात्तानां श्रेष्ठानां तासां तासां सुमनसां पुष्पाणां समाजः संग्रहश्चक्रे । पुष्पैरेव भूषणान्यकुर्वन्नित्यर्थः । देहस्य सुकुमारत्वात्तावन्मात्रश्रमेण भूषणानां वोढुमशक्यत्वात् ॥

एकत्र लीनो मधुपः परत्र पुष्पे पुरोऽभूद्बहुलाभिलाषः ।
तत्तत्प्रसूनोत्करभाजि देहे तासामनाकाङ्क्षतया तु तस्थौ ॥ ९२ ॥

पुरस्तत्क्षणात्पूर्वमेकत्रार्थात्पुष्पे लीनो भ्रमरोऽपरत्रान्यस्मिन्पुष्पे बहुलाभिलाषोऽभूत् । तासां देहे पुनर्भ्रमरो निराकाङ्क्षतया निःस्पृहत्वेन तस्थौ । यतस्तत्तत्प्रसूनानामुत्कर्षं भजति । सर्वपुष्पैर्देहस्य कृतभूषणत्वात् । निराकाङ्क्ष इति व्यतिरेकात्पुराशब्दार्थप्रतिपक्षभूतं तदात्वं गम्यते ॥

आसीत्स्फुरन्मधुकरक्वणितासहिष्णु-
श्छायादरिद्रितमथोदवहच्छरीरम् ।
उत्कम्पमापदवशं श्वसनानुबन्धा-
त्कान्तैर्वियोगमधिगम्य लता गुलुच्छैः ॥ ९३ ॥

कान्तैः सुगन्धिभिर्गुच्छैर्विरहं प्राप्य । पुष्पेष्ववचितेष्वित्यर्थः । लता मधुकरक्वणितस्य भ्रमररुतस्यासहिष्णुरासीत् । तथा शरीरं छायया दरिद्रितं रहितमवहत् । तथा श्वसनस्य वायोरनुबन्धात्कम्पमापत् । कान्तैरिति बहुवचनाल्लतायाः समासोक्त्या स्वच्छन्दचारिणीत्वप्रतीतिः । सा च कान्तैः कामुकैर्विरहं प्राप्य भ्रमरशब्दं न सहते, विच्छायतां धत्ते, श्वसनानां विरहनिःश्वासानामनुबन्धात्पुनः पुनः कम्पते ॥

उत्तंसितातिसुरभिप्रसवानुबन्धा-
त्पृष्ठे भ्रमद्रविकराङ्कुरितक्लमायाः ।
देव्याः किरीटमणिदीधितिदण्डसङ्गि
तद्भृङ्गमण्डलमभूदसितातपत्रम् ॥ ९४ ॥

उत्तंसिता भूषणत्वेन कृता अतिसुरभयो ये प्रसवाः पुष्पाणि तेष्वनुबन्धाल्लोभाद्देव्याः पृष्ठे भ्रमचक्राकारतया घूर्णमानं भृङ्गकुलं देव्याः किरीटरश्मय एव दण्डस्तस्य सङ्गो विद्यते यस्य तदसितातपत्रं नीलच्छत्रमभूत् । यतो रविकरैरङ्कुरितः क्लमः खेदो यस्याः । देव्या राज्ञ्याश्च तापे सति च्छत्रधारणं युक्तम् ॥

सर्वस्वे सुमनोमयेऽथ समये तस्मिन्गणप्रेयसी-
लोकेनापहृते झगित्यवसिताशेषश्रियः पादपाः ।
प्राक्संस्कारनिषीददाकुलघनोत्तालालिमालारवै-
रब्रह्मण्यमुदैरयन्निव हठोदस्ताग्रशाखाभुजम् ॥ ९५ ॥

तदा पुष्पावचयरसाद्गणस्त्रीजनेन सुमनोमये सर्वस्वे पुष्पमये सर्वधनेऽपहृते लुण्ठिते सत्यवसिता विनष्टाशेषा श्रीर्येषां ते पादपा वृक्षाः प्राक्संस्कारः प्रागत्रास्मदनुभूतानि

पुष्पाण्यत्र भवन्तीति स्मरणं तेन निषीदन्त्य आकुला घनं कृत्वोत्ताला अलिमालास्तासां रवैर्हेतुभिरब्रह्मण्यमुपद्रवनिवेदकं शब्दमिवोदैरयन्नुदचारयन् । कथं चिरकालं नमितत्वाद्धठेनोदस्ता उत्क्षिप्ता अग्रशाखा लताग्राण्येव भुजा यत्र । हृतसर्वस्वश्चोत्क्षिप्तभुजं कृत्वोपद्रवं पूत्करोति । 'खलयवमाष—' इत्यत्रब्रह्मण्यमिति रूपम् ॥

कर्णे चम्पकमुन्नतस्तनतटोत्सङ्गेऽतिमुक्तस्त्रजं
भूषायै प्रमथप्रिया निदधिरे मौलौ च चूताङ्कुरम् ।
प्रत्यङ्गं कृतनित्यसंनिधिविधेः सद्यः सपर्यारस-
स्तेनाकल्पत नान्तरीयकतया देवस्य शृङ्गारिणः ॥ ९६ ॥

प्रमथप्रिया गणस्त्रियः कर्णादौ चम्पकादिकं भूषणत्वार्थं यन्निदधिरे निहितवत्यस्तेन शृङ्गारिणो देवस्य कामस्य सपर्यारसः पूजा संपन्ना । यतो नान्तरीयकतयाविनाभावेन तासां प्रत्यङ्गं कृतो नित्यं संनिधिविधिर्येन । देवस्य च पूजायुक्तेति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये पुष्पावचयवर्णनं नामाष्टमः सर्गः ।

---

नवमः सर्गः ।

अथ ताः प्रसूनरभसेन निभृतपिहिता मधुव्रतैः ।
श्रान्तिदवथुहतये यमुनापयसीव मग्नवपुषोऽवतस्थिरे ॥ १ ॥

भूषणत्वार्थं ग्राह्येषु पुष्पेषु रभसेन वेगेन हेतुना मधुव्रतैर्निभृतं कृत्वा पिहितास्ताः क्लान्त्या खेदेन दवथुस्तापस्तस्य हतये निवारणाय यमुनापयसि मग्नवपुषो मज्जन्त्य इवावतस्थिरेऽवस्थिताः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ॥

अवहन्त ताः श्रमजलार्द्रकुसुमरजसाञ्चितं वपुः ।
एत्य सुरभिरमया रभसाद्विहिताङ्गरागमिव निर्जराङ्गनाः ॥ २ ॥

ता वपुः कुसुमरजसाञ्चितं शोभितमवहन्त । अत एव सुरभिरमया वसन्तलक्ष्म्या रभसादेत्य विहिताङ्गरागमिवेत्युत्प्रेक्षणम् । वसन्तश्रीरपि ताभ्यो न्यूनेत्यर्थः ॥

घनकर्णिकारभररेणुकवचितसमग्रविग्रहा ।
श्यामतनुरपि सुगौरतनूरिव तत्र कापि रुरुचे चकोरदृक् ॥ ३ ॥

श्यामतनुः श्यामवर्णापि कापि चकोरदृक् सुगौरतनूर्गौरवर्णेव रुरुचे । यतो घनो यः कर्णिकारभररेणुस्तेन कवचितश्छादितः समग्रो विग्रहः शरीरं यस्याः । 'स्त्रियां मूर्तिस्तनुस्तनूः' इति कोषः ॥

अपरा परागनिकरेण घनतरहरिद्रितास्वरा ।
आत्तदयितवसनव्यसनां रमणीमनुव्यधित पीतवाससः ॥ ४ ॥

परागस्य मकरन्दस्य निकरेण घनतरमत्यर्थं हरिद्रितं पीतीकृतमम्बरं यस्याः साऽपरा आत्तं दयितवसने पीताम्बरवस्त्रे व्यसनमभिषङ्गो यया ताम् । पीतवस्त्रधारिणीमित्यर्थः । पीतवाससो हरे रमणीं लक्ष्मीमनुचकार । पीतवासस इति प्रकृतानुगुणमभिधानम् ॥

अथ ताभिरुग्रतरखेदबहुलगतिभिर्मुखानिलैः ।
नुन्नमिव दिवसनाथवपुः सुरवर्त्मनः सपदि मध्यमध्यगात् ॥ ५ ॥

दुर्निवारखेदेन बहुलगतिभिर्मुखानिलैर्निःश्वासैः करणभूतैस्ताभिर्नुन्नं प्रेरितमिव दिवसनाथवपुः सूर्यबिम्बं सुरवर्त्मनो व्योम्नो मध्यं सपदि क्षणेनैवाध्यगादवापत् । सपदीति पुष्पावचये रसद्योतनार्थम् । अध्यगादिति 'इणो गा लुङि' इतीणो लुङि रूपम् ॥

गगनासिताश्मतटकोटिनिविडतरघट्टनादिव ।
धाम कठिनमभवत्तरणेरधिकं तदा विवृततापविप्लवम् ॥ ६ ॥

तदा मध्याह्ने तरणेः सूर्यस्य धाम तेजोऽधिकं कठिनमभूत् । यतो विवृतः प्रकाशितस्तापविप्लवः संतापोपद्रवो येन । 'विधृत–' इति वा पाठे विधृतस्तापो यस्मादिति वाक्यम् । अतः संभाव्यते—गगनमेवासिताश्मतटमिन्द्रनीलतटं तस्य कोट्या निविडतरं घट्टनं तस्मादिव । ताडितो हि कठिनो भवंस्तापं धत्ते ॥

तिलकं ममार्ज विससर्ज घुसृणरसमार्द्रयद्वपुः ।
घर्मसलिलमकृतैणदृशामवगाहकृत्यमलुनात्तु न क्लमम् ॥ ७ ॥

घर्मसलिलं कर्तृ तिलकं ममार्ज विनाशयामास । घुसृणरसं कुङ्कुमाङ्गरागं विससर्ज संजहार । वपुरार्द्रयदार्द्रमकरोत् । आर्द्रशब्दाण्णिचि लङि रूपम् । शतरि वा रूपम् । एणदृशामवगाहकृत्यं स्नानकार्यमकरोत् । स्नानं हि तिलकादीन्मार्ष्टि । घर्मसलिलं क्लमं तु नालुनात् । स्नानाद्धर्मजलस्येयदेवान्तरमासीदित्यर्थः ॥

प्रहिताग्रदूतमिव सान्द्रविदलदरविन्दबन्दिभिः ।
ऊर्मिपवननिवहैरथ ताः प्रययुर्निमज्जनरसेन मानसम् ॥ ८ ॥

सान्द्रं कृत्वा विदलन्ति यान्यरविन्दानि तेषां बन्दिभिर्गुणवर्णकैः । सपद्मसौगन्ध्यैरित्यर्थः । ऊर्मिपवनानां निवहैः प्रहिता विसृष्टा अग्रे दूता येन तन्मानसं सरोविशेषं निमज्जनरसेन हेतुना जग्मुः ॥

उदपश्यदाशु कुतुकेन गणशशिमुखीस्तटोन्मुखीः ।
लोलशफरवलनेन सरः प्रकटय्य लोचनविचेष्टितानि ताः ॥ ९ ॥

लीलया भयेन वा लोला ये शफरा मीनास्तेषां वलनेन स्पन्दनेन हेतुना लोचनविचेष्टितानि नेत्रकृत्यानि प्रकटय्य तत्सरो मानसं तटस्थितास्ता गणस्त्रीरुदपश्यत्। अत्रेवशब्दः प्रतीयमानो द्रष्टव्यः॥

पुलिनस्थलीकनकपट्टपटलमुकुटेषु तत्र ताः।
केलितुलितकलधौतशिलैर्जघनैर्निषेदुरसमश्रमच्छिदे॥ १०॥

तत्र मानसे पुलिनस्थली सैकतभूमिस्तत्र ये कनकपट्टा हेमशिलासनानि तेषां पटलं तस्य मुकुटेषु ता गणस्त्रियोऽसमस्य बहोः श्रमस्य च्छिदे वारणाय जघनैर्निषेदुर्निषण्णाः। केल्या अयत्नेन तुलिताः समीकृताः कलधौतशिलाः सुवर्णदृषदो यैस्तानि। गौरववृद्धिरित्यर्थः। अनुरूपसंघटनोक्तिरियम्॥

पवनात्तताण्डवतदङ्गपरिचितदुकूलपल्लवैः।
तस्य तटमपि चिरं सरसो धवलोर्मिसर्ग इव सक्तिमग्रहीत्॥११॥

पवनेन हेतुनात्तं ताण्डवं कम्पो यैस्तदङ्गपरिचिता नायिकागात्रलग्ना ये दुकूलपल्लवास्तैर्हेतुभिस्तस्य मानसस्य तटमपि धवलोर्मीणां शुभ्रतरङ्गाणां सर्गे निर्माणे सक्तिमिवाग्रहीत्। वस्त्राणां कम्पमानत्वाच्छुभ्रत्वाच्च मानसवीचिभिरुत्प्रेक्षणम्॥

प्रतिफालमेत्य सरसोऽन्तरपि धृतपटावगुण्ठनः।
तूर्णमकृत स पुरंध्रिजनः प्रतिपालनासहतयेव मज्जनम्॥ १२॥

धृतं पटावगुण्ठनं वस्त्रवेष्टनं येन स पुरंध्रिजनस्तस्य सरसोऽन्तर्मध्ये प्रतिफालं प्रतिबिम्बमेत्य मज्जनमिवाकरोत्। सवस्त्रः कथं मज्जतीत्याह—प्रतिपालने वस्त्रवारणेन कालविलम्बेऽसहता तयेवेति पूर्वकालो विवक्षितः॥

द्रवदिन्द्रनीलमणिभासि पयसि सरसः स बिम्बितः।
दिव्ययुवतिनिवहः प्रययौ बहिरुज्जिहानजलमानुषीलिपिम्॥१३॥

द्रवन्तो द्रवरूपा ये इन्द्रनीलमणयस्तद्वद्भा दीप्तिर्यस्य। निर्मल इत्यर्थः। सरसः पयसि प्रतिबिम्बितो दिव्ययुवतिनिवहस्तस्मात्सरसो बहिरुज्जिहाना उद्गच्छन्त्यो या जलमानुष्यस्तासां लिपिं भङ्गिं प्रापुः। वस्तुवृत्तेन प्रतिबिम्बित ऊर्ध्वमुखो भवति, अतः संभाव्यते—जलमानुष्य उद्गच्छन्तीति॥

जलकेलिनाटकनटीषु तटपथमुपेयुषीष्वथो।
उद्यदमललहरीनिवहः पुरतोऽव्रजज्जवनिकापरिश्रमम्॥ १४॥

जलकेलिरेव विविधाभिनयत्वान्नाटकं तत्र नटीषु तासु तटपथमुपेयुषीषु सतीषु तासामग्रे उद्यन्नुत्तिष्ठन्नमलो यो लहरीनिवहो जवनिकायाः परिश्रममाच्छादनरूपं कार्यमव्रजत्। नटीनां च जवनिका भवति॥

स्फुरदुत्कटोत्कलिकमाशु विसृमरतरङ्गबाहुभिः ।
शैलदुहितृपरिवारवधूः परिरब्धुमैच्छदिव ता जलाशयः ॥ १५ ॥

स्फुरन्त्य उत्कटा उत्कलिकाः सूक्ष्मलहर्यो यत्रैवं कृत्वा विसृमरा प्रसृमरशीला ये तरङ्गबाहवस्तैस्ताः शैलराजदुहितुः परिवारवधूः परिरब्धुमालिङ्गितुं जलाशयो मानसमैच्छदिव । अथ च स्फुरन्ती उत्कलिका यत्रैवं कश्चित्परिवारस्त्रीरालिङ्गति ॥

श्रमवारिबिन्दुभरवर्षपरिचितपयोधरोद्धुराः ।
कूलसितविहगलोकमदच्छिदिमादधुर्गतिरसेन तत्र ताः ॥ १६ ॥

श्रमवारिणो बिन्दुभर एव वर्षं तेन परिचिता युक्ता ये पयोधरा स्तना मेघाश्च तैरुद्धुराः । तुङ्गस्तन्य इत्यर्थः । ताः कूले सितविहगलोकस्य हंसगणस्य मदच्छिदिं दर्पनाशं गतिरसेनादधुश्चक्रुः । हंसेभ्योऽपि सलीलं जग्मुरित्यर्थः । सवर्षेषु मेघेषु सत्सु हंसानां मदच्छेदः ॥

वरुणावरोधपुरसौधसहचरविलाससद्मनि ।
दृष्टिरजनि घनफेनभरे सुदृशां निजस्मितसखे सखेलना ॥ १७ ॥

वरुणस्यावरोधपुरमन्तःपुरं तस्य सौधं तस्य सहचराः सहभाविनो ये विलासास्तेषां सद्मन्याश्रयभूते । वरुणस्त्रीसौधसदृश इत्यर्थः । निजस्मितस्य तद्धासस्य सदृशे घनफेनभरे विषये सुदृशां दृष्टिः सखेलना खेलन्ती जाता । फेनमपि दृष्ट्वा दृष्टिरतुष्यदित्यर्थः ॥

मुखरस्तरङ्गनिकरः स मुखनिमितफेनलीलया ।
किंस्विदचलदुहितुर्व्यतनोदभिषेककेलिशुभशङ्खवादनम् ॥ १८ ॥

मुखमग्रमास्यं च तत्र निमिता निश्चला ये फेनास्तेषां लीलया भङ्ग्या पार्वत्याः स्नानक्रीडायां शङ्खवादनं मुखरस्तरङ्गनिकरो भङ्गभरः किंस्विदकरोत् । फेनानां शुभ्रत्वाच्छङ्खत्वं मुखरत्वेन वादनं संभाव्यते ॥

विधुतः स्मराग्निकणवर्षकरणिभिरशोककोरकैः ।
भाविसलिलपरिमर्शभयादिव तत्यजे कचभरो नतभ्रुवाम् ॥ १९ ॥

स्मराग्नेः कणवर्षस्य करणिभिर्वर्णसंनिवेशाभ्यां सदृशैरशोकमुकुलैर्नतभ्रुवां कचभरस्तत्यजे । यतो विधुतः स्नानावसरे भूषणपुष्पादिपतनार्थं कम्पितः । संभाव्यते—भावी भविष्यन्यः सलिलपरिमर्शो जलस्पर्शस्ततो भयादिव । जलं ह्यग्नेर्विपक्षः ॥

विवलत्तिमिप्रणयभाजि तरलसितफेनचामरे ।
प्रीतिमधित सुरभीरुजनः स्मरकेतुदण्ड इव वीचिमण्डले ॥ २० ॥

विवलन्तो भयवशाच्चटुला ये तिमयो मीनास्तेषां प्रणयं भजति । तरलाः सिताः फेना

एव चामरं यत्र तस्मिन्वीचिमण्डले । अत एव स्मरध्वजदण्ड इव । कामस्य मीनो ध्वजः । ध्वजोपरि चामरेण भाव्यम् । सुरभीरुजनो देवाङ्गनागणः प्रीतिमधात् ॥

स तदा विकीर्य कणपङ्क्तिमुरसि निविडोन्नतस्तने ।

हारमपरमुपकल्पितवान्समतूतुषत्स्वरबला जलाशयः ॥ २१ ॥

निविडौ पीवरावुन्नतौ तुङ्गौ स्तनौ यस्य तस्मिन्नुरसि कणपङ्क्तिं क्षिप्त्वापरं द्वितीयं हारमुपकल्पितवान्स जलाशयः सरः स्वरबलाः स्वर्गस्त्रीः समतूतुषदतोषयत् ॥

स तटान्बभार सुरदारविविधमणिभूषणांशुभिः ।

वारिविसररभसाभिसरद्घनढौकितेन्द्रधनुरुद्धतानिव ॥ २२ ॥

सुरदाराणां संबन्धीनि विविधानि मणिमयानि भूषणानि तेषामंशुभिर्हेतुभूतैः स जलाशयो वारिविसरे रभसेन तृष्णयाभिसरद्भिर्घनैर्ढौकितानि यानीन्द्रधनूंषि तैरुद्धतानिव तटान्बभार । धनुष्मत्त्वादौद्धत्योक्तिः ॥

अरुणत्विषाधरदलेन शशिरुचिसखैस्तथा मुखैः ।

स्त्रैणमकृत तटजानपदं हरिहेतिहूतिजनमुन्मदाकुलम् ॥ २३ ॥

अरुणा लोहितारुणवच्च त्विट् कान्तिर्यस्य तेनाधरदलेन । तथा शशिरुचेः सदृशैर्मुखैः करणैः स्त्रैणं स्त्रीवर्गो हरिहेत्या नारायणायुधेन चक्रेण हूतिराह्वानं यस्य स जनश्चक्रवाकवर्गस्तं तटवासिनमुन्मदमाकुलं चाकरोत् । अरुणप्रभस्यौष्ठस्य दर्शनात्प्रभातसंभावनयोन्मदश्चन्द्रमसस्य मुखस्य दर्शनाद्रात्रिशङ्कयाकुलश्चक्रवाकवर्गः कृतः ॥

जलदेवताजनविनिर्यदसितमणिकेलिदर्पणैः ।

वक्त्रहिमगुसविधे सुदृशां गगनायितं घनसरोजिनीदलैः ॥ २४ ॥

जलाद्विनिर्यन्तो बहिरुत्थिता असितमणय इन्द्रनीलप्रकृतयः केलिदर्पणाः क्रीडादर्शाः । जलदेवतानां संबन्धिभिः केलिदर्पणैर्नलिनीदलैः पद्मिनीपत्रैर्वक्त्रहिमगोर्मुखचन्द्रस्य निकटे गगनायितमाकाशवदाचरितम् । 'कर्तुः क्यङ् सलोपश्च' इति क्यङन्ताद्भावे क्तः ॥

च्यवमानवाससि चिराय वपुषि गणयोषितां प्रियः ।

ऊर्मिमरुदतत वेपथुमत्पुलकोद्गमं कृतहठावगूहनः ॥ २५ ॥

च्यवमानं स्रंसद्वासो यस्य तस्मिन्गणस्त्रीणां वपुषि वेपथुमान्यः पुलकोद्गमो रोमाञ्चोद्भेदस्तमूर्मिमरुल्लहरीवायुरतत विस्तारितवान् । यतः कृतं हठेनात्यर्थमवगूहनमालिङ्गनं येन । प्रियो हृदयंगमः । कमिता चालिङ्गन्स्त्रीणां कम्परोमाञ्चौ जनयति । 'तनादिभ्यस्तथासोः' इति सिचो लुक् ॥

प्रतिबिम्ब्य वारिणि ममज्ज वदनपटली नतभ्रुवाम् ।

जन्मभुवमिव सभाजयितुं निजसंनिवेशसुहृदां सरोरुहाम् ॥ २६ ॥

प्रतिबिम्ब्य । जल इत्यर्थः । नतभ्रुवां स्त्रीणां संबन्धिनी वदनपटली मुखसमूहो वारिणि ममज्ज मग्नः । अतः संभाव्यते—निजो यः संनिवेशो रूपं तस्य सुहृदां सदृशानां सरोरुहां पद्मानां संबन्धिनीं जन्मभूमिं सभाजयितुं प्रीत्या द्रष्टुमिव । 'सभाज प्रीतिदर्शने' इति चौरादिकः ॥

कुचकुड्मलैस्तरलवीचिभरपरिणतैः सुचक्षुषाम् ।
प्रापि सुचिरमतिवेलवलज्जलदेवताकनककन्दुकायितम् ॥ २७ ॥

स्नानक्षोभवशात्तरलो यो वीचिभरस्तत्र परिणतैः प्रतिबिम्बितैः स्तनमुकुलैरतिवेलमत्यर्थं वलन्त्यूर्ध्वाधो गच्छन्ति यानि जलदेवीनां कनककन्दुकानि सुवर्णक्रीडनकविशेषास्तद्वदाचरितं सुचिरं प्रापि ॥

क्षुभिते तदाम्भसि मुमोच मधुपविसरः सरोरुहम् ।
द्रष्टुममरयुवतीः कुतुकात्पुरतोऽपसारित इव श्रियोदरात् ॥ २८ ॥

अम्भसि क्रीडया क्षुभिते चपले मधुपविसरो भ्रमरसमूहः सरोरुहं पद्मं तत्याज । अतः संभाव्यते—कुतुकात्कुतूहलवशादमरयुवतीरप्सरसो द्रष्टुं वीक्षितुमुदरात्पद्ममध्यस्थितया श्रिया पुरतोऽग्रादपसारितो निवारित इव । उदरात् ल्यब्लोपे पञ्चमी ॥

भयकातरं तरुणमुक्तकुटिलहठदीर्घविग्रहः ।
प्रैक्षि जलकरिभिरेणदृशां कबरीभरोऽभिनवशृङ्खलाभ्रमात् ॥२९॥

तरुणैर्मुक्तोऽपसारितग्रन्थिः, कुटिलः संस्कारानुरोधात्, हठदीर्घोऽतिप्रलम्बो विग्रहः शरीरं यस्य स एणीदृशां संबन्धी कबरीभरः केशपाशो जलहस्तिभिर्नवश्रृङ्खलेति भ्रान्तिवशाद्भयेन कातरं दीनं कृत्वा प्रैक्षि वीक्षितः ॥

जलदन्तिदानभरलोभविशदलिकलापचापलम् ।
मज्जदमररमणीचिकुरप्रकरस्तदा वरसरस्यसेवत ॥ ३० ॥

जलहस्तिनां दानभरे मदप्रसरे लोभेनार्थाज्जलान्तर्विशन्योऽलिकलापो भ्रमरसमूहस्तस्य चापलं तत्सदृशं चपलत्वं मानसे मज्जन्तीनां स्नान्तीनाममरयुवतीनां चिकुरप्रकरः केशसमूहोऽसेवत प्राप्तवान् ।।

तनुसीकरोत्करनिभेन पुलकित इवास्त विग्रहः ।
दिव्ययुवतितनुसङ्गसुखं सलिलाशयस्य सहसाभ्युपेयुषः ॥ ३१ ॥

अङ्गनास्नानक्षोभोत्थितानां तनूनां सीकराणां जलकणानामुत्करः समूहस्तस्य निभेन व्याजेन सलिलाशयस्य सरसो विग्रहो मूर्तिः पुलकितो जातरोमाञ्च इवास्त । यतो दिव्ययुवतीनामप्सरसां तनुसङ्गेन शरीरस्पर्शेन सुखं प्राप्नुवतः । सलिलाशयशब्दस्य पुंलिङ्गत्वादियमुक्तिः ॥

जलमानुषीचिकुरभारशिथिलपटुपाटलस्रजाम् ।
धार्ष्ट्यमधुरुपनमत्तरुणीघुसृणाङ्गरागसुभगास्तदोर्मयः ॥ ३२ ॥

उपनमन्संक्रमन्यस्तरुणीकुङ्कुमाङ्गरागस्तेन सुभगा मनोहरा ऊर्मयस्तदा जलमानुषीणां जलस्त्रीणां संबन्धी यश्चिकुरभारः केशकलापस्ततः शिथिला विश्लिष्टाः पटवो याः पाटलस्रजः पाटलामालास्तासां धार्ष्ट्यं तत्सादृश्यमधुरधारयन् । उपमोपक्रमोत्प्रेक्षेयम् ॥

अपनीय पीतनमुपोढदयितनखलक्ष्मणस्तनोः ।
कापि झगिति परिपाटलतां प्रतिनायिकाननमिवानयत्पयः ॥ ३३ ॥

उपोढानि धृतानि दयितनखलक्ष्माणि प्रियनखक्षतानि यया तस्यास्तनोः सकाशात्पीतनं कुङ्कुमाङ्गरागमपनीय स्तनक्षोभेण निवार्य कापि प्रतिनायिकाननं सपत्नीमुखमिव जलं झगित्याशु परिपाटलतामरुणत्वमनयत् । नखक्षतदर्शनात्कोपेन सपत्नीमुखस्यारुणत्वं कुङ्कुमसंक्रमणाज्जलस्यारुणत्वम् । प्रतिनायिकाननमित्युपमानतया कुङ्कुमादप्यधिकं रोषारुणत्वं सपत्नीमुखस्य सूचितम् । समुच्चितोपमेति केचित् ॥

अपहृत्य पीतनमशेषममरसुदृशां शरीरतः ।
भीत इव गहननाभिगुहां प्रपलाय्य तूर्णमविशत्पयोभरः ॥ ३४ ॥

अमरसुदृशां शरीरात्पीतनं कुङ्कुममपहृत्य हृत्वा भीत इव सन्पयोभरः प्रपलाय्य गहना या नाभिः सैव गहनत्वाद्गुहा तां प्राविशत् । अन्योऽपि महतां संबन्धि वस्तु हृत्वा भयवशाद्गहनां गुहां विशति ॥

ललनासु मज्जनरतासु तदमलमुखेन्दुसंनिधौ ।
वृद्धिमधिकमधिगम्य तदा सरसोऽम्बुनाम्बुधिजलं व्यडम्ब्यत ॥ ३५ ॥

देवाङ्गनासु मज्जने स्नाने रतासु सतीषु तासां देवस्त्रीणां स्नानवशादमला ये मुखेन्दवस्तेषां संनिधौ संनिधाने सत्यधिकां वृद्धिं प्राप्य सरसो जलेन समुद्रजलमन्वकारि । समुद्रस्य हि चन्द्रसंनिधौ वृद्धिः । मुखेन्दुसंनिधिवशात्स्तनजघनमज्जनप्रतीत्या स्तनादिप्रथिमा सूचितः ॥

अवशं प्रविश्य रससज्जदनिमिषतरङ्गितात्मनाम् ।
तत्र सरसि ततिरप्सरसां सलिलं चकार किल कूलमुद्रुजम् ॥ ३६ ॥

अवशं कृत्वा रसेन सज्जन्तो येऽनिमिषा देवास्तैस्तरङ्गित उल्लासित आत्मा चेतो यासां तासामप्सरसां ततिः पङ्क्तिस्तत्र सरसि प्रविश्य जलं कूलमुद्रुजं कूलानि तटान्युद्रुजति भनक्त्येवंविधं चकार । 'उदि कूले रुजिवहोः' इति खश् । अनिमिषैर्मत्स्यैस्तरङ्गित आत्मा स्वभावो येषां तेषामप्सरसामप्पूर्णानां सरसामिति च ॥

निजतीरशेखरमरालकुलगतिविलासतस्करीः ।
क्षुभ्यदकृत लहरीलगुडैर्हठघट्टितास्त्रिदिवसुन्दरीः सरः ॥ ३७ ॥

निजतीरस्य शेखरो भूषणं यन्मरालकुलं हंसव्रातस्तस्य गतिविलासो गमनशोभा तस्य तस्कर्यः । तत्सदृशगतीरित्यर्थः । त्रिदिवसुन्दरीर्नाकनारीः सरो लहर्य एव पृथुलत्वाल्लगुडास्तैर्हठेन घट्टितास्ताडिता अकृत । यतः क्षुभ्यत्सक्षोभम् । तस्करस्य च लगुडताडनमुचितम् । कोपनिमित्तः क्षोभो विसंस्थुलरूपेण क्षोभेणाध्यवसितः ॥

द्युवधूचतुःसमरसेन कलुषितमशेषतस्तदा ।
कूलधवलविहगानदुनोदपि मानसस्य सरसो बतोदकम् ॥ ३८ ॥

द्युवधूनामप्सरसां चतुःसमरसः कुङ्कुमकस्तूरिकाकर्पूरचन्दनै रचितमङ्गरागद्रव्यं तेनाशेषतः सर्वत्र कलुषितमाविलितं सन्मानसस्यापि जलं कूले धवलविहगान्हंसानदुनोदतापयत् । यस्यैव नित्यनिर्मलं जलं तदेवातापयदिति बतशब्दार्थः । धवलविहगेति पर्यायपदग्रहणं कलुषितेन निर्मलस्य तापनं संगतमित्यस्यार्थस्य च सूचनार्थम् ॥

गतिभङ्गिनिर्जितजलेभदशनशकलभ्रमादिव ।
कापि बिसमुदहरत्सरसः प्रियकेलिघट्टनधियामराङ्गना ॥ ३९ ॥

गतिभङ्ग्या गमनशोभया निर्जितः पराजितो यो जलेभो जलहस्ती तत्संबन्धी यो दशनशकलो दन्ताग्रं तद्भ्रमादिव कापि सरसः संकाशाद्बिसं मृणालं केल्या क्रीडया यद्घट्टनं ताडनं तद्धियोदहरदुद्धृतवती । पराभूतस्य च वस्तुहरणमुचितम् ॥

सलिलग्रहाय परिरब्धमपद इव सांध्यनीरदैः ।
स्त्रैणतनुघुसृणसंवननप्रथितारुणद्युति रराज तत्सरः ॥ ४० ॥

सांध्यनीरदैः संध्यामेघैरपदेऽसमये पानीयपानायालिङ्गितमिव तत्सरः स्त्रैणस्य स्त्रीवर्गस्य तनुषु यद्घुसृणं कुङ्कुमं तस्य संवननं संक्रान्तिस्तेन प्रथितारुणा द्युतिर्यस्य तत्सरो रराज । संवननेन स्वायत्तीकरणेन च द्युतिः प्रथते ॥

रसमज्जदुन्मदपुरंध्रितरुणकवरीभरैर्दधे ।
व्यक्तसलिलतुरगप्रवरश्रुतिकृष्णचामरविडम्बचुम्बनम् ॥ ४१ ॥

रसेन मज्जन्त्यः स्नान्त्य उन्मदाः सहर्षाः पुरंध्रयस्तासां तरुणाः कृष्णा ये कबरीभराः केशपाशास्तैर्व्यक्ता उत्तिष्ठन्तो ये सलिलतुरगप्रवराः श्रेष्ठा जलाश्वास्तेषां श्रुतयः कर्णास्तत्र कृष्णचामराणि तेषां विडम्बोऽनुकारस्तस्य चुम्बनं प्राप्तिर्दधे धृतम् ॥

क्षुभिताम्बुभूम्नि निरमज्जि सुरयुवतिवक्त्रनिर्जितैः ।
गन्तुमिव शरणमम्बुरुहैर्बलिसद्मशायिहरिनाभिपङ्कजम् ॥ ४२ ॥

स्नानवशात्क्षुभितं यदम्बु जलं तस्य भूमा बाहुल्यं तत्राम्बुरुहैः कमलैर्निरमज्जि मग्नम् । अतः संभाव्यते—सुरयुवतीनां वक्त्राणि मुखानि तन्निर्जितैर्बलिसद्मशायी पातालवासी यो हरिर्विष्णुस्तस्य नाभिपद्मं शरणं गन्तुमिव । तुल्यजातीयत्वादित्याशयः ॥

करजैर्लुलाव कलधौतकमलकुलमङ्गनागणः ।
रूढनवकनकपद्ममिव प्रतिबिम्बितैरथ सरोऽकरोन्मुखैः ॥ ४३ ॥

अङ्गनाजनः स्त्रैणं करजैर्नखैः करणभूतैः कलधौतमयं सुवर्णप्रकृति कमलकुलं लुलाव चिच्छेद । अथ च प्रतिबिम्बितैः स्वमुखैः सरो रूढानि जातानि कनकपद्मानि यस्य तदिवाकरोत् । नवत्वं पुराणानां छेदात् ॥

विजहेऽधिवारि तटकोकमिथुनततिमात्मसोदरीम् ।
द्रष्टुमिव कुचयुगैः पुरतो घनकुङ्कुमावरणमेणचक्षुषाम् ॥ ४४ ॥

जले एणचक्षुषां स्त्रीणां कुचयुगैः स्तनद्वन्द्वैरग्राद्घनकुङ्कुममेवावरणमाच्छादनं विजहे त्यक्तम् । अत्र फलोत्प्रेक्षा—आत्मनः स्वस्य सोदरीं सदृशीं तटे कोकमिथुनानां चक्रवाकाणां ततिं पङ्क्तिं द्रष्टुमिव ॥

भगवानथ स्वयमुपेत्य सममचलराजकन्यया ।
तस्य बहलजलकेलिरसात्कमलाकरस्य पुलिनं व्यमण्डयत् ॥४५॥

बहलो यो जलकेलिरसस्तस्मात्स्वयमप्रेरणयाचलराजकन्यया पार्वत्या सममुपेत्यागत्य भगवान्महेशस्तस्य सलिलाशयस्य सरसः पुलिनं तटं व्यमण्डयदभूषयत् ॥

चूडेन्दुना मुकुलिताम्बुजमन्धकार-
शङ्काकृता गलरुचासमशोककोकम् ।
नेत्रानलोष्मचरितेन दरिद्रिताम्भ-
स्तस्याग्रतो बत सरो विधुरीबभूव ॥ ४६ ॥

चूडाचन्द्रप्रभावात्संकुचितपद्मम् । नीलगलत्वादन्धकारभ्रान्तिकृता कण्ठदीप्त्या असमशोकाः सदुःखाः कोकाश्चक्रा यस्य तत् । तथा तृतीयनेत्रेऽनलोऽग्निस्तस्योष्मचरितेन संतापेन दरिद्रितमल्पीकृतमम्भो यस्य तत्सरो भगवतः पुरो विधुरीबभूव ॥

तत्तत्क्षणं भगवतः शशिखण्डमौलेः
सायुज्यमाप्तमिव मानसमाबभासे ।
तद्विग्रहेण पयसि द्रवदिन्द्रनील-
लावण्यलुण्ठनकृति प्रतिबिम्बितेन ॥ ४७ ॥

द्रवन्तो द्रवरूपा य इन्द्रनीलास्तेषां लावण्यं शोभा तस्य लुण्ठनं हननं कुर्वेति । निर्मल इत्यर्थः । पयसि प्रतिबिम्बितेन तद्विग्रहेण भगवच्छरीरेण हेतुना तन्मानसं कर्तृ चन्द्रमौलेः सायुज्यमाप्तं प्राप्तैकात्म्यमिवाबभासे । निर्मलत्वात्सूक्ष्माङ्गानामपि प्रतिबिम्बितत्वात् ॥

शुद्धप्रभेऽम्भसि तदा स जलाशयाग्र्य-
स्तस्योर्ध्वनेत्रशिखिना प्रतिफालभाजा ।
हर्तुं स्मयव्यतिकरं जलधेरपूर्व-
मौर्वाग्निसौहृदमिव प्रकटीचकार ॥ ४८ ॥

शुद्धप्रभे निर्मलेऽम्भसि जले प्रतिफालं प्रतिबिम्बं भजता तस्य भगवत ऊर्ध्वनेत्र-शिखिना तृतीयनेत्राग्निना हेतुना स जलाशयाग्र्यः सरोवरः समुद्रस्यौर्वाग्निवहनेन दर्पं हर्तुमिवौर्वाग्नेः सौहृदं परिचयं प्रकटीचकार । 'हृदयस्य हृल्लेखयदण्लासेषु' इत्यणि हृदा-देशेन सौहृदमिति रूपम् ॥

फेनापाण्डुरखण्डभस्मरजसं पर्यन्तसीमन्तितो
हेमाम्भोरुहकुड्मलैः प्रकटितालीकाग्निकीलाभरम् ।
बिभ्राणो जटिलं वपुः पुटकिनीपत्रैर्घनोद्यद्गल-
च्छायं तं स मृडं व्यडम्बयदिव क्रीडासरोजाकरः ॥ ४९ ॥

स क्रीडायै सरोजाकरः सरोवरस्तं मृडमीश्वरं व्यडम्बयदन्वकरोत् । अनुकारोऽत्र न सिद्धत्वेन, अपि तु संभाव्यमानत्वेनेतीवशब्दप्रयोगः । अत्रोपपत्त्यै फेनापाण्डुरित्यादि-विशेषणोपन्यासः । फेनैरापाण्डुरखण्डं भस्मरजो यस्य । हेमपद्ममुकुलैः पर्यन्ते सर्वत्र सीमन्तितः कृतसीमन्तः । प्रकटितोऽलीके ललाटेऽग्नेः कीलानां ज्वालानां भरो येन । तथा पुटकिनीनां नलिनीनां पत्रैर्जटिलमावृतं वपुर्बिभ्राणः । घनं कृत्वोद्यन्ती गलच्छाया कण्ठशोभा यस्य तम् ॥

दधच्चूडाचन्द्रं नयनदहनार्चिःकपिशितं
जलक्रीडासज्जीकृतकनकशृङ्गप्रतिभुवम् ।
निमज्ज्य प्राज्यत्वं सह गिरिदुहित्राथ भगवा-
ननैषीत्तस्याम्भो घटितपटुफेनाट्टहासितम् ॥ ५० ॥

नयने दहनोऽग्निस्तस्यार्चिभिः कपिशितमतो जलक्रीडार्थं सज्जीकृतं यत्कनकशृङ्गं तस्य प्रतिभुवं सदृशम् । प्रतिभूर्हि सदृश उचितः । चूडाचन्द्रं दधद्भगवान्गिरिदुहित्रा पार्वत्या सह निमज्ज्य तस्याम्भो मानसजलं प्राज्यत्वमाधिक्यमनैषीत् । अत एव घटितं पटुफेन एवाट्टहसितं यस्य । आधिक्यलाभे ह्यट्टहास उचितः ॥

तरललहरीबाहुक्षिप्तैस्त्रिलोचनमार्चिच-
च्चिरमिव सरः फेनश्वेतप्रसूनकदम्बकैः ।
हरितसलिलावर्तश्रेण्या हरिन्मणिकङ्कण-
प्रकरमुपदाहेतोर्देव्यै ददाविव चादृतम् ॥ ५१ ॥

तरलाश्चपला या लहर्यस्ता एव बाहवस्तैः क्षिप्तैः कीर्णैः फेना एव श्वेतप्रसूनानि तेषां कदम्बकैः समूहैः करणैस्तत्सरो हरमपूजयत्। तथा हरिता नीला ये सलिलावर्तास्तेषां श्रेण्या हेतुभूतया हरिन्मणिकङ्कणानामिन्द्रनीलबाहुवर्तकानां प्रकरं तत्सरः कर्तृ उपदाहेतोर्ढौकनिकानिमित्ताद्देव्यै सादरं कृत्वा ददावदादिव। देव्याश्चोपदोचिता॥

तस्मिन्नथो सरसि दत्तसमुद्रशङ्के
सोदर्यवत्सलतया तनया हिमाद्रेः।
पातालमूलविहितावसथं वराकं
मैनाकमाश्विव सभाजयितुं ममज्ज॥ ९२॥

तत्र सरसि पार्वती ममज्ज मग्ना। अत उत्प्रेक्ष्यते—सोदरवत्सलतया भ्रातृस्नेहेन मैनाकं सभाजयितुं प्रीत्या द्रष्टुमिव। यतो वराकं दयार्हम्। यतः पाताले कृतवसतिम्। पक्षच्छेदभयात्। मैनाकः समुद्रे वर्तते। सा तत्र किं मग्नेत्याह—महत्त्वेन दत्ता समुद्र इति शङ्का येन॥

संसज्जत्सरभसनीलकण्ठदृष्टावातिथ्यं निविडपयोधरप्रपञ्चे।
आयाते गिरिदुहितुर्वतातिरेकं तत्कालं किल सलिलाशयोऽधिशिश्ये॥९३॥

दर्शनसज्जसोत्कण्ठहरदृष्टौ गौरीसंबन्धिनि पयोधरप्रपञ्चे स्तनप्राग्भारे आतिथ्यमन्तःप्रवेशात्परिचयमायाते सति स सरोवरोऽतिरेकमाधिक्यं शिश्रिये। अथ च सक्तसोत्कण्ठमयूरदृष्टौ पयोधरप्रपञ्चे मेघाडम्बरेऽतिथौ सति सरोऽतिरिच्यत इत्याश्चर्यम्॥

परितो महेश्वरकुरङ्गचक्षुषः प्रतिबिम्बिताम्बुरुहबन्धुमण्डलाः।
धृतशातकौम्भकलशा इवादधुः सुचिरं तरङ्गततयोऽभिषेचनम्॥९४॥

प्रतिबिम्बितसूर्यबिम्बा वीचिमालाः ससुवर्णकुम्भा इव महेश्वर्याः पार्वत्याः परितोऽभिषेकं दधुः। ईश्वरस्त्रियाश्च सुवर्णकुम्भैरभिषेकं कुर्वन्ति स्त्रियः॥

कचेष्वकृत मुक्ततां व्यधित वीतरागं वपु-
र्निरञ्जनदशास्पृशावथ ततान सद्यो दृशौ।
स मज्जनमहोत्सवः पुलककम्पसंपज्जुषं
जगत्त्रयगुरुप्रियामपि निकाममन्वग्रहीत्॥ ९५॥

तत्सरो गौर्याः केशेषु मुक्ततां बन्धमुक्तिमकरोत्। तथा निरङ्गरागं वपुर्व्यधात्। तथा निरञ्जनावस्थे दृशौ चकार। शीतवशात्पुलककम्पसंपदं सेवमानां जगत्त्रयगुरुप्रियां गौरीमप्यन्वग्रहीत्। सहजकान्त्याविष्करणात्। अथ च कश्चिन्मुक्ततां निर्वाणं करोति। रागमभिष्वङ्गं विगमयति। निरञ्जनां विश्लेषावस्थतां करोति। पुलककम्पौ समावेशकृतौ तज्जुषं गुरुप्रियां महाचार्यभार्यामनुगृह्णाति॥

त्वङ्गत्तुङ्गतरङ्गधौतशिरसोऽप्यातन्वतो मज्जन-
क्रीडां सार्धमगाधिराजसुतया देवस्य मारद्रुहः ।
मौलीन्दुद्युतिपौनरुक्त्यगुरुभिर्गात्रोद्भवैर्भस्मभि-
र्दिक्केलीमुकुरे निकाममुदभूत्तस्मिन्सरस्यच्छता ॥ ९६ ॥

त्वङ्गद्भिस्तुङ्गैस्तरङ्गैर्धौतं शिरो यस्य तथाविधस्यापि गौर्या साकं स्नातवतो मारद्रुहो हरस्याङ्गोत्थितैर्भस्मभिस्तस्मिन्सरसि । मानस इत्यर्थः । अच्छता पवित्रतारूपं नैर्मल्य-मुदभूत् । मौलीन्दोर्द्युतिपौनरुक्त्ये गुरुभिरुपदेष्टृभिः । दिशां केलीमुकुरे क्रीडादर्पणे । दिशां तत्र प्रतिबिम्बात् । मुकुरस्य च भस्मनाच्छत्वमुचितमिति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकवि-
राजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
जलक्रीडावर्णनं नाम नवमः सर्गः ।

---

## दशमः सर्गः ।

भानुमानथ नभोध्वलङ्घनक्लान्तिकुड्मलितपादपल्लवः ।
मन्द्रनिर्झररवैरुदीरितस्वागतं चरमशैलमभ्यगात् ॥ १ ॥

नभोध्वनो गगनमार्गस्य लङ्घनं पारगमनं तेन क्लान्तिः क्लेशस्तया कुड्मलिताः संकु-चिताः पादपल्लवा यस्य भानुमान्सूर्यो मन्द्रा मधुरा ये निर्झररवाः प्रपातजलशब्दास्तैर्हे-तुभिरुदीरितमुक्तं स्वागतं शोभनागमशब्दो येन तं चरमशैलमस्ताद्रिमभ्यगात् । अध्व-क्लान्तश्च विश्रमार्थं स्वागतकारिणमभिगच्छति ॥

तत्क्षणोज्जिगमिषन्सुधाकरग्रावदुर्दिनकणोक्षणादिव ।
अस्तभूभृति कलापमूष्मणोऽभीक्ष्णमर्यममरीचयोऽमुचन् ॥ २ ॥

अर्यम्णः सूर्यस्य मरीचयो रश्मय ऊष्मणः कलापं तापप्रपञ्चममुचन्नत्यजन् । क्व । अस्तपर्वते । कुत एवोज्जिगमिषन् । आशङ्कायां सन्निच्छायां वा । उज्जिगमिषन्नुदयन्यः सुधाकरश्चन्द्रस्तस्य ग्रावाणश्चन्द्रकान्तास्तेषां दुर्दिनं प्रवाहस्तस्य कणास्तैरुक्षणं सेचनं तस्मादिव । जलं ह्यग्नेः प्रतिपक्षः ॥

प्रस्थितेन रविणा समं पितुर्गन्तुमिच्छुरिव पार्श्वमम्बुधेः ।
पल्लवाररपिधानबन्धुरं श्रीरमुञ्चदरविन्दमन्दिरम् ॥ ३ ॥

पल्लवाः पत्राणि त एवाररपिधानं द्वारसंपुटं तेन बन्धुरं सुबद्धं कृत्वा तेन श्रीरर-विन्दं कमलमेव मन्दिरमावासमत्यजत् । हेतुरुत्प्रेक्ष्यते—समुद्रनिकटं प्रस्थितेन सूर्येण समं पितुः समुद्रस्य निकटं गन्तुकामेव । प्रवाससहचरस्य लाभे स्त्री च पितृगृहं गन्तु-कामा स्वगृहं सुबन्धं करोति ॥

भूमिमण्डलरसोपभुक्तिभिस्तिग्मगोः सुहिततामुपेयुषः ।
तल्पकल्पचरमाद्रिशायिनः पादलालनमकारि वारिजैः ॥ ४ ॥

भूमिमण्डलस्य रसो जलं तस्योपभुक्तिभिः पानैर्हेतुभिः सुहिततां तृप्तिमुपेयुषः प्राप्तवतः । तथा तल्पकल्पः पर्यङ्कसमो यश्चरमाद्रिरस्तपर्वतस्तत्र शायिनः । तिग्मगोः सूर्यस्य पादानां रश्मीनां लालनं परिचरणं वारिजैः पद्मैः कृतम् । कस्यचिच्च रसानां मधुरादीनामुपभुक्तिभिस्तृप्तस्य तल्पशायिनः पादयोश्चरणयोर्लालनं सुकुमारक्रमेण परिचरणं भृत्यैः क्रियते ॥

रोद्धुमिच्छुरिव गन्तुमुद्यतं वल्लभं द्युतिपटाञ्चलग्रहात् ।
संकुचत्कमलपाणिपल्लवो विक्लवोऽजनि सरोजिनीजनः ॥ ५ ॥

संकुचन्तः कमलान्येव पाणिपल्लवा यस्य स कमलिनीगणो विक्लवो दीनोऽजनि जातः । हेतुरुत्प्रेक्ष्यते—गन्तुमुद्यतं कृतोद्योगं वल्लभं नलिनीसंबन्धित्वात्सूर्यं रोद्धुमिच्छुरिव । कुतः, द्युतिरेव प्रसारितत्वात्पटस्तस्याञ्चलग्रहात् । कामिनीलोकश्च पटाञ्चलग्रहणेन जिगमिषुं नायकं रोद्धुकामस्तस्मिन्हठाद्गच्छति संकुचत्करो दीनो जायते ॥

चण्डधामनि वहत्यदूरतामावहद्भिरसमोष्मविप्लवम् ।
सूर्यकान्तगतिरेव पश्चिमे प्रापि सर्वमणिभिः पयोनिधौ ॥ ६ ॥

पश्चिमसमुद्रे सर्वमणिभिरशेषरत्नैः सूर्यकान्तानां गतिः साम्यं प्रापि प्राप्ता । यतश्चण्डधामनि सूर्येऽदूरतां प्रत्यासत्तिं दधति सति । असमो बहुरूष्मविप्लवः संतापबाधस्तमावहद्भिः कुर्वाणैः । सूर्यकान्तवत्सर्वे पाषाणाः ससंतापा जाता इत्यर्थः ॥

पद्मपाणिमरविन्दिनी तदा यद्बभार करसंमुखं रवेः ।
वेद्मि तेन पुनरागमार्थिनी धर्महस्तममुतः किलाग्रहीत् ॥ ७ ॥

रवेः सूर्यस्य नायकमुख्यस्य संबन्धिनः करस्य रश्मेर्हस्तस्य च संमुखं पद्म एव पाणिर्हस्तस्तं नलिनी यद्बभार तेनेति वेद्मि जानामि, अरविन्दिनी पुनरागमनमर्थयते भूय आगमनमभिलषन्ती सत्यममुतो नायकप्रख्यात्सूर्याद्धर्महस्तं सत्यार्थं हस्तवाचनिकमग्रहीत् ॥

रुग्णपादघटनादिवांशुमद्बिम्बशोणमणिपीठिकालुठत् ।
संभ्रमाकुलसरोजलोचनो वासरोऽजनि चिरान्निराश्रयः ॥ ८ ॥

रुग्णं भग्नं यत्पादघटनं पादानां रश्मीनां खुराणां च घटनं ततो हेतोर्दिवोऽम्बरसकाशादंशुमद्बिम्बं सूर्यमण्डलमेव शोणमणिपीठिका पद्मरागमय आसनभेदोऽलुठत् । संभ्रमेणावेगेनाकुलं सरोजलोचनं पद्मनेत्रं यस्य स वासरो दिवसो निराश्रयोऽजनि जनितः । पीठिकास्थानस्य रवेरस्तमयात्खुरकभङ्गात्पीठं लुठति । पुरुषश्च निराश्रयो जायते ॥

अम्बुधेः पयसि बिम्बमम्बरात्तूर्णमम्बुजपतेस्तदापतत् ।
तत्समुच्छलितसीकरैरिव प्रापदर्कमणिपावकः शमम् ॥ ९ ॥

अम्बरादाकाशादम्बुधेः पयसि समुद्रजलेऽम्बुजपतेर्बिम्बं सूर्यमण्डलमपतत् । तेन दूराज्जलमध्ये सूर्यपतनेन समुच्छलिता ऊर्ध्वमुत्थिता ये सीकराः कणास्तैरिव सूर्यकान्ताग्निः शमं प्रापत् ॥

मन्दमग्निमधुरर्यमोपला दर्शितश्वयथु चाभवत्तमः ।
दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरसंनिधौ ॥ १० ॥

ओषधिपतिश्चन्द्रो वैद्यश्च तस्यासंनिधौ संनिधानाभावेऽर्यमोपलाः सूर्यकान्ताः सलिङ्गत्वात्पुरुषाश्च मन्दं शाम्यन्तमग्निं बाह्यमाभ्यन्तरं चाधुरधारयन् । तमोऽन्धकारं दर्शितः श्वयथुर्वृद्धिः शोफश्च येन तदभवत् । दृष्टयो नेत्राणि तिमिरादन्धकारान्नेत्ररोगभेदाच्च जातं दोषं सिषेविरे प्रापुः । अत्राद्यपादे 'विश्वमास्त विरुचि प्रदोपतः' इति वा पाठान्तरम् । नहि तमःप्रणाशः श्वयथुव्यपगम इव सूर्यकान्तानामग्नित्वव्यपगमः ॥

उन्मिषत्तरलतारतारया संध्यया तरुणता तथा दधे ।
गाढरागगरिमोद्गमो यथा वासरो भृशकृशत्वमाययौ ॥ ११ ॥

उन्मिषन्त्य उल्लसन्त्यस्तरलास्तारा दीप्तास्तारास्तारका दृष्टिमण्डलं च यस्यास्तया । विशेषणसाम्यात्स्त्रिया च । तरुणता प्रौढत्वं यौवनं च तथा दधे धृतं यथा गाढो रागस्य लोहितत्वस्याभिष्वङ्गस्य च गरिमोद्गमो बाहुल्यं यस्य स वासरो दिवसो भृशं कृशत्वं तनुत्वमाययौ प्राप्तः ॥

सर्ववासरनिघृष्टपद्मिनीकण्टकक्षतकरः प्रभाकरः ।
पातितोऽम्बरतलादनेहसा चक्षमे किमपि नावलम्बितुम् ॥ १२ ॥

सर्ववासरमशेषदिनं निघृष्टा दार्ढ्यापादनेन तीक्ष्णीकृता ये पद्मिनीकण्टकास्तैः क्षतः करो रश्मिर्हस्तत्वेनाध्यवसितो यस्येति प्रतीयमानोत्प्रेक्षा । दिवाकरः सूर्यो विशेषणसाम्यात्पुरुषश्चानेहसा कालेनाम्बरतलादाकाशात्पतितः सन्किमप्यवलम्बितुमालम्बत्वेन कर्तुं न चक्षमे न शक्तः ॥

शंसितुं विजयितामनेहसो न्यस्यता लहरिकोणमब्धिना ।
निर्ममेऽभ्युपनमन्मरीचिमद्बिम्बताम्रपटहावघट्टनम् ॥ १३ ॥

लहर्य एव कोणः पटहवादनदण्डस्तं न्यस्यताब्धिना समुद्रेणाभ्युपनमद्यन्मरीचिमद्बिम्बमेव ताम्रपटहः शुल्वानकस्तस्य घट्टनं निर्ममे कृतम् । किं कर्तुम् । अनेहसः कालस्य विजयितां शंसितुं प्रकाशयितुम् । निकटं प्राप्ते सूर्ये लहर्योऽलगन्नित्यर्थः ॥

पद्मरागरुचिसंचयाञ्चितावर्तगर्तशतबन्धुरेऽम्बुधौ ।
सांध्यरागसचिवं न मण्डलं पप्रथे विवलमानमुष्णगोः ॥ १४ ॥

पद्मरागाणां रुचिसंचयो दीप्तिप्रपञ्चस्तेनाञ्चिता व्याप्ता ये आवर्ता गह्वरास्तेषां शतानि तैर्बन्धुरे मनोज्ञेऽम्बुधौ समुद्रे ससंध्यारागं विवलमानं भ्रमदुष्णगोः सूर्यस्य मण्डलं न पप्रथे न प्रतीतम् । समानगुणत्वादावर्तभ्रान्तेः ॥

पश्चिमाद्रिवनदावपावके चण्डरोचिपि दधत्यदूरताम् ।
गर्भसोढवडवानलव्यथः सागरोऽथ बहिरप्यदह्यत ॥ १५ ॥

पश्चिमाद्रिरस्ताद्रिस्तस्य वनेषु दावपावके दावाग्नौ तापकत्वाच्चण्डरोचिपि सूर्येऽदूरतां नैकट्यं दधति सति सागरो बहिरप्यदह्यत दग्धः । गर्भेऽभ्यन्तरे सोढा वडवाग्निव्यथा येन सः । अन्तर्वडवाग्निरिव बहिरादित्योऽतापयदित्यर्थः ॥

क्षोभिते प्रविशता विवस्वता वारिधावधिकमा रसातलात् ।
रत्नशारिततदीयपङ्कवत्प्रोच्चयौ तरुणतारकं तमः ॥ १६ ॥

समुद्रं विशता विवस्वता सूर्येण रसातलं यावत्समुद्रे क्षोभिते सति रत्नैः शारितं शबलं कृतं यत्तदीयपङ्कं समुद्रसंबन्धी कर्दमस्तदिव तरुणतारकं तमस्तिमिरं प्रोच्चया-वुच्चतम् । उपमोपक्रमोत्प्रेक्षेयम् ॥

सत्यमुष्णरुचिराययौ तदा संमुखत्वमनले विविक्षया ।
तद्विमानशुकचञ्चुरोचिपामञ्चनादिव भृशं शुशोण यत् ॥ १७ ॥

विविक्षया प्रवेशेच्छयोष्णरुचिः सूर्योऽनलेऽग्नौ संमुखत्वं सत्यं ध्रुवमाययौ । पूर्ववाक्यार्थस्य साध्यस्य हेतुर्यत्सूर्यः शुशोण शोणोऽभवत् । तस्याग्नेर्ये विमानशुकास्तेषां चञ्चवो मुखाग्राणि तेषां रोचींषि दीप्तयस्तेषामञ्चनात्संक्रमणात् । अत्र साध्यस्य वह्नौ प्रवेशस्य साधनभूतं शोणत्वं तस्य वह्निकृतचञ्चुप्रभापातः संभावितो निमित्तान्तरम् । अग्नितापेन हि वस्तु रक्तं भवति । अत्रोत्प्रेक्षा ॥

सायमर्चनविधिं वितेनिरे खेचरा नियतमुष्णरश्मये ।
सांध्यरागहरिचन्दनाञ्चितैर्भैर्नभोऽर्घकणवद्यदाबभौ ॥ १८ ॥

नियतं निश्चयेन खेचरा देवाः सायं दिनावसाने सूर्याय पूजां चक्रुः । यन्नभो व्योमार्घकणवत्सार्धमाबभौ शुशुभे । भैस्तारकैः । सांध्यराग एव हरिचन्दनं तेनाञ्चितैः शोभितैः । पूजायां चन्दनाञ्चितेनार्घेण भाव्यम् । अर्घकणवदिति वतिप्रत्ययो व्याख्येयः। स औपम्ये वाच्य उत्प्रेक्षायां पर्यवसनीयः ॥

किं नु कालगणनापतेर्मषीभाण्डमर्यमवपुर्हिरण्मयम् ।
तत्र यद्विपरिवर्तितानने लिम्पति स्म धरणिं तमोमषी ॥ १९ ॥

कालः सर्वभूतानामधिष्ठाता स एव कलनीयानां भूतानां संख्यानाधिकारित्वाद्गणनापतिस्तस्य मषीभाण्डं कज्जलरसपात्रमर्यमवपुः सूर्यबिम्बं कर्तृ किं न्वभवत् । यत्तस्मि-

-सूर्यबिम्बमषीभाण्डे विपरिवर्तितानने समुद्रमध्य उत्तानं त्रुडति सति तम एव मलिनत्वान्मषी धरणिं भूमिमलिपत्। मषीभाण्डे च विपरिवर्तिते मषी पतति ॥

दृप्तमान्मथवरूथिनीभटस्पष्टकृष्टकरवालरोचिषाम् ।
बन्धवोऽन्धतमसोर्मयोऽभवन्वल्लभाभिसरणाय सुभ्रुवाम् ॥ २० ॥

दृप्ता भुवनजयेन सदर्पा या मान्मथी कामसंबन्धिनी वरूथिनी तस्यां भटा योधास्तैः स्पष्टमच्छन्नं कृत्वा कृष्टा निष्कोषीकृता ये करवालाः खड्गास्तेषां रोचींषि प्रभास्तासां बन्धवः सदृशा अन्धतमसस्य गाढान्धकारस्योर्मयस्तरङ्गाः सुभ्रुवां स्त्रीणां वल्लभाभिसरणाय प्रियान्तिकगमनायाभवन्। कार्यसंपादनसंनिवेशाभ्यां खड्गेन तमसः साम्यम्।'क्रियया चोद्देश्यः' इति चतुर्थी । अन्धकारे निबिडे सति सुखेनाभिसारिकाः प्रियसमीपमगमन्नित्यर्थः ॥

शाम्यतोऽर्कमणिजातवेदसो जृम्भमाण इव धूमडम्बरः ।
अन्धकारनिकरो विनिर्ममे चक्रवाकदृशि बाष्पदुर्दिनम् ॥ २१ ॥

दिवसावसाने शमं प्राप्तवतोऽर्कमणिजातवेदसः सूर्यकान्ताग्नेः संबन्धी जृम्भमाणः स्फुरन्धूमप्रपञ्च इवान्धकारश्चक्रवाकनेत्रेषु बाष्पदुर्दिनमश्रुप्रवाहं विनिर्ममे जनयामास । चक्रवाकाणां विरहहेतुत्वात्॥

ताम्यतामधिकसांध्यनर्तने शंभुकङ्कणफणाभृतामिव ।
श्वासधूमविसरेण मांसलं तत्तमिस्रमतुदद्वियोगिनः ॥ २२ ॥

तत्तमिस्रमन्धकारो वियोगिनो विरहिणोऽतुददव्यथयत् । यतो मांसलं घनीकृतम् । अत उत्प्रेक्ष्यते—शंभोरीश्वरस्य कङ्कणा ये फणभृतः सर्पास्तेषां संबन्धिना श्वासधूमविसरेणेव यतोऽधिकम् । यत्संध्यानर्तने संध्याताण्डवे ताम्यतां खिद्यमानानाम् । इवशब्दो भिन्नक्रमो विसरेणेत्यतोऽनन्तरं द्रष्टव्यः ॥

सांध्यताण्डवविलाससंसरच्चन्द्रशेखरशिरःसरिज्जलैः ।
पूर्यमाण इव नीरधिर्दधे वृद्धिमिन्दुदृषदम्बुभिः सह ॥ २३ ॥

इन्दुदृषदां चन्द्रकान्तानामम्बूनि जलानि तैः सहाम्बुधिः समुद्रो वृद्धिं दधौ ववृधे । चन्द्रोदयादिति भावः । अतः संभाव्यते—सांध्याः संध्याभवा ये ताण्डवविलासा नाट्यलीलास्ताभिः संसरन्तीतस्ततः पतन्ति यानि चन्द्रशेखरशिरःसरिज्जलानि गङ्गाम्बूनि तैः पूर्यमाणो भ्रियमाण इव ॥

दीपिका रजनिकेलिकुङ्कुमस्थासकप्रतिभुवो मरीचिभिः ।
जर्जरत्वमुपनीय सान्द्रतां निन्युरञ्जनरजोभरैस्तमः ॥ २४ ॥

रजनेरत्र स्त्रीत्वान्नायिकात्वप्रतीतिः । रजने रात्रेः केलये क्रीडायै कुङ्कुमसमा ये स्थासकास्तिलकास्तेषां प्रतिभुवः सदृशाः । प्रतिभूर्हि सदृश उचितः । मरीचिभिर्दीप्तिभिः क-

रणभूताभिस्तमोऽन्धकारं जर्जरत्वं हानिमुपनीय नीत्वाञ्जनस्य दीपिकासंबन्धिन एव कज्जलस्य रजोभरैः करणैर्दीपिकास्तमः सान्द्रतां घनत्वं निन्युः ॥

केलिसौधशिखरे ततोऽधिका दीपिकाः प्रतिगृहं चकाशिरे ।
उल्लसन्त्य इव दग्धुमध्वगप्रेयसीजनमनभ्रविद्युतः ॥ २५ ॥

गृहे गृहे क्रीडासौधाग्रे ततोऽनन्तरं दीपिका दिदीपिरे । अध्वगानां पथिकानां प्रेयसीजनः प्रियालोकस्तं दग्धुं भस्मीकर्तुमुल्लसन्त्योऽनभ्रविद्युतः । अभ्रं विना विद्युतोद्योतन्ते ता अनभ्रविद्युतः ॥

उन्मयूखमनुसंदधन्पुरः प्राणनाथवदनेन्दुमण्डलम् ।
अस्खलत्पथि तामिस्रनिःसहे नो कथंचिदभिसारिकाजनः ॥ २६ ॥

तमिस्रेण तमसा करणेन निःसहेऽगम्ये पथि अभिसारिकाजनः स्वैरिणीगणः कथंचिन्नो अस्खलत्स्खलितवान् । यतः प्राणनाथानां प्रियाणां वदनेन्दुमण्डलं पुरोऽनुसंधदाकलयन् । तत्प्राप्तिलाभात्सावधान इत्यर्थः । चन्द्रे सति स्खलनाभावः प्रसिद्धः । इह च तद्रूपरूपितस्य प्रियमुखस्यानुसंधानमात्रादस्खलनमिति चित्रम् ॥

तन्त्रमद्भुतमहो मनोभुवो यन्मते तिमिरमेव योपिताम् ।
चित्तनाथमभिसर्तुमञ्जसा जायते स्म पथि हस्तदीपिका ॥ २७ ॥

मनोभुवस्तन्त्रमद्भुतं यस्य कामस्य मते तिमिरमेव मार्गे हस्तदीपिका प्रकाशको जातम् । चित्तनाथं प्रियमभिसर्तुं प्राप्तुमभिसारिकाणां सत्यपि तिमिरे कामवशान्मार्गप्रकाशनमिव संपन्नमित्यर्थः ॥

संकटावटपथेऽपि चास्खलन्मांसले तमसि नाभिसारिकाः ।
जग्मुरम्बरपथेन निश्चितं ता विमानमधिरुह्य मान्मथम् ॥ २८ ॥

संकटः संकीर्णो योऽवटपथः श्वभ्रमार्गस्तत्रापि घनेऽप्यन्धकारेऽभिसारिका नास्खलन् । ता अभिसारिका नूनं मान्मथं कामसंबन्धि विमानमारुह्याम्बरपथेन जग्मुः । अन्यथा कथं न स्खलेयुरिति भावः ॥

शीलितोष्णकरधामभिश्चिरं रात्रिमारुतजडीकृतैरिव ।
व्यक्तिसीत्कृतमलिस्वनैस्तदा संकुचत्तनुभिरासि नीरजैः ॥ २९ ॥

कोषमध्ये रसलोभाद्रुद्धानां पूर्वसंस्कारवशादुपरिभ्रमतां वा भ्रमराणां स्वनैर्व्यक्तानि सीत्कृतानि सीत्कारा यत्रैवं नीरजैः पद्मैः संकुचत्तनुभिरास्युपविष्टम् । अतः संभाव्यते—रात्रिमारुतेन जडीकृतैः शैत्यमापादितैरिव । यतः शीलितमभ्यस्तमुष्णकरधाम यैरिति शीतमसात्म्यं सूचितम् । असात्म्येन शीतेन जडीकृतः पुरुषश्च ससीत्कारं संकुचत्तनुरुपविशति । आसीति लुङि भावे रूपम् ॥

सैन्यरेणुरुदगाज्जिगीषतो रोदसी रतिपतेर्ध्रुवं तमः ।
स्वापकैतवमुपेत्य जन्तुभिर्यद्भयादिव निमीलिता दृशः ॥ ३० ॥

रोदसी द्यावापृथिव्यौ जिगीषतो जेतुकामस्य कामस्य नूनं सेनारजस्तम उत्थितम् । तमसि संभावितस्य रेणुत्वस्य साधनं विवक्षुराह—स्वापकैतवं निद्राकपटं प्राप्य यद्भयाद्रेणुभीतेः प्राणिभिर्दृशो मीलिताः । अत्र वाक्यार्थसमय एव यद्भयस्य हेतोरतात्त्विकत्वावगतेरिवशब्दस्तृप्तभोजनवत् । दृङ्मीलने निद्रा न निमित्तम्, किं तु रजःपात इत्यर्थः । अत्रारोपविषयस्य स्वापस्य निषेधेऽन्यस्य विषयिणो रजसोऽभिधानम् । कैतवशब्दाच्च प्रकरणादिवशान्निषेधप्रतीतिरित्यार्थोऽपह्नवः ॥

पानतः खरमयूखरोचिषामात्ततापमिव तत्क्षणं तमः ।
निर्ममेऽङ्गवलनान्यलिव्रजव्याजतो विकचकैरवोदरे ॥ ३१ ॥

भ्रमरव्याजात्फुल्लोत्पलमध्ये तमोऽङ्गवलनानि गात्रप्रसारणानि चकार । संभाव्यते—खरमयूखस्य रोचिषां सूर्यरश्मीनां पानतो निगरणादात्ततापमिव । तापशमनार्थं च शीतलस्थाने गात्रप्रसारणानि क्रियन्ते । आतपस्यावसानं पानमत्र ॥

कुत्र नो सरसि तत्यजे रजःसत्रदानपतिता सरोरुहैः ।
कैरवाणि जगृहुः शनैः शनैश्चञ्चरीकनवरङ्गपीठताम् ॥ ३२ ॥

रजो मकरन्दस्तदेव सत्रमविच्छिन्नं दानं तत्र दानपतिता दातृत्वं पद्मैः कुत्र नो त्यक्ता । उत्पलानि चञ्चरीकाणां भ्रमराणां नवरङ्गपीठतां नृत्तस्थानभावं शनैः शनैः प्रापुः । पद्मानि त्यक्त्वा भ्रमरा उत्पलेषु नन्ृतुरित्यर्थः ॥

उद्यतोऽथ रजनीविलासिनो भासि कन्दलितनिर्मलश्रियि ।
क्षुभ्यदम्बुधिविमुक्तमौक्तिकद्योतसख्यमधितेव शक्रदिक् ॥ ३३ ॥

उद्यतो लब्धोदयकालस्य रात्रिराजस्य भासि दीप्तौ कन्दलिता प्राप्ता निर्मला श्रीर्यया तस्यां सत्यां शक्रदिक् पूर्वदिक् क्षुभ्यंश्चन्द्रोदयवशाद्योऽर्णवस्तस्माद्विमुक्तानि बहिःपतितानि मौक्तिकानि मुक्ताफलानि तेषां द्योतो दीप्तिस्तत्सख्यमधिताधादिव ॥

पूर्वपर्वतशिखाधिशायिभिर्ग्रावभिः शशिमयूखपाण्डुरैः ।
भाविनाशभयतस्ततो दधावस्थिशेषमिव विग्रहं तमः ॥ ३४ ॥

पूर्वपर्वतस्योदयाद्रेः शिखाग्रं तामाश्रयद्भिस्तथा शशिमयूखैः पाण्डुरैः शुभ्रीभूतैर्ग्रावभिः पाषाणैर्हेतुभिरस्थिशेषमिव शरीरं तमः कर्तृ दधावधारयत् । कुतः । चन्द्रोदये भावी भविष्यन्यो नाशस्ततो भयं तस्मात् । ज्योत्स्नया शुभ्रा नेमे पाषाणाः, किं तु तिमिरस्य कीकसशेषो देहो भयाज्जात इत्यर्थः ॥

गाढरागमभिगच्छतश्चिरादुन्नतप्रसरदंशुबाहुभिः ।
इष्यते स्म परिरम्भणं पुरः कर्तुमोषधिभिरोषधीपतेः ॥ ३५ ॥

गाढो राग उदयकृतं लौहित्यं यत्रैवं कृत्वा पुरः पूर्वदिशोऽभिगच्छत ओषधीपतेश्चन्द्रस्य परिरम्भणमालिङ्गनं कर्तुमोषधिभिः कर्त्रीभिरुन्नताः प्रसरन्तोंऽशव एव बाहवस्तैः करणैरिष्यते स्म योग्यता प्राप्ता । उन्नतप्रसरदंशुबाहुभिरिति विशेषणत्वेन वा योज्यम् । नायिकाभिश्च चिरागतस्य प्रियस्य परिरम्भणं बाहुभिः क्रियते ॥

गन्धसारमृगनाभिपङ्कयोः संकरं प्रतिदिशं दिशन्निव ।
स क्षणो विहितसंधिविग्रहश्चन्द्रिकातिमिरयोरजायत ॥ ३६ ॥

स क्षणोऽवसरश्चन्द्रिकातिमिरयोर्ज्योत्स्नान्धकारयोर्विहितसंधिविग्रहो जातः । संधिर्मिलित्वावस्थानं विग्रहो ज्योत्स्नयान्धकारस्य पराभवः । अतः संभाव्यते—गन्धसारमृगनाभिपङ्कयोश्चन्दनकस्तूर्योः संकरं संसर्गं प्रतिदिशं दिशन्निव । प्रतिदिशमिति 'अव्ययीभावे शरत्प्रभृतिभ्यः' इत्यकारः समासान्तः ॥

दिक्तटान्क्वचन चन्द्रिकाञ्चितान्क्वाप्यनुज्झिततमिस्रविप्रुषः ।
उत्थितो जलनिधेर्विधुर्व्यधात्कीर्णमौक्तिकहरिन्मणीनिव ॥ ३७ ॥

विधुश्चन्द्रो दिक्तटान्कीर्णा मौक्तिकहरिन्मणयो मुक्तेन्द्रनीला येषु तानिवाकरोत् । यतो जलनिधे रत्नाकरादुत्थितः । क्वचन क्वापि चन्द्रिकया ज्योत्स्नयाञ्चिताञ्शोभितान् । क्वाप्यनुज्झितास्त्यक्तास्तमिस्रविप्रुषोऽन्धकारकणा यैस्तान् ॥

रात्रिवल्लभमरीचिशारितध्वान्तसंततिपरिच्छदे पथि ।
तत्क्षणे किल सितासितांशुकैः सख्यमैच्छदभिसारिकाजनः ॥ ३८ ॥

तत्क्षणे तस्मिन्नवसरे शुभ्रकृष्णवस्त्रैः परिचयं मार्गेऽभिसारिकालोक ऐच्छत् । तमःस्थाने कृष्णवस्त्राणि ज्योत्स्नास्थाने श्वेतवस्त्राणि स्वगोपनार्थमैच्छदित्यर्थः । यतो रात्रिवल्लभस्य मरीचिभिः शारिता शबलिता या ध्वान्तसंततिस्तमःपूरः स परिच्छदो यस्य ॥

कोऽप्यराजत नभस्तले तदा रोहिणीरमणबिम्बदर्पणः ।
यत्र विश्ववरवामचक्षुषामेकतः परिणता मुखद्युतिः ॥ ३९ ॥

कोऽपि रोहिणीवल्लभस्य चन्द्रस्य बिम्बं मण्डलमेव दर्पण आदर्शोऽराजत शुशुभे । यत्र चन्द्रादर्श एकत एकस्मिन्भागे विश्ववरवामचक्षुषामित्यत्र वरग्रहणसामर्थ्यान्निष्कलङ्के वरस्त्रीणां परिणता प्रौढा मुखकान्तिरभूत् । अथवा स्त्रीणां मुखकान्तिः परिणता तद्भावमापन्ना । परिणामात्पूर्वावस्थायां मुखकान्तिचन्द्रयोराधाराधेयभावः । सर्वस्त्रीणां दर्पणे मुखप्रतिबिम्बादिहेतुतद्भावप्राप्तेश्चित्रत्वम् ॥

भूतलेऽन्धतमसेन सेविते कुत्रचित्क्वचन धामभिर्विधोः ।
देहयुग्ममिव शौरिशर्वयोराससाद तिलतण्डुलायितम् ॥ ४० ॥

कुत्रचिदन्धकारेण क्वापि विधोश्चन्द्रस्य धामभिरंशुभिः सेविते भूतले शौरिशर्वयो-र्हरिहरयोः संबन्धि देहद्वयमिव तिलतण्डुलायितं तिलतण्डुलवन्मिश्रीभावेनालिङ्गनमास-साद प्रापत् ॥

पूर्वाद्रिनिर्झरजलान्मृदुभिः समीरै-
　रुल्लास्यमान इव नूतनफेनपिण्डः ।
बिम्बः शनैरथ निशीथवतीप्रियस्य
　प्रावेशिकीमधिनभोङ्गनमाततान ॥ ४१ ॥

निशीथवतीप्रियस्य चन्द्रस्य बिम्बोऽधिनभोङ्गनमाकाशाङ्गने प्रावेशिकीं प्रवेशो-चितं संरम्भमाततान चक्रे । अतः संभाव्यते—मृदुभिः कोमलैः समीरैः पूर्वपर्वत-निर्झरजलादुल्लास्यमान ऊर्ध्वं नीयमानो नवः फेनपिण्ड इव । मृदुग्रहणाच्छनैरुदयसूचनेन वसन्तः ख्यापितः ॥

उन्मुद्रतामुदयनक्षण एव देवः
　सारङ्गकेतुरनयत्क्व न कैरवाणि ।
न्यासीकृतामुपसि भानुभिया स्वभासं
　तत्कुड्मलेभ्य इव मङ्क्षु पुनर्जिघृक्षुः ॥ ४२ ॥

उदयकाल एव सारङ्गकेतुश्चन्द्रः कैरवाण्युन्मुद्रतां विकासं मङ्क्षु तूर्णं क्व नानयत् । अतः संभाव्यते—प्रातः सूर्यभयेन तेषु न्यासीकृतां निःक्षिप्तां स्वभासं जिघृक्षुर्ग्रहीतुकाम इव तत्कुड्मलेभ्यः कैरवमुकुलेभ्यः । अथ च देवो राजोदयकाले संकुचितान्स्वभृत्यान्विका-सयति ॥

या प्रागौर्वज्वलनदवथुच्छेदनेच्छोपयुक्त-
　श्रीखण्डाम्भःपरिकरधुरामम्बुराशौ चुचुम्ब ।
सा पूर्वाद्रौ वनकरिरदोदञ्चदंशुव्यवस्थां
　प्राप्य ज्योत्स्नालभत नभसः कैरवोत्तंसमुद्राम् ॥ ४३ ॥

या ज्योत्स्ना प्राक्प्रथमं समुद्रे वाडवतापस्य च्छेदनेच्छा परिजिहीर्षा तया हेतुभूतयो-पयुक्तं संक्रमितं यच्छ्रीखण्डाम्भश्चन्दनरसस्तस्य परिकरः सामग्री तस्य धूः साम्यं तामिवारुरोह । सा ज्योत्स्ना पूर्वपर्वते वनहस्तिनां रदेभ्यो दन्तेभ्य उदञ्चन्तोंऽशवस्तेषां व्यवस्थां संनिवेशं व्याप्य नभसो व्योम्नः कैरवैरुत्तंसमुद्रा भूषणभङ्गिस्तामलभत । चन्द्रो व्योम प्रापदित्यर्थः ॥

अङ्कारूढघुणायमानहरिणप्रोत्कीर्यमाणोदर-
　श्रीखण्डद्रुमखण्डपाण्डुशशभृच्चूर्णौघकीर्णा इव ।

ज्योत्स्ना सा विदधे दिशो दश पटुः पान्थाङ्गनाघट्टन-
व्यग्रानङ्गनिशाचराट्टहसिताशङ्कासमुट्टङ्कने ॥ ४४ ॥

अङ्कारूढो मध्यवर्ती घुणायमानो दारुक्रिमिसमो यो हरिणो मृगपोतकस्तेन प्रोत्कीर्यमाणं ग्रास्यमानमुदरं यस्य स श्रीखण्डद्रुमखण्डपाण्डुश्चन्दनवृक्षश्वेतो यः शशभृच्चन्द्रस्तस्य चूर्णौघः सूक्ष्मशल्कं तेन कीर्णा भृता इव दश दिशः सा ज्योत्स्ना चक्रे। पान्थाङ्गनानां विरहिणीनां घट्टनं हृद्भङ्गस्तत्र व्यग्रः संरब्धो योऽनङ्गनिशाचरः कामराक्षसस्तस्याट्टहसितं तस्याशङ्का भ्रान्तिस्तस्या उट्टङ्कने संपादने पटुः प्रगल्भा । कामराक्षसस्यायं हास इति ज्योत्स्नायां संभावनम् । मृगदारुक्रिमिणा चन्दनवृक्षस्तक्षितस्तच्चूर्णमेषा ज्योत्स्ना भविष्यतीति संभावनम् ॥

अभ्युद्धृतो रजनिवल्लभबिम्बभङ्ग्या
रात्र्या तदा ध्रुवमनङ्गनिधानकुम्भः ।
यत्तत्र मण्डलितविग्रहकालरक्षा-
सर्पद्युतिर्विरहिणीरदशत्कलङ्कः ॥ ४५ ॥

रजनिवल्लभस्य चन्द्रस्य बिम्बं तस्य भङ्ग्या व्याजेन रात्र्यानङ्गनिधानकुम्भः कामशेवधिर्ध्रुवमुद्धृतः। अत्र साध्यस्य साधनमाह—मण्डलितः कुण्डलितो विग्रहः शरीरं यस्य स कालोऽसितो यो निधानरक्षासर्पस्तत्समः स कलङ्को विरहिणीर्यददशद्दशति स्म। विरहोद्दीपनेन बबाध इत्यर्थः। निधानकुम्भोद्धरणवेलायां कुपितो रक्षासर्पो यं कंचन दशति। कामस्याभीष्टसाधकत्वाच्चन्द्रस्य निधिरूपणम् ॥

कूलाङ्केषु मृणालशैवललताभङ्गान्रथाङ्गो मुखा-
त्पर्यस्ताञ्शिशिरोपचाररचनाहेतोरिवाग्रे वहन् ।
सावश्यायपयःकणोत्करवलत्पक्षावलीलीलया
दध्रे गाढवियोगतापविधुरः सान्द्रां जलार्द्रामिव ॥ ४६ ॥

कूलानामङ्केषु मध्येषु विषये रथाङ्गश्चक्रवाकः सावश्यायपयःकणोत्करा सनीहारा वलन्ती कम्पमाना या पक्षावली पक्षततिस्तल्लीलया व्याजेन सान्द्रां घनां जलार्द्रां जलक्लृप्तं वासो वस्त्रमिव दध्रे बभार। यतो गाढेन तीव्रेण विरहतापेन विधुरो दीनः । अत एव मुखाच्चञ्चोः सकाशाद्दुःखवशेन पतितान्मृणालशैवलभङ्गान्बिसशैवालच्छेदानग्रे शिशिरोपचाररचनाहेतोः शीतलोपचरणनिमित्तादिवाग्रे वहन्। ज्योत्स्नां दृष्ट्वा विरहभयान्मुखमध्यादपि चक्रवाकस्य ग्रासाः पतिता इत्यर्थः ॥

विहितपरिसमूहनः पुरस्ताच्छशिमणिवारिभरार्द्रितैः कराग्रैः ।
विरहहुतवहे जुहाव कोकाञ्जिगमिपुराशु दिवं द्विजाधिराजः ॥ ४७ ॥

शशिमणीनां चन्द्रकान्तानां वारिभरो जलप्रवाहस्तेनार्द्रितैः कराग्रै रश्मिभिर्हस्तैश्च विहितं परिसमूहनं संस्कारविशेषो येन स द्विजाधिराजश्चन्द्रो ब्राह्मणवरश्च विरहाग्नौ कोकांश्चक्राञ्जुहाव चिक्षेप । दिवं स्वर्गमाकाशं च जिगमिषुर्गन्तुकामः ॥

राज्ञो दर्शितमण्डलाग्रमहसः सोढप्रहाराश्चिरं
प्रेङ्खत्खड्गरुचस्तमिस्रनिचया ये जीवितं तत्यजुः ।
ते सद्योऽगुरुधूपधूमकलया जन्मान्तरं लेभिरे
शङ्के नाकिवधूजनार्द्रचिकुरोत्सङ्गोपभोगोचितम् ॥ ४८ ॥

प्रेङ्खन्त्युल्लसन्ती खड्गरुक्खड्गवद्दीप्तिः खड्गाभिलापश्च येषाम् । तथा दर्शितं प्रकाशितं मण्डलाग्रमहो बिम्बतेजः खड्गतेजश्च येन तस्य राज्ञश्चन्द्रस्य पार्थिवस्य च संबन्धी सोढोऽभिमृष्टः प्रहारो हननं यैस्ते तमिस्रनिचयास्तमोराशयो जीवितं तत्यजुर्नेशुस्ते सद्योऽचिरादगुरुधूपस्य यो धूमस्तस्य कलया व्याजेन जन्मान्तरं लेभिरे । कीदृशम् । नाकिवधूनामप्सरसामार्द्रा ये चिकुराः केशास्तेषामुत्सङ्गो मध्यं तस्योपभोगस्तत्रोचितं योग्यम् । आर्द्राणां केशानामगुरुधूप्यमानत्वात् । ये च सयुद्धाभिलापाः पार्थिवेन खड्गेन हतास्ते स्वर्गस्त्रीभोगयोग्यं जन्मान्तरं लभन्ते ॥

यः सान्द्रोदयरागयोगसुभगः सिन्दूरमुद्रालिपिं
प्रागध्यास्त समस्तमान्मथबृहत्कोपप्रतिष्ठातिथिः ।
जज्ञे स क्रमशो निरङ्कुशरतक्षुभ्यत्सुरप्रेयसी-
कर्णाग्रच्युतदन्तपत्रतुलनामल्लस्तमीवल्लभः ॥ ४९ ॥

सान्द्रो घनो य उदयरागस्तस्य योगेन सुभगो मनोहरो यश्चन्द्रः प्राक्प्रथमं सिन्दूरेण मुद्रा मुद्रणं तेन लिपिं भङ्गिमध्यास्त प्रापद्यत समस्तोऽखण्डितो मान्मथो मन्मथसंबन्धी बृहद्यः कोषो गञ्जस्तस्य प्रतिष्ठातिथिः । प्रतिष्ठापक इत्यर्थः । कोषे हि सिन्दूरमुद्रणेन भाव्यम् । चन्द्रकामकोषे नायमुदयरागः, किं तु सिन्दूरमुद्रेत्यर्थः । क्रमशः क्रमेण स तमीवल्लभो रात्रिराजो निरङ्कुशं निर्यन्त्रणं रते क्रीडायां क्षुभ्यन्तः संरब्धा याः सुरप्रेयस्योऽप्सरसस्तासां कर्णाग्रेभ्यश्च्युतं सुरतसंरम्भात्पतितं यद्दन्तपत्रं दन्तिदन्तकृतो भूषणविशेषस्तस्य तुलनानुकारस्तत्र मल्लः समर्थो जज्ञे जातः । प्रापेति तात्पर्यम् ॥

भ्रातृव्यं दिव्यनारीजनवदनरुचां कुर्वदाचार्यचर्या-
मम्भोधेः स्थूलकूलंकषजललहरीलास्यलीलारहस्ये ।
बिम्बं कौटुम्ब्यचुम्बि स्मरमदकरटिश्रोत्रशङ्खप्रधानां
चार्द्रं द्रागेव लीढाम्बरतलमलुनाद्विश्वचक्षुर्विषादम् ॥ ५० ॥

दिव्यनारीजनस्याप्सरसां वदनरुचां मुखकान्तीनां सपत्नम् । सपत्नेन च सदृशेन

भवितव्यमिति लक्षणया सममित्यर्थः । 'भ्रातुर्व्यस्सपत्ने' इति रूपम् । तथाम्बुधेः समुद्रस्य स्थूला महत्यः कूलंकषास्तटव्यापिन्यो या जललहर्यस्तासां लास्यलीला व्योमन्युत्थानं तद्रहस्य आचार्यचर्यामुपदेशं कुर्वत् । चन्द्रोदयं दृष्ट्वा समुद्र ऊर्ध्वमुदतिष्ठदित्यर्थः । तथा स्मर एव मदकरटी गन्धगजस्तस्य श्रोत्रे कर्णे शङ्खः कम्बुः तस्य प्रथानां प्रकाशानां कौटुम्ब्यं बन्धुत्वोपलक्षितं सादृश्यं चुम्बति स्पृशति । तथा लीढं स्पृष्टमम्बरतलमाकाशो येन । तच्चन्द्रबिम्बं द्रागेव तूर्णं विश्वस्य विश्वानि वा चक्षूंषि दृष्टयस्तेषां विषादो निरालोकत्वमलुनादवारयत् ॥

हृदयनिवसत्कंदर्पेपुप्रसूनजसौरभ-

प्रणयिमधुकृत्पङ्क्त्या छायाछलादनुधाविताः ।

घनहिमकरालोके लोके विपाण्डुरमण्डना-

श्चतुरचतुरं कान्तोपान्तं ययुर्वरयोषितः ॥ ९१ ॥

छायाछलात्स्वच्छायाव्याजाद्धृदये चित्ते निवसन्यः कामस्तस्येषवः शरा ये प्रसूनानि पुष्पाणि तेभ्यो जातं यत्सौरभं गन्धस्तत्र प्रणयिनी लुब्धा मधुकृत्पङ्क्तिर्भ्रमरमाला तयानुधाविता अनुसृताः । अपरिहार्यं छायामात्रमेव कृष्णं दधुरित्यर्थः । घनो हिमकरालोकश्चन्द्रप्रकाशो यस्मिंल्लोके भुवने सति विपाण्डुरमण्डनाः परिज्ञानाभावार्थं शुभ्रभूषणधारिण्योऽभिसारिकाश्चतुरचतुरमुत्कण्ठया, न तु भयात्तूर्णं कान्तोपान्तं प्रियनिकटं जग्मुः ॥

देवः शिखामणिरयुग्मविलोचनस्य

ज्योत्स्नानिचोलनिहिताखिलजीवलोकः ।

तत्कालकान्तविरहार्तपुरंध्रिवर्ग-

दृङ्मार्गमात्रशरणं विदधेऽन्धकारम् ॥ ९२ ॥

ज्योत्स्नैवाच्छादकत्वान्निचोलः प्रसेवकस्तत्र निहितस्तदाच्छादितत्वस्वरूपत्वात्क्षिप्तोऽखिलो जीवलोकः प्राणिवर्गो येन सोऽयुग्मलोचनस्य त्रिनेत्रस्य शिखामणिश्चूडारत्नं देवश्चन्द्रस्तत्काले चन्द्रोदयसमये कान्तविरहेणार्तो व्यथितो यः पुरंध्रिवर्गः स्त्रैणं तस्य दृङ्मार्गः स एव केवलः शरणमाश्रयो यस्य तमन्धकारमादधे । अन्यतो निवृत्तो विरहिणीदृशामेव विरहान्ध्यलक्षणोऽन्धकारो लग्नोऽभूदित्यर्थः ॥

असकृदुदयद्दानस्रोतःकणोत्करविभ्रमं

सरसि सरसि व्यातन्वानैर्निलीनमलिव्रजम् ।

जलगजघटोदस्तैर्दन्ताङ्कुरैरिव सर्वतः

कुमुदमुकुलैर्द्रागस्फोटि स्फुटेन्दुकरोदये ॥ ९३ ॥

स्फुटो य इन्दुकरोदयस्तस्मिन्सति सरसि कुमुदमुकुलैः कैरवकोरकैर्द्रागाश्वस्फोटि

विकसितम्। अतः संभाव्यते—जलगजानां घटा पङ्क्तिस्तयोदस्तैर्जलमध्यादूर्ध्वीकृतैर्दन्ताङ्कुरैरिव। ज्योत्स्नया हि हस्तिनां दन्ताः स्फुटन्ति। अत एवालिव्रजं भ्रमरभरमसकृत्पुनरुदयन्निर्गच्छद्यद्दानस्रोतो मदजलं तस्य कणोत्करस्तत्समम्॥

आमन्द्रोर्मिनिनादबृंहितरवैराघ्रातदिक्कुञ्जरः
स्वैरं वारिधिवारणस्तटगिरिप्रक्रान्तवप्रक्रियः।
चञ्चच्चन्द्रमरीचिभूतिरजसः सङ्गेन शृङ्गारितै-
रङ्गैर्व्योम तमालकाननहठास्कन्दाय दध्रे मदम्॥ ९४॥

वारिधिः समुद्रः स एव वारणो हस्ती, व्योम खमेव तमालवनं तस्य हठेन रभसेनास्कन्द आक्रमणं तदर्थं मदं दर्पं दानं च दध्रे। कीदृशः। आमन्द्रा मधुरा ये ऊर्मिनिनादास्तरङ्गशब्दास्त एव बृंहितरवा गलगर्जितशब्दास्तैराघ्राता गृहीतगन्धा दिक्कुञ्जरा दिग्घस्तिनो येन। ऊर्मीन्श्रुत्वाशागजशब्दस्तिरोहित इत्यर्थः। तथा तटगिरौ वेलापर्वते प्रक्रान्तारब्धा वप्रक्रिया परिणतिर्येन। चञ्चन्त्यो याश्चन्द्रमरीचयस्ता एव भूतिरजो भस्म तत्सङ्गेन शृङ्गारितैः कृतमण्डनैरङ्गैरुपलक्षितः॥

व्याख्याता पृथुमान्मथोपनिषदां कल्याणमित्रं हठ-
प्राणेशाभिसृतिव्रते मृगदृशां हस्तप्रदीपो रतेः।
ध्वान्तारुंतुदकान्तिदन्तुरवपुः सीमन्तितस्वर्मुखो
देवोऽजायत यामिनीप्रियतमस्तृष्यच्चकोरप्रपा॥ ९५॥

यामिनीप्रियतमो देवश्चन्द्रस्तृष्यतां पिपासितानां चकोराणां प्रपा जलवितरणस्थानमजायत जातः। पृथवो या मान्मथ्य उपनिषदः सिद्धान्ताः सुरतक्रीडास्तासां कर्मभूतानां व्याख्याता प्रख्यापकः। मृगदृशां स्त्रीणां प्राणेशान्प्रत्यभिसृतिरभिसरणं सैवावश्यानुष्ठेयत्वाद्व्रतं तत्र कल्याणमित्रमनुगुणवस्तूपदेशकम्। रतेः संभोगनिर्वृतेः स्त्रीत्वान्नायिकात्वेन व्यवहृताया हस्तप्रदीपः स्फुटं प्रकाशकः। ध्वान्तस्य तमसोऽरुंतुदाभिर्मर्मच्छेदिकाभिः कान्तिभिर्हेतुभिर्दन्तुरं वपुर्यस्य। तथा सीमन्तितं मध्ये वर्तमानत्वाद्द्विधा कृतं स्वर्मुखमाकाशावनिपार्श्वे येन॥

किं देवस्य कुमुद्वतीकुलपतेर्व्योमस्थलीशायिनः
संक्रान्तप्रतिकेलिवापि तरलोत्तालं बभौ मण्डलम्।
पेष्टुं मानवतीजनस्य मनसो मानं स्मरो निर्ममे
किं पानीयघरट्टटङ्कनमिति भ्रान्तिर्न विश्राम्यति॥ ९६॥

इति भ्रान्तिरयं भ्रमो न व्यपैति। कुमुद्वतीनां कुमुदिनीनां कुलं तस्य पतेश्चन्द्रस्य मण्डलं प्रतिकेलिवापि सर्वासु क्रीडावापीषु संक्रान्तमत एव तरलं चपलं तथोत्ताल-

मुद्धटं किं बभौ । मानिनीनां मनसः पेष्टुम् । अमानमिति वा क्रियाविशेषणम् । स्मरः पानीयघरट्टस्य बिम्बप्रतिबिम्बवशाट्टङ्कनं किं निर्ममे । किमेतचन्द्रमण्डलं किं मानिनीमनोदलनाय कामनिर्मितः पानीयघरट्ट इति भ्रमो न चलतीत्यर्थः ॥

भूरैन्दवोपलमयी सलिलं ववर्ष
द्यौराप ताण्डवितचित्रशिखण्डिरूपम् ।
आस्तोडुपस्य रससीम्नि न रोधवृत्ति-
रित्थं ससर्ज किल रात्रिरपूर्ववर्षाः ॥ ९७ ॥

ऐन्दवोपलाश्चन्द्रकान्तास्तन्मयी भूमिः सलिलं जलं ववर्ष । चन्द्रकान्ताः सुस्रुवुरित्यर्थः । द्यौः खं ताण्डविताः स्फुरन्तश्चित्रशिखण्डिनः सप्तर्षयो यत्र तद्रूपमाप । रससीम्नि शृङ्गारदशायां रोधवृत्तिरुडुपस्य चन्द्रस्य नास्त । भूमिर्जलं ववर्ष । द्यौर्नृत्तप्रवृत्तमयूररूपमाप । उडुपस्य शरणप्रवहणस्य रससीम्नि जलमध्ये रोधवृत्तिर्वर्तनं नास्त । एवं रात्रिरपूर्वाश्चित्रा वर्षाः ससर्ज ॥

करैः शाम्यत्सूर्योपलदहनभस्मव्यतिकरा-
दिवापाण्डुच्छायैर्हृदयमुकुरं भङ्गुरदृशाम् ।
समुत्सृज्याशेषं मलमतुलमानग्रहमयं
मृगाङ्कस्तत्कालप्रतिफलितकंदर्पमकरोत् ॥ ९८ ॥

मृगाङ्कश्चन्द्रो भङ्गुरदृशां चतुरस्राक्षीणां हृदयादर्शे प्रतिफलितः संक्रान्तः कंदर्पः कामो यत्र तमकरोत् । किं कृत्वा । अतुलोऽसमो यो मानग्रहस्तन्मयं मलं समुत्सृज्य निवार्य । कैः । शाम्यन्यः सूर्योपलदहनः सूर्यकान्ताग्निस्तस्य भस्म तत्परिचयादिवापाण्डुच्छायैः शुभ्रैः करैः । भस्माङ्कैश्च करैरादर्शस्य च मलं निवार्य संक्रान्तपदार्थमादर्शं करोति ॥

आरक्तं हठरोदनारुणपतन्नेत्रान्तकान्त्युद्गमै-
र्निःश्वासैर्विरमन्निसर्गशिशिरस्पर्शं कठोरोर्मिभिः ।
चन्द्रं चण्डकरं वियोगजरुजासब्रह्मचारिक्वथ-
त्कोकीशोकजिहीर्षयेव सुचिरं पान्थप्रियाश्चक्रिरे ॥ ९९ ॥

हठेनानारतं यद्रोदनमश्रुमोक्षस्तेनारुणा लोहिताः पतन्तो ये नेत्रान्तास्तेषां कान्तिररुणत्वं तस्योद्गमाः स्फुरणानि तैरारक्तं लोहितम् । तथा कठोरोर्मिभिर्वेगवद्भिर्निःश्वासैर्विरमन्नपगच्छन्निसर्गशिशिरः स्वभावशीतलः स्पर्शो यस्य तं चन्द्रं पान्थप्रिया विरहिण्यश्चण्डकरं चक्रिरे । रक्तत्वोष्णत्वयोः सूर्यधर्मयोः प्रापणाच्चन्द्रः सूर्यः कृत इत्यर्थः । अतः संभाव्यते—वियोगरुजाया विरहव्यथायाः सब्रह्मचारिण्यः समानानुभवा अत एव क्व-

थन्त्यो दन्दह्यमाना याः कोक्यश्चक्रवाक्यस्तासां संबन्धिनः शोकस्य जिहीर्षया निवारणेच्छयेव । चक्रवाक्यो हि दिवा प्रिययोगं लभन्ते ॥

स्फूर्जत्किंजल्कहालाहलबहुलरसोद्गारतो मानिनीनां
दत्तायासं विकासं कुवलयमुकुलान्याश्रयन्ति श्रमेण ।
उद्यत्सायाह्नवात्याकवलनकलितस्पन्दकंदर्पकाल-
व्यालव्यादीर्यमाणस्फुटफणफलकप्रौढिमानं विवव्रुः ॥ ६० ॥

कुवलयमुकुलान्युत्पलकलिका उद्यन्ती वान्ती या सायाह्नवात्या संध्याकालवातव्रातस्तस्य कवलनमदर्शनं तदर्थं तेन वा कलितस्पन्दः स्वीकृतकम्पो यः कंदर्पकालव्यालः कामकृष्णसर्पस्तेन व्यादीर्यमाणा विकासिता ये फणास्त एव विपुलत्वात्फलकानि तेषां प्रौढिमानं शोभां विवव्रुर्दधुः । अत एव स्फूर्जन्नुल्लसन्यः किंजल्कः स एव हालाहलो विषभेदस्तस्य बहुलो यो रसोद्गारस्तस्माद्दत्त आयासो विरहदुःखं येन तं विकासमाश्रयन्ति भजमानानि ॥

मललवनिभसज्जत्कज्जलः सान्द्रसांध्य-
द्युतिशिखिखचिताभ्रभ्राष्ट्रगश्चन्द्रबिम्बः ।
नवरजतकटाहः कल्पितो मन्मथेन
क्वथयितुमिव पान्थप्रेयसीमानसानि ॥ ६१ ॥

मन्मथेन चन्द्रबिम्बो विरहिणीनां चेतांसि क्वथितुं नवो रजतमयः कटाहः क्वथनभाण्डमिव कल्पितः । सान्द्रा सांध्यी या द्युतिः सैव शिखी वह्निस्तेन खचितं यदभ्रभ्राष्ट्रमाकाशपावकस्थानं तत्रस्थः । मलं कलङ्कस्तस्य लवस्तन्निभेन तद्व्याजेन सज्जलग्नं कज्जलं यस्य । क्वथनभाण्डं च भ्राष्ट्रस्थं सकज्जलं च भवति । चन्द्रं दृष्ट्वा विरहिण्यो दह्यन्त इत्यर्थ इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये संध्यावर्णनं नाम दशमः सर्गः ।

---

एकादशः सर्गः ।

मण्डलेन शशिनो विनिविश्य व्योम्नि दीर्घकरदण्डसखेन ।
मारवज्रगुलकप्रतिमेन द्रागभज्यत वधूजनमानः ॥ १ ॥

दीर्घा ये करास्त एव दण्डास्तत्सखेन चन्द्रस्य मण्डलेन व्योम्नि निविश्य स्थित्वा वधूजनमानो भग्नः । अतो मारस्य वज्रगुलकमायुधभेदस्तत्समेन ॥

यत्कला किल झषाङ्कपुलिन्दस्पन्दमानवडिशव्रतमाधात् ।
मण्डलोऽमृतरुचोऽजनि चक्रं स क्रमेण रसराजरथस्य ॥ २ ॥

यस्य चन्द्रबिम्बस्य कला झषाङ्कः काम एव विरहिणीहिंसकत्वात्पुलिन्दः शबरस्तस्य संबन्धि स्पन्दमानं कम्पमानं यद्बडिशं मत्स्यवेधनबालकं तस्य व्रतं सादृश्यमधात्। कलामात्र एवोदित आसीदित्यर्थः। ........................................॥[1]

आवहन्ननवधिं परिवारं मण्डलं शशभृतोऽधिशयानः ।
चित्रमत्र कुसुमायुधदेवो मानिनीष्वधित संहृतिमुद्राम् ॥ ३ ॥

असंख्यं परिवारं वसन्तादिमावहंस्तथा चन्द्रस्य मण्डलमाश्रयन्कामदेवो मानिनीषु विषये संहारटङ्कमधात्। चित्रत्वं संहारापेक्षया परिवारं गणेशादिमसंख्यमावहन्मण्डलमिन्दोः सिन्दूरादिकृतमाश्रयन्संहारमुद्रां धत्ते। संहारो हि सूर्यमण्डलाधिष्ठानेनागमेषु प्रसिद्धः॥

दूरतः परिणमद्विधुबिम्बं विक्लवाः कुचतटं विरहिण्यः ।
बिभ्रति स्म हृदि दत्तपिधानं मन्मथेन पुटपाकधियेव ॥ ४ ॥

दूरत इति स्तनयोर्वैशद्यप्रतिपादनार्थम्। परिणमद्बिम्बितं विधुबिम्बं यत्र तत्स्तनतटं विरहिण्यो दधुः। संभाव्यते—मन्मथेन दत्तं पिधानं छादनं यस्य तदिव। कया। हृदि पुटपाकः पिहितभाण्डपाकस्तद्बुद्ध्या। तथा हि गाढपाको भवति। हृदीत्यनेन कुचतटस्य पृथुत्वप्रतिपादनम्। 'कुचतटे' इति वा पाठः। दत्तपिधानमिति कर्मधारयोऽयम्। 'दन्तपिधानम्' इति वा पाठः। दन्तमयं पिधानमिति करणे ल्युट्। करणं च कर्त्रपेक्षम्। मन्मथेनेति क्रियापेक्षा कर्तरि तृतीया। पिधानापेक्षया हृदीति सप्तमी॥

अब्धिवारिवदवीवृधदिन्दुः कोष्णमम्बु दृशि मानवतीनाम् ।
येन सिक्तवपुषो रतिभर्तुः प्रत्युत प्रववृते भुजकण्डूः ॥ ५ ॥

समुद्रजलमिव कोष्णं बाष्पं चन्द्रो मानवतीनां दृष्टाववीवृधत्। येन सिक्तवपुषः कामस्य प्रत्युत शमने प्राप्ते भुजयोः कण्डूर्दर्पावस्था ववृधे। कोष्णं ह्यम्बु कण्डूशमनम्॥

प्रस्तुताखिलधृतिक्षतिदीक्षैर्मण्डलाञ्चनचणैः शशिपादैः ।
निर्ममे गुरुभिरध्वगयूनामश्रु नेत्रपटबन्धविधानम् ॥ ६ ॥

कृतसकलधैर्यनाशनियमैर्मण्डलस्याञ्चनं शोभनं तेन वित्तैर्गुरुभिर्महद्भिः शशिपादैः पान्थतरुणानामश्रु नेत्रपटलस्य बन्धनं निर्ममे कृतम्। गुरुभिराचार्यैश्च प्रस्तुतदीक्षैर्मण्डलस्य यागभवनस्याञ्चनचणैः शिष्याणां नेत्रपटो बध्यते॥

मध्यलक्ष्यपृथुलाञ्छनमिन्दोर्मण्डलं ददृशुरध्वगवध्वः ।
उद्धृताररमिव स्फटिकाश्मद्वारमन्तकपुरीमधिरोढुम् ॥ ७ ॥

---

१. आदर्शपुस्तके श्लोकोत्तरार्धटीका नास्ति.

मध्ये लक्ष्यं पृथु लाञ्छनं कलङ्को यस्य तच्चन्द्रबिम्बं विरहिण्यो यमनगरोमारोढुं दूरीकृतद्वारपुटं स्फटिकद्वारमिवापश्यन् ॥

मानिनीषु परुषो मरुदासीत्फुल्लकैरवरजःप्रकरेण ।
भस्मनेव विरहानलहेलादग्धपान्थहृदयप्रसृतेन ॥ ८ ॥

मरुन्मानिनीषु स्पर्शेन कार्येण च परुष आसीत् । कैरवरजसा विरहाग्निदग्धविरहिहृदुत्थितेन भस्मनेव ॥

चूचुकोपमशशः शशिबिम्बः कोऽप्यदर्शि स निशाकुचकुम्भः ।
पीडनं निबिडमग्रकरैर्यश्चित्रमातनुत कामिजनस्य ॥ ९ ॥

स्तनाग्रोपममृगः शशिबिम्बः कोऽपि निशास्तनकुम्भो दृष्टः । यः कामिनां कराग्रैः पीडामकरोत् । चित्रत्वं पीडनीयस्य पीडकत्वात् ॥

चन्द्रहासपथदर्शनताम्यद्विप्रयोगभरजर्जररामे ।
सेतुबन्ध इव तत्समये स क्षोभसंभ्रममवाप पयोधिः ॥ १० ॥

चन्द्रस्य संबन्धी यो हासपथो रश्मिमार्गस्तद्दर्शनेन ताम्यन्त्यो ग्लायन्त्यो यतो विप्रयोगभरजर्जरा विरहार्ता रामाः पान्थाङ्गना यत्र । एतत्कालपक्षे योजनम् । सेतुबन्धपक्षे तु चन्द्रहासो रावणखड्गस्तद्दर्शनेन ताम्यन्सीताया विरहेणार्तो रामो दाशरथिर्यत्र । सेतुबन्ध इव तत्काले समुद्रः क्षोभव्याकुलतामाप । चन्द्रोदयकृतस्य शैलपातजातस्य च क्षोभस्य चाध्यवसानम् ॥

मीलितासु नलिनीषु तदानीं किं रमा कुमुदिनीरधिशिश्ये ।
तासु यत्तदिभदानकणानां टङ्कमापुरलयो निपतन्तः ॥ ११ ॥

तदानीं रात्रिमुखे नलिनीषु मीलितासु संकुचितासु सतीषु रमा लक्ष्मीः कुमुदिनीः किमधिशिश्ये आशिश्रिये स्वित् । कमलाश्रया लक्ष्मीः प्रसिद्धा । आश्रयोपद्रवेणाश्रयान्तरं कैरविणीर्लक्ष्मीः किं जगामेति संदेहः । अत्र साधनम्—तस्या रमाया यतो वाहनहस्ती तद्दानकणानां टङ्कं भङ्गिमलयो यत्प्रापुः । तासु कुमुदिनीषु निपतन्तः । यदि न लक्ष्मीः कैरविणीराश्रयेत्तत्कथं कुमुदिनीषु रमावाहहस्तिनो मदजलकणा दृश्येरन्नित्यर्थः ॥

चन्द्रमाः स्मरचमूवरयोधो धामभिर्व्यददरत्कुमुदानि ।
विप्रयुक्तवनिताजनचेतोदारणे विरचयन्निव योग्याम् ॥ १२ ॥

स्मरस्य चमूवरः सेनापतिश्चासौ योधश्च चन्द्रमा धामभिरंशुभिः करणैः कुमुदानि व्यददरत् । विप्रयुक्तो विरही यो वनिताजनस्तस्य चेतो हृदयं तस्य दारणे विपाटने योग्यां शिक्षां विरचयन्निव । 'लक्षणहेत्वोः क्रियायाः' इति हेतौ लटः शत्रादेशः ॥

कमलरुचिनिमीलनैककार्यप्रविसृमराधिकसख्यरेखयेव ।
नवपरिणतमूर्तिरेणलक्ष्मा परिरभते रभसेन तेऽङ्घ्रियुग्मम् ॥ १३ ॥

नखेषु निर्मलत्वात्परिणता प्रतिबिम्बिता मूर्तिर्यस्य स एणलक्ष्मा चन्द्रो रभसेन तव पादद्वयमालिङ्गति । हेतुरुत्प्रेक्ष्यते—कमलानां रुचिः शोभा तस्या निमीलनं पराभवः तदेवैकं साधारणं कार्यं तेन प्रविसृमरं प्रसरणशीलमधिकं यत्सख्यं सुहृद्भावस्तद्रेखयेव । चन्द्रस्येव रामापादस्य संनिधौ पद्मस्य हि शोभाहानिरिति कार्यसाधारण्यम् । समकार्योद्वहनेन च स्नेहवशादालिङ्गनमुचितम् ॥

तव चरणयुगं प्रिये नखेषु प्रतिफलता हरिणाङ्कमण्डलेन ।
चतुरमुखरनूपुरोपहूताविरलमरालसनाथतामिवैति ॥ १४ ॥

प्रिये इत्युचितमामन्त्रणम् । नखेषु प्रतिबिम्बभाजा हरिणाङ्कमण्डलेन चन्द्रबिम्बेन हेतुना तव चरणयुगं चतुरं निर्विलम्बं कृत्वा मुखरनूपुराभ्यां सशब्दाभ्यां : मञ्जीराभ्यामुपहूताकारिता अविरला बहवो ये मरालास्तैः सनाथतां साहित्यमिवैति । नखेष्विति बहुवचनादुत्प्रेक्ष्यमाणेषु हंसेष्वविरलवचनम् ॥

घनजघनतटे निलीयतेऽसौ तव तरुणि प्रतिमाहिमांशुबिम्बः ।
दधदधिगतनित्यसंनिधानस्मरनृपराजतपादपीठगोष्ठीम् ॥ १५ ॥

तरुणीति संभावनाङ्गमामन्त्रणम् । तव घनजघनतटे प्रतिमाचन्द्रो निलीयते निलीनतामेति । अधिगतं प्राप्तं नित्यं शश्वत्संनिधानं येन स स्मर एव महत्त्वान्नृपो राजतं रौप्यमयं यत्पादपीठं तस्य गोष्ठीं विच्छित्त्या वर्तनं दधत् ॥

परिणतिमुपजग्मुषा तुषारद्युतिवपुषोदरसीम्न्यखण्डितेन ।
अनुहरसि हरेः पुरंध्रिमूर्तिं पिहितहठोद्गतनाभिपुण्डरीकाम् ॥ १६ ॥

उदरेऽखण्डितेन परिणतिं प्रतिबिम्बमुपगतेन तुषारद्युतिवपुषा चन्द्रबिम्बेन हेतुना त्वं हरेः पुरंध्रिमूर्तिं विशोकारूपामनुहरसि स्पर्धसे । कीदृशीम् । पिहितमाच्छादितमपि परिज्ञानाभावार्थं हठेनोद्गतं नाभिपुण्डरीकं नाभिस्थं सिताम्भोजं यस्याः । गतिताच्छील्यानुविवक्षयानुहरसीत्यत्र सिप्रत्ययः ॥

तव वरललने वलीविभङ्गप्रतिफलनप्रविभक्तमूर्तिरिन्दुः ।
श्रयति लिपिमकृत्रिमप्ररोहन्नवरशनाश्रयरत्नकिङ्किणीनाम् ॥ १७ ॥

वरललने इति रशनायां रत्नकिङ्किणीवत्त्वस्य साधारणमामन्त्रणम् । तव वलीविभङ्गेषु प्रतिफलनं प्रतिबिम्बस्तेन प्रविभक्तानेकरूपा संपन्ना मूर्तिर्यस्य स इन्दुरकृत्रिमं स्वभावेन प्ररोहन्त्यो नवा रशनाश्रया मेखलावर्तिन्यो या रत्नकिङ्किण्यस्तासां लिपिं विच्छित्तिं श्रयति । वलिसंपन्नेषु चन्द्रप्रतिबिम्बेषु मणिकिङ्किणीसंभावनम् ॥

प्रहरति हरिणाङ्कने तवेदं कुचयुगमन्तिकबिम्बिते लसन्त्याः ।
रुचिसहचरकोकपक्षपातादिव चलहारलताविवल्गनेन ॥ १८ ॥

अन्तिके समीपे बिम्बिते जातप्रतिबिम्बे हरिणाङ्कने चन्द्रे कुचद्वयं प्रहरति । कर्मा-

त्राधिकरणत्वेन विवक्षितम् । चला लीलावशात्तरला या हारलता तस्या विवल्गनेन । संभाव्यते—रुचेः स्वकान्तेः सहचराः । सदृशा इत्यर्थः । कोकाश्चक्रास्तेषु पक्षपातादिव । रात्रिराजो हि चक्रवाकाणां वैरी । वर्तुलत्वाद्द्वयरूपत्वावस्थानाच्च रुचिसाहचर्यम्॥

विलसति कलकण्ठि कण्ठ एष प्रतिफलता तव चन्द्रमण्डलेन ।
मुररिपुकरकम्बुनेव शोभाहरणरुषा हठकिंकरीकृतेन ॥ १९ ॥

हे कलकण्ठि, तवैष कण्ठः प्रतिबिम्बितेन चन्द्रेण विलसति । संभाव्यते—शोभाया हरणं स्पर्धा तेन रुषा हेतुभूतया हठेन बलात्किंकरीकृतेन दासीकृतेन मुररिपुकरकम्बुनेव पाञ्चजन्येनेव । कण्ठस्य शङ्खमात्रं न सदृशमिति हरिशङ्खः सादृश्येन संभाव्यमानस्तिरस्कृतत्वेन दासीकृतः ॥

परिणतवपुरेष रात्रिराजस्तव सविधेऽधरपल्लवस्य मुग्धे ।
प्रभवति रचनामनुग्रहीतुं प्रतिदिनपुञ्जितविभ्रमस्मितस्य ॥ २० ॥

मुग्धे इत्यामन्त्रणं विलासोक्त्यनुगुणम् । तवौष्ठपल्लवस्य सविधे निकटे परिणतं प्रतिबिम्बितं वपुर्बिम्बं यस्य स चन्द्रः प्रतिदिनं दिने दिने पुञ्जितं राशीभूतं यद्विभ्रमस्मितं विलासहासस्तस्य रचना संनिवेशस्तामनुग्रहीतुं सादृश्येन कृतार्थयितुं प्रभवति । हाससदृशः संभाव्यत इत्यर्थः ॥

प्रतिमितमधिगण्डमण्डलं ते रजनिपतेः परिपूर्तिमच्छरीरम् ।
उपनयति नताङ्गि पौनरुक्त्यं पृथुतरमौक्तिककुण्डलप्रतिष्ठाम् ॥ २१ ॥

परिपूर्तिमत्पूर्णं गण्डमण्डले प्रतिमितं चन्द्रबिम्बं पृथुतरं बृहद्यन्मौक्तिककुण्डलं तस्य प्रतिष्ठा तां पौनरुक्त्यं द्विर्भावमुपनयति । गण्डतटे चन्द्रप्रतिबिम्बं द्वितीयं मुक्ताकुण्डलं संभाव्यत इत्यर्थः ॥

श्रवणपरिसरे तुषारधामा तव घटितप्रतियातनश्चकास्ति ।
युवतिकुलगुरोर्मुखादधीतं किमपि रहस्यमिवोपदेष्टुकामः ॥ २२ ॥

तव श्रवणस्य परिसरे निकटे घटिता लग्ना प्रतियातना प्रतिबिम्बं यस्य स चन्द्रश्चकास्ति । अतः संभाव्यते—युवतीनां कुलगुरुः कामस्तस्य मुखादधीतं शिक्षितं किमप्यन्यस्यावाच्यं रहस्यमुपदिदिक्षुरिव । रहस्योपदेशो हि कर्णनिकटे क्रियते ॥

अलिकफलकसीम्नि तेऽब्जवक्त्रे शिशिरकरप्रतिबिम्बपङ्क्तिरास्ते ।
निखिलयुवतिमण्डलाधिराज्ये कृत इव पञ्चशरेण मौलिबन्धः ॥ २३ ॥

अलिकं ललाटं तदेव विपुलत्वात्फलकं तस्य सीम्नि शिशिरकिरणस्य चन्द्रस्य प्रतिबिम्बपङ्क्तिरास्ते । ललाटस्य विपुलत्वाच्चन्द्रस्य प्रतिबिम्बपङ्क्तियुक्तिः । अतः संभाव्यते—समस्तस्त्रीमण्डलसाम्राज्ये मौलिबन्ध उचितः ॥

निरुपममहिमस्पृशां शशाङ्कप्रतितनुभिर्निखिलाङ्गसङ्गिनीभिः ।
अघटि चटुचमूरिति प्रियेण प्रसृतिदृशामनुरागकिंकरेण ॥ २४ ॥

निखिलाङ्गेषु समस्तावयवेषु सङ्गिनीभिर्लग्नाभिः शशाङ्कप्रतितनुभिश्चन्द्रप्रतिविम्बैर्निरुपमोऽतुलो यो महिमा तं स्पृशन्ति तासां प्रसृतिदृशां निकुञ्जपाणिदृष्टीनां चटुचमूश्चाटुप्रपञ्चः प्रियेणाघटि कृतः । यतोऽनुरागेणानुषङ्गेण किंकरो दासः ॥ चन्द्रविम्बकुलकम् ॥

जहिहि नीलदुकूलसंविधानं वपुषस्त्वं शरकाण्डपाण्डुरस्य ।
क्षतिमेतु कुरङ्गकेतुमूर्तेर्जलदातङ्कलामयः कलङ्कः ॥ २५ ॥

शरकाण्डवत्पाण्डुरस्य गौरस्य वपुषो नीलदुकूलस्य संविधानं घटनं जहिहि परिहर । कुरङ्गो मृगः केतुर्लाञ्छनं यस्य स चन्द्रस्तस्य मूर्तेर्जलदातङ्को मेघकृतो बाधस्तस्य च्छादनवैदग्ध्यं तन्मयः कलङ्कः स्वीयकलङ्कविलक्षणः क्षतिमेत्वपैतु । वाक्यार्थरूपकम् ॥

सकृदेव विलोचनद्वयीयं कृतवत्येणमदावधीरणं ते ।
घटनामधुना तु गण्डलेखाप्यनुयात्वेणमदावधीरणाय ॥ २६ ॥

ते तव संबन्धिनी या विलोचनद्वयी नेत्रद्वयमेणानां मृगाणां मदो नेत्रसौन्दर्यदर्पस्तस्यावधीरणं पराभवं सकृदेवैकवारमेव कृतवती तथा मृगाणां दृष्टिदर्पखण्डनं त्वया कृतं यथा पुनः कदाचिदपि मृगास्त्वद्दृशां साम्यं मनसापि नाकुर्वन्निति सकृद्ग्रहणस्यार्थः । द्विः शरानभिसंधानं हि धन्विगुणः । एवं पूर्वं मृगदर्पं दृष्टिरहार्षीत् । अधुना तु तव गण्डलेखा एणमदस्य कस्तूरिकाया अवधीरणाय त्यागाय घटनामेतु । कस्तूरिकारहिता संपाद्यतामित्यर्थः । अवयवत्वेन दृष्टिगण्डयोस्तुल्यत्वादेणमदस्य चाध्यवसानादुक्तिसंगतिः । लेखाशब्दः प्रशंसार्थः ॥

विसृज स्रजमुत्पलच्छदानां हठकेशग्रहसाहसैकधृष्णुम् ।
क्रियते तव पैशुनं कदाचिद्यदमीभिर्नयनैकवैरकारैः ॥ २७ ॥

केशानां ग्रहो भूषणत्वेन ग्रहणम्, कलहकृतः कचग्रहश्च स एव दुष्करत्वात्साहसं तत्रैका धृष्णुः प्रगल्भा तामुत्पलपत्राणां मालां त्यज । यतोऽमीभिरुत्पलपत्रैस्तव पैशुनं कृष्णीकरणगन्धालिशब्दैः सूचनं कदाचित्क्रियते । यद्यपि सितनीरङ्गिकाद्याच्छादनं तथाप्यन्याशङ्कया कदाचिद्ग्रहणम् । यतो नयनयोरेकवैरकारैः सदृशैः । फुल्लैरित्यर्थः । धृष्टेभ्यो वैरिभ्यश्च पैशुनशङ्कोचिता ॥

द्रुतमुच्चकुचद्वयं दरिद्रं कुरु कालागुरुमञ्जरीभरेण ।
मुखरभ्रमरोपहूतिचञ्चुर्यदनर्थान्तरमप्ययं प्रसूते ॥ २८ ॥

कृष्णागुरुणा मञ्जर्यो मञ्जर्याकारा रचनाविशेषाः कालागुरोर्बहुलतास्तासां भरेण दरिद्रं रहितमुच्चकुचद्वयं त्वं कुरु । यद्यतोऽयं कृष्णगुरुरनर्थान्तरं कृष्णीकरणाद्द्वितीयमनर्थं

प्रसूते करोति । यतो मुखरा ये भ्रमरास्तेषामुपहूतिराह्वानं तया वित्तः । कृष्णागुरुगन्धलोभादलयः सशब्दमेष्यन्तीति कृष्णागुरुं परिहरेत्यर्थः । उन्नतात्सौरभं प्रसरतीत्युच्चग्रहणम् ॥

निविडस्तनमण्डलात्तवासावपयातु द्रुतमिन्द्रनीलहारः ।
वितनोति तमोधियेव चन्द्रो रुचिकेशग्रहमस्य यत्कराग्रैः ॥ २९ ॥

तव स्तनमण्डलादिन्द्रनीलरत्नैर्हारो भूषणविशेषोऽपयातु । 'लोट् च' इति प्रार्थने लोट् । अस्मिन्नीलत्वादन्धकारभ्रान्त्येव कराग्रै रश्म्यग्रैर्हस्ताग्रैश्च चन्द्रोऽस्य हारस्य रुचीनां केशग्रहं न्यग्भावं करोति प्रारभते । चन्द्ररश्मिसंनिधौ स्फुरत्परभाग इन्द्रनीलहारः पैशुनं करोतीत्यर्थः ॥

इति मेचक एष वेषमार्गः शममायातु तवानवद्यगात्रि ।
उदयन्यदयं करोति विघ्नं मृगलक्ष्मा तिमिराभिसारिकाणाम् ॥ ३० ॥

हे अनवद्यानि निर्दोषाणि गात्राणि यस्याः । मेचकः श्याम इत्येष वेषमार्गः शममायात्वपयातु । यद्यत उदयन्मृगलक्ष्मा चन्द्रोऽन्धकाराभिसारिकाणामभिसरणविघ्नं करोति । प्रकाशनात् । अनवद्यगात्रीति विशेषानुगुणमामन्त्रणम् । उदयंश्च शत्रुर्विघ्नं करोति ॥

अथवा विभृहि त्वमङ्गवीथ्यामसिताकल्पमनल्पमिन्दुवक्त्रे ।
स्वयमेव पिधास्यते यदेनं घनकेलिस्मितचन्द्रिकाधिकारः ॥ ३१ ॥

हे इन्दुवक्त्रे, त्वमङ्गवीथ्यामवयवपथेऽनल्पमसिताकल्पं कृष्णवेषमथवा विभृहि । अनुमतौ लोट् । यद्यतो घनं यत्केलिस्मितं लीलाहासस्तदेव चन्द्रिका ज्योत्स्ना तस्याधिकारः प्रस्ताव एनं कृष्णवेषं स्वयमेवाप्रेरणयैव पिधास्यत आच्छादयिष्यति ॥

चतुरं शशलक्ष्मणि क्षपाया हरति ध्वान्तसितेतरोत्तरीयम् ।
उपदेशमिति प्रसह्य सख्यो रचयन्ति स्म तमोभिसारिकाणाम् ॥ ३२ ॥

वासन्तिकत्वादथवा संपूर्णं प्राप्तोदयत्वाच्चतुरं तूर्णं शशलक्ष्मणि चन्द्रे क्षपाया रात्रेर्नायिकास्थानीयाया ध्वान्तमन्धकारमेव सितेतरं कृष्णमुत्तरीयं वस्त्रं प्रसह्य हठाद्धरति सति तिमिराभिसारिकाणामित्येवमुपदेशं सख्योऽकुर्वन् । रचयतेश्चतुरं वा विशेषणम् ॥ अभिसारिकाकुलकम् ॥

ज्योत्स्नाभिसारविधये बिसकङ्कणानि
　मुक्तागुणा मलयजं च तवातितुष्ट्यै ।
कंदर्पदाहलहरीहरणादवाप्तं
　यत्रान्तरीयकगुणान्तरमप्यमीभिः ॥ ३३ ॥

ज्योत्स्नायामभिसारविधिः प्रियाभिसरणं तदर्थं बिसकङ्कणानि मृणालवलयाः, मुक्ताहारः, मलयजं चन्दनं च तवातिहर्षाय भवति । न केवलं चन्द्रिकायां वर्णसादृश्यादभे-

दोपगमात्। यावत्त्वय्येवान्तरीयं ध्रुवं गुणान्तरमन्यो गुणोऽप्यमीभिर्बिसकङ्कणाद्यैः करणभूतैर्यदवाप्तम्। कुतः। कंदर्पेण कामेन दाहलहरी तस्या हरणं तस्मात्। मृणालाद्यैस्तत्र न केवलमेवाकारगोपनम्, अपि तु कामदाहहरणमपि कृतमित्यर्थः॥

कल्लोलिताप्युदयतो यदतिग्मरश्मे-
र्यद्गाहसे च झषकेतुविवल्गितानि।
शुभ्राभिसारपरिपाण्डुरवेषबन्धु-
स्तद्भासि दुग्धजलधेरधिदेवता त्वम्॥ ३४॥

अतिग्मरश्मेश्चन्द्रस्योदयात्त्वं कल्लोलिता तरलिता सतरङ्गा [च] यदसि, यच्च झषकेतुः कामः समुद्रश्च तद्विवल्गितानि तदुल्लासान्गाहस आलोडयसि, शुभ्राभिसारे ज्योत्स्नागमेन परिपाण्डुरवेषस्य बन्धुर्यदसि, ततो हेतोस्त्वं क्षीरसमुद्रस्याधिदेवता प्रतिभासि। तस्यास्तथाविधत्वात्॥

संपादयेन्दुवदने त्वमकाण्ड एव
श्रीखण्डकाण्डरसपङ्किलमङ्गमङ्गम्।
येनात्र केतकशरो विचरन्पदानि
नोद्धर्तुमर्हति जवेन रतिद्वितीयः॥ ३५॥

हे इन्दुवदने, त्वमङ्गमङ्गं श्रीखण्डस्य काण्डं नालं तद्रसेन पङ्किलं चन्दनपङ्कयुक्तं कुरु, येन यतोऽत्राग्रे रतिद्वितीयो विचरन्रत्या सह विचरन्पङ्किलत्वात्पदानि तूर्णमुद्धर्तुं नार्हति। कामस्त्वदङ्गे वसतीति प्रकाशितम्। चन्द्रोदये स्वयमेव तापोपशमादनुलेपेन भाविविलम्बत्वाद्वाकाण्डेऽकाल इत्युक्तम्॥

चूर्णालकव्यतिकरे ननु किं मुधैव
शेफालिकामुकुलशेखरकल्पनाभिः।
अस्मिल्ललाटफलके प्रतिबिम्बितस्ते
तत्कर्मनर्म कुरुते हि तमीकुटुम्बः॥ ३६॥

चूर्णालकानां व्यतिकरः समूहस्तत्र शेफालिका मल्लिका तस्या मुकुलानि तैः शेखरो मौलिभूषणं तत्कल्पनाभिः किम्। न किंचिदित्यर्थः। यतो मुधैव निष्फलाभिः। ते तवास्मिल्ललाटमेव विस्तीर्णत्वात्फलकं तत्र प्रतिबिम्बितस्तमीकुटुम्बश्चन्द्रस्तत्कर्म शेखरकर्मैव नर्म परिहासस्तत्तनुते। ललाटे प्रतिबिम्बवशान्मुकुटभूषणं सिद्ध्यति किं मल्लिकाभिः। विलम्बकारित्वादित्याशयः॥

चन्द्रातपाभिसरणे मणिनूपुराभ्यां
पादौ परं परिचर त्वमधीरतारे।

तन्मञ्जुशिञ्जितशतैरुपहूयमानं
　　यन्निह्नवाय तव केलिमरालयूथम् ॥ ३७ ॥

चन्द्रातपे ज्योत्स्नायामभिसरणे प्रियनिकटगमने तदा सशब्दत्वात्पिशुनाभ्यामपि रत्ननूपुराभ्यां चरणौ परं परिचर शोभय । अधीरतारे, इति प्रकृतानुगुणमामन्त्रणम् । यतस्तयोर्नूपुरयोर्मञ्जूनि मधुराणि शिञ्जितानि शब्दास्तैरुपहूयमानमाकार्यमाणं क्रीडाहंसकुलं निह्नवाय, अर्थान्नूपुरशब्दानां छादनाय भवति । अथवा शुभ्रवेशाया गौराङ्ग्याश्च तव निह्नवायेति योज्यम् ॥

खेलैः पदैर्दयितमानससंचरिष्णु-
　　स्त्वं प्रस्थिता मदनविभ्रमराजहंसि ।
व्यालोलचीनसिचयाञ्चलपक्षपालि-
　　स्तूर्णं किमुड्डयनकर्म विनिर्मिमीषे ॥ ३८ ॥

हे मदनस्य विभ्रमार्थं राजहंसि । विनोदकत्वात् । दयितस्य मानसे चित्ते संचरिष्णुः खेलैर्मन्थरैः पदैः प्रस्थिता त्वमुड्डयनमेव कर्म किं विनिर्मिमीषे । यतश्चीनसिचयस्य चीनदेशवस्त्रस्याञ्चल एव पक्षपालिः पक्षतिर्व्यालोला यस्याः । प्रथमं शनैः प्रस्थिता, इदानीमुड्डयस इवेति परिहासद्योतनम् । अथ त्वं खेलैः पदैः प्रियचित्ते संचरन्त्यसि, इह तु प्रस्थिता तदुड्डयनमेव कर्म किं करोषि । राजहंसी च खेलैर्मानससरसि संचरन्त्युड्डयते ॥

ज्योत्स्नास्थितावभिसरन्त्यभिकं शरीरे
　　भूषां वृथैव कृतवत्यसि चन्द्रकान्तैः ।
एषां यदिन्दुकरताण्डवितैः पयोभि-
　　रार्द्रीकृते पथि पदानि तव स्खलन्ति ॥ ३९ ॥

ज्योत्स्नास्थितौ सत्यामभिकं कामुकमभिसरन्ती चन्द्रकान्तैर्भूषां वृथैवाकरोः । यदेषां चन्द्रकान्तानां संबन्धिभिर्भृशं चन्द्रस्राववितैर्जलैरार्द्रीकृते पथि तव पदानि स्खलन्ति । अत्र संभाविताद्भूषणत्वोपकाराद्विरुद्धस्य पदस्खलनस्योक्तिः ॥

रक्षायताक्षि सितवेषविशेषमेव
　　चिन्ता प्रियं प्रति न संप्रति युज्यते ते ।
तज्जन्मभिः श्रमजलैर्हि कदाचिदेष
　　त्रुट्यत्युदारघनसारमयोऽङ्गरागः ॥ ४० ॥

आयताक्षि इत्यामन्त्रणं साकूतम् । चिन्त्यमानक्रीडानां प्रियेणैव कारयिष्यमाणत्वात् । त्वं सितं वेषं रक्ष । चिन्तानां परिहारादित्याशयः । प्रियं प्रति तव चिन्ता न युज्यते ।

यतस्तया चिन्तया जन्म येषां तैः श्रमजलैः कर्पूराङ्गरागो गलति । प्रियस्मरणेन घर्मजलोत्पत्त्या कर्पूररागो नश्यतीति प्रियस्मरणं किमर्थम् ॥

दाक्षायणीप्रियतमे विहिताभिसारे
ज्योत्स्नासितांशुकविनिह्नुतया रजन्या ।
आपाण्डुभूषणजुषामभिसारिकाणा-
मित्थं मिथोऽकथि पथिष्वनुगत्वरीभिः ॥ ४१ ॥

ज्योत्स्नैव च्छादकत्वात्सितांशुकं तेन च्छादितया रजन्या दाक्षायणीनां ताराणां प्रियतमे चन्द्रे विहिताभिसारे कृताभिसरणे सति शुभ्रवेषधारिणीनामभिसारिकाणामनुचरीभिश्चेटीभिर्मिथोऽकथि, एवं कथितम् । 'वा नामधेयस्य' इति दक्षशब्दस्य वृद्धसंज्ञायाम् 'उदीचां वृद्धात्—'इति फिञि रूपम् ॥ ज्योत्स्नाभिसारिकाकुलकम् ॥

वक्त्रश्रिया सततदक्षिणयोपनीतः
प्रीतिं शिरस्ययमितो निदधत्कराग्रम् ।
भूयाः समग्रललनाकुलमौलिरत्नं
दत्ते तवाशिषमितीव पतिर्द्विजानाम् ॥ ४२ ॥

सततं दक्षिणया समानधर्मत्वादनुकूलया मुखलक्ष्म्या प्रीतिं सादृश्यजनितां नीतः प्रापितो द्विजानां पतिश्चन्द्रस्तवेमामाशिषं दत्ते ददातीव । त्वं समस्तरमणीगणस्य मौलिरत्नं प्रधानं भूया इति । कराग्रं रश्म्यग्रं शिरसि निदधत् । द्विजानां पतिर्ब्राह्मणश्च दक्षिणया प्रीणितः शिरसि हस्तं स्थापयन्नाशीर्वादं करोति ॥

सौभाग्यविभ्रमविशेषकराण्ययं ते
मन्ये लिलेखिषति दिव्यशुभाक्षराणि ।
संध्यावशेषघुसृणेन विसृत्वरीभि-
र्भालस्थले हिमकरः करलेखनीभिः ॥ ४३ ॥

चन्द्रसंबन्धिभिस्त्वल्ललाटे रश्मिभिरहं मन्ये । अयं चन्द्रस्तव ललाटे दिव्यशुभाक्षराणि लिलेखिषति लेखितुमिच्छति । काभिः । संध्याया अवशेषो निवृत्तिमदवस्थानं स एव घुसृणं कुङ्कुमं तेन विसृत्वरीभिः प्रसरणशीलाभिः करलेखनीभिरंशुकलमैः सौभाग्यविभ्रमयोर्विशेषकारीणि । 'नव्य—' इति वा पाठः । चन्द्ररश्मियोगादधिकसुभगा विलासवती च त्वं जातेत्यर्थः ॥

कर्पूरपांसुलहरीलटभा घटन्ते
मिथ्या तवाधरदले शशिनो मयूखाः ।

अस्मिन्सुहृन्दि रतिकान्तयशश्छटाना-
मेषां ननु स्थितिमपह्नुवते स्मितानि ॥ ४४ ॥

कर्पूरपांसोर्लहरी तद्वल्लटभाः प्रौढाः । कर्पूरभ्रान्तिजनका इत्यर्थः । महान्तो हि कर्पूरभोगिनः । चन्द्रप्रभास्तवोष्ठे मिथ्या घटन्ते वृथा पतन्ति । ननु यतः कामयशसां सुहृन्दि सदृशानि स्मितानि हासा एषां चन्द्रांशूनां स्थितिमपह्नुवते छादयन्ति । हासोल्लासवशाच्चन्द्रकरा न विभाव्यन्त इत्युक्त्या प्रेमसूचनम् । 'निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृताः [ह्येते निर्देशश्चोपलक्षणम्]' ॥

दन्तच्छदं हृतमदं नवविद्रुमाणां
चान्द्रास्तव स्तवकयन्ति कराग्रभागाः ।
एषाममुष्यकिरणैररुणीकृतानां
भूयोऽप्यसावुदयराग इवाभ्युदेति ॥ ४५ ॥

नवा विद्रुमाः प्रवालास्तेषां हृतो मदो लौहित्यदर्पो येन । विद्रुमाधिकगुणमित्यर्थः । दन्तच्छदमधरं चान्द्राः कराग्रभागाश्चन्द्रांशवः स्तवकवन्तं कुर्वन्ति । विद्रुमाणां च स्तवका भवन्ति । अमुष्यौष्ठस्य रश्मिभिररुणीकृतानां चन्द्रांशूनां पुनरप्युदयागम इवाभ्युपैति स्फुरति ॥

दूरप्रसारितकरस्य पुरः सुदूर-
माक्रामता तरलहारलताकराग्रैः ।
मुग्धे नियुद्धघटना शशिमण्डलस्य
किं वर्तते सह तव स्तनमण्डलेन ॥ ४६ ॥

मुग्धे इत्यामन्त्रणं साकूतम् । तदङ्गस्यापि चन्द्रमण्डलस्य चन्द्रेण सह बाहुयुद्धवृत्तेः । परैर्धर्ष्यमानत्वात् । तव स्तनमण्डलेन सह शशिमण्डलस्य नियुद्धघटना भुजयुद्धारम्भः किं वर्तते । द्वयोर्मण्डलत्वेन सजातीयत्वाद्युद्धोक्तिसंगतिः । यतो दूरं प्रसारिताः करा रश्मयः पाणयश्च येन । तरला तुङ्गत्वेन विषमत्वाच्चपला या हारलता तस्याः कराग्राणि प्रभा हस्ताश्च तैश्च दूरमाक्रामता ॥

एणाङ्करश्मिलहरीभिरधीतसख्यः
पुष्णाति ते श्रियमसावुदरप्रदेशः ।
कार्श्यक्रमावजितवज्रतयार्जितस्य
व्यञ्जन्निवाच्छमहसो यशसस्तरङ्गान् ॥ ४७ ॥

असौ तवोदरप्रदेशः श्रियं धत्ते । यतश्चन्द्ररश्मिभिः प्राप्तयोगः । अतः संभाव्यते— कार्श्येन करणेन क्रमेणावजितो वज्रो येन तद्भावेनार्जितस्याच्छमहसो निर्मलतेजसो

यशसस्तरङ्गान्व्यञ्जन्प्रकाशयन्निव । वक्त्रो मध्ये कृशस्ततोऽप्युदरं कृशीय इत्यतः कीर्तिरेवासौ, नेन्दुरश्मय इत्यर्थः । मल(?)जयाशङ्कानिरासार्थं क्रमवचनम् ।।

स्रोतः शशाङ्कमहसां सहसा गभीर-
नाभीपथं शिशुमृगाक्षि तवाधिशेते ।
अत्रास्य निर्जरतरङ्गवतीसपङ्क्ते
रोमावलीयमुनया घटतां प्रयागः ।। ४८ ।।

हे शिशुमृगाक्षि बालहरिणनेत्रे, शशाङ्कमहसां स्रोतः प्रवाहस्तव गभीरं निम्नं नाभीपथमधिशेते श्रयति । चन्द्ररश्मिप्रवाहस्य बहुत्वद्योतनार्थं महसां वचनम् । अल्पस्य निम्ने तूर्णं प्रवेशाभावात् । निर्जरा देवास्तेषां तरङ्गवती गङ्गा तस्याः सदृशस्य । नाभीपथे रोमावल्येव वर्णसंनिवेशाभ्यां यमुना तया सह प्रयागो घटतां संपद्यताम् ।।

रम्भोरु संभृततमोऽत्र तवातिदूरा-
दूरुद्वयीं स्पृशति चन्द्रमसः प्रकाशः ।
एषा किलैतदुदयात्कदलीविशेषा-
न्कान्त्येव शैत्यकलयापि तिरस्करोतु ।। ४९ ।।

हे रम्भोरु कदलीस्तम्भोरु, चन्द्रप्रकाशस्तवोरुद्वयीं दूरात्स्पृशति । संभृततरो घनतरः । एषोरुद्वयी कदलीविशेषान्रम्भास्तिरस्करोतु विजयताम् । कया । कान्त्येव शैत्यकलयापि । कुतः । एतस्य चन्द्रप्रकाशस्योदयात् । कदल्यस्तदूर्वोः समाना आसन्, अधुना चन्द्रांशुसंपर्कात्कान्त्या शैशिर्येण चोरुभ्यां कदल्यो जीयन्ताम् ।।

एते करा हिमकरस्य चलाचलाक्षि
लाक्षाजुषोश्चरणयोस्तव संस्तवेन ।
जन्मानवाप्तचरफुल्लसहस्रपत्र-
सौहार्दसौख्यघटनां चिरमाप्नुवन्तु ।। ५० ।।

हे चलाचलाक्षि चञ्चलनयने । 'चरिचलिपति—' इति रूपम् । लाक्षाजुषोरलक्तकभाजोः पादयोः परिचयेन हेतुना चन्द्रांशवो जन्मनि जन्ममध्येऽनवाप्तचरम्, चन्द्रोदये पद्मानां संकोचात्तैरलब्धपूर्वं यत्फुल्लसहस्रपत्रसौहार्दं प्रफुल्लपद्मपरिचयस्तेन सौख्यं सुखं तद्धटनां चिरमाप्नुवन्तु । प्रफुल्लपद्मसदृशौ तव पादावित्यर्थः ।।

उत्तुङ्गसौधपदबन्धरता नताङ्ग्यः
प्रत्यङ्गसंगतकुरङ्गभृदंशुरेखाः ।
इत्थं क्रमेण रमणैर्मणिपीठपृष्ठ-
प्रष्ठैरवर्णिषत चाटुमयैर्वचोभिः ।। ५१ ।।

मणिपीठपृष्ठे प्रष्ठाः प्रधानभूतास्तै रमणैर्नताङ्ग्यश्चाटुमयैः स्तुतिप्रकृतिभिर्वचोभिरेवं क्रमेणावार्णिषत वर्णिताः । प्रत्यङ्गं संगताः कुरङ्गभृतश्चन्द्रस्यांशुरेखा यासां ताः । तथोत्तुङ्गे सौधे यः पदबन्धः स्थितिस्तत्र रताः ॥ चन्द्रकरकुलकम् ॥

आलि कल्पय पुरः करदीपं चन्द्रमण्डलमिति प्रथितेन ।
नन्वनेन पिहितं मम चक्षुर्मङ्क्षु पाण्डुरतमोगुलकेन ॥ ९२ ॥

हे आलि सखि, त्वं करदीपं हस्तसंचार्यं प्रदीपं कल्पय । नन्विति हेतौ । चन्द्रमण्डलमिति प्रसिद्धेनानेन पाण्डुरतमोगुलकेन शुभ्रान्धकारपिण्डेन मम चक्षुर्दृष्टिः पिहितम् । दीपस्यासन्नत्वसूचनार्थं करग्रहणम् । अन्यथा तमसात्यर्थमन्धीकरणमनुक्तं स्यात् । नेदं चन्द्रमण्डलम्, अपि तु पाण्डुरं तमोगुलकम् । ततो मम दृष्टितिरोधायकम् ॥

कोटरे तिमिरमेष कलङ्कच्छद्मना वहति हन्त शशाङ्कः ।
यत्कणैरिव विलुम्पति दृष्टिं मादृशां दयितदीपवियोगे ॥ ९३ ॥

हन्त कष्टे । कलङ्कव्याजेनैष चन्द्रः कोटरे मध्ये तिमिरं तमो धत्ते । यत्कणैस्तिमिरकणैरिव मादृशां विरहिणीनां दृष्टिमयं लुम्पति पिदधाति । कदा । दयित एव प्रकाशकत्वाद्दीपस्तस्य वियोगे । चन्द्रोदयस्य कामोद्दीपकत्वात्तदा विरहिणीनां सतो दृष्टिलोपस्य निमित्तत्वेन कलङ्कान्धकारकणाः संभाव्यन्ते ॥

कालकूटमिह निन्दति लोको येन शंभुरजरामर एव ।
अन्तकं विरहिणीषु सुधांशुं स्तौत्यमुं तु विरलो हि विवेकः॥९४॥

येन कालकूटेन शंभुरीश्वरोऽजरामर एव तं कालकूटमिह जनो निन्दति । एवेति नियमेनोपकारित्वं प्रतिपादितम् । विरहिणीषु विषये यममुं चन्द्रं लोकः सुधांशुं स्तौति सश्लाघं वर्णयति । विवेको हि विरलोऽल्पः । सर्व एव गतानुगतिका इत्यर्थः । विषभक्षणाच्चन्द्रो दुःसह इति तात्पर्यम् ॥

घोरकर्म विरहिष्वहह त्वं कर्तुमिच्छसि तवोचितमेतत् ।
मूर्ध्नि रात्रिकर तिष्ठसि शश्वद्विश्वसंहृतिकृतो हि हरस्य ॥ ९५ ॥

संहारलक्षणं घोरं कर्म विरहिषु विषये त्वं कर्तुं यदिच्छसि तत्तव युक्तम् । विश्वसंहारकारिणो हरस्य मूर्ध्नि शिरसि, लोकोक्त्या धुरि च तिष्ठसि । हरस्येति प्रकृतानुगुणम् ॥

कालकूटमधुनापि निहन्तुं हन्त नो वहसि लाञ्छनभङ्ग्या ।
यद्भयादिव निगीर्णमपि त्वामाशु मुञ्चति सुधाकर राहुः ॥ ९६ ॥

हन्त कष्टे । नोऽस्माकं निहन्तुं त्वं कलङ्कव्याजेनाद्यापि कालकूटं वहसि । मथनात्पूर्वं कालकूटसहवासादधुनापीत्यपिशब्दोपन्यासः । नायं कलङ्कः, अपि तु कालकूट इति वर्णकृताभ्यां संभावनम् । यद्भयात्कालकूटभयं प्राप्येव राहुस्त्वां निगीर्णं कण्ठावतीर्णमपि तूर्णं मुञ्चति वमति ॥

अंशवस्तव निशाकर नूनं कल्पितास्तरुणकेतकखण्डैः ।
येन पाण्डुरतरद्युतयो नः कण्टकैरिव तुदन्ति शरीरम् ॥ ९७ ॥

विधिना तव प्रभाः केतकखण्डैर्नूनं कल्पिताः । येनेति हेतौ । एतेंऽशवो नः शरीरं कण्टकैरिव तुदन्ति । पाण्डुरतरा द्युतिर्येषाम् । केतकानि सकण्टकानि सितानि च भवन्ति । निशाकरेति साकूतमामन्त्रणम् ॥

अम्बुधेरुदगमद्विधुभङ्ग्या नूनमौर्वशिखिभास्मनपिण्डः ।
यत्किलास्य घटते नहि तृप्तिः खण्डिताजनदृगम्बुसरिद्भिः ॥९८॥

नूनं वितर्के । चन्द्रव्याजेन समुद्रादौर्वाग्नेर्भास्मनो भस्ममयः पिण्ड उदगमदुत्थितः । नायं चन्द्रविम्बः, किं तु वडवाग्निभस्मपिण्डः । यद्धेतौ । अस्य चन्द्रशब्दव्यपदेश्यस्य भस्मपिण्डस्य तृप्तिर्न घटते । काभिः । खण्डिताजनस्य विरहिणीवर्गस्य दृगम्बु बाष्पं तन्नदीभिः । अत्यर्थं रोदयतीत्यर्थः । भस्म च जलेन न तृप्यति ॥

रात्रिराज सुकुमारशरीरः कः सहेत तव नाम मयूखान् ।
स्पर्शमाप्य सहसैव यदीयं चन्द्रकान्तदृषदोऽपि गलन्ति ॥९९॥

कः सुकुमारशरीरस्तव रश्मीन्सहेत नाम । समर्थनायां लिङ् । यदीयं त्वद्रश्मिसंबन्धिनं स्पर्शं प्राप्य चन्द्रकान्तशिला अपि गलन्ति द्रवन्ति । दण्डापूपिकान्यायेन सुकुमाराणां गलनं सिद्धम् ॥

युक्तमाह दयितो मम वक्त्रं पङ्कजं रहसि चाटुकथासु ।
संस्तवं रुचिभिरस्य हिमांशोः प्राप्य कामपि रुजं यदुपैति ॥६०॥

तद्युक्तमुपपन्नम् । दयितो मम मुखं पद्मं श्लाघावसरे यदाह । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । यद्यतो हिमांशोरप्यस्य संस्तवं योगं प्राप्यैव मम मुखं कामपि रुजं व्यथां प्राप्नोति । पद्मस्यैव हि संकोचकारी चन्द्रमाः ॥

पद्मनाभ करुणां कुरु भूयोविग्रहेण परिपूरय राहुम् ।
येन तज्जठरकोटरशायी जात्वयं विधुरयेन्न विधुर्नः ॥ ६१ ॥

हे पद्मनाभ नारायण, त्वं करुणां कुरु । भूयोविग्रहेण पुनःशरीरेण राहुं परिपूरय । भूयःशब्दो विग्रहशब्दसंबद्धः । येनेति हेतौ । तस्य राहोर्जठरमुदरं तदेव कोटरं तत्र शेत एवंविधश्चन्द्रो नोऽस्माञ्जातु न विधुरयेद्बाधेत । कुर्विति प्रार्थने लोट् । विधुरशब्दात्तत्करोतीति णिजन्ताल्लिङ् ॥

तापयद्वपुरुदश्रुदुकूलाः कल्पयन्त्य इव सान्द्रजलार्द्रम् ।
खण्डिता निबिडदैन्यवतीभिर्वाग्भिरित्यसकृदिन्दुमनिन्दन् ॥ ६२ ॥

खण्डिताः कृतसंकेतभङ्गाश्चन्द्रमनिन्दन्नकुत्सयन् । काभिः । निबिडमत्यर्थं दैन्यवती-

भिर्दीनाभिर्वाग्भिः । यत उदश्रु बाष्पप्लुतं दुकूलं यासाम् । अतः संभाव्यते—वपुः सान्द्रं जलार्द्रं जलक्लृतं वस्त्रं यस्य तत्कल्पयन्त्य इव । यतस्तापवत्सविरहतापम् ॥ चन्द्रनिन्दाकुलकम् ॥

मुधैव बाधं कुसुमायुधस्य क्रुद्धः शरीरे व्यधित त्रिनेत्रः ।
त्वया हि मित्रेण सुधाकरेण नीतः स भूयोऽप्यजरामरत्वम् ॥ ६३ ॥

कुसुमायुधस्य कामस्य शरीरे, न तु तदधिष्ठातरि, हरो बाधं मुधैव वृथैव कृतवान् । यतस्त्वया सुधाकरेण मित्रेण स कामो भूयोऽप्यजरामरत्वं नीतः । क्रुद्धः क्रोधवशाददूरदृश्वा ॥

त्वन्मण्डलं नूनमतिग्मरश्मे चेतोभुवः संगमनीयरत्नम् ।
यस्य प्रभावात्सहसैव भङ्गं यात्यङ्गनानां प्रियविप्रयोगः ॥ ६४ ॥

हे अतिग्मरश्मे चन्द्र, नूनं तव मण्डलं चेतोभुवः कामस्य संगमनीयरत्नं समागमहेतुर्मणिर्भवति । 'कृत्यल्युटो बहुलम्' इति कर्तर्यनीयर् । यस्य संगमनीयरत्नस्य प्रभावात्प्रियविप्रयोगो दयितविरहः सहसैव भङ्गं याति । दूरस्था अपि पुरुषास्त्वन्महिम्नैवेत्य वनिताभिर्युज्यन्त इत्यर्थः ॥

यदर्धनारीश्वरमूर्तिरीशः सदैव गौरीविरहानभिज्ञः ।
शृङ्गारबन्धो भजतः शिरोग्रं शशाङ्क शङ्के स तव प्रभावः ॥ ६५ ॥

हे शृङ्गारबन्धो शशाङ्क, शृङ्गाररसस्योपोद्बलकत्वाद्बन्धो, अहं शङ्के स तव प्रभावः । यच्छिरोग्रमीश्वरस्य रक्षामणिस्थानं भजतोऽर्धनारीश्वररूपो भगवान्नित्यमेव गौरीविरहस्यानभिज्ञो यद्भवति । शृङ्गारबन्धो इति प्रकृतानुगुणमामन्त्रणम् ॥

लब्ध्वा विधो कान्तभुजोपधानं क्ष्माधूलिशय्यामधितस्थुषीणाम् ।
संकेतभूमावभिसारिकाणां भवस्ययत्नेन रतिप्रदीपः ॥ ६६ ॥

कान्तभुज एवोपधानं शय्यान्तगण्डकं लब्ध्वा क्ष्मायां भूमौ धूलिशय्यामधितस्थुषीणामभिसारिकाणामयत्नेन दशादिसंग्रहक्लेशेन विना त्वं सुरतप्रदीपः संकेतभूमौ भवसि । अधितस्थुषीणामिति 'स्थादिष्वभ्यासेन—' इति षत्वम् । लब्ध्वेति पूर्वकालविवक्षा न प्रधानम् ॥

अन्योन्यमेणाङ्क न संघटय्य विलासिनोर्देहकवाटयुग्मम् ।
सुरक्षितं त्वं दृढबाहुबन्धात्करोषि कंदर्परहस्यकोषम् ॥ ६७ ॥

विलासिनोर्देहावेव कवाटयुग्मं मिथः संघटय्य, दृढं बाहुभ्यामर्गलास्थानीयाभ्यां बन्धस्तस्मात्कंदर्परहस्यमेव कोषं सुरक्षितं करोषि । चन्द्रोदयस्य कामोद्दीपकत्वादालिङ्गनेन कामरहस्यं मानभोगरूपं रक्षितं भवतीत्यर्थः ॥

धुर्योऽसि सौभाग्यभृतां सुधांशो यस्मिन्पुरो गोचरताधिरूढे ।
मुखे स्मितं बिभ्रति कैरविण्यश्चिरेण निद्रन्ति च पङ्कजिन्यः ॥ ६८ ॥

हे सुधांशो, त्वं सौभाग्यभृतां सुभगानां धुर्योऽग्रणीरसि । यस्मिंस्त्वयि गोचरताधिरूढे दृष्टिविषयतां गते सति पुरोऽग्रे कैरविण्यो मुखे स्मितं विकासं बिभ्रति । पङ्किजिन्यो निद्रन्ति संकुचन्ति । सुभगदर्शनेन च काश्चिदनुरागवशाद्धसन्ति, काश्चन सुखवशान्मुकुलितदृशो भवति ॥

किं कौतुकं तत्स्ववपुःसखानि धिनोषि यद्वामदृशां मुखानि ।
भवान्निसर्गेण तमीभुजंग वहत्यनङ्गेऽपि हि पक्षपातम् ॥ ६९ ॥

स्वमकृत्रिमं यद्वपुः । वपुःशब्देन सौभाग्यं लक्ष्यते । तेन सखानि समानि वामदृशां मुखानि यद्धिनोषि सुखवशाद्धासयसि तत्किं कौतुकम्, नाश्चर्यम् । हे तमीभुजंग निशारमण, भवाननङ्गे मनोभुवि, अनिष्टेऽपि निसर्गेण फलनिरपेक्षं पक्षपातमानुकूल्यं वहति ॥

न नूतनं तत्प्रमदाश्रुवृष्टिं दृष्टौ यदासादितवल्लभानाम् ।
तनोषि चन्द्र प्रथमस्त्वमत्रेरानन्दजन्मा हि दृगम्बुबिन्दुः ॥ ७० ॥

प्राप्तप्रियाणां स्त्रीणां दृष्टावानन्दाश्रुप्रवाहं यत्करोषि तन्न नूतनं नाश्चर्यम् । यतस्त्वमत्रेः प्रथमो हर्षाश्रुबिन्दुः । अथवा कारणानुगुणत्वात्कार्यस्य तन्नाश्चर्यम् । अस्यां व्याख्यायां प्रथम इति पूर्ववाक्येन योज्यम् ॥

मृगावचूलोदित एव सद्यः कर्णान्तरे संचितविभ्रमाणि ।
करोषि नेत्राणि विलासिनीनामुत्सङ्गसारङ्गकशिक्षयेव ॥ ७१ ॥

मृगावचूलेति वक्ष्यमाणोत्प्रेक्षानुगुणमामन्त्रणम् । उदितः कृतोदय एव संस्त्वं विलासिनीनां नेत्राणि संचितविभ्रमाणि प्राप्तविलासानि कर्णाञ्चलीकरोषि विकासयसि । अतः संभाव्यते—उत्सङ्गेऽर्थाच्चन्द्रस्यैतदीयः सारङ्गकस्तस्माच्छिक्षोपदेशस्तयेव । चन्द्रोदये कामोद्दीपनत्वात्स्त्रीणां दृष्टिर्विकसति । तत्र मृगोपदेशो निमित्तं संभाव्यते ॥

राशीनशेषाञ्जहता सहेलं क्रमादुदारेण विधो युवानः ।
त्वयातुलत्वं गमितेऽनुरागे नान्योन्यमानग्रहमुत्सहन्ते ॥ ७२ ॥

हे विधो चन्द्र, अशेषान्राशीन्मेषादीन्क्रमाज्जहतातिक्रामतोदारेण संपूर्णेन त्वयानुरागेऽतुलत्वं धाराधिरूढत्वं गमिते सति युवानोऽन्योन्यं मानग्रहं नोत्सहन्ते । संयुक्ता एव तिष्ठन्तीत्यर्थः । राशयो हेमादिकूटा अपि, अतुलत्वं तुलोन्मेयत्वाभावोऽपि, मानग्रहः परिमाणस्वीकारोऽपीति लेशतः सूचितम् ॥

अदृष्टतापव्यसनाः स्तनाग्रं प्राणेश्वरे हार इवाधिरूढे ।
वाक्यैरिति प्रीतिरसोत्तरङ्गैस्तन्व्यः स्तुवन्ति स्म सुधागभस्तिम् ॥ ७३ ॥

हार इव प्राणनाथे स्तनाग्रमधिरूढे सत्यदृष्टतापदुःखास्तन्व्यः प्रतिरससोल्लासैर्वचनैश्चन्द्रमस्तुवन् । सुधागभस्तिरिति प्रीत्यनुगुणमभिधानम् ॥ चन्द्रप्रशंसाकुलकम् ॥

शृङ्गारद्विरदो हृदम्बुजवनं यूनां झगित्युत्खन-
न्नित्यासीदवचूलचामरधुरारूढेन्दुबिम्बोन्मदः ।
आसेदुः कुमुदानि सामिविकसन्मूर्तीनि यस्योदर-
त्वङ्गद्भृङ्ग रवाणि संभ्रमरणद्दुर्वर्णघण्टालिपिम् ॥ ७४ ॥

शृङ्गार एव द्विरदो हस्ती यूनां हृत्कमलवनं तूर्णमेव पूर्वोक्तप्रकारेणोत्खनन्नासीत् । अवचूलं भूषणं यच्चामरं तद्धुरामारूढं यदिन्दुबिम्बं तेनोन्मद उद्भिन्नमदः । यस्य शृङ्गारद्विरदस्य कुमुदानि दुर्वर्णघण्टालिपिं रौप्यकिङ्किणीभङ्गिं प्रापुः । चन्द्रोदयस्य नवत्वात्सामि किंचित्फुल्लानि स्फुरद्भ्रमरशब्दानि । भृङ्गारवा घण्टानुनादस्थानीयाः ॥

त्रैलोक्याशक्यवीरव्रतविवृतिरतानङ्गकोदण्डविद्या-
तुष्यद्गीर्वाणवर्गप्रहितपिपतिषत्पुष्पवृष्टिप्रतिष्ठाम् ।
आक्रामद्भिर्महद्भिर्निबिडितमुडुभिर्व्योम सोमांशुपुञ्जै-
रित्थं शृङ्गारकल्पद्रुमघनसुमनोगुच्छसख्यं पुपोष ॥ ७५ ॥

त्रैलोक्येऽशक्यं यद्वीरव्रतं तस्य विवृतौ प्रकाशने रतो योऽनङ्गस्तस्य कोदण्डविद्या तया तुष्यन्यो गीर्वाणवर्गस्तेन प्रहिता पिपतिषन्ती पतिष्यतीत्याशङ्क्यमाना या पुष्पवृष्टिस्तस्याः प्रतिष्ठां टङ्कमाक्रामद्भिः प्राप्नुवद्भिर्नक्षत्रैर्निबिडं संबाधं कृतं व्योमाकाशः सोमांशुपुञ्जैर्हेतुभिः शृङ्गारकल्पवृक्षस्य सुमनोगुच्छानां सख्यं पुपोष । चन्द्ररश्मयः शृङ्गारकल्पवृक्षगुच्छसमा आसन्नित्यर्थः । आक्रामद्भिरित्युद्गमनाभावात्क्रमेराङ्पूर्वाल्लटः शत्रादेश इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकवि-
राजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
चन्द्रवर्णनं नामैकादशः सर्गः ।

---

## द्वादशः सर्गः ।

तद्वपुष्युपहितं विरराज क्रीडया कदलिपत्रतनुत्रम् ।
नीलिमाद्वयनयान्न कथंचित्तत्र यस्य घटते परभागः ॥ १ ॥

तत्कदलिपत्रमयं तनुत्रं वर्म रराज । क्रीडया, न तु भयेन, वपुष्युपहितं प्रावरणीकृतम् । यस्य कदलिपत्रतनुत्रस्य तत्र कामवपुषि परभागो विच्छित्तिर्नाभूत् । कुतः । नीलिम्नो नीलत्वस्याद्वयनयात् । वपुषस्तनुत्रस्य चाद्वयनयो द्वयोरपि नीलत्वात् । कामो हि श्यामः, कदलीपत्राणि च सरसत्वाच्छयामान्येव, अतः परिहितमपि कदलीपत्रकञ्चुकं न विभावितमित्यर्थः ॥

कामिसंततिहृदन्तरवासक्रान्तरागलहरीसमरीतिः ।
पाटलापटलमभ्युदगच्छद्वीरपट्टघटनाखिलललाटम् ॥ २ ॥

पाटलाः पुष्पविशेषास्तासां पटलं समूहस्तन्मयी वीरपट्टस्य घटना ललाटे उदगच्छत् । कामिसंतते रागिजनस्य हृदन्तरे हृदयमध्ये वासो निवसनं तेन क्रान्ताः संक्रान्ता या रागलहर्योऽनुरागोल्लासास्तासां समा रीतिर्भङ्गिर्यस्याः । उपमोपक्रमोत्प्रेक्षेयम् । रागशब्दोऽध्यवसितः ॥

माधवग्रथितया कृतरोधं गोधया विकचचम्पकमय्या ।
उज्झितेऽपि वलये कृतकेलिस्वर्णकङ्कणमिवास्त भुजाग्रम् ॥ ३ ॥

समरसमये संनहनवशात्केलिकङ्कणे त्यक्तेऽपि भुजाग्रं केलये लीलायै स्वर्णकङ्कणं धृतं येनेव । यतो माधवेन पुष्पसमयेन ग्रथितया विकचचम्पकमय्या फुल्लचम्पकपुष्पनिर्मितया [गोधया] मौर्वीघातरक्षकेण प्रकोष्ठत्राणेन कृतरोधमाच्छादितम् ॥

चापमाप करपङ्करुहाङ्कं पाटलं दलदशोककुलेन ।
सर्वतः परिणताधररागं चुम्बनादिव जगज्जयलक्ष्म्याः ॥ ४ ॥

दलन्ति विकसन्ति यान्यशोकानि तेषां कुलेनारुणं चापं धनुः कर्तृ करपङ्करुहाङ्कं हस्तपद्ममध्यमाप । कामेन हस्ते चापं गृहीतमित्यर्थः । जगतां जयलक्ष्मीस्तत्कर्तृकात्सर्वतश्चुम्बनात्परिणतः सक्रान्तोऽधररागो यस्य तदिव । अत्यन्तरागद्योतनार्थं सर्वतोवचनम् । जयलक्ष्म्याः स्त्रीलिङ्गत्वेन नायिकाव्यवहारः ॥

तद्धनुर्गुणलताग्रनिषण्णैः क्षोभयत्रिजगदप्यलिशावैः ।
साञ्जनैर्विरहिणीनयनाम्भःसीकरैरिव करालितमासीत् ॥ ५ ॥

गुणलतायाः पुष्पमयी तस्या अग्रं तत्र निषण्णैर्निविष्टैरलिशावैर्भ्रमरपोतकैर्हेतुभिस्तद्धनुरञ्जनसहितैर्विरहिणीबाष्पकणैरिव करालितं भास्वरितमासीत् । यतस्त्रिजगदपि कर्मभूतं क्षोभयत् ॥

सोऽस्त्रपुष्पनिवहैर्भृतगर्भः पृष्ठवर्त्मनि ररङ्ग निषङ्गः ।
यत्र सौरभहृतभ्रमरौघे मज्जति स्म शिथिलः कचभारः ॥ ६ ॥

अस्त्राणि च तानि पुष्पाणि तेषां निवहैः समूहैर्भृतः पूरितो गर्भो मध्यं यस्य स निषङ्गस्तूणीरं पृष्ठवर्त्मनि ररङ्ग शुशुभे । अत एव सौरभेण हृतः स्वसमीपं नीतो भ्रमरौघोऽलिमाला येन तस्मिन् । यत्र निषङ्गे कचभारो वेणी मज्जति स्म । विभागाभावाददृश्योऽभूत् । त्रिजगतस्तृणवद्गणनीयत्वद्योतनार्थं शिथिल इति वचनम् ॥

अन्वरोधि दधता गुरु रंहः सैंहलेन रथता पवनेन ।
सौरभादुपनतैरलिचक्रैर्योऽग्रसंगतरथाङ्ग इवासीत् ॥ ७ ॥

गुरु गौरववद्रंहो वेगं दधता सैंहलेन सिंहलदेशादागतेन पवनेन रथतान्वरोधि प्राप्ता । मलयमारुतेन जगदजैषीदित्यर्थः । सौरभात्सौगन्ध्यादुपनतैरागतैरलिचक्रैर्हेतुभिर्यो वायुरग्रे संगतरथाङ्गः पुरोलग्नचक्र इवासीत् ॥

आतपत्रपदवीमधिशिश्ये मण्डलो रजनिभर्तुरखण्डः ।
चित्रमध्वगसरोजमुखीनां योऽन्तरातपविशेषमपुष्यत् ॥ ८ ॥

अखण्डः संपूर्णो रजनिभर्तुर्मण्डलश्चन्द्रबिम्बश्छत्रभावमधिशिश्ये श्रयति स्म । यश्चन्द्रमण्डलोऽध्वगसरोजमुखीनां पान्थस्त्रीणामन्तश्चेतस्यातपविशेषं संतापाधिक्यमपुष्यदजनयत् । छत्रस्यातपजननाच्चित्रत्वम् ॥

आकुलान्कलकलाननुबध्नन्नग्रतः परभृतोऽजनि बन्दी ।
यः पृषत्कसहकारपरागैरप्यनीयत परं परितोषम् ॥ ९ ॥

अपिशब्दो भिन्नक्रमः परभृतशब्दात्पुरो ज्ञेयः । स च समुच्चयार्थः । आकुलाननन्तरान्कलकलान्रुतान्यनुबध्नन्मुहुर्मुहुः कुर्वन्परभृतोऽपि कोकिलश्च बन्दी गुणपाठको जातः । 'दीपजन—' इति कर्तरि चिण् । पृषत्कभूतानि शरभूतानि यानि सहकाराणि तेषां परागै रजोभिर्यः कोकिलः परं परितोषमनीयतानीतः । चूतरसपानकषायकण्ठः कोकिलः कामोद्दीपकोऽभूदित्यर्थः । बन्दी च धनादिना तोष्यते ॥

आवहन्प्रविशदुद्धतमानन्यक्कृतिं युवतिहृद्भवनेषु ।
दृप्ततां दधदधिप्रतिहारं पञ्चमोऽप्युपययौ प्रथमत्वम् ॥ १० ॥

युवतीनां हृन्दि तान्येव भवनानि राजगृहाणि तेषु प्रविशत्यत उद्धतः साहंकारो यो मानस्तस्य न्यक्कृतिं पराभवमावहन्कुर्वन्, तथा दर्पं दधत्, अधिप्रतिहारं प्रतीहारेषु पञ्चमो रागराजः प्रथमत्वं प्रधानत्वमगमत् । पञ्चमोऽपि प्रथम इति विरोधोऽपिशब्देन द्योतितः ॥

उन्नतस्य झगिति स्वयमग्रं केतनस्य तिमिरध्यशायिष्ट ।
वाहिनीर्विरहिणीक्षणवार्भिर्यः प्रपञ्चयति वासधियेव ॥ ११ ॥

उन्नतस्य गुणाधिकस्य केतनस्य ध्वजस्याग्रं स्वयमप्रेरितस्तिमिर्मीनः श्रयति स्म । यस्तिमिर्विरहिणीनामीक्षणवारो बाष्पजलानि तैर्वाहिनीर्नदीः प्रपञ्चयति कल्पयति । विरहिणी रोदयतीत्यर्थः । अत्र संभाव्यते—वासधियेवाश्रयबुद्ध्येव । जलवासी हि मत्स्यः ॥

कौतुकादिति जगत्त्रयलक्ष्मीमुद्यतो रतिपतिः परिणेतुम् ।
संननाह दयितार्पितनेत्रप्रान्तकान्तिपुनरुक्ततनुत्रः ॥ १२ ॥

कुतूहलाज्जगज्जयलक्ष्मीं नायिकास्थानीयां परिणेतुं वोढुमुद्यतः प्रवृत्तो रतिपतिः कामः संननाह समनह्यत् । अत एव सेर्ष्यत्वाद्दयितया रत्यार्पितं क्षिप्तं यन्नेत्रप्रान्तं तस्य

कान्त्या पुनरुक्तं द्विर्भूतं तनुत्रं वर्म यस्य । सेर्ष्यत्वं रतिपतिपदेन ध्वनितम् ॥ काम-संनहनकुलकम् ॥

प्रिय खण्डयितुं वियोगिनीः कतरस्तेऽयमियान्परिश्रमः ।
अबलादलनात्क वाद्यते वद वीरव्रतकीर्तिडिण्डिमः ॥ १३ ॥

हे प्रिय, वियोगिनीः प्रोषितभर्तृकाः खण्डयितुं दलयितुमियानपरिमितोऽयं परिश्रमः कतरः कः । कतरशब्दो रूढ्या किंशब्दार्थोऽपि दृश्यते । अत्र हेतुं त्वमेव वद । अबलानां दलनान्मारणाद्वीरव्रतेन कीर्तिरेव डिण्डिमः क वाद्यते । न क्वापीत्यर्थः ॥

स्वयमेव कथं प्रवर्तसे त्रिजगज्जेतुमुपोढकङ्कटः ।
घटते मधुनेन्दुनाथवा न तदेकेन पदातिनापि ते ॥ १४ ॥

उपोढं बद्धं कङ्कटं कवचं येन स त्वं त्रिजगज्जेतुं स्वयमेव कथं किमर्थं प्रतिष्ठसे । यतस्तज्जगज्जयलक्षणं वस्तु न घटते । काका संपद्यत एवेत्यर्थः । केन । मधुनाथवेन्दुना भवत्पत्तिना । पत्तिमात्रसाध्ये कार्ये स्वयं प्रवृत्तिर्न यशस्करीत्यतस्त्वया न प्रस्थातव्यमित्यर्थः। प्रस्थानमात्रमपि नोचितम्, प्रवृत्तेस्तु वार्तैव केति प्रतिष्ठसे इति प्रयुक्तम् ॥

स निहत्य बभूव राघवः स्त्रियमेकामपि दुर्यशोनिधिः ।
तव नाथ कथं नु कीर्तनं त्रिजगत्स्त्रैणवधात्प्रवर्त्स्यति ॥ १५ ॥

एकामपि स्त्रियमबलां निहत्य स राघवो रामो दुर्यशसोऽपयशसो निधिः स्थानं बभूव । हे नाथ, त्रिजगतः स्त्रैणं स्त्रीवर्गस्तस्य वधात्कीर्तनं स्तुतिस्तव कथं प्रवर्त्स्यति वृद्धिं गमिष्यति । दण्डापूपिकयापकीर्तिरेव भाविनीत्यर्थः । प्रवर्त्स्यतीति 'वृद्भ्यः स्यसनोः' इति परस्मैपदम् ॥

शमिनामथ धैर्यलुप्तये यतसे बिभ्रदुदाशुगं धनुः ।
अधिकं वद किं त्वयेप्सितं स्वशरीरव्ययतोऽपि सत्फलम् ॥ १६ ॥

अथेत्याक्षेपे । अथेति पक्षान्तरग्रहणेन स्वमतनिरासाशङ्कया कोपे । उदाशुगमुद्यतशरं धनुर्दधत्त्वं शमिनां मुनीनां धैर्यस्य लुप्तये नाशाय यतसे उद्यच्छसे । त्वं वद, तस्य यत्नस्य फलं स्वशरीरनाशादप्यधिकं किमीप्सितं प्राप्तुमिष्टम् । शमिक्षोभोत्पादनात्त्वया शरीरस्यापि नाशः प्राप्तः, अतः परं कस्याप्राप्तस्य प्राप्तये यत्नः क्रियते । पुनरपि शरीरनाश एव प्राप्यत इत्यर्थः ॥

एतदेव स्फुटयति—

तव दुर्मदता कियत्यहो हरनेत्राग्निशिखाङ्कुरैः शितैः ।
घटनादधुनापि यस्य नो भुजकण्डूरुपशान्तिमश्नुते ॥ १७ ॥

दुष्टः स्वाश्रयविनाशायोत्तिष्ठन्मदो यस्य तद्भावस्तवाहो कियती । अपरिच्छेदेत्यर्थः ।

यस्य तव हरनेत्राग्नेः शिखा ज्वालास्ता एव तीक्ष्णत्वादङ्कुरास्तैर्घटना तद्योगादधुनापि भुजकण्डूतिरुपशान्तिं नाश्नुते नोपशाम्यति । पराभवे सत्यपि मानिनो यशोरक्षार्थं तत्काले दर्पमभिनीय क्रमेण दर्पं न्यग्भावयन्ति । भवांस्तु पराभवकालवदद्यापि दर्पमेव बिभर्तीति दुर्मदभावः । यद्वा विजितस्यापि मदो दुर्मदत्वम् ॥

विजहीहि मुधा तपोधनानवजेतुं स्मर चापचापलम् ।
पुरतः पुनरप्यहं सहे नहि वैधव्यविषादविक्रियाम् ॥ १८ ॥

स्मरेति पूर्वोक्तार्थस्मारकमामन्त्रणम् । तपोधनान्मुनीञ्जेतुं त्वं मुधा चापचापलं मिथ्या धनुःक्षोभं विजहीहि त्यज । पूर्वोक्तमेवोत्तरार्धेनावष्टम्भयति—यतः पुनरपि पुरतः स्वमरणात्पूर्वं वैधव्यं प्रियमरणं तेन विषादो दुःखं तेन विक्रियां न सहे । अथवा त्वं मृत एवेति मयात्र निश्चितम्, अतोऽहमपि सह म्रिये इति पुरतोवचनम् । सह इति शब्दं व्युत्पाद्य पश्चात्पुरतःशब्देन संबन्धः ॥

शमिनां तर्जनमात्रार्थं मया गम्यते, न त्ववजयार्थम् । एतन्निरसितुमाह—

शमिषु त्यज तर्जनोद्यमं सफलानुग्रहनिग्रहा हि ते ।
ननु निश्चितनिष्फलश्रमो व्यवसायोऽयमनर्थसंश्रयः ॥ १९ ॥

शमिविषयं तर्जनार्थमुद्यमं त्यज मा कार्षीः । शमिविषयतर्जनोद्योगनिषेधे हेतुमाह—ननु निश्चये । अयं व्यवसायो मुनिविषयभङ्गोद्यमोऽनर्थसंश्रयो भवति । यत्रानर्थो बहुलः संभाव्यतेऽर्थश्च दुर्लभः । निश्चितं कृत्वा निष्फलः [श्रमो] यत्र । हिर्यस्मादर्थे । शमिनः सफलप्रसादकोपाः । 'अनर्थसंश्रये' इति वा पाठः ॥

न मम प्रस्थानं शमिविषये, न च स्त्रीणां वधार्थम्, किं तु तासां मानभङ्गार्थमित्याशङ्क्याह—

त्रिजगद्विजये स्म संभृतं ललना एव तवैकसाधनम् ।
कतरेण पथाथ जेष्यसि प्रथमं ता यदि हंस्यनागसः ॥ २० ॥

रामा एव त्रिलोकजयार्थमयत्नोपनतमेकमसाधारणं साधनं तवास्ति । आरोप्यमाणरूपकाविवक्षयास्तीत्येकवचनप्रयोगः । तुशब्दो भिन्नक्रमस्ता इत्येतस्मात्परो बोद्धव्यः । स चावधारणार्थः । अनागसो निरपराधास्ता ललना एव पूर्वं यदि हंसि हताः कुरुषे तत्त्वं कतरेण पथा केन साधनेन जेष्यसि । मानवत्त्वादुपभोगं क्षणं निषेधयन्त्यो ललना रागं विवर्धयन्ति ॥

भवतोज्झित एव विग्रहः सुमनोमार्गणपूरणैषिणा ।
तव नाथ तथाप्ययं कथं परबाधाय मुधैव दुर्ग्रहः ॥ २१ ॥

सुमनोमार्गणा विद्वद्याचकाः पुष्पशराश्च तेषां पूरणमिच्छता भवता विग्रहो विरोधः

शरीरं चोज्झितस्त्यक्तः । तथापि परेषामन्येषां बाधाय दुर्ग्रहो दुर्हेवाकः कथं भवति । न युक्त इत्यर्थः । यतो मुधैव निष्फलः ॥

अधुनाप्यनुभूयते त्वया स्मर शापात्फलमब्जजन्मनः ।
किमयं क्रियते तदप्यहो बहुमुन्यन्तरशापसंग्रहः ॥ २२ ॥

स्मरेति प्रकृतानुगुणमामन्त्रणम् । त्वयाब्जजन्मनो ब्रह्मणः शापात्फलमधुनाद्याप्यनुभूयते । तथापि त्वयि बहूनां मुन्यन्तराणां शापास्तेषां संग्रहः संचयः किं क्रियते । एकस्यापि फलं न निर्वाहितम्, बहुभिः किं प्रयोजनमित्यर्थः ॥

कुसुमैर्निहताः कथं व्यथामुपयान्तीति वृथैव मन्यसे ।
मणिमन्त्रपथातिवर्तिनां विषमेषां हि पुरोऽमृतायते ॥ २३ ॥

पुष्पाणि मे शरास्तैस्ताडिता व्यथां कथं यान्ति । न यान्तीत्यर्थः । इति वृथैवासत्यं मन्यसे । हियस्मादर्थे । एषां कुसुमानां पुरोऽग्रे विषममृतायते । वरं विषम्, न त्वेतानीत्यर्थः । यतो मणिमन्त्राणां पन्थास्तमतिवर्तन्ते उल्लङ्घयन्ति । विषदोषहरणोपायैर्मणिभिर्मन्त्रैर्वासाध्यत्वात् ॥

सनयैः सभयैश्च विस्तरैर्वचसामित्यरुणत्स्मरं रतिः ।
स तु तत्करतोंऽशुकाञ्चलं द्रुतमाकृष्य मदेन निर्ययौ ॥ २४ ॥

नयभयसंभृतैर्वाग्विस्तरै रतिः काममरुणद्रोद्धुं प्रवृत्तासीत् । स कामः पुनस्तस्या रतेः करतो हस्तादंशुकाञ्चलं वस्त्रान्तं तूर्णं मदेनाकृष्य निर्ययौ । स तु तत्करत इति प्रौढोक्त्या स्मरप्रकाशितम् (?)॥ रतिप्रणयवाक्यकुलकम् ॥

विलोचनाम्भःसरितो व्यनक्ति सा मुखेन मीनाङ्कपथानुबन्धिनीः ।
ह्रदेषु यासां प्रतिबिम्बिताश्चिरं व्रजन्ति सख्यो जलमानुषीलिपिम्॥२५॥

मीनाङ्कः कामः समुद्रश्च तत्पथमनुबध्नन्ति यान्ति । केन । मुखेनारम्भेण, न त्ववसानेन । अन्या नद्यः समाप्त्या समुद्रं यान्ति । सा विलोचनाम्भसोऽश्रुणः सरितो नदीर्व्यनक्ति प्रकटयति । यासामश्रुनदीनां ह्रदेषु प्रतिबिम्बिता जातप्रतिबिम्बाः सख्यो जलमानुषीणां लिपिं भङ्गिं स्पृशन्ति ॥

भुजंग तस्या विरहापचारितः प्रवर्धमानोऽभ्यधिकं मधावपि ।
त्वदाप्तिसंकल्पचमत्क्रियौषधैर्निशीथिनीनां श्वयथुर्विलुप्यते ॥ २६ ॥

भुजंग कामुक, विरह एवापचारो विरुद्धाहारविहारादिसेवनं तस्माद्धेतोर्मधावपि वसन्तेऽपि प्रवर्धमानो वृद्धिं गच्छञ्श्वयथुर्वृद्धिर्गदभेदश्च त्वदाप्तये संकल्पा मनोरथास्तैश्चमत्क्रिया चमत्कार एवौषधानि तैर्विलुप्यते निवार्यते । त्वामेव स्मरन्त्यास्तस्या निशा यातीत्यर्थः ॥

ससौरभश्वासहृतैर्मधुव्रतैः स्मरोप्तहालाहलबीजबन्धुभिः ।
निपत्य तस्याः पुरतोऽश्रुसारणीभृतो हलोल्लेखरुजेव जन्यते ॥ २७ ॥

निपत्य पतित्वा मधुव्रतैर्भ्रमरैस्तस्यास्त्वत्प्रियाया हलेन सीरेणोल्लेख उत्कर्षणं तेन रुजा व्यथेव जन्यते । ससौरभाः सुगन्धयो ये श्वासास्तैर्हृताः । तथा स्मरेणोप्तं यद्धालाहलबीजं तस्य बन्धुभिः सदृशैः । अश्रुणः सारणी कुल्या तां बिभर्ति । विरहेऽपि श्वासानां सौरभोक्तिर्नैसर्गिकगुणख्यापनार्था । सिक्ते हलोल्लिखिते च बीजोप्तिः ॥

कुचस्थले सा बिसकाण्डतन्तुभिर्विवृण्वती हारलतापरिग्रहम् ।
व्यनक्ति लब्धुं मदनादवध्यतां धृतोपवीतामिव देहकन्दलीम् ॥ २८ ॥

विरहतापशमनाय स्तनस्थले मृणालसूत्रैर्हारलताग्रहणं विवृण्वती प्रकाशयन्ती सा भूयोऽपि त्वत्प्राप्त्याशया कामादवध्यतामहन्तव्यतां लब्धुं देह एव तनुत्वात्कन्दली लता तां धृतोपवीतां धृतयज्ञसूत्रामिव धत्ते । सापराधस्यापि ब्राह्मणस्य शास्त्रे वध्यत्वाभावश्रवणात् ॥

अनल्पसंकल्पवशेन मन्यते दिशस्त्वदाकारकृतावगूहनाः ।
ततश्च सा तासु मुहुर्विमुग्धधीर्विमुञ्चतीर्ष्याकलुषे विलोचने ॥ २९ ॥

अनल्पा बहवो ये संकल्पास्त्वद्ध्यानानि तद्वशेन तत्संस्कारेण सा दिशस्त्वदाकारस्य भवच्छरीरस्य कृतमवगूहनमालिङ्गनं याभिस्ता मन्यते । भावनाबलात्सर्वत्रैव त्वामेव पश्यतीत्यर्थः । ततः सत्यतया प्रतीतेः सा मुग्धा तासु दिक्षु स्त्रीत्वान्नायिकात्वव्यवहार्यासु विलोचने ईर्ष्याकलुषे विमुञ्चति क्षिपति । मन्नायकमेताः कथमालिङ्गन्तीतीर्ष्यौचित्यम् ॥

शशाङ्ककान्तोपलकुट्टिमेषु सा विभाति संक्रान्तवपुः प्रतिक्षपम् ।
रसातले कर्तुमिवोद्यता शशिच्छविच्छटासङ्गभयेन मज्जनम् ॥ ३० ॥

शशाङ्ककान्ताश्चन्द्रकान्ता ये उपलाः पाषाणास्तन्मयेषु कुट्टिमेषु प्रतिक्षपं रात्रौ रात्रौ संक्रान्तवपुः प्रतिबिम्बिता सा शशिच्छविच्छटाया ज्योत्स्नापालेस्ततो भयेन पाताले ब्रुडनं कर्तुमिवोद्यता । पाताले चन्द्रस्य प्रवेशाभावात् । पाताले ब्रुडनात्तस्या ज्योत्स्नास्पर्शो दुःसह इत्याशयः ॥

वियोगवत्याः शबले कुचस्थले सकज्जलप्रोच्छलदश्रुचक्रकैः ।
कथंचनोच्छ्वासधुतेर्विभाव्यते निवेश्यमानाम्बुजिनीदलावलिः ॥ ३१ ॥

विरहतापशमनार्थं कुचस्थले सखीभिर्निवेश्यमाना नलिनीपत्रपङ्क्तिस्ताभिरेव कथंचन विभाव्यते विभक्ततया लक्ष्यते । यतः सकज्जलैः साञ्जनैः प्रोच्छलद्भिरश्रुचक्रकैश्चक्राकारैः कणैः शबले कल्माषे । कुतस्तर्हि विभाव्यत इत्याह—उच्छ्वासैर्निःश्वासैर्धुतेः

कम्पात् । निःश्वासकृतकम्पस्याश्रुकणेष्वसंभवात् । निवेश्यमानेति वर्तमानप्रयोगोऽति-सादृश्यप्रतिपादनार्थः । तस्य च फलमश्रुबिन्दूनां पृथुत्वख्यापनम् ॥

व्यनक्त्युपान्ते श्रवसोर्वलत्तनुः सकज्जलां सा नयनाम्बुपद्धतिम् ।
स्वकां स्वसारं रविजेन निम्नगां पुरो विसृष्टामिव दूत्यसिद्धये ॥ ३२ ॥

व्यथावशाच्छय्यायां वलन्ती तनुर्यस्याः श्रवसोः कर्णयोरुपान्ते साञ्जनां बाष्पपद्धतिं प्रकाशयति । अतः संभाव्यते—रविजेन यमेन दूत्यसिद्धये दूतत्वाय पूर्वं विसृष्टां स्वकां स्वसारं यमुनामिव । दूतश्च महतां निदेशं कर्णे ब्रूते । 'दूत्यं तद्भावकर्मणि' इति कोशः ॥

स्तनाग्ररम्भादलडम्बरेषु सा पतद्भिरात्ताञ्जनमश्रुणः कणैः ।
यियासतां दूरमनङ्गशासनाल्लिखत्यसूनां पथि पट्टकानिव ॥ ३३ ॥

स्तनाग्रे रम्भादलानि तेषां डम्बरेष्वात्ताञ्जनं सकज्जलं कृत्वा पतद्भिरश्रुकणैर्हेतु-भिरसूनां प्राणानां पथि पट्टकान्मार्गे निर्निरोधं गमनार्थं लेख्यानि लिखतीति । अन्त-र्भावितण्यर्थो वा लिखिः । यतः कामनिदेशाद्यियासतां यास्यन्तीत्याशङ्क्यमानानाम् । श्वो मुमूर्षतीतिवदाशङ्कायां सन् ॥

ततः किमन्यद्बहुनाधुनापि चेदुपैषि चातुर्यवशंवदैः पदैः ।
न जायते ते तदकीर्तिकल्मषप्ररोहकल्माषनिवेशनं यशः ॥ ३४ ॥

बहुनाप्युक्तेन पूर्वोक्तादन्यत्किम् । सा म्रियत इति निश्चयः । चातुर्यस्य त्वराया वशंवदैः सत्वरैः पदैः क्रमैर्यदि त्वमुपैषि तत्तव यशोऽकीर्तिरेव कल्मषं पापं तेन क-ल्माषं शबलं निवेशनमवस्थितिर्यस्य तन्न जायते न संपद्यते । तूर्णं यदि तत्समीपं ग-च्छसि तदा सा यदि जीवेदित्यर्थः । अकीर्तिकल्माषमिति वा द्वन्द्वः ॥

निपीय दूतीवदनात्तजन्मनः क्षणं श्रुतिभ्यामिव वाक्यविप्रुषः ।
जवाद्युवानो दधतः पदात्पदं ययुः प्रियाणां नयनोच्चुलुम्प्यताम् ॥ ३५ ॥

दूतीवदनादात्तजन्मनो गृहीतोत्पत्तेः । वदनग्रहणं साक्षाच्छ्रवणप्रतीत्यर्थम् । अन्यथा पारम्पर्येणापि श्रवणसंभावना स्यात् । वाक्यविप्रुषो वचनानि श्रुतिभ्यां निपीय सानु-रागं श्रुत्वा पदादनन्तरं पदं जवाद्दधतस्तूर्णं क्रामन्तो युवानः प्रियाणां नयनाभ्यामुच्चु-लुम्प्यः पेयस्तद्भावं ययुः । प्रियासमीपं तरुणा अगच्छन्नित्यर्थः । धातुपाठेऽपठितस्यापि चुलुम्पेः 'कास्यनेकाज्ग्रहणं चुलुम्प्यर्थम्' इति धातुत्वम् ॥ दूतीवाक्यकुलकम् ॥

अभ्रंलिहोल्लोलकुले कुचेषु क्षिप्रं क्षिपत्यक्षतमौक्तिकालीः ।
बभूव वैमानिककामिनीनामयत्नतो हारलतानिवेशः ॥ ३६ ॥

विमानेन संचरन्ति वैमानिकाः । तेषां संबन्धिनीनां कामिनीनां कुचेष्वभ्रंलिहमाका-

शव्यापि यदुल्लोलकुलं तरङ्गसंमूहस्तस्मिन्नक्षता अविद्धा मौक्तिकपङ्क्तीः क्षिपति सत्यय-त्नतो हारविषयं यत्नं विना हारलतानिवेशः स्थितिर्बभूव ॥

इन्दौ सुदूरोच्छलदूर्मिमुक्तैर्मुक्ताफलैरात्तनवावगूहे ।
दक्षस्य कन्याश्चुकुपुः प्रसङ्गमाशङ्क्य तस्येतरतारकाभिः ॥ ३७ ॥

वेगवशात्सुदूरमुच्छलन्त उत्तिष्ठन्तो ये ऊर्मिभङ्गास्तैरिन्दावात्तो गृहीतो नवोऽपूर्वोऽव-गूह आलिङ्गनं तस्मिन्सतीतराभिस्तारकाभिः सह प्रसङ्गं सक्तिमाशङ्क्य दक्षस्य कन्या रोहिण्यादयस्ताराश्चुकुपुः कोपं चक्रुः । ऊर्मिवेगेन तारासमानि मुक्ताफलान्याकाशं प्रापु-रित्यर्थः ॥

तुङ्गोर्मिभङ्गेषु सुरर्षिलोकः प्रसङ्गतोऽप्यग्रमवाप्तवत्सु ।
आचान्तये प्रोद्धृतसीधुशेषभयेन पस्पर्श न तत्पयांसि ॥ ३८ ॥

तुङ्गा ये ऊर्मिभङ्गा जलानि तेषु प्रसङ्गेनाप्यग्रं प्राप्तेषु सत्स्वमृतमथने प्रोद्धृताच्छेषो यः सीधुर्मदिरा तद्भयेन देवर्षिगणः समुद्रस्य पयांस्याचमनार्थं नास्पृशत् । जलानि सप्त-र्षिसमीपं प्रापुरित्यर्थः ॥

छन्नेऽम्बरेऽनर्गलवीचिचक्रादुत्थाय मीनैर्मकरैरनेकैः ।
मौहूर्तिकानां प्रबभूव दृष्टिर्न राशिसंचारविनिश्चयेषु ॥ ३९ ॥

अनर्गलं निर्निरोधं यद्वीचिचक्रं तत उत्थायानेकैर्मीनैर्मकरैर्जलजन्तुभिरम्बरे व्योम्नि छन्ने सति राशीनां यः संचारस्तस्य विनिश्चयास्तेषु मौहूर्तिकानां कालविदां दृष्टिर्न प्रबभूव पटुर्नासीत् । उदयाद्रावस्ताद्रौ नभोमध्ये च मकरमीनादिदर्शनाद्राशिसंचारान्नाजानन् । मीनमकरादयो राशयो हि मीनमकरादिसमाकाराः ॥

दूरोच्छलल्लोहितकांशुजालैरालम्बमाना नवमङ्गरागम् ।
खे सौम्यकाव्याङ्गिरसादयोऽपि न कस्य भौमभ्रममेव चक्रुः ॥ ४० ॥

खे नभसि दूरमुच्छलन्तो ये लोहितकाः पद्मरागमणयस्तेषामंशुजालैर्नवमङ्गेषु रागमा-लम्बमाना गृह्णन्तः काव्यसौम्याङ्गिरसादयः शुक्रबुधजीवादयोऽपि भौम इति भ्रमं कस्य न चक्रुः । भौमोऽपि रक्तवर्णः । शुक्रादयोऽपि पद्मरागरश्मियोगवशाद्रक्ताः संपन्नाः । अतो भौमभ्रान्तिर्जाता । अपिशब्दः शुक्रादीनां शुभ्रत्वगुणातिशयेन भौमात्तेषां भेदप्र-तिपादकः ॥

अन्तःशयानाच्युतनाभिपद्मगन्धानुसंधिं दिवि तन्वतीषु ।
संत्यज्य संतानकवीरुधोऽपि वीचीषु नाकभ्रमरा निषेदुः ॥ ४१ ॥

संतानकलता अपि त्यक्त्वा लहरीषु स्वर्गभ्रमरा निषेदुर्निषण्णाः । यतः, अन्तःशयानः समुद्रशाय्यच्युतो हरिस्तस्य नाभिपद्मं तस्य गन्धस्तस्यानुसंधानं प्रसरणमाकाशे वि-स्तारयन्तीषु ॥

पत्यौ चिराद्गृह्णति वाहिनीनां प्रस्थानलीलामधिनाकवीथि।
कल्लोलवात्यामुखरान्तरालाः शङ्खाः शुभायेव पुरो विनेदुः॥ ४२॥

वाहिनीनां नदीनां पत्यौ समुद्रेऽधिनाकवीथि स्वर्गमार्गे चिरात्प्रस्थानलीलां गृह्णति सति कल्लोलवात्याभिर्लहरीवातव्रातैर्मुखरमन्तरालं मध्यं येषां ते शङ्खाः पुरोऽग्रे विनेदुः शब्दमकुर्वन्। अतः संभाव्यते—शुभायेव मङ्गलार्थमिव। वाहिनीनां पत्यौ सेनानायके च प्रतिष्ठमाने शुभार्थं शङ्खशब्दः क्रियते॥

निद्राणनारायणकेलितल्पप्रान्तस्थदीपोज्ज्वलमल्लिकानाम्।
तरङ्गदण्डा लिपिमौर्ववह्निज्वालाजटालाग्रतयाधिजग्मुः॥ ४३॥

और्ववह्निर्वडवाग्निस्तस्य ज्वालास्ताभिर्जटालमाकीर्णमग्रं यस्य तद्भावेन तरङ्गदण्डा निद्राणः समुद्रमध्ये शयानो यो नारायणस्तस्य केलितल्पं लीलाशय्या तस्य प्रान्तस्थाः समीपवर्तिन्यो दीपोज्ज्वला या मल्लिका दीपिकादण्डिकास्तासां लिपिं भङ्गिमधिजग्मुः प्राप्ताः। तथा समुद्रक्षोभोऽभवद्यथा वडवाग्निज्वालावलिता अपि लहर्यो दृष्टा इत्यर्थः॥

पीनत्वदैर्घ्यादिगुणोऽध्यशायि तथा निकामोच्छलितैस्तरङ्गैः।
तेभ्यो यथा वारिगजाः सुदूरमालानदण्डभ्रमतोऽपसस्रुः॥ ४४॥

निकाममुच्छलितैरुत्पतितैस्तरङ्गैर्लहरीभिः पीनत्वं परिणाहो दैर्घ्यमायामस्तदादिगुणस्तथाध्यशायि प्राप्तः, वारिगजा जलहस्तिनस्तेभ्यस्तरङ्गेभ्यो यथापसस्रुर्दूरं नेशुः। कुतः। आलानदण्डो हस्तिबन्धनस्तम्भ इति भ्रमो भ्रान्तिस्ततः॥

दूरोज्जिहानौर्वशिखाविलीनप्रौढेन्दुबिम्बप्रसृतामृतौघैः।
आपूर्यमाणोऽथ सुधोदधित्वमवाप तूर्णं लवणार्णवोऽपि॥ ४५॥

दूरमुज्जिहान ऊर्ध्वं गच्छन्य और्वो वाडवस्तस्य शिखाभिर्ज्वालाभिर्विलीनो विगलितः प्रौढः पूर्णो य इन्दुबिम्बस्तस्मात्प्रसृताः पतिता येऽमृतौघास्तैरापूर्यमाण आध्रियमाणो लवणार्णवः क्षारसमुद्रोऽपि सुधार्णवत्वं क्षीरसमुद्रत्वमाप प्राप्तः। तथा लहरीवेगवशाद्वडवाग्निर्दूरमुदतिष्ठद्यथा तत्तापवशाद्विलीनस्य चन्द्रस्यामृतपूरैः समुद्रः पूरित इत्यर्थः॥

तटीरजोभिर्लहरीसमीरधुतैः पयोभिश्च सवाडवोल्कैः।
आलिङ्ग्यमाने गगने चिरेण जज्ञे महाभूतसमाजतन्त्रम्॥ ४६॥

लहरीसमीरेण धुतैरुत्थापितैस्तटीरजोभिर्वाडवज्वालासहितैः पयोभिश्च गगने आलिङ्ग्यमाने व्याप्यमाने सति महाभूतानां पृथिव्यादीनां समाजः समूह एकत्रावस्थानं तत्तन्त्रं चिरेण जज्ञे जातम्। समाजतन्त्रं च सौगतप्रसिद्धं गीतवादोपयोगीति लेशेन प्रकाशितम्॥

क्षोभोन्मदिष्णुप्रगुणारुणाश्मरश्मिच्छटापाटलितोऽम्बुपूरः ।
सगर्वमौर्वाग्निशिखावलीभिरशेषतो लीढ इवावभासे ॥ ४७ ॥

क्षोभेणोन्मदिष्णवो निर्मलीभूताः प्रगुणाः सुजातयो येऽरुणाश्मानः पद्मरागास्तेषां रश्मिच्छटाभिः पाटलितोऽम्बुपूरो वारिराशिरौर्वाग्नेर्वाडवस्य शिखावलीभिर्ज्वालापङ्क्तिभिः सगर्वं कृत्वाशेषतः सर्वत्र लीढो ग्रस्त इवावभासे ॥

मूलेन पातालमथो तरङ्गैराक्रामदाकाशतलं तदम्भः ।
विश्वंभरासारसनायमानं पुपोष लोकत्रयसामरस्यम् ॥ ४८ ॥

मूलेन स्वसंबन्धिना पातालमाक्रामद्व्याप्नुवत्, अथो तरङ्गैराकाशतलमाक्रामत्सत्, तथा विश्वंभराया भूमेः सारसनायमानं रशनासदृशं तदम्भो लोकत्रयस्य सामरस्यं जलैकायनत्वं पुपोष ॥

व्यालोलकल्लोलकुलप्रतिष्ठामासेदुषीभिर्जलमानुषीभिः ।
विलासदोलावलनारहस्यमज्ञायि कान्तैः सममश्रमेण ॥ ४९ ॥

जलमानुषीभिर्विलासदोलाया वलना पतनोत्पतने तस्या रहस्यं प्रियैः सममश्रमेण दोलाविषयेणायासेन विनाज्ञायि ज्ञातम् । यतः, व्यालोले क्षोभवशाच्चपले कल्लोलकुले तरङ्गसमूहे प्रतिष्ठां स्थितिमासेदुषीभिः प्राप्तवतीभिः । जलमानुष्यः स्वात्मानमालम्बितुं नाशकन्नित्यर्थः ॥

प्रव्यज्यमानोदरशैलशृङ्गदीप्तौषधीदीधितिधोरणीभिः ।
अपां हठोद्रेकशमाय नूनमाजग्मुरौर्वज्वलनान्तराणि ॥ ५० ॥

प्रव्यज्यमानाः समुद्रजले ऊर्ध्वं गते प्रकटीभूता ये उदरशैला मध्यवासिनो मैनाकाद्याः पर्वतास्तेषां शृङ्गेषु दीप्ता ज्वलन्त्यो या ओषध्यस्तासां दीधितिधोरण्यो ज्वालामालास्ताभिर्हेतुभिर्नूनमौर्वज्वलनान्तराण्यन्येऽपि वडवाग्नयोऽपां समुद्रजलानां हठेनौर्वमगणयित्वोद्रेकः स्फारस्तस्य शमाय शान्त्यर्थमाजग्मुः ॥

क्व न प्रचिक्षेप पयोधिरन्तः प्रोतेषु पोतेषु तरङ्गभङ्गान् ।
सांयात्रिकस्त्रीवदनेष्वनेकशशिभ्रमेणेव कृताभियोगः ॥ ५१ ॥

अन्तर्मध्ये प्रोतेषु स्थितेषु पोतेषु प्रवहणेषु समुद्रस्तरङ्गान्क्व न प्रचिक्षेप । स सर्वत्राक्षिपदित्यर्थः । अतः संभाव्यते—सांयात्रिकाणां पोतवणिजां स्त्रियस्तासां मुखेष्वनेकचन्द्रभ्रान्त्येव कृताभियोगो विरचितोद्योगः । 'सांयात्रिकः पोतवणिक्' इति कोषः ॥

आन्दोलितानां लहरीभरेण ते विद्रुमाणां किरणाः प्रसस्रुः ।
अकृत्रिमो यत्प्रणयान्मुखेऽभूत्सिन्दूरपूरो जलकुञ्जराणाम् ॥ ५२ ॥

लहरीभरेणान्दोलितानां क्षुभितानां विद्रुमाणां प्रवालानां ते किरणाः प्रसस्रुरुल्लेसुः, येषां किरणानां प्रणयात्संपर्काज्जलहस्तिनां मुखे सहजः सिन्दूरपूरोऽभूत् । विद्रुमकिरणा जलहस्तिमुखे सिन्दूरः संभावित इत्यर्थः । आन्दोलिधातुर्लौकिकः ॥

तीरप्ररोहद्घनसारवल्लिश्लेषोद्भवं सौरभमौर्ववह्नेः ।
संस्कारसिद्ध्यै कवरीभराणां सिषेविरे खेचरचन्द्रमुख्यः ॥ ९३ ॥

और्ववह्नेर्हेतोस्तीरप्ररोहद्घनसारश्लेषस्तटजायमानकर्पूरलतादाहस्तस्मादुद्भवो जन्म यस्य तत्सौरभं खेचराणां देवानां चन्द्रमुख्यो नायिकाः सिषेविरे । केशसंस्कारार्थम् ॥

गर्भस्थविश्वंभरनाभिपद्मसद्मप्रसक्तेश्चतुराननस्य ।
तमीकुटुम्बप्रतिबिम्बभङ्ग्या विगाह्यमानो रथराजहंसैः ॥ ९४ ॥
क्रुध्यन्निवागस्त्यनिवासदानाद्दयां ताडयन्नुच्चतरङ्गदण्डैः ।
सौहार्दमासाद्य विभाभिरिन्दोरित्थं प्रचुक्षोभ सरिद्भुजंगः ॥९५॥ (युग्मम्)

गर्भस्थोऽभ्यन्तरवर्ती यो विश्वंभरो हरिस्तस्य नाभिपद्मं तत्र प्रसक्तिर्निवासो यस्य तस्य चतुराननस्य ब्रह्मणो रथराजहंसैर्विगाह्यमानः । कया । तमीकुटुम्बश्चन्द्रस्तस्य प्रतिबिम्बानि तेषां भङ्गिर्लिपिस्तया । तथोच्चा ये तरङ्गदण्डास्तैर्द्या ताडयन् । अतः संभाव्यते—अगस्त्यनिवासदानादाश्रयदानात्क्रुध्यन्कुप्यन्निव । अगस्त्येन समुद्रः पीतः, अतोऽगस्त्येन समुद्रस्य विरोधः ॥ समुद्रक्षोभकुलकम् ॥

सक्तप्राच्याब्धिवेलागिरितगररजोविभ्रमेणेव शुभ्रा
विभ्राणाः सान्द्रमङ्गेष्विव विरहवतीवक्त्रलुप्तस्मितौघम् ।
श्लिष्टा निर्मोकपट्टोर्मिभिरुदयगुहापन्नगानामिवेन्दो-
र्भासो ह्रासायमाना रजनिमृगदृशः सन्तु तान्तिच्छिदे वः ॥ ९६ ॥

इन्दोर्भासश्चन्द्ररश्मयस्तान्तिच्छिदे ग्लानिनिवारणाय सन्तु । तान्तिच्छेदोक्तिश्चन्द्ररश्मीनामुचिता । रजनिरेव मृगदृक्कामिनी तस्या ह्रासायमानाः । उपमोपक्रमोत्प्रेक्षेयम् । अतः संभाव्यते—प्राच्यां पूर्वस्यां योऽब्धिः समुद्रस्तस्य वेलागिरिस्तत्र तगराणि पुष्पविशेषास्तेषां रजः परागः । सक्तं यद्रजस्तस्य विभ्रमेण प्रसरणेनेव शुभ्राः । पूर्वसमुद्रादेव हि चन्द्रस्योदयो भवति । तथा विरहिणीनां वक्त्रेभ्यो लुप्तश्छिन्नो यः स्मितौघो हासोल्लासस्तमङ्गेषु सान्द्रं निबिडं मग्नं बिभ्राणा इव । तथोदयः पूर्वपर्वतस्तस्य गुहासु पन्नगानां सर्पाणां निर्मोकपट्टास्त्वच एवोर्मयस्ताभिः श्लिष्टा आलिङ्गिता इव । वास्तवं शुभ्रत्वं परागादिकृतं संभाव्यते । व्यभिचाराभावात् । वक्त्रस्य स्मितविशेषणत्वमसंगतमिति 'वर्गे' इति पाठः साधुः । अथवा सद्य एव स्मितलोपद्योतनार्थं वक्त्रग्रहणम् ॥

सद्यः संकोचनेच्छामृदितकमलिनीखण्डनालप्रकाण्ड-
द्राघीयःकण्टकाग्रप्रकटघटनयेवोन्मिषद्रक्तधाराः ।

पादा ह्लादातिथेयीमुदयपरिणमच्छोणिमानः क्रियासु-
श्चान्द्रास्ते वस्त्रियामामुखघुसृणपृषत्पत्त्रभङ्गान्तरङ्गाः ॥ ९७ ॥

उदय उद्गमे परिणमन्स्फुरञ्छोणिमा रक्तत्वं येषां ते चान्द्राः पादा रश्मयोऽपि ह्लाद-रूपमतिथिविषयं परिचरणं क्रियासुः । संभाव्यते—सद्य उदयसमकालं संकोचनेच्छा तया हेतुभूतया सपदि मथिता ये कमलिनीखण्डास्तेषां नालप्रकाण्डानि श्रेष्ठवृन्तानि तेषु द्राघीयांसि दीर्घतराणि कण्टकाग्राणि तेषां प्रकटा या घटना संपर्कस्तयैवोन्मिषन्त्यो निर्गच्छन्त्यो रक्तधारा येषां ते । तथा त्रियामा रात्रिः स्त्रीलिङ्गत्वान्नायिकात्वेन व्यव-हृता तस्या मुखं प्रारम्भो वदनं च तस्य घुसृणपृषन्मयाः कुङ्कुमबिन्दुप्रकृतयः पत्त्रभङ्गा-स्तेषामन्तरङ्गाः सदृशाः । उपमोपक्रमोत्प्रेक्षेयम् ॥

चन्द्रादाप्तप्रसूतिर्दिशि दिशि दधती पद्मरागान्तवृत्ति-
प्रत्यासत्तिं स्पृशन्ती निबिडतरमहानीललक्ष्माञ्चितत्वम् ।
नैर्मल्यं गाहमाना नभसि च निकषग्रावपट्टायमाने
भूषा व्योमाधिदेव्यास्तिरयतु चतुरं दीनतां कौमुदी वः ॥ ९८ ॥

कौमुदी ज्योत्स्ना वश्चतुरं तूर्णं दीनतां दैन्यं तिरयत्वाच्छादयतु । व्योमाधिदेव्या गगनदेवताया भूषा भूषणम् । कीदृशी । चन्द्रादिन्दोराप्तप्रसूतिर्जाता । दिशि दिशि प्रति-दिशं पद्मानां रागस्यान्तवृत्तिर्विनाशस्तस्य प्रत्यासत्तिर्नैकट्यं दधती । निबिडतरमहा बहुतेजाः । नीलमतिश्यामं यल्लक्ष्म कलङ्कस्तेनाञ्चितत्वं शोभां स्पृशन्ती । तथा निकषः कषणं तदर्थं ग्रावपट्टं तद्वदाचरति नभसि नैर्मल्यं गाहमाना भजन्ती । इति कौमुदीपक्षे योजना । भूषापक्षे तु—चन्द्रात्सुवर्णाज्जाता । तथा पद्मरागाणां रत्नविशेषाणामन्ते-ऽवसाने वृत्तिं दधती । तथा महानीललक्ष्म इन्द्रनीलचिह्नं स्पृशन्ती । कषपट्टिकायां नैर्मल्यं भजन्ती । तिरःशब्दात् 'तत्करोति—' इति णिचि टिलोपे तिरयत्विति रूपम् । रूपपक्षे चन्द्रादाप्तप्रसूतिरिति विशेषणस्यार्थवत्त्वाद्रूप्यपक्षेऽप्यदोषः ॥

रोलम्बैर्मील्यमानाखिलकमलवनक्रान्तसौगन्ध्यलुब्धै-
रन्तर्निवर्त्यमानास्पदमिव विहिताच्छादनं लाञ्छनेन ।
देवस्याम्भोधिबन्धोरुपदधदधिकामोषधीषु प्रसिद्धिं
तद्बिम्बं निर्विलम्बं चिरविरहरुजाभेषजत्वं क्रियाद्वः ॥ ९९ ॥

अम्भोधिबन्धोर्देवस्य बिम्बं चिरं या विरहरुजा तस्या भेषजत्वमौषधभावं वः क्रि-यात् । विरहव्यथां निवारयत्वित्यर्थः । यतः, ओषधिष्वधिकां प्रसिद्धिं दधत् । ओषधिप-तित्वात् । तथा लाञ्छनेन विहिताच्छादनम् । अतः संभाव्यते—मील्यमानानि संको-च्यमानान्यखिलानि कमलवनानि तेभ्यः क्रान्तं संक्रान्तं यत्सौगन्ध्यं तत्र लुब्धैर्लम्पटै रोलम्बैर्भ्रमरैरन्तर्मध्ये निर्वर्त्यमानं क्रियमाणमास्पदं प्रतिष्ठा यस्य तदिव ॥

दर्शे दर्शे निषङ्गादिव दिवसकृतः क्रान्ततत्स्यन्दनाश्व-
श्रेणीकान्त्यंशमङ्के शिशुशशकलया संततं यद्बिभर्ति ।
प्राच्याः सीमन्तमुक्तामणिरिव कविभिः स्वैरमुत्प्रेक्ष्यमाणं
स्वाच्छन्द्येनैन्दवं तद्विदलयतु विपन्मण्डलं मण्डलं वः ॥ ६० ॥

तदैन्दवं चन्द्रसंबन्धि बिम्बं विपन्मण्डलमापत्समूहं विदलयतु नाशयतात् । प्राच्याः पूर्वदिशः सीमन्ते केशेषु मुक्तामणिरयमिति कविभिः संभाव्यमानम् । यच्चन्द्रमण्डलममावास्यायां रविमण्डलप्रवेशात्क्रान्तः संक्रान्तो यस्तत्स्यन्दनाश्वश्रेणीकान्त्यंशो रविरथवाजिप्रभालेशस्तमिवाङ्के वहति । कया । शिशुशशकलया बालाङ्कमृगव्याजेन ॥

मध्ये रन्ध्रायमाणप्रविसृतहरिणं द्योरभिद्योतयद्य-
न्मुक्तामञ्जीररीतिं दिशति मृगदृशां शोभया लोभमक्ष्णोः ।
तद्बिम्बं पार्श्वरोहद्ग्रहगणगुणितायत्नरत्नोपचारं
ताराणामीशितुर्वो निभृतमभिमतावाप्तये बोभवीतु ॥ ६१ ॥

तत्ताराणामीशितुर्नाथस्य बिम्बमभिमताप्तयेऽभीष्टलाभाय बोभवीत्वत्यर्थं भवतु । यत्स्त्रीणामक्ष्णोः शोभया लोभं दिशति । यतो द्योर्दिवो नायिकात्वेन व्यवहार्याया मुक्तामयं यन्मञ्जीरं तस्य रीतिं शोभामभिद्योतयत् । यतो मध्ये रन्ध्रायमाणं श्याममच्छिद्रवदाचरन्प्रविसृतो हरिणो यस्य । तथा पार्श्वे निकटे रोहन्यो ग्रहगणस्तेन गुणितः कृतोऽयत्नेन रत्नोपचारो रत्नपरिकरत्वं यस्य । मञ्जीरं ह्यन्तःशून्यं परिकररत्नं च भवति । बोभवीत्विति भवतेर्यङन्तस्य लोटि रूपम् ॥

पूर्वक्ष्माभृन्निकुञ्जभ्रमणपरिणतानर्गलापूर्वदूर्वा-
सच्छायं लाञ्छनं तत्कुमुदकुलपतेर्निर्वृतिं नो धिनोतु ।
रात्रिष्वश्रान्तसक्ताञ्जननयनजलोत्पीडतो गण्डलेखा
यत्कान्त्येवोच्छलन्त्या विरहिमृगदृशां श्यामतामाप्नुवन्ति ॥ ६२ ॥

पूर्वक्ष्माभृत उदयाद्रेर्ये निकुञ्जा गह्वराणि तेषु भ्रमणं तेन परिणता संक्रान्तानर्गलापूर्वा या दूर्वा शतपर्विका तस्याः सच्छायं समानम् । उपमोपक्रमोत्प्रेक्षेयम् । तत्कुमुदकुलपतेश्चन्द्रस्य लाञ्छनं कलङ्को निर्वृतिं सुखं धिनोतु वर्धयतु । रात्रिष्वश्रान्तं कृत्वा सक्ताञ्जनः साञ्जनो यो नयनजलोत्पीडो बाष्पभरस्ततो विरहिणीनां गण्डलेखाः श्यामतामाप्नुवन्ति । अतः संभाव्यते—उच्छलन्त्या स्फुरन्त्या यत्कान्त्येव कलङ्कशोभयेव ॥

तच्चान्द्रं लक्ष्म लक्ष्मीं चिरमुपचिनुतादग्रतो वल्गमानं
मध्येबिम्बं कुटुम्बं लटभचटुलदृक्केशपाशप्रथानाम् ।

दूरोदञ्चद्यदीयद्युतिततिमिषतः स प्रियो यामिनीनां
विस्रम्भाद्यामुनाम्भोभरमहरधिपस्पर्धयेव प्रसूते ॥ ६३ ॥

तच्चान्द्रं चन्द्रसंबन्धि लक्ष्म कलङ्कोऽग्रतः पुरो लक्ष्मीमुपचिनुताद्वर्धयतात् । मध्ये-बिम्बं ललाटमध्ये वल्गमानं स्फुरत् । वलिगश्चानशन्तः । लटभाः प्रगल्भा या चटुल-दृशो रामास्तासां केशपाशास्तत्प्रधानां कुटुम्बं सदृशम् । तत्किम् । विस्रम्भाद्दूरमुदञ्चन्त्यु-द्गच्छन्ती यदीया कलङ्कसंबन्धिनी द्युतिततिस्तस्या मिषतो व्याजेन स यामिनीनां प्रियश्चन्द्रो यामुनो यमुनासंबन्धी योऽम्भोभरस्तमिवाहरधिपस्य भानोः स्पर्धया प्रसूते । 'नायको यामिनीनाम्' इति पाठः समञ्जसः ॥

राकेन्दोः सिन्धुवारस्तबकसहचरद्योतसौहार्दभाजो
राजन्नव्याजमव्यान्मधुकरनिकरप्रक्रियातस्करो वः ।
आघ्रातोद्रेकमुद्राम्बुनिधिविसृमराभ्रंलिहोल्लोलदण्ड-
प्रान्तक्रान्तेन्द्रनीलोपलशकललिपिं बिभ्रदङ्के कलङ्कः ॥ ६४ ॥

कलङ्को वोऽव्याजमव्याद्रक्षतात् । सिन्धुवारस्य ये स्तबका गुच्छास्तेषां सहचरः सदृशो यो द्योतो द्युतिस्तस्य सौहार्दं परिचयं भजतो राकेन्दोः पूर्णचन्द्रस्य मधुकरनिक-रप्रक्रियाया भ्रमरसमूहशोभायास्तस्करः सदृशत्वाच्चौरः । तथाघ्राता स्वीकृतोद्रेकमुद्रा क्षोभटङ्को येन तथाविधो योऽम्भोनिधिः समुद्रस्तस्माद्विसृमरा विसरणशीला अभ्रंलिहा आकाशव्यापिनो ये उल्लोलदण्डास्तरङ्गदण्डास्तत्प्रान्तेभ्यः क्रान्तं यदिन्द्रनीलोपलशकलं तस्य लिपिं भङ्गिं बिभ्रद्धारयत् । समुद्रात्संक्रान्तमिदमिन्द्रनीलखण्डमिति संभावित इत्यर्थः ॥

कृष्णाङ्कं बिभ्रदङ्कं जननमनुसरन्गाढमार्तण्डगर्भं
भित्त्वा तन्वन्विलासिष्वविरलपुलकोत्कम्पपात्रं शरीरम् ।
क्षुन्दन्नक्षीणपक्षाक्रमणपरिणतेरन्तरिक्षान्तरालं
वध्याद्राजा द्विजानामविरतविरहक्ष्वेडपीडाभरं वः ॥ ६५ ॥

द्विजानां राजा चन्द्रो विरह एव क्ष्वेडो विषस्तेनाविरतो यः पीडाभरस्तं वध्यान्नि-वारयतु । कीदृशः । अङ्कमुत्सङ्गं कृष्णाङ्कं श्यामकलङ्कं बिभ्रत् । तथा गाढो यो मार्तण्ड-गर्भो भास्वन्मण्डलाभ्यन्तरं तं भित्त्वा जननमुपसरञ्जन्म प्राप्नुवन् । तथा विलासिषु शृङ्गारिषु शरीरमविरलौ यौ पुलकोत्कम्पौ रोमाञ्चकम्पौ तयोः पात्रं स्थानम् । तथाक्षी-णपक्षः शुक्लपक्षस्तस्याक्रमणं तेन परिणतिर्विशिष्टरूपतापत्तिस्ततोऽन्तरिक्षान्तरालमाका-शमध्यं क्षुन्दन्गच्छन् । इति चन्द्रपक्षे योजना । गरुडपक्षे तु—द्विजानां राजा गरुडश्च क्ष्वेडपीडां हन्ति । अङ्कं पृष्ठं कृष्णो नारायणोऽङ्कश्चिह्नं यस्य स तं बिभ्रत् । तथा गाढं

कृत्वार्तं सुकुमारं यद्दण्डं तस्य गर्भं भित्त्वा जायमानः। तथा बिले आसते सर्पास्तेषु भयकृतौ पुलककम्पौ तन्वन्। तथाक्षीणा बलवन्तो ये पक्षाः पत्राणि तदाक्रमणेन परिणतेराकाशमध्यं गच्छन्॥

औवग्निद्योतशेषं दधदिव जलधेरुज्जिहानोऽशुभं वः
संध्यारागानुबन्धारुणरुचिरचिराद्रात्रिराजस्तृणेढु।
अभ्यङ्गाद्यत्प्रभाणामसमपरिणमच्छोणिमानो मुहूर्तं
वर्तन्ते कैरविण्योऽप्यखिलकमलिनीमण्डलस्पर्धयेव॥ ६६॥

जलधेरुज्जिहान उदयन्नतः संध्यारागस्यानुबन्धोऽतिसङ्गस्तेनारुणरुचिर्लोहितांशू रात्रिराजश्चन्द्रोऽशुभं तृणेढु हिनस्तु। अतः संभाव्यते—औवग्नेर्द्योतस्तस्य शेषं दधदिव। [अथवा] जलनिधेरुज्जिहान इत्यौर्वाग्निद्योतशेषधारणे हेतुः। समुद्रमध्ये सम्यग्वाडवज्वालाव्याप्त आसीदतः शेषवचनम्। 'लेशम्' इति वा पाठः। यस्य प्रभाणामभ्यङ्गादसमः परिणमन्संक्रामञ्शोणिमा रक्तत्वं यासां ताः कैरविण्योऽपि सकलं यत्कमलिनीमण्डलं तत्स्पर्धयेव वर्तन्ते। रक्तत्वात्कुमुदानि पद्मिनीसमानि भवन्तीत्यर्थः॥

कंदर्पस्येव शाणोपलफलकमिषूञ्शाततामाशु नेतुं
तद्घर्षश्यामिकाभं वहदुदरपथे विभ्रमं लाञ्छनस्य।
फेनावर्तायमानं गगनजलनिधेरन्तरालेऽसकृद्वो
व्यञ्जन्बिम्बं कदम्बं दिशतु कुमुदिनीजीवबन्धुः सुखानाम्॥ ६७॥

कुमुदिनीनां जीवबन्धुः प्राणनाथ इन्दुः सुखानां कदम्बं समूहमसकृद्दिशतु। किं कुर्वन्। गगनमेव विशालत्वाज्जलनिधिस्तस्याभ्यन्तरे फेनयुक्तो य आवर्तस्तत्तुल्यं बिम्बं व्यञ्जन्। संभाव्यते—कंदर्पस्य शाणोपलफलकमिव घर्षणाश्मपट्टमिव। किं कर्तुम्। इषूञ्शराञ्शाततां तैक्ष्ण्यं नेतुम्। वस्तुतश्चन्द्रस्य स्मरोपकर्तृत्वात्। यतो लाञ्छनस्य विभ्रमं कलङ्कस्य टङ्कं तद्घर्षश्यामिकाभं शरघर्षसक्तश्यामिकासदृशम्, उदरपथे मध्यभागे, दधत्॥

गङ्गामप्येष लीलोज्झितचरयमुनावारिपूरः किमर्को
निर्मुञ्चत्यद्य यस्मिन्प्रतिपदि विशदं मण्डलादुज्जिहाने।
लोकोऽनल्पान्विकल्पानिति वहति पतिर्यामिनीनां स विघ्नं
नेयाद्वः शान्तिमाविर्भवदसमशरक्रीडितोपक्रमेषु॥ ६८॥

स यामिनीनां पतिश्चन्द्र आविर्भवन्प्रसन्नः संपद्यमानो योऽसमशरः कामस्तस्य क्रीडितानि क्रीडास्तेषामुपक्रमा आरम्भास्तेषु विघ्नं वः शान्तिं नेयात्। यामिनीनां पतिरिति रतलीलाविघ्नशमनानुगुणमभिधानम्। लीलया हेलयोज्झितचरो मुक्तपूर्वो

यमुनावारिपूरो येन सोऽर्कोऽयं गङ्गां किं निर्मुञ्चत्युत्सृजतीति विकल्पान्बहूञ्जनो वहति । यस्मिन्प्रतिपदि पक्षतौ विशदं सम्यगुज्जिहाने निर्गच्छति सति । नेममिन्दुम्, किं तर्हि, यमुनावद्गङ्गां सूर्यः सृजतीति यस्मिन्नर्कबिम्बान्निर्गच्छति सति जनो विकल्पान्कुरुते । चन्द्रलेखायास्तदाकारत्वात् । स विघ्नान्हन्यादित्यर्थः ।।

सिन्दूरक्षोदरज्यद्दिनकरिकरटाघाटटङ्केऽनुदर्शं
　यल्लेखा लौहितीकाङ्कुश इव विशति स्वैरमुष्णांशुबिम्बे ।
देवः सारङ्गलक्ष्मा मलयजमकरीरीतिभृद्रात्रिवक्त्रे
　स स्ताद्विस्तीर्णतत्तत्स्मररसलहरीगाहनप्रीतये वः ॥ ६९ ॥

रात्रेः स्त्रीलिङ्गत्वान्नायिकात्वेन व्यवहार्याया वक्त्रे मुखे मलयजं चन्दनं तेन मकराकारा रचना तस्या रीतिं टङ्कं बिभ्रत्सारङ्गलक्ष्मा शशाङ्को देवस्ताश्च ताः स्मररसलहर्यः शृङ्गारवीचयस्तासां गाहनमवगाहस्तेन प्रीतिस्तदर्थं भवतु । दिनमेव महत्त्वात्करी गजस्तस्य करटाघाटः कटसंनिवेशस्तद्वट्टङ्कः शोभा यस्य तस्मिन्सूर्यमण्डले यल्लेखा चन्द्रकला लौहितीकाङ्कुशः स्फटिकमयोऽङ्कुश इव स्वैरमनुदर्शं प्रतिपर्व विशति ॥

शैत्यं यस्याश्रयन्ते दिशि दिशि रुचयस्ताः पयोराशिगर्व-
　च्छेदस्वाच्छन्द्यभाजोऽनवरतकमलोन्मीलनव्यग्रमूर्तेः ।
चन्द्रश्चण्डद्युतिर्वा कुमुदवनसमुल्लासनाकुण्ठशक्ति-
　र्युष्माकं सोऽप्रमेयोदयमयसमयोत्पत्तिमेव व्यनक्तु ॥ ७० ॥

पयोराशिर्दुग्धपूरस्तस्य श्वेतत्वाद्गर्वस्तस्य च्छेदो निवारणं तत्र स्वाच्छन्द्यभाजः परनिरपेक्षस्य । तथानवरतं नित्यं कमलाया लक्ष्म्याः कमलस्य मृगस्य वोन्मीलनं स्फारस्तेन व्यग्रा मूर्तिर्यस्य । [तथा यस्य] रुचयः शैत्यं शीततामाश्रयन्ते स चन्द्रः कुमुदवनस्य समुल्लासने विकासेऽकुण्ठशक्तिर्युष्माकमप्रमेयोऽपरिच्छेद्यो य उदयस्तन्मयस्य समयस्योत्पत्तिं व्यनक्तु । इति चन्द्रपक्षे योजना । अर्को वा चण्डद्युतिः । वाशब्द इवार्थे । यस्य चण्डद्युते रुचयः शैत्यं शिततां तीक्ष्णत्वमाश्रयन्ते । पयोराशिः समुद्रस्तस्य गर्वः क्षोभस्तच्छेदे स्वतन्त्रस्य । रात्रावेव समुद्रक्षोभसंभवात् । कमलानां पद्मानामुन्मीलनं विकासस्तत्र व्यग्रमूर्तेः । स चण्डद्युतिः कोर्भूमेर्या मुत्प्रीतिस्तस्या अवनं रक्षणं तत्राकुण्ठशक्तिर्व उदयं व्यनक्तु । चन्द्रस्य रवेश्च न केवलमात्मन उदयाभिव्यक्तिर्यावद्युष्माकमपि भूयादित्यर्थः ॥

यो राजापि द्विजानामनुदिनमयते वारुणीसङ्गभङ्गिं
　द्राघीयोमण्डलाग्रः प्रथयति तमसि ध्वंस एवोद्यमं यः ।
यः पद्मायासतन्त्रं दिशति च हरिणाध्यास्यमानोऽपि चित्रं
　चारित्रं निर्मिमाणः स शिशिरकिरणस्तादशस्तिच्छिदे वः ॥७१॥

द्विजानां नक्षत्राणां राजा योऽनुदिनं सदैव वारुण्याः पश्चिमदिशः सङ्गो योगस्तद्गमयते गच्छति। तथा द्राघीयो दीर्घतरं मण्डलाग्रं यस्य सः। यस्तमसि तमोविषये ध्वंसो नाशस्तत्रोद्यममुदयं प्रथयति धत्ते। तथा हरिणेन मृगेणाध्यास्यमान आश्रितो यः। पद्मानामायासतन्त्रं संकोचं दिशति। स शिशिरकिरणश्चित्रं चारित्रमाश्चर्यवृत्तिं निर्मिमाणोऽशस्तेरप्राशस्त्यस्य च्छिदे वारणाय स्तात्। अपिशब्दो विरोधद्योतकः। द्विजानां राजा सद्ब्राह्मणो वारुण्या मदिरायाः सङ्गमयते। तथा द्राघीयान्मण्डलाग्रः खड्गो यस्य सः। असिध्वंसे खड्गनाशे तमुद्यमं प्रथयते। तथा हरिणा विष्णुनाध्यास्यमानो यः पद्माया लक्ष्म्या आयासतन्त्रं क्लेशं दिशतीति विरोधः॥

बालालीलागवाक्षोदरपथविसरद्धूपधूमप्रबन्ध-
व्याजादालिङ्ग्यमानाकृतिरिव निशया मूर्तिमत्यानुरक्तेः।
निर्यन्नीरन्ध्रघर्मोदककणसचिवेन्दीरबिन्दुः स शश्व-
द्रात्रिप्राणेश्वरो वो वितरतु विततानन्दसंदोहमैत्रीम्॥ ७२॥

बालानां लीलागवाक्षः क्रीडाप्रग्रीवस्तस्योदरपथस्तस्माद्विसरन्निर्गच्छन्यो धूपधूमस्तस्य प्रबन्धोऽनुबन्धस्तद्व्याजादनुरक्तेरनुरागाद्धेतोर्निशयालिङ्ग्यमानाकृतिः परिरब्ध इव। अत एव निर्यन्तो नीरन्ध्रा अनन्तरा घर्मोदककणसचिवा घर्मजलसदृशा इन्दीरबिन्दवोऽवश्यायजलकणा यस्य स रात्रिप्राणेश्वरश्चन्द्रो विततो य आनन्दसंदोहस्तस्य मैत्रीं परिचयं वितरतु दद्यात्॥

निर्यान्तीनामवाप्तुं रहसि रतिरसावाप्तये मुक्तशङ्कं
प्रेयःसंकेतकेलिप्रमदवनलतामण्डपं कामिनीनाम्।
तत्र प्रत्यङ्गमित्थं वपुषि समपुषन्सान्द्ररोमाञ्चराशी-
नाशीर्वादैः शशाङ्काभ्युदयनसमयोपक्रमैर्वृद्धवध्वः॥ ७३॥

रतिरसस्य शृङ्गाररसस्यावाप्तये प्राप्त्यर्थं तत्र कैलासशैले रहसि विजने प्रेयसां प्रियतमानां संकेतो यत्र तत्केलिप्रमदवनं क्रीडोद्यानं तत्र लतामण्डपमवाप्तुं स्वगृहान्निर्यान्तीनां निर्गच्छन्तीनां कामिनीनां प्रत्यङ्गमङ्गेऽङ्गे सान्द्रा ये रोमाञ्चराशयो रोमाञ्चपुञ्जास्तान्वृद्धवध्वः समपुषन्नवर्धयन्। कैः। शशाङ्कस्याभ्युदयनसमय उदयकालस्तदुपक्रमैस्तन्मूलैराशीर्वादैः। शृङ्गारध्यानजातो रोमाञ्चः कार्यसिद्धिफलेनाशीर्वादेन पोषित इत्यर्थः॥

चन्द्राशीर्वादकुलकम्॥

गगनमहीरुहसितकुसुमं जयति स रजनिभुजंगः।
मधुकरनिकरविलासमयं प्रथयति यस्य कुरङ्गः॥ ७४॥

गगनमेव महीरुहो वृक्षस्तस्य श्वेतपुष्पम्। वर्णसंनिवेशभूषकत्वेन रूपणम्। स रजनिभुजंगश्चन्द्रो जयति। यस्य चन्द्रपुष्पस्यायं कुरङ्गो मधुकरनिकरविलासं भ्रमरसमूह-

टङ्कं प्रथयति । मृगस्य श्यामत्वात् । पुष्पे हि भ्रमरैर्भाव्यम् । एतेन पुष्पस्य सौरभादयो गुणाः सूचिताः ॥

के तव तस्य चरित्रगुणं रजनिकरानुहरन्ते ।
त्रिजगति यो मुदमातनुते लोचनयोरहरन्ते ॥ ७५ ॥

अहरन्ते दिवसावसाने । अपिशब्दोऽध्याहार्यः । प्रदोषेऽपि त्रिजगति मध्याद्विषये वा नेत्रयोस्तुष्टिं यः करोति तस्य तव चरित्रगुणं केऽनुहरन्तेऽनुसरन्ति ॥

कोऽस्ति भवानिव शिशिररुचे घनलीलारसमुद्रः ।
रजनिषु विभ्रमकन्दुकतां प्रथयति यस्य समुद्रः ॥ ७६ ॥

भवानिव को घनासु लीलासु रसं मुद्रयति संघटयत्येवंविधोऽस्ति । यस्य भवतो विभ्रमार्थं कन्दुकभावं समुद्रो रजनिषु प्रथयति । भवदुदयात्तथा समुद्रः क्षुभ्यति यथा निकटवर्तित्वात्कन्दुकत्वं प्रकाशयतीत्यर्थः ॥

प्रतिपदि कस्य न नाम मनो हरसि सुधाकर बालः ।
रतिकमितुस्त्रिजगद्विजये सितकुटिलः करवालः ॥ ७७ ॥

प्रतिपदि पक्षारम्भे बालः कलामात्रोऽतो रतिकमितुः कामस्य त्रिजगद्विजये निमित्ते सितकुटिलः करवालः खड्गस्त्वं कस्य न मनो हरसि । कल्पितरूपम् । रतिकमितुरिति नाम्ना खड्गस्यैव गुणाः सूचिताः ॥

जयसि सुधानिधिरिह हि भवे त्वं तारापतिरेकः ।
यस्मिन्नुदयति कोऽपि भवेज्झषकेतोरतिरेकः ॥ ७८ ॥

यस्मिंस्त्वय्युदिते सति कोऽप्यपूर्वोऽतिरेकः स्फारो झषकेतोः समुद्रस्य कामस्य च भवेत्, स त्वं तारापतिश्चन्द्र एक इह भवे त्रिजगति जयसि ॥

जानाम्या हृदयाद्दयिताममृतमयूख निशां ते ।
प्रकटीकुरुते कुमुदमुखं या खरधामनि शान्ते ॥ ७९ ॥

खरधामनि तिग्मांशौ शान्ते भुवनान्तरं गते सति या निशा कुमुदमेव मुखं प्रकटीकुरुते प्रकाशयति तां निशां ते तवा हृदयात्तत्त्वतो दयितां जानामि । अमृतमयूखेत्यामन्त्रणं साभिप्रायम् । परपुरुषे च समीपस्थे तत्त्वतः प्रिया मुखं न प्रकाशयति ॥

तं गिरिशस्य शिखाभरणं स्तौति न रजनिकरं कः ।
स्कन्धे यत्सुधया स पुरः स्फुरदसुरजनि करङ्कः ॥ ८० ॥

यत्सुधया चन्द्रसंबन्धिनामृतेन हेतुना स्कन्धेंऽसे, अर्थाद्गिरिशस्य, करङ्कः शवास्थिपञ्जरं स्फुरदसुर्जीवन्नजनि जातस्तं गिरिशस्य मौलिभूषणं रजनिकरं चन्द्रं को न स्तौति । प्रमीतानपि यो जीवयति तं जीवन्को न स्तौतीत्यर्थः ॥

योो ललनाजनमानतरोः परशुः प्रकृतिनिशातः ।
तस्य नमामो धाम विधोरधिगतमहिम निशातः ॥ ८१ ॥

ललनानां संबन्धी यो मानः स एव दुश्छेद्यत्वात्तरुर्वृक्षस्तस्य यश्चन्द्रः प्रकृतिनिशातः स्वभावतीक्ष्णः परशुः कुठारविशेषो भवति । छेदक इत्यर्थः । निशातो रात्रेः सकाशादधिगतः प्राप्तो महिमा येन तस्य विधोर्धाम चान्द्रं तेजो नमामः प्रणमामः ॥

बन्धो सकलचकोरदृशां रजनिकराय नमस्ते ।
मा त्वा द्राक्ष्म कदापि विधो झगिति कृतायनमस्ते ॥ ८२ ॥

सकलानां चकोरदृशां रामाणां बन्धो । शृङ्गारोद्दीपकत्वात् । चन्द्रस्य चकोरदृग्बन्धुत्वोक्तेरौचित्यम् । तेषां ज्योत्स्नापायित्वात् । ते तुभ्यं रजनिकराय नमः । वयं त्वा झगिति तूर्णमेवास्तेऽस्तपर्वते कृतायनं कृतगमनं कदापि मा स्म द्राक्ष्म मा पश्यामः । द्राक्ष्मेति दृशेर्मास्मयोगेन लुङि रूपम् ॥

कस्य च दिशति न नाम मुदं विधुरुडुकुलपरिवारः ।
विकिरति यो जलधेर्गगनादपि सहसोपरि वारः ॥ ८३ ॥

उडुकुलं तारकागणः परिवारः परिच्छदो यस्य स विधुश्चन्द्रः कस्य न मुदं दिशति । सर्वस्यैव प्रीतिं ददातीत्यर्थः । यो विधुर्जलधेर्वारः समुद्रस्य जलानि गगनादप्युपर्याकाशादप्यूर्ध्वं विकिरति क्षिपति । चन्द्रोदये समुद्रस्य क्षोभोत्पत्तेः । किरतिरन्तर्भावितण्यर्थो वा व्याख्येयः ॥

विजयन्ते तव तुहिनरुचे किरणा गुरुमहिमानः ।
यूनां क्वचन यदभ्युदये रोहति हृदि नहि मानः ॥ ८४ ॥

हे तुहिनरुचे हिमकर, गुरुर्महिमा येषां ते तव किरणा विजयन्ते । येषां किरणानामभ्युदये सति यूनां हृदि मानो न रोहति न जायते । चन्द्रोदयस्य कामोद्दीपकत्वात् ॥

अभिषिञ्चतु सा वपुरसकृत्तावककान्तिनदी नः ।
आस्थां यत्र दधन्मदनः क्वचिदपि भवति न दीनः ॥ ८५ ॥

तावकी त्वत्संबन्धिनी या कान्तिः सैवाविच्छिन्नत्वान्नदी नोऽस्माकं वपुरभिषिञ्चतु । यत्र त्वत्कान्तावास्थामाशां दधन्मदनो दीनः क्वचिदप्यजय्येऽपि न भवति । सर्वमेव जयतीत्यर्थः ॥

इत्थं नृत्यन्मधुरगिरो दृशि निहितामृतबिन्दुम् ।
अधिगतदयिततया वनितास्तुष्टास्तुष्टुवुरिन्दुम् ॥ ८६ ॥

अधिगतः प्राप्तो दयितः प्रियो येन तद्भावेन तुष्टाः । अत एव नृत्यन्ती स्फुरन्ती मधुरानन्दकारिणी गीर्यासां ता वनिता इन्दुं चन्द्रं तुष्टुवुरस्तौषुः । दृशि दृष्टौ निहिताः

क्षिप्ता अमृतबिन्दवः सुधाकणा येन । चन्द्रं दृष्ट्वामृतवर्षेणेव हृष्टा इत्यर्थः ॥ चन्द्रचाटुकुलकम् ॥

मत्कार्यसिद्ध्यै तव हन्त यान्त्या मार्गे पुरोऽभूत्परुषः समीरः ।
यद्भाहतेऽयं लुलितालकत्वं पर्यस्तबन्धः कबरीनिवेशः ॥ ८७ ॥

हन्त कष्टे । मम कार्यं रमणानयनलक्षणं प्रयोजनं तस्य सिद्धिः साधनं तदर्थं यान्त्या गच्छन्त्यास्तव मार्गे पुरोऽग्रे समीरो वायुः परुषो दुःसहोऽभूत् । शैत्यात्कामजननाच्च । पर्यस्तः शिथिलो बन्धो यस्य स कबरीनिवेशः केशवेशाभोगो लुलिता विप्रकीर्णा अलका यस्य तद्भावं गाहते सेवते । अत्र कान्तानयनार्थं विसृष्टया दूत्या स्वयं कृतस्य निगूढस्य सतः कान्तोपभोगस्य प्रतिभेदः स्वामिन्या कबरीबन्धशैथिल्यकथनद्वारेण कृतः । एवमुत्तरत्रापि ज्ञेयम् ॥

संस्पृश्य तं दुश्चरितैकचञ्चुं सखि त्वया किं विहितोऽवगाहः ।
आर्द्राणि गात्राणि तवासते यद्धत्से च यन्निस्तिलकं ललाटम् ॥ ८८ ॥

दुश्चरितेन दुष्टवृत्तेनैकं चञ्चुं वित्तं तं मद्भर्तारं संस्पृश्य त्वयावगाहः स्नानं किं कृतः । अथ दूत्युपभोगाख्यदुश्चरितकारी त्वया संस्पृष्टः । तथा गात्राण्यार्द्राण्यासते, त्वं ललाटं निस्तिलकं नष्टविशेषकं धत्से यच्च धारयसि । अङ्गानां स्वेदार्द्रत्वेन निस्तिलकत्वेन च प्रतिभेदः ॥

केन क्रमेण स्विदथाद्वितीया तेनाधिकं सुन्दरि भायिताभूः ।
यच्छाम्यति व्याकुलितेक्षणाया नाद्यापि ते कम्पकलानुबन्धः ॥ ८९ ॥

अथेत्याक्षेपे । स्विद्वितर्के । सुन्दरीति प्रकृतानुगुणमामन्त्रणम् । अद्वितीयैकाकिनी त्वं केन क्रमेण स्विद्भायिता भयं प्रापिताभूः । भयाकुलिते ईक्षणे यस्यास्ते कम्पस्य भयजातस्य कला भङ्गिस्तदनुबन्धो नाद्यापि शाम्यति निवर्तते । केन क्रमेण कस्य भीषणस्य रूपग्रहणेनेत्यर्थः ॥

स एव कस्तूरिकपङ्कजन्मा दोषं ध्रुवं ते व्यधिताङ्गरागः ।
बिभर्षि यत्सौरभसङ्गिभृङ्गदंशव्रणैर्भङ्गुरमङ्गमङ्गम् ॥ ९० ॥

कस्तूरिकपङ्कात्कस्तूरीकर्दमाज्जन्म यस्य सोऽङ्गरागो नूनं ते दोषमनर्थमकरोत् । सौरभेण हेतुना सङ्गिनः सक्ता ये भृङ्गास्तद्दंशव्रणैर्भङ्गुरं साभिघातमङ्गमङ्ग यद्बिभर्षि । पूर्वश्लोके सुन्दरीत्वेन त्वमुपभुक्तेति सूचितम् । इह तु त्वमिहैव तदुपभोगं संकलय्य गतेति कस्तूर्यङ्गरागप्रत्युक्त्या सूचितम् ॥

अनत्ययं शैत्यमुपेत्य सत्यमबाधत त्वां सखि गन्धवाहः ।
अद्यापि यत्ते विवलत्यभग्नरोमाञ्चसंचारसखं शरीरम् ॥ ९१ ॥

अनत्ययं दुर्वारं शैत्यं शीततां शिततां च प्राप्य त्वां गन्धवहो वायुरबाधत बाधित-

वान् । अभग्नास्तुङ्गा ये रोमाञ्चाः शीतकृताः कामकृताश्च तेषां संचारस्य सखं परिचितं शरीरमद्यापि यद्विवलति कम्पते । अत्र कम्परोमाञ्चाभ्यां प्रतिभेदः ॥

नखानखि प्रस्तुत आस्त तस्य केनापि साकं किमु संप्रहारः ।
यद्वारणार्थं सहसा विशन्ती त्व तन्नखोल्लेखपथं गतासि ॥ ९२ ॥

किमु वितर्के । तस्य नखानखि संप्रहारो द्वन्द्वयुद्धं केनापि साकं प्रस्तुत आरब्धः किमु आस्ताभूत् । यस्य नखानखियुद्धस्य वारणार्थं सहसा निर्विमर्शं विशन्ती त्वं तस्य नखैरुल्लेखः पाटनं तत्पथं गतासि । बहुव्रीहिसमासात्मकं तृतीयार्थवृत्तीजन्तं नखानखीत्यव्ययम् ॥

दूतीस्तदानीं दयितोपभोगलक्ष्माकुलाङ्गीरपलप्य कोपम् ।
स्वभ्रूलतावक्रिममार्गशिष्यैरित्थं तरुण्यो वचनैरधुन्वन् ॥ ९३ ॥

कान्तोपभोगजनितं दूतीषु कोपमपलप्य निह्नुत्य तरुण्यो दूतीरधुन्वन्नकम्पयन् । कैः । स्वभ्रूलतानां वक्रिममार्गे वक्रत्वे शिष्यैः । वक्रैरित्यर्थः । वचनैर्निजभ्रूलतागतं कौटिल्यं शिक्षितमिति शिष्यपदम् । दयितस्योपभोगस्तस्य लक्ष्माणि नखक्षतादीनि तैराकुलाङ्गीः । अत्र प्रियोपभोगस्य दूतीकृतस्य लुलितालकाद्युक्त्या प्रतिभेदादुद्भेदालंकारः । आद्यश्लोकेष्वनभिधेयत्वेन व्यङ्गचस्याप्युद्भेदस्य चरमश्लोकवाच्यसिद्ध्यङ्गत्वेन ध्वनिः ॥ प्रतिभिन्नदूतीवाक्यकुलकम् ॥

इत्थं मान्मथसंप्रदायगुरुणा यूनां हिमज्योतिषा
न्यस्यानभ्रनभोग्रकुन्तलतले नक्षत्रपुष्पाञ्जलिम् ।
अन्वग्राहि विभावरी मुकुलिताम्भोजेक्षणा छिन्दता
बन्धं कैरवमण्डलस्य दधतः पादग्रहव्यग्रताम् ॥ ९४ ॥

अनभ्रं यन्नभोग्रं तदेव श्यामत्वात्कुन्तलाः केशास्तेषां तले नक्षत्राण्येव वर्णसंनिवेशाभ्यां पुष्पाञ्जलिस्तं न्यस्य निधाय हिमज्योतिषा चन्द्रेण विभावरी रात्रिरन्वग्राह्यनुगृहीता । ज्योत्स्नया प्रसादं नीता । यूनां मान्मथसंप्रदाये कामपारम्पर्योपदेशे गुरुणोपदेशकेन । तथा पादानां रश्मीनां ग्रहे ग्रहणे व्यग्रतां दधतः कुमुदकुलस्य बन्धं संकोचं छिन्दता वारयता । मुकुलितमम्भोजेक्षणं यस्या रात्रेः । अथ च संप्रदायगुरुणा कस्याश्चिदनुग्राह्याया मस्तके पुष्पाञ्जलिं न्यस्य तदीयसब्रह्मचारिवर्गस्य गृहीताचार्यचरणद्वयस्य संसारबन्धच्छेदपूर्वं समाहितत्वेन संकुचितनेत्रा सानुगृह्यते । हिमज्योतिषेत्याचार्यानुगुणम् ॥

दूरं सीकरधोरणीरिव किरत्तारावतारात्मना
भर्गश्रुष्टमनोभवोद्धृतिधिया चन्द्रेण गाङ्गं पयः ।

शङ्के भूमितले व्यसार्यत घनज्योत्स्नाछलादन्वभू-
द्यत्कान्तागृहधूपधूमलहरीयोगात्प्रयागश्रियम् ॥ ९५ ॥

अहमिति शङ्के—भर्गेण हरेण प्लुष्टो दग्धो यो मनोभवः कामस्तस्योद्धृतिरुद्धरणं तद्बुद्ध्या हेतुभूतया चन्द्रेण कर्त्रा घनज्योत्स्नायाश्छलाद्गाङ्गं पयो भूमितले व्यकीर्यतावतारितम् । ताराणामवतारः प्रकाशनं तस्यात्मना रूपेण सीकरधोरणीः कणपङ्क्तीरिव किरत् । यद्गाङ्गं पयः कान्तागृहेषु यो धूपधूमस्तद्योगात्प्रयागश्रियमन्वभूत् । प्रयागो गङ्गायमुनासंगमः । अथ च प्लुष्टशब्दोऽधोगतोपलक्षणार्थः । अधोगतश्च गङ्गाजलेनास्थिस्पर्शद्वारेणोद्ध्रियते ॥

वातक्षिप्ते सविधलतिकापल्लवेऽप्यात्तशङ्काः
संतन्वन्त्यो निभृतचकितं लोचनाकुञ्चनानि ।
संकेतोर्व्यां तमसि तरुणे भीरुभावैकभाजो-
ऽप्येकाकिन्यः क्व न युवतयस्तस्थिरे वल्लभेभ्यः ॥ ९६ ॥

सविधलतिकानां पल्लवेऽपि वातक्षिप्ते वायुकम्पिते सत्यात्ता गृहीता शङ्का 'पश्येत्कश्चित्' इति बुद्धिर्याभिस्ताः । अत एव निभृतं चकितं च कृत्वा लोचनाकुञ्चनानि दृष्टिमीलनानि तन्वन्त्यः कुर्वन्त्यो युवतयस्तमसि तरुणे सति संकेतभूमौ वल्लभेभ्यः क्व न तस्थिरे । स्वात्मानं प्रकाशयामासुः । भीरुभावैकभाजो भीता अप्येकाकिन्यः केवलाः । प्रतिभेदभयात् । 'प्रकाशनस्थेय–' इति तिष्ठतेरात्मनेपदम् । 'श्लाघह्नुङ्स्था–' इति वल्लभशब्दाच्चतुर्थी ॥

त्यक्त्वासंध्याभ्ररक्तांशुकमथ विधृतध्वान्तकस्तूरिकाम्भः-
संभारालेपकेलौ वपुषि धृतवती चन्द्रिकाचीनचेलम् ।
द्यौः सद्यो नूतनोद्यद्विचकिलकलिकाकारनक्षत्रमाला-
मालिन्याकल्पलीलामिव चिरमचिनोद्दर्पणाभेन्दुबिम्बम् ॥ ९७ ॥

संध्याभ्रमेव रक्तांशुकं रक्तवस्त्रं परिहृत्य शरीरे चन्द्रिकैव चीनचेलं चीनवस्त्रं धृतवती परिहितवती । ध्वान्तमेव कस्तूरिकाम्भःसंभारस्तेनालेपकेलिरङ्गरागलीला विधृता येन । नूतनं नवं कृत्वोद्यन्तः कृतोदया विचकिलकलिकाकारा विचकिलमुकुलसमा नक्षत्रमाला मलति धारयति । एवंविधा द्यौः स्त्रीत्वान्नायिकात्वेन व्यवहार्या आकल्पलीलां वेषशोभामिवाचिनोदधारयत् । दर्पणाभो मुकुरसम इन्दुबिम्बो यत्र, एवं कृत्वा । एतेन वक्ष्यमाणार्थोपक्षेप इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये चन्द्रवर्णनं नाम द्वादशः सर्गः ।

---

त्रयोदशः सर्गः।

अथ संभ्रमं नयनसंवननप्रथमौषधाय मदनाध्वजुषः।
सुरलोककोकनदपत्रदृशः परिकर्मनर्मविधये विदधुः ॥ १ ॥

नयनसंवनने दृष्टिवशीकरणे प्रथमाय प्रधानायौषधाय परिकर्म वेषस्तदेव नर्म तस्य विधानाय सुरलोके नाके याः कोकनदपत्रदृशः पद्माक्ष्यः संभ्रमं चक्रुः। यतो मदनाध्वजुषः काममार्गसेविन्यः॥

अथ काचिदङ्गपथमाच्छुरयद्घुसृणेन काञ्चनसवर्णतनुः।
स्फटिकाश्मचन्दनविलेपनवत्स मनाग्विशेषमपुपन्न विधिः ॥ २ ॥

काञ्चनस्य सवर्णा समानवर्णा गौरी तनुर्यस्याः सा काचन घुसृणेन कुङ्कुमेनाङ्गपथमाच्छुरयद्विलिप्तवती स विधिः कुङ्कुमवर्णायां तनौ कुङ्कुमरागलक्षणो विशेषः परभागं नापुष्यत्। किंवत्। स्फटिकाश्मनि चन्दनविलेपनमिव। तयोरपि समवर्णत्वात्॥

अपरा वपुर्विपुलदृग्विसरन्मृगनाभिपङ्कपटलापिहितम्।
स्थिरभाविमारशरपातभिया धृतलोहकङ्कटमिवोदवहत् ॥ ३ ॥

विपुलदृग्दीर्घाक्षी दीर्घदर्शिनी च वपुः कर्मभूतं विसरता मृगनाभिपङ्कपटलेन कस्तूर्यङ्गरागेण पिहितमकरोत्। अतः संभाव्यते—स्थिरं कृत्वा भावी भविष्यन्मारशरपातः कामबाणपतनं तस्माद्भिया भीत्या धृतं लोहमयं कङ्कटं येन तदिव। सवर्णत्वात्संभावनोत्थानम्। मार इति साकूतम्॥

स्मरगन्धसिन्धुरशरीरधुतिच्युतभूतिविभ्रममुपोढवता।
इतरा तरुण्यकृत पाण्डुरितं घनसाररेणुविसरेण वपुः ॥ ४ ॥

स्मर एव गन्धसिन्धुरो गन्धहस्ती तस्य शरीरान्मदकृतया धुत्या कम्पेन च्युता या भूतिः शुक्लोऽङ्गरागस्तस्या विभ्रमं दधता घनसाररेणुविसरेण कर्पूराङ्गरागेण काचिद्वपुः पाण्डुरितं पाण्डु अकृताकरोत्। अत्र घनसारस्य वर्णोत्पादकत्वाभ्यां सादृश्यं भूत्या ज्ञेयम्॥

लसता चतुःसमरसेन वपुः पुनरुक्तसौरभमधीरदृशाम्।
घटमानषट्पदभरादवृणोदितरैणनाभिरसलेपमिव ॥ ५ ॥

इतरा वपुरेणनाभिरसेन लेपो यस्य तदिवावृणोत्प्रकाशितवती। कुतः। घटमानः संयुज्यमानो यः षट्पदभरस्ततः। यतो लसता चतुःसमरसेन कुङ्कुमादिसमाहारेण सुगन्धि। अधीरदृशामिति निर्धारणषष्ठी। अथवाधीरदृशां वपुः कर्तृ इतरो य एणनाभिरसलेपस्तमिवावृणोदिति योज्यम्॥

मृगचक्षुषालिकतले तिलकं यदलिख्यतागुरुरसेन सकृत् ।
अजनिष्ट तेन शशिनः शनकैः सशरीररात्रिपरिरम्भविधिः ॥ ६ ॥

अगरुरसेन करणभूतेन मृगचक्षुषा भालतले तिलकं यदलिख्यत तेन लिखनेन चन्द्रस्य शनकैः सरसत्वात्सशरीराया मूर्ताया रात्रेः परिरम्भविधिरालिङ्गनमजनि जातः । सकृदिति कौशल्यद्योतनम् ॥

कुसुमास्त्रकेलिसदने वदने विनिवेश्यमानवपुरन्वभवत् ।
रतिविभ्रमस्फटिकदर्पणतां घनसारबिन्दुररविन्दद्दशः ॥ ७ ॥

कुसुमास्त्रस्य कामस्य केलिसदने नर्मगृहे पद्माक्ष्या मुखे विनिवेश्यमानवपुर्लिखितो घनसारबिन्दुः कर्पूरतिलको रतेर्विभ्रमस्फटिकदर्पणतां लीलादर्शत्वमन्वभवत् । स्फटिकादर्शेनेव तेन रतिरतुष्यदित्यर्थः ॥

परयैणनाभिपयसा तिलकं यदसर्जि वृत्तमधिभालतलम् ।
मदनप्रसादविभवादुदितं दद्दशे तृतीयमिव तन्नयनम् ॥ ८ ॥

अधिभालतलं ललाटे वृत्तं तिलकं कस्तूर्या यदसर्जि लिखितं तत्तिलकं कामप्रसादादुत्पन्नं तृतीयं नेत्रमिव दृष्टम् ॥

अपरा ललाटफलके घुसृणद्रवचित्रकं व्यधित मुग्धमुखी ।
हरकोपलुप्तवपुषो निमितो मदनस्य जीव इव यो रुरुचे ॥ ९ ॥

मुग्धं मनोज्ञं मुखं यस्याः सापरा घुसृणद्रवेण चित्रकं तिलकं व्यधिताकरोत् । यो घुसृणचित्रको मदनस्य जीव इव रुरुचे दिदीपे । हरकोपेण लुप्तवपुषो दग्धशरीरस्य निमितो निश्चलः । कल्पितोपमेयम् । कामस्य प्राणसम इत्यर्थः ॥

कबरीभरं व्यधित कापि लसन्नवसिन्धुवारसुमनःसचिवम् ।
मुखशीतगोरजनि येन समं सितकृष्णपक्षपरिरम्भविधिः ॥ १० ॥

कापि कबरीभरं वेणीं लसन्तीभिः सिन्धुवारसुमनोभिः सिन्धुवारपुष्पैः सहितं व्यधिताकरोत् । येन हेतुभूतेन मुखचन्द्रस्य युगपत्सममेव शुक्ल[कृष्ण]पक्षस्पर्शो जातः ॥

अधिरोपिते चिकुरशेखरतामतिमुक्तके त्रिदिववामद्दशाम् ।
अगमन्नजङ्गममधुव्रततां मुकुटेन्द्रनीलमणिदीधितयः ॥ ११ ॥

दिव्यस्त्रीणां चिकुरस्य केशभरस्य शेखरतां भूषणत्वमधिरोपिते प्रापितेऽतिमुक्तकपुष्पे सति तासामेव मुकुटेन्द्रनीलरश्मयोऽजङ्गममधुव्रततामलोलभ्रमरभावमगमन् । अजङ्गमेत्यतिमुक्तस्य सौगन्ध्यं सूचितम् ॥

श्रवणेषु लोहितमणीन्रमणीनिवहो मुहुर्निरवधीन्निदधे ।
घनयत्नभाग्प्रणयतो द्विगुणामगमन्नपाङ्गरुचयोऽरुणताम् ॥ १२ ॥

असंख्यांल्लोहितमणीन्पद्मरागान्स्त्रीजनः कर्णेषु निहितवान् । येषां लोहितमणीनां प्रभापरिचयात्कटाक्षकान्तयो द्विगुणां शोणतामगच्छन् । न केवलं वर्ण एव पद्मरागैर्भूषितो यावदपाङ्गा अपीत्यर्थः ॥

अधिगण्डमण्डलमलेखि चिरात्स्वभुजिष्यया वरतनोर्मकरी ।
मृगनाभिमय्यपि विलासहसद्द्युतिभिः कृतेव घनसारमयी ॥ १३॥

स्वभुजिष्यया निजदास्या निपुणं कृत्वा लेखनाचिरेण गण्डमण्डले मकरी मकराकारा रचना लिखिता कस्तूरीप्रकृतिरपि विलासहासकान्तिभिः कर्पूरमयीव कृता ॥

मणिकुण्डलं व्यधित कापि वधूः श्रवणे कपोलफलकप्रणयात् ।
व्यतिषक्तमौक्तिककुलच्छलतो बहुलोल्लसत्पुलकजालमिव ॥ १४॥

कापि वधूः कर्णे रत्नकुण्डलमकरोत् । व्यतिषक्तं लग्नं यन्मौक्तिककुलं तद्व्याजाद्बहुलमुल्लसत्पुलकजालं यस्य तदिव । पुलकजालं कुतो जातमित्याह—कपोलफलकप्रणयाद्गण्डसंपर्कात् । न केवलं श्रवणमेव भूषितम्, यावत्कपोलोऽपीति भावः ॥

परिवर्तुलोऽगुरुमयस्तिलको वरयोषितोऽलिकतले लिखितः ।
मुखकान्तिसंततिसरिद्विसरत्तनुपद्मिनीदलविलासमधात् ॥ १५ ॥

ललाटे वरस्त्रिया लिखितो वर्तुलोऽगुरुतिलको मुखकान्तिसंततिरेवाविच्छिन्नत्वात्सरित्तस्यां विसरत्तनु यत्पद्मिनीपत्रं तस्य विलासमधात् । एतेन मुखकान्तेरगाधत्वं सूचितम् । अगाध एव नलिनीदलोत्पत्तेः ॥

मणिकुण्डलं द्युसदधीरदृशो विमले कपोलफलकस्य तले ।
विचुचुम्ब बिम्बितमनङ्गतरोस्तरुणालवालवलयैकलिपिम् ॥ १६ ॥

निर्मले दिव्यनार्या गण्डतले प्रतिबिम्बितं रत्नकुण्डलं कामवृक्षस्यालवालशोभामापत् । कामस्तस्मादाप्यायमवाप्नदित्यर्थः ॥

दयितेऽग्रवर्तिनि मुधैव दधौ मुकुरं करे सुरपुरंध्रिजनः ।
न तदीक्षणानि हि तदाननतः प्रतिवर्तितुं क्वचन चक्षमिरे ॥ १७॥

प्रिये पुरः स्थिते सति दिव्यस्त्रीजनो हस्ते दर्पणं मिथ्याधारयत् । यतस्तदाननतः प्रियमुखात्प्रतिवर्तितुं प्रत्यागन्तुं तदीक्षणानि स्त्रीजननेत्राणि न चक्षमिरे न शक्ताः । रागवशात्प्रियमुखमेवैक्षिष्ट, न तु दर्पणे स्वं मुखमित्यर्थः ॥

घटमानदन्तवलया विबभुः सुरसुभ्रुवां मृदुलबाहुलताः ।
निजकान्तिचौर्यरचनैकरुषा कृतवेष्टना इव मृणालदलैः ॥ १८ ॥

घटमाना दन्तवलया यासां ता दिव्यस्त्रीणां कोमला बाहुलता विबभुः । अतः संभा-

च्यते—निजकान्तेश्चौर्यरचनं मोषणं तेनैका रुट् तया हेतुभूतया मृणालदलैः कृतं वेष्टनं परितो ग्रथनं यासां ता इव ॥

नवमौक्तिकावलिरमर्त्यवधूनिवहस्य दृष्टघनसंघटनम् ।
स्तनमण्डलान्यथ निजप्रभवद्विपकुम्भभक्तित इवाभ्यसरत् ॥ १९ ॥

दृष्टा घना संघटना यत्राभिसरणे एवं कृत्वा दिव्यस्त्रीजनस्य स्तनमण्डलानि नवमौक्तिकपङ्क्तिरभ्यसरत् । अतः संभाव्यते—निजस्य मौक्तिकानां प्रभवः कारणं ये द्विपकुम्भास्तेषु भक्तित इव, तेषां भक्तितः शोभातो वा । एतेन स्त्रीणां तारुण्यं सूचितम् ॥

मुखवाससौरभहृतभ्रमरप्रततेप्सितस्थिति कपोलतलम् ।
पुरुषायितेषु पटिमस्पृहया धृतकूर्चलेखमिव काप्यवहत् ॥ २० ॥

कापि कपोलतलं मुखवासस्य कर्पूरादेः सौरभेण हृता आकृष्टा ये भ्रमरास्तैः प्रततं कृत्वेप्सिता काङ्क्षिता स्थितिर्यत्र तदवहत् । अतः संभाव्यते—पुरुषायितेषु पुरुषोचितेषु कर्मसु पटिमस्पृहया पौरुषाभिलाषेण धृता कूर्चलेखा श्मश्रूद्भेदो येन तदिव ॥

नवपद्मरागलतया सविधं तरुणीजनोऽलमकरोत्कुचयोः ।
यदभीशुभिः सकलमेव वपुर्घुसृणाङ्गरागनिरपेक्षमभूत् ॥ २१ ॥

स्त्रीलोकः स्तनयोर्निकटं नवया पद्मरागलतयालमकरोदभूषयत् । यस्याः पद्मरागलतिकाया रश्मिभिर्हेतुभिः सकलमेव शरीरं कुङ्कुमाङ्गरागनिःस्पृहमभूत् ॥

असितः शिखामणिरथेतरया विनिचिक्षिपेऽलिकसमीपभुवि ।
प्रियपाणिकर्षणमवापि मुधा यदभीशुभिः कचभरभ्रमतः ॥ २२ ॥

इतरयालिकस्य ललाटस्य निकटे नीलं चूडारत्नं बद्धम् । यस्य शिखामणे रश्मिभिः प्रियपाणिना कर्षणं ग्रहणं मुधायुक्तमवापि प्राप्तम् । कुतः । कचभर इत्यर्थात्प्रियस्य भ्रमो भ्रान्तिस्ततः । भ्रमयोगादेव मुधात्वम् ॥

निबबन्ध काचन चिराय वधूररुणोपलाङ्गदमनङ्गवती ।
प्रकटीबभूव यदभीशुनिभाद्भुजवल्लरीकिसलयाभ्युदयः ॥ २३ ॥

चिरायानङ्गवती संकल्पितोपभोगा काचन पद्मरागबाहुपट्टं निबबन्ध । यस्याङ्गदस्य रश्मिव्याजाद्भुजवल्ल्योर्बाहुलतयोः किसलयाभ्युदयः पल्लवोद्भेदः प्रकटीबभूव । तद्रश्मियोगात्समस्तोऽपि भूषितोऽभूदित्यर्थः ॥

मणिकाञ्चिरञ्चितविलोचनया रभसादबध्यत ततोऽपरया ।
न यदंशुनिह्नुतनितम्बतया भवति ह्रियो रतिषु सा विषयः ॥ २४ ॥

अञ्चिते सुरतावसरे लज्जाविषयत्वाभावादानन्देन विस्तीर्णे लोचने यस्यास्तया मणि-

काञ्चिरबध्यत बद्धा । यस्याः काञ्चनांशुभिर्निह्नुतं छादितं नितम्बं गुह्यस्थानं यस्य तद्भावेन हेतुना सुरतेषु लज्जाया विषयः स्थानं सा न भवति ॥

लटभाललाटफलकं सकलद्विजराजकान्तिहठलुण्ठनकृत् ।
पुरतः प्रलम्बकुरलच्छलतस्त्रपयाकरोन्मुखपटग्रहणम् ॥ २५ ॥

लटभाया विदग्धाया ललाटफलकं भालपट्टं मुखपटस्वीकारमकरोत् । कुतः । प्रलम्बं दीर्घकेशत्वाल्लम्बमानं यत्कुरलमलकरचनाविशेषस्तद्व्याजात् । अत्र प्रतीयमानहेतूत्प्रेक्षा । त्रपया यतः पुरतोऽग्रे सकलः पूर्णः सकलाः समस्ताश्च, द्विजराजश्चन्द्रो ब्राह्मणाश्च, तत्कान्तेर्हठेन लुण्ठनं करोति ॥

ऋजुतूलिकाग्रविनिवेशिगलद्बहलाञ्जनव्यतिकरक्रमतः ।
प्रकटीविधातुमिव केलिपथं पपिरे तमांसि नयनैः सुदृशाम् ॥२६॥

ऋजुरकुटिला या तूलिका शलाका तदग्रे विनिवेश्यनन्तरं गलद्बहुलं यदञ्जनं तस्य व्यतिकरः संसर्गस्तत्क्रमान्नयनैस्तमांसीव पपिरे । केलिपथमभिसरणमार्गं प्रकटीकर्तुम् । नेदमञ्जनं किं त तमांसीव नयनैः पीतानीत्यर्थः ॥

घटितप्रलम्बतरहारलतं मणिमेखलाकिरणजालसखि ।
उदरं द्वयोरपि दिशोः सुदृशां श्रमतो विनान्वभवदाभरणम् ॥२७॥

उपरिष्टाद्घटिता प्रलम्बतरा हारलता यस्य तथाधस्तान्मणिमेखलायाः किरणजालस्य सखि परिचितं द्वयोरपि दिशोरुपर्यधश्चोदरं श्रमतो भूषाविषयादायासाद्विनाभरणमन्वभूत् ॥

स्तनभारहारबहुवर्णमणिस्रगभीशुवर्तिभिरधीरदृशाम् ।
रतिकान्तचित्रकृदुरःफलके व्यतनोदिव स्वमतचित्रलिपिम् ॥२८॥

स्तनभारे हारस्तत्र बहुवर्णा या मणिस्रजस्तासामभीशव एव वर्तयस्तूलिकास्ताभिः स्त्रीणामुरःपट्टे स्मरचित्रकरः स्वमतां चित्रां लिपिमिवालिखत् ॥

अपरा ससौरभवतंसघनस्तबकात्तसंस्तवकलैरलिभिः ।
कुलबालिका प्यधित वक्त्रपथं सहसेव नीलपटजालिकया ॥ २९॥

ससौरभा वतंसभूता ये स्तबकास्तेष्वात्ता गृहीता संस्तवकला परिचयविच्छित्तिर्यैस्तैरलिभिर्हेतुभिः परा कुलबालिका नीलपट एव जालिका जालसदृशमच्छं वस्त्रं तया मुखमार्गं प्यधिताच्छादयत् ॥

उररीचकार सुरवारवधूचिकुरोत्करानगुरुधूमभरः ।
घटनात्तदर्थिमधुपायिततेरनुवध्यमानविनिवेश इव ॥ ३० ॥

अगुरुधूमभरो दिव्यस्त्रीकचान्स्वीकार्यत्वेनाङ्गीकृतवान् । तस्यागुरुधूमस्यार्थिनः स्पृह-

यालवो ये मधुपायिनो भ्रमरास्तेषां ततः पङ्कघटनात्संसर्गादनुबध्यमानोऽनुबन्धेनाश्रीयमाणो विनिवेशोऽर्थादगुरुधूमस्यैव संस्थानमिव ॥

वरयोषितः कुचतटे दयितो विहितप्रयत्नमकरोन्मकरीः ।
सहसा तदग्रकरसङ्गभवं विममार्ज तास्तु घनघर्मपयः ॥ ३१ ॥

दिव्यस्त्रियः स्तनतटे बहुप्रयत्नं कृत्वा प्रियो मकरीरलिखत् । तस्य दयितस्याग्रकरस्तत्सङ्गेन सात्त्विकभावरूपतयोत्पन्नं घनघर्मजलं ता मकरीर्विममार्जोदपुंसयत् ॥

दयिते विलोकयति कापि कुचौ ह्रियमेत्य कञ्चुलिकया पिदधौ ।
अमृतं ववर्ष तु तदुन्नतितस्त्रुटिमेत्य सापि बत तस्य दृशोः ॥३२॥

प्रिये पश्यति सति लज्जां प्राप्य कापि कञ्चुलिकया स्तनाच्छादकवस्त्रविशेषेण स्तनावपिदधावाच्छादयत् । अथ तयोः स्तनयोरुन्नतित औन्नत्यात्त्रुटिं ग्रन्थिच्छेदमेत्य सा कञ्चुलिका प्रियदृशोरमृतमवर्षयत् । एकरूपतार्थे द्विरेत्यशब्दो विस्मयाय च बतशब्दः प्रयुक्तः ॥

इतरा निसर्गहठगौरतनूर्मृगनाभिपङ्कममुचत्कुचयोः ।
भयतश्चचाल मुहुरक्षियुगं दयितस्य गाढविनिमग्नमिव ॥ ३३ ॥

निसर्गेण हठेन गौरी तनूर्यस्या इतरा कुचयोः स्तनोपरि मृगनाभिपङ्कममुचत् । यतः कुचसकाशादक्षियुगं न चचाल । अतः संभाव्यते—गाढं विनिमग्नमिव । पङ्किलत्वात् ॥

अपरामराग्र्यसुतनोः श्रमतो विहितोऽपि भूषणविशेषविधिः ।
कृतनिह्नवो निजशरीरहठप्रसृतप्रभाभरवशादभवत् ॥ ३४ ॥

अपराया अमराग्र्यसुतनुर्देवस्त्री तस्याः प्रयत्नेन कृतोऽपि भूषणविधिर्निजमर्थाद्देवस्त्रियो यच्छरीरं तस्माद्धठेन प्रसृतः स्फुरन्यः प्रभाभरस्तद्वशात्कृतनिह्नवोऽभूत् ॥

रशनां च नूपुरयुगं च परा परिहृत्य भूषणमुखे मुखरम् ।
स्फुटतां निनाय दयिताभिसृतिप्रणयस्पृहामधिविदग्धसखि ॥३५॥

भूषणारम्भे रशनां नूपुरद्वयं च वर्जयित्वा दयितस्य कर्मभूतस्य याभिसृतिरभिसरणं तस्य प्रणयस्तत्र स्पृहामभिलाषं स्फुटत्वं निनाय प्रकटीचकार । अधिविदग्धसखि विदग्धसख्याम् । यतो मुखरं सशब्दम् । रशनानूपुरपरिहारवशाद्विदग्धसख्या ज्ञातमियमभिसरणप्रवृत्तेति ॥

करणेषु यात्सु हठविक्लवतामवधानतः प्रचलिते मनसि ।
दयितेऽभ्युपेयुषि न वेषविधिश्चलचक्षुषां किमपि सिद्धिमगात् ॥३६॥

कान्तेऽभ्युपेयुषि प्राप्तवति सति करणेषु चक्षुरादिषु हठेनात्यर्थं विक्लवतां स्वविषयग्रहणाक्षमत्वं यात्सु गच्छत्सु सत्सु तथा समाहितत्वान्मनसि चलिते सति चले प्रियागमनात्स्वभावश्च चक्षुषी यासां तासां वेषविधिः सिद्धिं नागान्नासिध्यत् ॥

विबुधावरोधनमुखैरमलस्फटिकात्मदर्शकृतसंक्रमणैः।
विदधे परस्परमथो बहुशः परिरम्भणं कमलचन्द्रमसोः॥ ३७॥

अमलः स्फटिकमयो य आत्मदर्शो दर्पणस्तत्र कृतं संक्रमणं प्रतिबिम्बनं यैस्तैर्दिव्यस्त्रीमुखैः पद्मचन्द्रयोरालिङ्गनं विदधे कारितम्। स्फटिकादर्शश्चन्द्रसमः स्त्रीमुखप्रतिबिम्बं पद्मसममित्यर्थः। 'अथो' इत्यस्य स्थाने 'अहो' इति पठनीयम्। पद्मचन्द्रयोर्ह्यन्योन्यमालिङ्गनमाश्चर्यम्॥

गुरुसंभ्रमा प्रियतमागमनादपहाय काप्यलमलक्तरसम्।
प्रसरद्रुचोर्व्यधित पादयुगं मृदुपद्मरागमणिनूपुरयोः॥ ३८॥

प्रियतमस्यागमनात्संभ्रमवती। अतोऽलक्तकरसं परिवर्ज्य स्फुरत्कान्त्योः कोमलपद्मरागमञ्जीरयोर्विषये पादद्वयं निहितवती। नूपुरद्युतिभिरेवालक्तककार्यकरणात्। मृद्विति पादयुगविशेषणं वा॥

युवधैर्यकुट्टनगृहीतरसस्मरकीर्यमाणकरकौघरुचा।
त्रिदिवारविन्दवदनानिवहः समयुङ्क्त मौक्तिकभरेण कुचौ॥ ३९॥

यूनां धैर्यं मानस्तस्य कुट्टनं ताडनं तत्र गृहीतरसः प्रवृत्तो यः स्मरस्तेन कीर्यमाणो यः करकौघो वर्षोपलास्तद्वद्रुग्यस्य तेन मुक्तादाम्ना दिव्यस्त्रीवर्गः स्तनौ संयोजितवान्॥

कनकं निमज्जति शरीररुचाविति कापि गौरतनुरीक्ष्य चिरम्।
परभागलाभकृतसंवननैः स्वमभूषयन्मरकताभरणैः॥ ४०॥

कनकं गौरत्वाच्छरीरकान्तौ निमज्जति परभागं न लभत इति विचार्य कापि गौराङ्गी मरकतभूषणैः स्वात्मानमभूषयत्। यतो गौरतनुत्वात्परभागलाभेन कृतं संवननं वशीकरणं यैस्तैः॥

लटभाजनस्य पटुहारलताविनिवेशनाधिगतकान्तिधनम्।
प्रतिबिम्बितोऽधितरलं रमणो द्विगुणं व्यमण्डयदशेषमुरः॥ ४१॥

तरलो हारमध्यगो मणिस्तत्र प्रतिबिम्बितो रमणः स्त्रीजनस्य वक्षो द्विगुणं व्यमण्डयदभूषयत्। पटुर्या हरलता तस्यां विनिवेशनमाभरणीकरणं तेन हेतुनाधिगतं प्राप्तं कान्तिरेव धनं येन। तरलवद्दयितोऽपि प्रतिबिम्बितो वक्षोऽभूषयदित्यर्थः॥

लावण्यदुग्धजलधेरधरप्रवाल-
सख्यस्पृशो दशनमौक्तिकपङ्क्तिबन्धोः।
व्यक्तेव सीकरततिर्वदनेन्दुयोगा-
त्सीमन्तवंशजलता रुरुचेऽङ्गनानाम्॥ ४२॥

अङ्गनानां सीमन्तेषु केशेषु वंशजलता मौक्तिकसीमा रुरुचे। संभाव्यते—लावण्य-

मेव दुग्धजलधिः क्षीरसमुद्रस्तस्य कणमालेव । अधरस्यारुणत्वात्प्रवालो विद्रुमस्तस्य सख्यं परिचयं स्पृशति, तथा दशना एव मौक्तिकानि तेषां पङ्क्तिस्तस्या बन्धोः संयोगभाजः । मुखचन्द्रात्प्रकटीभूता । नेयं मुक्तालता किं तु लावण्यसमुद्रस्य बिन्दुपङ्क्तिरित्यर्थः ॥

पर्युच्छ्वसन्मकरकेतुरसा निसर्गा-
दुद्यत्पयोधरभरा च तनुर्वधूनाम् ।
आसाद्य कङ्कणविशेषमहो चकार
प्रेयोजनस्य नयनद्वयमुत्पिपासम् ॥ ४३ ॥

निसर्गात्पर्युच्छ्वसन्स्फुरन्मकरकेतुरसः कामरसो यस्याः सा, उद्यंस्तुङ्गः पयोधरभरः स्तनभरो यस्याः सा, वधूनां तनुः कङ्कणानां वलयानां विशेषमासाद्य प्रेयोजनस्य प्रियवर्गस्य नयनद्वयमुत्पिपासं दर्शनलम्पटं चकार । अहो आश्चर्यद्योतकम् । मकरकेतोः समुद्रस्य रसः स्फुरन्यस्याः, तथोद्यन्पयोधरभरो मेघाडम्बरो यस्याः कामो जलस्य कणानां विशेषमासाद्योत्पिपासमुद्गततृष्णं करोति ॥

इत्थं तत्क्षणकल्प्यमानविविधाकल्पाञ्चितैरङ्गकैः
काञ्चीकङ्कणनूपुरादिरणितान्येणीदृशस्तेनिरे ।
तत्कोलाहलमाकुलत्वमनयन्नादोऽलिनां चाधिक-
क्रीडासंभ्रमलोलकुन्तलवसद्वासन्तिकावन्दिनाम् ॥ ४४ ॥

एवं तत्क्षणकल्प्यमानः परिधीयमानो विविधो य आकल्पो नेपथ्यं तेनाञ्चितैः पूजितैरङ्गकैरनुकम्पनीयैरङ्गैः काञ्ची च नूपुरं च कङ्कणानि च तदीयं शब्दं स्त्रियश्चक्रुः । अधिकः क्रीडाविषयो यः संभ्रमस्तेन लोला ये कुन्तलाः केशास्तेषु वसन्त्यो या वासन्तिकास्तासां वन्दिनां सौरभख्यापकानामलिनां नादस्तेषां काञ्च्यादीनां कोलाहलमाकुलत्वमनयन्मुकुलीकृतवान् ॥

घनसहजशरीरद्योतकल्माषभूषा-
मणिकिरणतरङ्गैरावहन्मांसलत्वम् ।
तनुतरमपि वासो नाङ्गकान्यङ्गनानां
दयितदृशि कथंचिद्व्यक्ततामानिनाय ॥ ४५ ॥

तनुतरमच्छमपि वासः कर्तृ अङ्गनानामङ्गकानि दयितदृशि कान्तदृष्टौ व्यक्ततां न निनाय । दर्शनलुब्धा अपि कान्ताः कान्ताङ्गं तनुवस्त्रावृतमपि नापश्यन्नित्यर्थः । यतो मांसलत्वं पीनतामावहत् । कैः । घनः सहजो यः शरीरद्योतः कान्तिस्तेन कल्माषाश्चित्रा ये भूषामणिकिरणतरङ्गास्तैः ॥

अन्योन्यमच्छमणिभूषणमालिकासु
मध्येसभं प्रतिफलद्वपुषः पुरंध्रीः ।

औत्सुक्यतश्च तुरमेत्य तदा न नाम

सम्प्रत्यभिज्ञमविदन्दयिताः प्रतिस्वम् ॥ ४६ ॥

तदौत्सुक्यतोऽर्थात्पुरंध्रिष्वेवोत्कण्ठया द्रुतमेत्य कान्ताः प्रतिस्वं स्वस्वसंबन्धिनीः पुरंध्रीः प्रत्यभिज्ञानेन सह नाविदन्नाजानन्। इयं मे प्रियेति नाज्ञासिषुरित्यर्थः। यतो मध्येसभं स्थिताः, अत एवान्योन्यं प्रतिफलद्वपुर्यासां ताः। अन्यासां भूषणरत्नेष्वन्याः प्रतिबिम्बिता इति यथास्वं स्त्रियो दयिता न प्रत्यभिज्ञासिषुरित्यर्थः॥

कासांचित्समभून्नवीनमगमत्कासांचन व्यक्तता-

मन्यासां ववृधे विनिह्नुतमभूत्कासांचनाकृत्रिमम्।

जात्यैवाधममध्यमोत्तमतया सौन्दर्यलेखालिपे-

राकल्पेन शरीररूपलहरीतत्त्वं चकोरीदृशाम् ॥ ४७ ॥

चकोरीदृशां रामाणां शरीरस्य रूपं लावण्यादि तस्य लहर्य उल्लासास्तस्य तत्त्वं सारं कासांचित्स्त्रीणां नवोनं समभून्नवं जातम्। केन। आकल्पेन वेषेण। कान्तिरहितानां वेषेण कान्तिर्जातेत्यर्थः। कासांचिद्व्यक्ततां प्रकटत्वं रूपं वेषेणागमत्। अन्यासां वेषेण रूपं ववृधे वृद्धिं गतम्। कासांचनाकृत्रिमं सहजं रूपं वेषेणापह्नुतमभूत्। कया। जात्यैव निसर्गेणैव सौन्दर्यस्य सौभाग्यस्य लेखा तस्या लिपिर्विच्छित्तिस्तस्या अधममध्यमोत्तमतया। अधमप्रकृतीनां नवं सौभाग्यं वेषेण जातम्, मध्यमप्रकृतीनां सौभाग्यं वृद्धिं गतम्, उत्तमप्रकृतीनां नवं सौभाग्यं वेषेणाच्छादितमित्यर्थः॥

इत्थं तत्र विचित्रमण्डनविधिं निर्वर्त्य वामभ्रुवः

स्वाकारार्पणभङ्ग्यनुग्रहपदं द्राग्दर्पणं तत्यजुः।

साफल्यं प्रसरत्सु वृत्तगतिषु स्वच्छत्वबन्धुष्वथो

संक्रान्त्या प्रियमानसेषु तु निजाकल्पश्रियं निन्यिरे ॥ ४८ ॥

तत्र कैलासे विचित्रो यो मण्डनविधिर्भूषणविधानमेवं निर्वर्त्य संपाद्य स्वाकारस्य निजशरीरस्यार्पणभङ्गिः प्रतिबिम्बमुखेन प्रतिपादनं सैवानुग्रहः प्रसादस्तस्य पदं स्थानं दर्पणं तत्यजुः। दर्पणे स्वं रूपं दृष्ट्वा तं तत्यजुः। प्रसरन्ती सुवृत्ता सानुरागा दर्पणस्थानीयत्वाद्वर्तुला च गतिर्येषाम्, तथा स्वच्छत्वस्य बन्धुषु प्रियचित्तेषु संक्रान्त्यावेशेन प्रतिबिम्बनेन वेषश्रियं सफलतां निन्यिरे। वेषभूषिताः प्रियाणां चित्तमविशन्नित्यर्थः॥

तत्राकल्पमनल्पमादृततया संतन्वतीनां स्मर-

स्वाराज्याद्भुतविभ्रमप्रतिभुवां नाकेसदेणीदृशाम्।

तासां केलिकलाविलोलकबरीभाराग्रवासन्तिका-

सौगन्ध्यातिथिभिः शुभं शुभमितीवावादि मत्तालिभिः ॥४९॥

आद्दततया सादरं महान्तं वेषं कुर्वतीनाम्, अत एव स्मरस्य स्वाराज्ये स्वर्गराज्यविषयेष्वद्भुतेष्वपूर्वेषु विभ्रमेषु क्रीडासु प्रतिभुवां लग्नकानां देवस्त्रीणां संबन्धी क्रीडाविच्छिरया विलोलो यः कबरीभारस्तदग्रे वसन्त्यो या वासन्तिका लताभेदास्तासां सौगन्ध्येऽतिथिभिरर्थिभिर्मत्तालिभिः समदैर्भ्रमरैः शुभं शुभमितीवादि कथितम् ॥

काचित्तत्र विमुद्रपङ्कजमुखी सौभाग्यभाग्यावधि-
　　र्बिभ्राणं हठकष्टरक्षितनिजाकल्पैकपात्रं वपुः ।
प्रेमव्याकुलकान्तकेलिकलहप्रोन्मृज्यमानाखिल-
　　क्रीडामण्डनडम्बरा व्यजयतायत्नात्सपत्नीजनम् ॥ ९० ॥

सौभाग्यभाग्यानामवधिः । अतिसौभाग्यभाग्येत्यर्थः । अत एव प्रेम्णा रागेण व्याकुलो यः कान्तस्तस्य केलिकलहो रतरणस्तेन प्रोन्मृज्यमानो गलितः क्रीडामण्डनडम्बरोऽङ्गरागादिर्यस्याः सा काचित्सपत्नीवर्गं व्यजयत पराभवत् । यतो हठेन कष्टेन रक्षितो गुप्तो निजो य आकल्पस्तस्यैकपात्रं वपुर्बिभ्राणम् । दौर्भाग्याभाग्यभाजमित्यर्थः ॥

निर्वर्त्येत्थं प्रथमसुहृदं मान्मथप्रक्रियाणां
　　तास्तन्वङ्ग्यो विविधमधुरोल्लेखतो वेषशेषम् ।
हेलाखेलत्प्रियकरतलन्यस्तहस्तारविन्दाः
　　क्रीडोद्यानावनितिलकतां कौतुकादध्यरुक्षन् ॥ ९१ ॥

तास्तन्वङ्ग्यः क्रीडोद्यानावनौ तिलकतां भूषणत्वमाश्रयन् । हेलया खेलन्तः क्रीडन्तो ये प्रियास्तेषां करतले न्यस्तं हस्तारविन्दं याभिस्ता मान्मथप्रक्रियाणां कामप्रकाराणामाद्यं सुहृदं वेषशेषं निर्वर्त्य संपाद्य विविधो मधुरो य उल्लेखस्तस्मात् । 'हेलाखेद' इति वा पाठः ॥

बिभ्राणा घनरागयोगलहरीं भृङ्गावलिप्रीणन-
　　प्रौढाकृत्रिमसंसरत्परिमला गीर्वाणवामभ्रुवाम् ।
व्यालोलप्रथमाननेत्रचषकैरापीयमाना चिरं
　　तत्र स्वस्त्वविलासिनां समजनि प्रीत्यै प्रसन्ना तनुः ॥ ९२ ॥

दिव्यस्त्रीणां तनुः स्वश्शृङ्गारिणां प्रीत्यै हर्षाय समजनि जाता । यतो घनो यो रागः कुङ्कुमादिकृतोऽभिष्वङ्गो वा तद्योगं बिभ्राणा । तथा भृङ्गावलेः कामुकपक्षे भ्रमरमालायाश्च प्रीणने तोषणे प्रौढः प्रगल्भोऽकृत्रिमः संसर्पन्परिमलो यस्याः । तथा व्यालोलाः प्रथमाना ये नेत्राण्येव चषकास्तैरापीयमाना प्रसन्ना प्रसादवती, अथ च प्रसन्ना सुरा प्रीत्यै जाता । तत्पक्षे रागः स्वाभाविकः । भृङ्गा रागिणो भ्रमराश्च । सा चषकैः पीयमाना । मुख्येऽर्थे

तनुर्विशेष्या प्रसन्ना विशेषणम् । अन्यत्र विपर्ययः । एतेन वक्ष्यमाणार्थोपक्षेपः कृत इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्वावर्तसूनोर्महाकवि-
राजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
प्रसाधनवर्णनं नाम त्रयोदशः सर्गः ।

---

चतुर्दशः सर्गः ।

अधिवल्लिमण्डपमखण्डमान्मथप्रथमोपदेशगुरु भङ्गुरभ्रुवः ।
अथ वल्लभैः सममभग्नविभ्रमा मधु कर्तुमीषुरधरामृतातिथिम् ॥ १ ॥

वल्लिमण्डपे लतामण्डपे वल्लभैः समं मधु मद्यमधरामृतस्यौष्ठामृतस्यातिथिमर्थिनं कर्तुं भङ्गुरभ्रुवो वक्रभ्रुव ईषुरैच्छन् । मधु यद्योष्ठामृतादूनं तत्किं पानेनेत्याह—अखण्डा मान्मथाः प्रथमे प्रधानानि ये उपदेशास्तेषु गुरु उपदेशकम् । मदवशाल्लज्जापगमे कामातिशयात् । अभग्नविभ्रमाः स्फुरद्विलासाः । ईषुरितीच्छतेर्लिटि रूपम् ॥

पटुगन्धलुब्धमधुपायिधोरणीपरिरम्भणेन बहुला हलिप्रिया ।
मणिकुन्तलेषु ववृतेऽतिलोभतो निजवाससा हलभृतेव गोपिता ॥ २ ॥

रत्नचषकेषु स्थिता हलिप्रिया मदिरा हलभृता हलधरेण स्ववस्त्रेणार्थान्नीलेन करणेन गोपिता रक्षिता पिहितेव ववृतेऽभूत् । केन । पटुगन्धे लुब्धा या मधुपायिधोरणी भ्रमरपङ्क्तिस्तस्याः परिरम्भेण निवेशेन । मैनां कश्चिद्धार्षीदिति हलधरेण स्ववस्त्रेणाच्छादितेव । उत्प्रेक्षयैतया हलधरेणापि तथाविधा मदिरा न पीतेति प्रकाशितम् । हलिप्रियेति नाम प्रकृतानुगुणम् ॥

प्रसरत्प्रभादलतयाग्रढौकिता नवपद्मरागचषकाः सिषेविरे ।
निपतिष्यदासवरसावलेहनस्पृहया प्रसारितरसज्ञतामिव ॥ ३ ॥

अग्रे ढौकिताः प्रापिता नवाः पद्मरागमया ये चषकाः पानपात्राणि प्रसरन्त्यः प्रभा एवारुणत्वाद्दलानि पल्लवा यस्य तद्भावेन हेतुना प्रसारिताः कर्षिता रसज्ञा जिह्वा यैस्तद्भावमिव सिषेविरे । कया । निपतिष्यन्, अर्थाच्चषकेषु, य आसवरसस्तस्मै स्पृहा गृध्नुता तया । अचेतनैरपि चषकैर्मधुस्वादलोभादंशुव्याजेन जिह्वाः कर्षिता इवेत्युत्प्रेक्षया स्वादिष्ठता सूचिता । दीर्घत्वं रक्तत्वं च जिह्वोत्प्रेक्षणे प्रभाणां हेतुः ॥

पृथुभाण्डतोऽन्यलघुभाजनोदरे विनिवेश्यमानविसरः पुरःसरैः ।
अविदूरनिर्जरपुरंध्रिचुम्बनप्रमदादिवोदनददासवद्रवः ॥ ४ ॥

पुरःसरैरग्रवर्तिभिरनुजीविभिः पृथुभाण्डतो घटादेरन्यस्मिँल्लघुनि सूक्ष्मे भाजनोदरे करिकादौ विनिवेश्यमानः पात्यमानो विसरो यस्य स आसवद्रवो मधुप्रवाह उदनददश-

द्वायत । अतः संभाव्यते—अविदूरेऽचिरेण यत्पुरंध्रिभिश्चुम्बनं तेन प्रमदात्तोषादिव । द्रवशब्दस्य पुंलिङ्गत्वात्पुंव्यवहारयोग्यं चुम्बनादि संभाव्यते ॥

परिबभ्रमुर्मधुरगन्धगृध्नवो बहुहारहूरकभृतासु पारिपु ।
अलिमण्डला विपिनदेवतार्पितप्रकटेन्द्रनीलचषकानुकारिणः ॥ ५ ॥

बहु यद्धारहूरकं मधु तेन भृतासु पारिपु पानपात्रेष्वलिमण्डलाः परिबभ्रमुरभ्रमन् । यतो मधुरे गन्धे गृध्नवोऽतृप्ताः । संभाव्यते—वनदेवीभिरर्पिता ये प्रकटा इन्द्रनीलमयाश्चषकाः पानपात्राणिताननुकुर्वन्ति । उपमोपक्रमोत्प्रेक्षेयम् ॥

पृथुशातकौम्भकरिकास्ततस्तदा पुरतस्तरङ्गितदृशामलिस्वनैः ।
उदरस्थितासवतयेव मत्ततामधिगम्य किंचिदलपन्निवास्फुटम् ॥ ६ ॥

स्त्रीणामग्रे पृथवः शातकौम्भ्यः सौवर्ण्यो याः करिका भ्रमररुतैर्हेतुभिः किंचिदविस्फुटं म्लिष्टमलपन्निव । उदरे मध्ये जठरे च स्थित आसवो यस्य तद्भावेन मत्ततां मदमधिगम्य । मत्तश्चास्फुटं प्रलपति ॥

मदिरा चिराय चषकेषु दिद्युते दधती विमुग्धपरिपाटलं महः ।
अविलम्बमम्बुनिधिसंभवक्षणे सकलप्रवालशकलैरिवार्पितम् ॥ ७ ॥

चषकेषु मदिरा दिद्युते । अतः संभाव्यते—अम्बुधेः समुद्रसकाशात्संभवो निर्गमस्तत्क्षणे सकलैः प्रवालशकलैरविलम्बमकालक्षेपमर्पितं दत्तं विमुग्धं पाटलं च तेजश्चिराय दधतीव । वास्तवं लौहित्यं कृत्रिमतया संभाव्यते । समुद्रान्तःसारभूतत्वसूचनार्थम् ॥

प्रतिपादितस्वकतनूरकृत्रिमप्रमदोदयैकविषये शरीरिणाम् ।
शतशः सुरा बहुजनानुरागभूः क न पुष्पवृष्टिघटनोचिताभवत् ॥ ८ ॥

अकृत्रिममदजानन्दकरणाय प्रतिपादिता स्वका आत्मीया तनुर्यया । अत एव बहु कृत्वा जनानुरागस्य भूः स्थानं सुरा शतशः शरीरिणां संबन्धिन्या पुष्पवृष्टेर्घटने योजने उचिता क नाभवत् । अत्र च विशेषणसाम्याद्बोधिसत्त्वचर्या गम्यते । तत्पक्षे च परार्थे शरीरसमर्पणं जनानुरागास्पदत्वं पुष्पवृष्टिविषयत्वं च योजनीयम् । 'नवृतश्च' इति कपमनित्यं केचिदाहुः ॥

दृढमानतन्तुकरपत्रप्रक्रिया नयनद्वयाकृतकलास्यदेशिकः ।
सदसद्विभागकलनामलिम्लुचो मृगचक्षुषामजनि सीधुसंस्तवः ॥ ९ ॥

सुरोणां दृढो यो मानतन्तुस्तस्य करपत्रप्रकारः । तन्तुर्यथा करपत्रेण च्छिद्यते तथा मानस्तेनेत्यर्थः । नयनद्वयस्याकृतकलास्ये सहजघूर्णने देशिक उपदेष्टा । सदसतोर्युक्तायुक्तयोर्यो विभागकला विभजनबुद्धिस्तस्या मलिम्लुचोऽपहारकः । सीधुसंस्तवो मधुपरिचयो मृगचक्षुषां जातः । मानं त्यक्त्वा रामा मदनलीलारता अभवन्नित्यर्थः ॥

मधुडम्बरेण सुमनःशिलीमुखप्रणयोद्धतेन घनरागयोगिना ।
हृदयप्रवेशकलनैकचक्षुना ललनाजनोऽधरदलेष्वचुम्ब्यत ॥ १० ॥

सुमनःसु पुष्पेषु शिलीमुखा भ्रमरास्तेषां प्रणयस्तेन हेतुनोद्धतेन । घनरागस्य बहुशोणत्वस्य योगिना । तथा हृदये उदरे प्रवेशरचना पानद्वारेण (?) तयैकचक्षुर्वित्तस्तेन मधुडम्बरेणौष्ठपल्लवेषु स्त्रीजनोऽचुम्ब्यत स्पृष्टः । अत्र समासोक्त्या कामिभावावगतिः । तत्पक्षे सुमनःशिलीमुखः पुष्पेषुः कामः । रागोऽभिष्वङ्गः । हृदयं मनः ॥

मणिकुट्टिमप्रतिमितं पुरोऽपरा शशिमण्डलं हरिणशारितोदरम् ।
मधुपानकेलितरला धृतोत्पलस्फटिकाश्मकुन्तलधिया व्यलोकयत् ॥ ११ ॥

पुरोऽग्रे मणिकुट्टिमे रत्नभूभागे प्रतिमितम्, तथा हरिणेनाङ्कमृगेण शारितं शबलितमुदरं मध्यं यस्य तच्छशिबिम्बमपरा धृतोत्पलः स्फटिकाश्मकुन्तल इति धीस्तया व्यलोकयत् । इदं सोत्पलं स्फटिकपानपात्रमित्यपश्यत् । यतो मधुपानकेलौ तरला लम्पटा । मधुपानकेल्या तरला घूर्णिता विचाररहिता वा ॥

रसना सुपर्वसुदृशां प्रयत्नतो रसमासवस्य शनकैरबुध्यत ।
ननु नासिकापरिमलोच्चुलुम्पनादजनिष्ट तत्प्रथमभोगभागिनी ॥ १२ ॥

सुपर्वणां देवानां संबन्धिनीनां सुदृशां स्त्रीणां रसना जिह्वा चिरायत्नेन मद्यस्वादमजानात् । आसवस्य परिमलो विमर्दोत्थगन्धस्तस्योच्चुलुम्पनादाघ्राणान्नासिका तस्यासवस्य प्रथमं रसनेन्द्रियात्पूर्वमेव भोगभागिनी जाता ॥

निपतन्विलासमणिभाण्डमण्डले नवकापिशायनरसोऽन्ववर्तत ।
घटिताङ्गरागरतिनाथपार्थिवप्रथमाभिषेकसलिलच्छटालिपिम् ॥ १३ ॥

विलासार्थं मणिमयं यद्भाण्डमण्डलं तत्र निपतन्नवो यः कापिशायनरसो मद्यं घटिताङ्गरागस्य रतिनाथपार्थिवस्य कामचक्रवर्तिनः प्रथमं यदभिषेकजलं तद्भङ्गिमवापत् । सर्व एव कामाज्ञामग्रहीषुरित्यर्थः ॥

किमपीन्द्रजालमहह प्रसन्नया विदधे तया सदसि वामचक्षुषाम् ।
विनिपत्य सानवरतं हि कुम्भकाच्चषकान्तरे व्यधित वर्षविभ्रमम् ॥ १४ ॥

प्रसन्नया सुरया स्त्रीसभायां किमपीन्द्रजालं कृतम् । कुम्भकाद्घटादविच्छिन्नं चषकस्यान्तः पतित्वा वृष्टिभ्रमं व्यधात् । अथ च कालांशरूपस्य चषकस्य मध्ये वर्षस्य संवत्सरस्य विभ्रममकरोदिति विरोधच्छाया ॥

अतिदीर्घया सरलया च दूरतो मधुधारयाधिमणिकेलिकुन्तलम् ।
भ्रमतः स्ववर्त्मनि दधेऽङ्गनागुरोरवलम्बविद्रुमविलासयष्टिता ॥ १५ ॥

मणिमये लीलाचषके द्राघीयस्या सरलया मधुधारया दूरतः पतित्वा स्वर्गमार्गे संच-

रतः कामस्यालम्बार्थमाधारार्थं विद्रुममयी प्रवालप्रकृतिर्विलासयष्टिस्तद्भावः कृतः । मधुधाराबलेन कामः सर्वत्र सुखमचरिष्टेत्यर्थः । गुरुशब्देन भ्रमणासामर्थ्यं सूचितम् ॥

मदिरारसस्य किमतः परं वयं प्रथयामहे प्रकटचाटुकक्रमम् ।
अपि योऽन्वमोदि सुदृशामविप्लुतद्विजमध्यजन्मसुहृदा रसज्ञया ॥ १६ ॥

अतः परमस्मादप्यन्यं प्रकटचाटुकक्रमं व्यक्तां स्तुतिं वयं किं प्रथयामहे वर्णयामः । अविप्लुता निर्दोषा दुराचाररहिताश्च ये द्विजा दन्ता ब्राह्मणाश्च तन्मध्ये जन्मोत्पत्तिस्तत्सुहृदा । जातयेत्यर्थः । रसज्ञया जिह्वया । अकारप्रश्लेषेणारसज्ञया स्वादानभिज्ञया चान्वमोदि चर्वितः । अपिर्विरोधद्योतकः । 'नयम्' इति पाठे प्रतिपत्तिगौरवं स्यात् ॥

मुखपङ्कजस्य सविधेऽधिकाधिकप्रसवाङ्कितं किमपि कापिशायनम् ।
स्पृशतां वधूसदसि पुष्पपायिनां बत तत्क्षणं शुभपरम्पराभवत् ॥ १७ ॥

मधुपायिनां भ्रमराणाम् । बताश्चर्ये । तत्क्षणाच्छुभपरम्परा मङ्गलपङ्क्तिः किमप्यचिन्त्यतयाभवत् । यतो मुखपद्मस्य निकटेऽधिकतरपुष्पैः शोभितं मद्यं स्पृशताम् । पद्मपुष्पमदिरादिपरिमलास्वादलाभाच्छुभपरम्पराप्राप्तिः ॥

दयिताः स्तनस्तवकशालिनीः शनैरवलम्ब्य मञ्जुतरगीतिकेलिषु ।
मधुपत्वमाचरितवत्सु पप्रथे तरुणेषु भृङ्ग इति सार्थकं वचः ॥ १८ ॥

स्तना एव भ्रमरानुगुण्यात्स्तवकास्तैः शोभिता दयिता अवलम्ब्य मधुरगीतिकेलिषु लीलासु । तथा मधु मद्यं पुष्परसश्च तत्पिबति तद्भावं कुर्वत्सु तरुणेषु भृङ्ग इति वचः सार्थकं सकलेष्वर्थेषु पप्रथे प्रसिद्धिमगमत् । भृङ्गशब्दस्य हि द्वावर्थौ प्रसिद्धौ, कामी भ्रमरश्च । तत्र कामित्वात्तरुणानां भृङ्गनामासीत् । तदा तु मधुपत्वादिधर्मित्वात्सर्वार्थप्रतिपादको भृङ्गशब्द आसीत् । सार्थकमिति 'अव्ययं विभक्ति–' इत्यव्ययीभावः ॥

परिपीयमानमदिरोर्मिलीलया द्रुतसान्द्रमानरजसो मृगीदृशाम् ।
वदनाध्वना विविशुरन्तरं भरात्सशरीररागरसनिर्झरा इव ॥ १९ ॥

सशरीरा मूर्ता रागरसप्रवाहा इव मृगीदृशामुदरं मुखमार्गेण विविशुः । परिपीयमाना ये मदिरोर्मयस्तद्व्याजेन । यतो द्रुतं विगलितं सान्द्रं मान एव रजो यैः । मद्यपानेन माने नष्टे स्त्रियः सरागा जाता इत्यर्थः ॥

नतशातकुम्भकलशीमुखाच्च्युतं वलमानमग्रकरभाजि कुन्तले ।
सुतनोर्मुखामृतरुचेरुपेयुषो व्यधित प्रदक्षिणमिवान्तिके मधु ॥ २० ॥

पानार्थमुपेयुषः स्त्रीमुखेन्दोर्मधु प्रदक्षिणमिव चक्रे । यतो नतहेमकरिकाग्रात्पतितम् । चषके आवर्तमानम् । महतः प्रदक्षिणं युक्तम् ॥

ललनाननाग्रकृतसङ्गसंगलद्घनहारहूरकमनोहरस्थितिः ।
चषकान्तरागतवती तदा तुलां बकुलेन बालसहकारसंहतिः ॥ २१ ॥

ललनानां स्त्रीणामाननाग्रे कृतसङ्गं प्रविष्टम्, तदनु मदवशात्संगलन्निपतद्धनं महावीर्यं यद्वारहूरकं [मद्यं] तेन मनोहरा चषकान्तः पात्रमध्ये स्थितिर्यस्याः सा नवसहकारपङ्क्तिर्बकुलेन सदृश्यभवत्। बकुलस्य हि स्त्रीगण्डूषेण सौगन्ध्यं चषके नैव जायते। 'सर्वपश्चात्' इति भाष्यकारवचनादव्ययेन समासप्रतिषेधाभावः॥

कटचीनपिष्टघटनाविपाटलस्मरगन्धसिन्धुरमदच्छटामिव।
मदिरां समेत्य बहुभृङ्गसंहतिर्निपपौ स्फुरन्मधुरगीतनिक्कणम्॥ २२॥

समेत्य संयुज्य भृङ्गसंहतिर्भ्रमरमाला कामिपङ्क्तिश्च स्फुरन्मधुरौ गीतनिक्कणौ यत्रैवं कृत्वा मदिरां पपौ। अतः संभाव्यते—कटे गण्डे चीनपिष्टं सिन्दूरं तस्य घटना तया विपाटलो यो मदनमदहस्ती तस्य यो मदस्तस्य च्छटा प्रवाहस्तामिव॥

चषकः सपीतिसमये युयोषितां बहिरप्युपोढमधुसीकरोऽरुचत्।
मृदुतत्कराग्रपरिमर्शवैकृतप्रथमानघर्मकणसङ्गवानिव॥ २३॥

सपीतिः संभूय पानं तत्समये बहिरपि करिकातो निपतनसमये परिकीर्णकणत्वाद्बहिर्धृतमधुकणश्चषकोऽभूत्। मृदु यत्कराग्रं युयोषित्पाणिस्तस्य परिमर्शस्तेन वैकृतं प्रकृतिप्रच्यावस्तेन प्रथमानो घर्मकणसङ्गो विद्यते यस्य स इव॥

वदनं विशन्मृगदृशां सुराभरः शुशुभेऽग्रसङ्गिघनभृङ्गसंहतिः।
अधरामृतासवरसाद्भुतेक्षणत्रपया पुरो मुखपटं वहन्निव॥ २४॥

अग्रसङ्गिनी पुरोवर्तिनी घना भृङ्गसंततिर्यत्रैवं स्त्रीणामास्यं विशन्सुराभरो मुखप्रवेशावसरेऽधरामृतमेवासवरसाद्भुतमपूर्वमद्यरसस्तस्येक्षणं तेन त्रपया पुरो मुखपटं वक्त्राच्छादनपटं वहन्निव शुशुभे। अधरामृतमित्यध्यवसानम्। अमृतमिवेत्यमृतमिति वोपमानाददोषः। न्यूनगुणेनाप्यासवेनाधरामृतस्य रूपणं सजातीयत्वप्रतिपत्त्यर्थम्। सजातीयाधिकगुणदर्शनाल्लज्जमानः परश्च तमधिकगुणमुखपटलं वहति प्रविशति (?)॥

परिपीतसर्वमदिरारसोऽप्यहो गणमुग्धया कनककेलिकुन्तलः।
परिपूर्ण इत्यविरमान्निजाधरद्युतिसंस्तवो न सुचिरं व्यमुच्यत॥ २५॥

परिपीतो निपीतः सर्वः समस्तो मदिरारसः सीधुरसो यस्मात्सोऽपि कनकमयः केलिकुन्तलः क्रीडाचषकोऽयमर्थान्मदिरया परिपूर्ण इत्यतो गणमुग्धया सुचिरं न व्यमुच्यत। यतोऽविरमन्ननिवर्त्यमानो निजाधरद्युतिसंस्तवो यस्य। ओष्ठप्रभासङ्गान्मदिराभ्रान्त्या मुग्धया चषको न त्यक्त इत्यर्थः॥

प्रतिबिम्ब्य यत्प्रथममापदुत्पलप्रतिमच्छतां मधुनि लोचनद्वयम्।
सुदृशां तदेव घटमानशोणिम क्रमशोऽथ तत्र शपथैरबुध्यत॥ २६॥

मद्ये प्रतिबिम्बितं यन्नेत्रद्वयं प्रथममर्थान्मद्ये निवेशितस्योत्पलस्य स्पर्धामापत्। अथ

मद्यपानात्क्रमेण घटमानः शोणिमा लौहित्यं [यस्य] तच्छपथैर्दयितैर्बुद्धम्। मदवशाद्रक्तं नेत्रं रक्तवर्णे मद्ये परभागाभावाच्चिरेण ज्ञातमित्यर्थः॥

मुखरद्विरेफरणिताभिमन्त्रितं दृढमानखण्डननिरर्गलस्थिति।
मदनस्य वारुणमिवास्त्रमाबभौ हृदयं विशन्मधु विमुग्धचक्षुषाम्॥२७॥

स्त्रीणामुदरं प्रविशन्मधु कामस्य वारुणं वरुणदैवतमस्त्रमिवाबभौ। यतो मुखरा द्विरेफास्तेषां रणितं रुतं तेनाभिमन्त्रितं कृतसंस्कारम्। तथा दृढमानस्य खण्डने निरर्गला स्थितिर्यस्य। मानहरमित्यर्थः। मद्ये पीते मानत्यागात्तापशान्तौ वारुणास्त्रत्वेनोत्प्रेक्षितम्। अस्त्रं च मन्त्रितं भवति॥

नवहालया सुतनवोऽगमन्समां प्रतिकामिनीषु च सखीषु च स्थितिम्।
तदनुग्रहेण घटते हि देहिनां क्व न सामरस्यमयसंविदुद्गमः॥ २८॥

नवा या हाला मदिरा तया हेतुभूतया स्त्रियः सपत्नीषु सखीषु च समां स्थितिमगमन्। सखीवत्सपत्नीरपश्यन्नित्यर्थः। तदनुग्रहेण मदिराप्रसादेन सामरस्यं पानकरसवदनेकस्यैक्यं तन्मयी संविदद्वितीयप्रथा तदुद्गमो देहिनां क्व न भवति॥

प्रथमं यतो दधुरपत्रपिष्णुतां चरमं च मोहपथमग्नतामिव।
रुरुचे मदस्य बहुविभ्रमैकभूरिति मध्यमैव गतिरेणचक्षुषाम्॥ २९॥

प्रथमं किंचिन्मद्यपाने स्त्रियोऽपत्रपिष्णुतां लज्जां यतो यद्दधुः, चरममतिमद्यपाने च मोहपथे मग्नतामिव यद्दधुः, अत एणचक्षुषां मदस्य संबन्धिनी मध्यमैव नात्यल्पा न चातिबह्वी गती रुरुचे। यतो बहुविलासैक्यास्पदम्॥

अधिकुन्तलं तिलकितं द्युसद्मनां मधु मालतीमुकुलकैरलक्ष्यत।
प्रतिमाशशाङ्कपरिरम्भलोभतः कृतसंनिधानमिव तारकाकुलैः॥ ३०॥

मालतीकुड्मलैस्तिलकवत्कृतं कुन्तलस्थितं मधु जनेन प्रतिबिम्बचन्द्रालिङ्गनलोभात्तारागणैः कृतसंनिधानमिव लक्षितम्। एतेन मधुनस्तनुत्वं सूचितम्॥

प्रसरच्चमत्कृतिविशेषपोषतः पुटयोर्मनाङ्मुकुलतां वितन्वती।
अनिमेषपक्ष्मलदृशां दृशौ हठात्सनिमेषतामिव हलिप्रियानयत्॥३१॥

हलिप्रिया मदिरानिमेषपक्ष्मलदृशां नाकिस्त्रीणां संबन्धिन्यौ दृशौ सनिमेषतामिव हठादनयत्। यतः, प्रसरतः सोल्लासस्य चमत्कृतिविशेषस्य पोषतो वर्धनाद्दृष्टिपुटयोः किंचिन्मुकुलभावं संपादयन्ती। मदघूर्णिता अभवन्नित्यर्थः। निर्निमेषस्य निमेषवत्त्वकरणाद्धठशब्दप्रयोगः॥

प्रियया मुखासवविलासघट्टनादधिरोपितो बकुलवन्मुदः पदम्।
चिरमाचकाङ्क्ष तरुणस्तदन्तिकात्तदनन्तरं कुरबकस्य दोहदम्॥ ३२॥

मुखासवेन गण्डूषरूपेण विलासैर्हेतुभिर्घट्टनं तस्मात्प्रियया बकुलवृक्षवदानन्दं प्रापितस्तरुणस्तदनन्तरं तदन्तिकात्प्रियानिकटात्कुरबकस्य दोहदं स्तनालिङ्गनरूपं काङ्क्षितवान् ॥

शशिनः कलां परिणतां सुरीसुरा पुरतः प्रसारिकुसुमां तदावहत् ।
अधिरोप्यमाणविशिखां धनुर्लतां गमितां स्फुटत्वमिव पुष्पपत्रिणः ॥ ३३ ॥

सुरीणां देवस्त्रीणां सुरा पुरतोऽग्रे प्रसारितकुसुमां सपुष्पां चन्द्रकलां कामेन प्रकटत्वं प्रापितां संधीयमानशरां धनुर्लतामिवावहत् । संनिवेशकार्यकरणाभ्यामुत्प्रेक्षोत्थानम् । पुष्पपत्रिण इति नाम प्रकृतानुगुणम् ॥

मदनप्रतापतपनोष्मविप्लवद्रुतविश्वपाटलमणिद्रवद्रुहि ।
जघटे परिस्रुतिनवीनमालतीमुकुलैर्विडम्बितविशुद्धमौक्तिकैः ॥ ३४ ॥

मदनस्य प्रतापः स एव तपनोऽर्कस्तस्योष्मविप्लवः संतापोपद्रवस्तेन द्रुता द्रवीभूता विश्वे सर्वे ये पाटलमणयः पद्मरागास्तेषां द्रवाय प्रवाहाय द्रुह्यति । पद्मरागसमायामित्यर्थः । परिस्रुति मदिरायां नवैर्मालतीकुड्मलैर्घटितम् । विडम्बितानि शुद्धानि मौक्तिकानि यैः । पद्मरागेषु मौक्तिकैर्भाव्यमित्युक्तिसंगतिः ॥

वदनप्रभालवजितस्य शीतगोरबलाः कलां विचकरुः परिस्रुति ।
नियतं तदा मृदुलमालतीमिषाद्धनतत्सुधासवनिवेशसिद्धये ॥ ३५ ॥

मुखजितस्य चन्द्रस्य कलां मालतीव्याजात्स्त्रियो नूनं चिक्षिपुः । तस्य चन्द्रस्य सुधारसस्तस्यार्थान्मदिरायां निवेशस्तत्सिद्धये । मालतीयोगान्मदिराया रसः सुधासमोऽभूदित्यर्थः ॥

सदसद्विकल्पकलनापहारिणो मधुनः स्मरोपनिषदेकशालिनः ।
घटमानचाटुवचसः कलस्वरैरलयः प्रदक्षिणमिव प्रणिन्यिरे ॥ ३६ ॥

सदसती हिताहिते तद्रूपां विकल्पकलनां विचारग्रहणमपहरतः तथा स्मरस्योपनिषद्विजयरहस्यं तत्र तया वैकया शालते तस्य मधुनः प्रदक्षिणमिव भ्रमराश्चक्रुः । मधुरशब्दैः स्तुतिकराः । युक्तायुक्तरूपनिवारणे ज्ञातोपनिषदो गुरोश्च शिष्याः स्तुतिपूर्वं प्रदक्षिणं कुर्वन्ति ॥

चरितं व्यजेष्ट बत पानगोष्ठिका सुचिरप्ररूढमपि पद्मसद्मनः ।
ललनाननाम्बुजकदम्बके तदा व्यतनिष्ट यन्नवमधूदयोत्सवम् ॥ ३७ ॥

चिररूढमपि ब्रह्मणश्चरितमापानगोष्ठी जितवती । यत्स्त्रीणां मुखपद्मेषु नवं मधु मद्यं मकरन्दश्च तदुदयोत्सवमकार्षीत् । ब्रह्मणा पद्मेष्वेव मधूदयः कृतः, न तु मुखपद्मेषु । आपानगोष्ठ्या पुनर्मुखपद्मेषु मधूदयः कृत इति निर्माणजयः । केवलाम्बुजपक्षे मधु मकरन्दः । आननाम्बुजपक्षे मधु मद्यम् ॥

स्वकरोढकुन्तलमुपान्तवर्तिनं स्मयने प्रियं प्रति विलोलचक्षुषः।
प्रतिबिम्बिता मधुनि दन्तमण्डली नवमालतीमुकुलभङ्गिमग्रहीत्॥३८॥

स्वकरेणोढो धृतश्चषको यत्रैवं कृत्वा समीपस्थं प्रियं प्रति लीलया विधेयत्वदर्शनेन वा स्मयने हासे सति मधुनि प्रतिमिता दशनपङ्क्तिर्मालतीमुकुलविच्छित्तिं प्रापत्॥

अधिमद्यमध्यमुरुपुष्पसंहतिभ्रमरावली कलकलाकुला दधे।
हरभीतिभङ्गुरमतेर्मनोभुवो जलदुर्गगर्तगतसैन्यविभ्रमम्॥ ३९॥

मद्यमध्ये उरुघना या पुष्पपङ्क्तिस्तस्यां भ्रमरपङ्क्तिरत एव सकलकला सती हरभीत्या भङ्गुरा भग्ना मतिः साहसबुद्धिर्यस्य तस्य मनोभुवः कामस्य संबन्धिनो जलदुर्गगताः सैन्यास्तेषां विच्छित्तिं दधौ। नात्र नेत्राग्निना त्रिनेत्रः संदग्धुं शक्नोतीति जलदुर्गं प्रविष्टस्य कामकटकस्य भ्रान्तिं मद्यान्तर्गतपुष्पवासिनो भ्रमराश्चक्रुः॥

विनिमज्ज्य सीधुसरिति ध्रुवं स्मरो हरहव्यवाहदवथुव्यथां जहौ।
च्यवमानशान्तरुचितत्स्फुलिङ्गता तदुपान्तवर्त्मनि यदापि षट्पदैः॥४०॥

मद्यनद्यां निमज्जनं कृत्वा कामो हरनेत्राग्निदाहव्यथां त्यक्तवान्। तस्याः सीधुसरितः समीपमार्गे भ्रमरैश्च्यवमाना आर्द्राः शान्तरुचयः कृष्णवर्णा ये तत्स्फुलिङ्गा हरानलाङ्गास्तद्भावो यदापि प्राप्तः। दह्यमानेन यत्र मज्ज्यते तत्राङ्गारैर्भाव्यम्॥

परिपाटले मधुनि मालतीकुलैर्धवले विवल्गदसितालिशालिनि।
तपनीयकुन्तलमयूखदन्तुरे स्मरचित्रभित्तिरिति पप्रथे भ्रमः॥ ४१॥

परिपाटलेऽरुणवर्णे, तथा तपनीयकुन्तलस्य सुवर्णचषकस्य मयूखैर्दन्तुरे व्याप्ते, तथासितैर्भोगवशादतिश्यामैरलिभिः शालिनि, तथा मालतीमुकुलैः श्वेते मधुनि कामचित्रभित्तिरिति भ्रान्तिर्जाता। 'अमित' इति वा पाठः॥

कनकालुकामुपरि कापि पाणिना दधती स्ववक्त्रपतदासवस्रुतिम्।
अतनोदखण्डशशिबिम्बकोटरप्रसरत्सुषुम्णमपरार्कमण्डलम्॥ ४२॥

वक्त्रे पतन्त्यासवस्रुतिर्मद्यधारा यस्याः सकाशात्तां कनकालुकां सुवर्णकरिकां पाणिना करेणोपरि दधती। स्वहस्तेन करिकां गृहीत्वा पिबन्तीत्यर्थः। काप्यखण्डं पूर्णं यच्छशिमण्डलं तदन्तरे प्रसरन्ती विशन्ती सुषुम्णा यस्मादर्कमण्डलं व्यधात्। सुषुम्णां क्षीणश्चन्द्रो विशतीत्यागमः। काचित्तु पूर्णचन्द्रे सुषुम्णायाः प्रवेशमकरोत्। 'अपरार्कमण्डलम्' इत्येकपदं वा योज्यम्। अपरं भिन्नगुणम्। भिन्नगुणत्वं पूर्णचन्द्रे सुषुम्णायाः प्रवेशनात्। सुवर्णकरिका सूर्यस्य कल्पितोपमानम्। मुखं चन्द्रस्य। मद्यधारा सुषुम्णायाः॥

प्रतियातना शशिनि मेचकोत्पलच्छदपाङ्क्तिभिर्विनिहिताभिरादधे।
मधुभाजनेष्वमरवारयोषितां नवसंसरद्बहुकलङ्कसंकरः॥ ४३॥

सुरस्त्रिया मद्यचषके न्यस्ताभिर्नीलोत्पलपत्रपङ्क्तिभिः प्रतिविम्बचन्द्रे नवाः संसरन्तः सर्पन्तो बहवो ये कलङ्कास्तेषां संकरो योगः कृतः। उत्पलपत्रपङ्क्तयः कलङ्कबाहुल्येनाध्यवसिताः॥

नवपानकेलिकिलकिञ्चिताञ्चिता भृतमासवेन सुरवामलोचना।
पृथुनेत्रनीलनलिनं विनिर्ममे मुखमेव कापि दयितस्य कुन्तलम्॥४४॥

नवा या पानकेलिस्तस्यां किलकिञ्चितेन विभ्रमविशेषेण शोभिता स्त्री स्वं मुखमेव चषकमकरोत्। यतो मद्येन भृतं पूर्णम्। तथा विस्तीर्णनेत्रोत्पलम्। भर्तारं रागवशान्मधुगण्डूषं पायितवतीत्यर्थः॥

अवहद्वपुः कुवलयाग्रकेसरैश्चषकोदरे विनृतरागसंगमः।
परिचुम्बनात्सुरविलोलचक्षुषां दशनक्षतैरिव सनाथमासवः॥ ४५॥

रूढराग उत्पलकेसरव्याजेन स्त्रीकर्तृकाचुम्बनादासवो वपुर्दन्तक्षतैः सहितमिव दधौ॥

मणिभाजनाग्रजवनिष्पतत्सुरारसविप्रुषः पुपुरेणचक्षुषाम्।
कटचीनपिष्टपरिपाटलस्मरद्विपकीर्यमाणकरसीकरभ्रमम्॥ ४६॥

रत्नचषके सातिजवं पततः सुरारसस्य कणाः कपोलसिन्दूरारुणा ये कामदन्तिकरकणास्तेषां विभ्रमं दधुः। रत्नांशुभिररुणत्वसूचनार्थं मणिग्रहणम्॥

पुरतोऽलिजालपिहितां हलिप्रियां विबुधावरोधललना व्यलोकयत्।
हठलुप्यमानविभवामनर्गलं हलिमत्सरादिव कलिन्दकन्यया॥ ४७॥

सुरान्तःपुराङ्गना भ्रमराच्छादितां मदिरां यमुनया हलिना हेतुना मत्सराद्धठेन लुप्यमानो विभवो यस्यास्तामिव व्यलोकयदज्ञासीत्। नायं भ्रमरभरः, किं तु यमुनाप्रवाह एवेत्यर्थः। हली हि यमुनां दारितवान्। अतस्तत्प्रियाया यमुनया विभवलोपोक्तिसंगतिः। अथवा हलधरस्य मदिरा यमुना च प्रिया, अतो यमुनाया हलिनि मत्सरः। हलिप्रियेति साकूतम्। अवरोधललनेति च साभिप्रायम्। स्वच्छन्दा हि सपत्नीषु द्वेषं न संभावयन्ति॥

स ममैष शेवधिविशेष इत्यलं मदिराममंस्त नियतं मनोभवः।
कुटिलालिपङ्क्तिकलया सितेतरैरुरगै रिरक्षिषुभिरावृतेव यत्॥ ४८॥

स एवं मम शेवधिविशेषो निधिभेद इत्येवं नूनं कामो मदिराममंस्त। कुटिलभ्रमरपङ्क्तिव्याजेन कृष्णसर्पैरिव रक्षितुकामैर्मदिरा यदावृता। निधानस्य सर्पै रक्षेत्पुरगैरित्युक्तम्॥

मुखसौरभभ्रमदलिप्रभावतो दशनच्छदोऽभजदिवाञ्जनार्जनम्।
मधुनारुणे मृगदृशां विलोचने ययतुश्च सान्द्रमदनार्द्रतामिव॥ ४९॥

मुखसौरभेण भ्रमतामलीनां प्रभावाद्दशनच्छदोऽधरोऽञ्जनार्जनमिव प्रापत्। मद्यपानेन रक्ते नेत्रे घनं मदनेन रागद्रव्यविशेषेणार्द्रतामिव प्रापतुः॥

अतिताम्रयोर्मधुमदेन गण्डयोः प्रविलुप्यमान परभागविभ्रमम् ।
अवरोप्य लौहितककुण्डलं व्यधात्सुदृशः श्रुतौ कनककर्णिकां प्रियः॥९०॥

ततो मधुपानमदेनारुणयोः कपोलयोर्विषये गतपरभागं पद्मरागकुण्डलं कर्णान्निवार्य स्त्रियः कर्णे सुवर्णकर्णिकामर्थात्परभागार्थं रमणोऽकरोत् ॥

हठचुम्ब्यमानवदना विलासिभिर्ललनास्तदा मदनहृष्टदृष्टयः ।
मधुमध्यबिम्बितनिपीतशीतरुक्तनुशैत्ययोगत इवाचकम्पिरे ॥ ९१ ॥

हठेन किंचिल्लज्जावशाचुम्बितमुख्योऽत एव कामयोग्यीकृतदृशो रामाः सात्त्विकभावाचकम्पिरे । अतः संभाव्यते—मधुमध्ये पूर्वं बिम्बितो निपीतो यः शीतरुक्चन्द्रस्तस्य तनुर्मूर्तिस्तच्छैत्ययोगादिव । तनु सूक्ष्मं वा व्याख्येयम् ॥

तरुणाः पुरः परिचिता नवोच्छ्वसन्मदघूर्णनाकुलितकेलिवाससाम् ।
अपि यन्मनोरथगतेरगोचरं तदवापुरीक्षितुमधीरचक्षुषाम् ॥ ९२ ॥

पुरो वर्तमानास्तरुणाः परिचिता वल्लभाः स्त्रीणां संबन्धि तदीक्षितुमापुः । तदपश्यन्नित्यर्थः । यन्मनोरथगतेरगोचरम् । मनोरथा अपि यन्न प्राप्नुवन्तीत्यर्थः । यतो नवमुच्छ्वसतोल्लसता मदेन घूर्णनं भ्रमणं तेनाकुलितानि स्वस्थानाचलितानि वासांसि यासाम् ॥

कादम्बरी कुहरसङ्गिकुरङ्गभङ्गि-
भृङ्गा कुरङ्गकदृशां मणिकुन्तलेषु ।
कामप्रतापदहनद्रुतसांध्यचन्द्र-
बिम्बोपमाधित सुधारससामरस्यम् ॥ ९३ ॥

मृगदृशां रत्नचषकेषु कादम्बरी मदिरा सुधारसस्य सामरस्यं साम्यमधिताधारयत् । कामस्य प्रतापदहनेन द्रुतो विलीनो यः सांध्यः संध्याकालभवश्चन्द्रबिम्बस्तेनोपमा यस्याः । नेयं मदिरा, किं तु प्रतापाग्निगलितश्चन्द्रः । यतोऽत्र भ्रमरव्याजेनाङ्कमृगोऽस्ति । अत एव सुधास्वादेत्यर्थः ॥

देवी स्वयं भगवती युवसु प्रसन्ना
तत्राजनिष्ट नियतं झटिति प्रसन्ना ।
यद्वैभवाद्दृढमपि प्रविमुच्य मानं
तान्सुभ्रुवोऽनुजगृहुर्हठचुम्बनेन ॥ ९४ ॥

नूनं प्रसन्ना सुरा भगवती तरुणेषु स्वयमप्रार्थनया प्रसन्ना जाता । यस्या वैभवात्प्रसादमाहात्म्याद्दृढमपि मानं [प्रविमुच्य] स्त्रियो हठचुम्बनेन तान्यूनोऽनुजगृहुरनुगृहीतवत्यः । यदिति भिन्नं वा पदम् ॥

चक्रे गतौ च गिरि च स्खलनं पदानां
दृष्टौ च चेतसि च रागभरं पुपोष।
मार्द्वीकमुत्पलदृशामुपनीयमानं
प्रेयोधरामृतरसस्य पुरःसरत्वम्॥ ९५॥

मार्द्वीकं गोस्तनीसंबन्धि मद्यं कर्तृ स्त्रीणां गतौ चङ्क्रमणे गिरि वाचि च पदानां चरणानां शब्दानां च स्खलनं चक्रे। स्त्रीणां दृष्टौ चित्ते च रागस्य लौहित्यस्य स्नेहस्य च भरं पुपोष। प्रेयसामधररसस्य पुरःसरत्वमग्रवर्तित्वमुपनीयमानम्। मद्यपानस्य पश्चादधरामृतस्य पानात्। अधरामृतपानेन वाच्येव स्खलनान्मनस्येव रागदर्शनाच्च॥

निर्व्याजगद्गदगिरो वदनं वहन्त्या
भ्राम्यद्भ्रु पाटलविलोचनगण्डलेखम्।
कोपं विपक्षमधुपायनजायमानं
क्षैव्यस्पृशो मृगदृशो न युवा विवेद॥ ९६॥

विपक्षः सपत्नी मधु पिबतः प्रयोजनं मधुपायनं तेन जायमानं रामायाः कोपं तरुणो नाजानात्। अतः क्षैव्यस्पृशः क्षीबायाः, निर्व्याजमकृत्रिमं गद्गदगिरोऽस्पष्टवाचः, मुखं भ्राम्यद्भ्रु, तथा पाटला विलोचनगण्डलेखा यस्य तद्वहन्त्याः। कोपपक्षे द्वयोर्धर्मिणोर्गद्गदवचनादीनां धर्माणां साधारणत्वात्॥

रुष्टा काप्यगमत्प्रसादपदवीमप्रार्थितापि प्रिये
निर्हेतु प्रथमानमन्तुरपरा कान्तं प्रकुप्यादुनोत्।
तस्थौ काचन सामरस्यसरणौ निस्तोषरोपा वधू-
रित्थं भावविभागमाविरकरोत्तासां मदोपक्रमः॥ ९७॥

मद्यपानात्पूर्वं रुष्टापि तदन्वप्रार्थिताप्रसादितापि काचित्प्रिये प्रसादमगमत्। अपरा हेतुं विना प्रकुप्य कुपित्वा कान्तमदुनोदतापयत्। कान्तेन सह कलहमकार्षीदित्यर्थः। प्रथमानः प्रसिद्धो मन्तू रोषो यस्याः। काचन रोषतोषरहिता प्रियविषयायां सामरस्यसरणौ समरसत्वमार्गे तस्थौ। एवं तासां मदोपक्रमः क्षीबत्वारम्भो भावानां कोपादीनां विभागं विभजनमाविरकरोत्॥

रक्तत्वं विजहौ कपोलफलकं गृह्णच्छनैः पाण्डुतां
मीलन्त्यां दृशि चास्तमापदवशं चाञ्चल्यचर्चाक्रमः।
व्यक्तत्वं न जगाम गद्गदपदन्यासश्च मौनाद्गिरा-
मित्यासीदतिदृढितो मृगदृशां विक्षिप्तलक्ष्मा मदः॥ ९८॥

अतिवृद्धितो मदात्ययान्मदः क्षैव्यं विक्षिप्तलक्ष्मा गलितचिह्नोऽभूत् । पाण्डुतां गृह्णत्कपोलफलकं गण्डाभोगो रक्तत्वमत्यजत् । दृशि दृष्टौ चपलत्वमस्तमगमत् । यतो मीलन्त्यां प्राप्तसंकोचायाम् । गिरां गद्गदः पदन्यासो व्यक्तत्वं नागात् । कुतः । मौनात् । मदात्ययेन पाण्डुत्वस्य निमीलनस्य मौनस्य चोत्पादनाद्रक्तत्वचपलत्ववचनगद्गदत्वादीनि मदचिह्नानि गलितानीत्यर्थः ॥

क्रीडाकुरङ्गककृते न ममाङ्करङ्कुं
　त्वं चेद्ददासि दयिताननर्निर्जितोऽपि ।
तत्ते कवाटितमितश्चषकान्तरेण
　कारागृहं चषकमेव विधो विधास्ये ॥ ५९ ॥

दयिताननेन मद्रमणमुखेन निर्जितोऽपि त्वं क्रीडाकुरङ्गक इति कृत्करणं तदर्थम् । उत्सङ्गमृगं मम चेन्न ददासि तत्तश्चषकान्तरेणान्येन चषकेण कवाटितं बद्धं चषकमेव कारागृहं करिष्ये । यश्च जितोऽप्युपयुज्यमानं न ददाति स कारागृहे स्थाप्यते ॥

किं ते कम्पो वपुषि चषकोन्नद्धसीधूर्मिमध्ये
　क्रीडाबाहूत्तरणमसकृत्कुर्वतः शर्वरीश ।
आयात्येतन्ननु तव कथंकारमस्मिन्नकस्मा-
　द्बिम्बं तुम्बीफललघु सखे मज्जनस्यातिथित्वम् ॥ ६० ॥

हे शर्वरीश । विलासानुगुणमामन्त्रणम् । चषके उन्नद्धा उद्धता ये सीधूर्मयो मधुतरङ्गास्तन्मध्ये क्रीडया बाहूत्तरणं पारगमनं कुर्वतस्ते किं वपुषि कम्पः । अनदीष्णस्य परैर्त्रोडयितुमारब्धस्य वा जलमध्ये कम्पो युक्तः । तुम्बीफलमलाबु तस्माल्लघु तुच्छं तव बिम्बमस्मिन्मधुनि मज्जनस्य ब्रुडनस्यातिथित्वं संमुखत्वं कथंकारमकस्माद्धेतुं विनायाति ॥

त्वं राजतां द्विजजने भजसे निसर्गा-
　त्क्षत्रान्वयस्य च भवान्प्रथमः प्रणेता ।
तद्युज्यते बत शशाङ्क कथं किलाय-
　मुच्छिष्टसीधुचषकेषु तवावगाहः ॥ ६१ ॥

द्विजानां नक्षत्राणां ब्राह्मणानां च जने राजतामग्र्यत्वं त्वं निसर्गाद्भजसे । तथा क्षत्रकुलस्य प्रथमो जनकस्त्वम् । तत्तस्मादुच्छिष्टसीधवोऽवपीतमद्या ये सीधुचषकास्तेष्ववगाहः स्नानं तव कथं युक्तः ॥

परिहर चतुरं कुरङ्गकेतो मम चषकं त्वमधीश्वरो द्विजानाम् ।
परिणतमधुसौरभे जुगुप्सां त्वयि न यथा त्रिदशर्षयो जुषन्ते ॥६२॥

द्विजानां नक्षत्राणां च त्वमधीश्वरो मम चषकं परिहर। इतो दूरं गच्छेत्यर्थः। परिणतं संक्रान्तं मधुसौरभं यस्य तस्मिंस्त्वयि देवर्षयो जुगुप्सां निन्दां यथा न कुर्वन्ति॥

तास्तन्वङ्ग्यः परिसरलसत्प्राणनाथाङ्कपाली-
लीलालोलालसतरवपुर्लेखमुल्लेखवत्यः।
क्षैव्यव्यावल्गनतरलितापाङ्गरङ्गत्कटाक्षा
मध्येसीधु प्रतिमितमिति स्वैरमेणाङ्कमूचुः॥ ६३॥

परिसरे निकटे लसन्तो ये प्राणनाथाः प्रियास्तेषामङ्कपाली आलिङ्गनं तत्र लोलान्यत्रालसतरा वपुर्लेखा यत्रैवं कृत्वा स्वैरं निःसंकोचं मद्यमध्ये प्रतिबिम्बितं चन्द्रं ताः स्त्रिय एवमूचुः। उल्लेख ऊहनं विद्यते यासाम्। तथा क्षैव्येण व्यावल्गनं भ्रमणं तेन तरलिताश्चपलाः कृता येऽपाङ्गा दृगन्तास्तेषु रङ्गन्तः स्फुरन्तः कटाक्षा यासाम्॥ पञ्चभिः कुलकम्॥

निरवधिमधुगोष्ठीगौरवादध्यगच्छ-
न्निति कति न तरुण्यः शोणतामाननेषु।
अलभत परभागं येन तासां स रज्य-
ञ्श्रवणकुवलयेभ्योऽप्याशु नेत्रत्रिभागः॥ ६४॥

इत्येवं निरवधि यन्मधुगोष्ठीसौष्ठवं पानक्रीडाहृद्यत्वं तस्माद्धेतोः कति न सर्वास्तरुण्यो मुखेषु रागं प्रापुः। रज्यन्रक्तः संपद्यमानस्तासां कटाक्षः कर्णोत्पलेभ्यः सकाशात्परभागं येनालभत यथा प्राप्तवान्। येन रज्यन्निति वा योजना॥

ये नागरङ्गफलखण्डपुटैरपीप्य-
न्मुग्धाननां मधु विलासरसाद्युवानः।
तस्याः किलाधररसस्य विविच्यमानं
ते प्रत्युदाहरणमग्रत एव चक्रुः॥ ६५॥

विलासे रसाद्धेतोर्नागरङ्गफलानां खण्डान्येव पुटानि चषकास्तैः करणैर्युवानो मुग्धाननां रामां मध्वपीप्यन्पिबन्तीं प्रयुक्तवन्तः। तद्विचार्यमाणं स्त्रियोऽधररसस्य प्रत्युदाहरणं प्रागेव चक्रुः। अधररसापेक्षया नागरङ्गदलमधुनो न्यूनगुणत्वात्। एकाङ्गविकलं हि प्रत्युदाहरणं भवति। स्वादोऽत्रैकाङ्गम्॥

काप्यास्त स्तिमितैव तत्र कृतकक्षैव्यक्षणासूत्रणा-
त्तत्कान्तोऽपि परां चुचुम्ब विगलन्निःशेषशङ्कालवम्।
तामाविर्भवदुद्धतक्रुधमथ क्षीवासि नो वेत्यहं
त्वय्येवं कृतवान्परीक्षणमिति द्राक्सोऽपमन्तुं व्यधात्॥ ६६॥

कृतकमभिनीतं यत्क्षैव्यं तस्य क्षणमासूत्रणमुदङ्कनं तस्मात्कापि स्तिमिता निःस्पन्देवासीत् । विगलन्नपगतो निःशेषशङ्कालवोऽर्थात्तस्या भयं यत्रैवं कृत्वा क्षीबत्वेन तस्या निश्चेतनत्वावगमात्तत्कान्तोऽपि परामचुम्बत् । अथ क्षीबत्वस्यातात्त्विकत्वादाविर्भवन्त्युद्धता कृत्यस्यास्तां स तत्कान्तोऽपमन्तुं विगतेर्ष्यामेवं व्यधात्—अहं त्वयि परीक्षणमेवमनया युक्त्या कृतवांस्त्वं क्षीबासि नो वेति ॥

इत्थं तासां विलासालसवलितकरोत्सङ्गसंसङ्गिपात्रं
प्राणेशान्पाययित्वा सममधरदलप्रान्तदंशावदंशैः ।
पायं पायं निपीते मधुनि मधुरता याङ्गकेष्वाविरासी-
त्तां वक्तुं पौष्पचापे सदसि न कतरोऽप्येति पाण्डित्यमुद्राम् ॥ ६७॥

विलासैर्हेतुभिरलसं कृत्वा वलितान्युत्थापितानि करोत्सङ्गसङ्गीनि हस्तमध्यस्थानि पात्राणि चषका यत्रैवं कृत्वाधरदलप्रान्तस्य दंशाश्चुम्बनान्येवावदंशास्तैः समं प्राणेशान्मधु पाययित्वा मधूनि पीत्वा पीत्वा निपीते सति तासां तनुषु गात्रेषु या मधुरता कान्तिराविरासीत्तां कान्तिं वक्तुं पौष्पचापे सदसि कामसभायां मध्यात्कतरोऽपि पाण्डित्यमुद्रां वक्तृत्वटङ्कं नैति । वागगोचरा शोभा तासामजायतेत्यर्थः ॥

पुष्णन्पुष्पेषु सक्तिं विवृतनिरवधिव्यक्तरागानुषङ्गः
सीधुस्तासां प्रविश्य त्रिदशमृगदृशामाशयं विभ्रमेण ।
प्रत्यङ्गं लब्धसङ्गः पटुपुलकभृतो मीलदालोलनेत्रा-
स्ताश्चक्रे प्रागवाप्ताधरदलघटनो निर्वृतेरन्तरङ्गाः ॥ ६८ ॥

पुष्पेषु पुष्पविषयां सक्तिं सङ्गं पुष्णन् । तथा विवृतः प्रकाशितो निरवधिरनन्तो व्यक्तो रागस्यारुणत्वस्यानुषङ्गः प्रवृत्तिर्येन । तासामाशयमुदरं प्रविश्य प्रत्यङ्गं लब्धसङ्गः । सर्वनाडीव्यापित्वात् । प्राक्पूर्वमेवावाप्ताधरदलघटना ओष्ठपल्लवयोगो येन स सीधुः पुरस्तादेव स्त्री रोमाञ्चधारिणीः संकुचच्चपलनेत्रा निर्वृतेः सुखस्यान्तरङ्गाः प्रत्यासन्नाश्चक्रे । अत्र मधुनि समासोक्त्या कामुकव्यवहारावगतिः । तत्पक्षे पुष्पेषौ कामे सक्तिः । रागोऽभिष्वङ्गः । आशयोऽभिप्रायः । प्रत्यङ्गं लब्धसङ्गः सर्वाङ्गालिङ्गनात् । मीलन्नेत्रत्वं रतश्रमवशात् । एतेन वक्ष्यमाणार्थोपक्षेपः कृत इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकवि-
राजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
पानकेलिवर्णनं नाम चतुर्दशः सर्गः ।

---

पञ्चदशः सर्गः ।

ता वारुणीपरिमलानुचरद्विरेफ-
कोलाहलाकुलितनूपुरमञ्जुशिञ्जाः ।
स्वं वासवेश्म विविशुर्मदघूर्णमानाः
प्राणेशपाणिनिहिताग्रकरास्तरुण्यः ॥ १ ॥

मदेन घूर्णमाना उल्लसन्त्योऽतः प्राणेशैर्यान्निजेषु पाणिषु न्यस्ता अग्रकरा यासां ताः । दयितदत्तहस्ता इत्यर्थः । तास्तरुण्यः स्वं लीलागृहं विविशुः । अतो वारुण्याः सुरायाः परिमलेनानुचरा अनुलग्ना द्विरेफास्तेषां कोलाहलेनाकुलिताः संदिग्धीकृता नूपुरमञ्जुशिञ्जा मञ्जीरमधुरशब्दा यासां ताः । प्राणेशसंनिधावपि तरुणीनां कर्तृत्वं प्रस्तूयमाने वस्तुनि प्राधान्यात् । एवमुत्तरत्र सार्धं प्रियैरिति व्याख्येयम् ॥

सान्द्रोपकारकुसुमप्रकरान्तरङ्गं
कीर्णं शरैः प्रथममेव मनोभुवेव ।
सार्धं प्रियैर्युवतयः स्वविलासवास-
मासाद्य केलिशयनीयतले निषेदुः ॥ २ ॥

सान्द्रोऽविरलो य उपकारकुसुमप्रकर आस्तरणपुष्पसमूहस्तस्यान्तरङ्गं प्रत्यासन्नम् । अत एव प्रथमं तासां प्रवेशात्प्रागेव कामेन शरैः पूरितमिव निजलीलागृहं प्राप्य क्रीडाशय्यायां ताः प्रियैः साकं निषेदुः ॥

श्लिष्यत्फणामणिमनङ्गभुजंगमेन
क्षिप्तां दधन्ति नवनिर्ल्वयिनीमिवाग्रे ।
चीनोत्तरच्छदपटैरविदूरकेलि-
दीपैर्विलासशयनीयतलानि रेजुः ॥ ३ ॥

अविदूरे निकटे केल्यर्थं दीपा येषां तैश्चीनवस्त्रैर्लीलाशय्या रेजुः । अतः संभाव्यते—सफणरत्नां कामसर्पेण मुक्तां नवकञ्चुकीमिव बिभ्रतः । केलिदीपस्थानीयाः फणामणयः । चीनवस्त्रस्थानीयो निर्मोकः ॥

प्रक्रान्तचेलहरणेषु यदृच्छयैव
जज्ञे कुरङ्गकदृशां रतिमन्दिरेषु ।
निर्दह्यमानबहुलागुरुधूमपुञ्जै-
स्तत्रासितांशुकतिरस्करिणीनिवेशः ॥ ४ ॥

लीलागृहे प्रक्रान्तमारब्धं चेलानामर्थात्स्त्रीसंबन्धिनां वस्त्राणां हरणं येषु तेषु लीलागृहेषु निर्दह्यमानागुरुधूमराशिभिरसितांशुकमय्यास्तिरस्करिण्या निवेशो जातः ॥

लीलागृहे विहितनिह्नवयैणनाभि-
नासीरधूमलहरीभिरुदेत्य दूरम् ।
मूर्त्या मुहूर्तमपुषन्मिथुनानि केलि-
मुद्वेलमान्मथरसह्रदमग्नयेव ॥ ५ ॥

कस्तूरीकर्पूरधूमतरङ्गैर्दूरमुत्थाय च्छादितयातो मन्मथरसह्रदे मग्नयेव मूर्त्या मिथुनानि स्त्रीपुंसाः क्रीडामकुर्वन् ॥

अभ्यस्तसौरभसखालिरवैः सुवृत्त-
गण्डोपधानपटलैरघटिष्ट तल्पम् ।
सज्जीभवत्कुसुमचापरथावशेषै-
श्चक्रैरिवोन्मुखरनेमिभिरङ्गनानाम् ॥ ६ ॥

अभ्यस्ताः सौरभसखानामलीनां रवा यैस्तैर्गण्डरूपैरुपधानैर्गण्डमसूरेति प्रसिद्धैर्मूर्धोपाश्रयभूतैस्तल्पं संयुयुजे । सज्जीभवज्जयार्थं कृतोद्योगस्य कामस्य रथस्तस्यावशेषैः सशब्दैश्चक्रैरिव ॥

प्रोताहिवल्लिदलवीटकनिर्विभागाः
सूच्यो विलेसुरुपधानपथेषु यूनाम् ।
द्राग्विद्धमेकसमये बहुलक्ष्यवर्ग-
मङ्के वहन्त इव पञ्चशरस्य बाणाः ॥ ७ ॥

प्रोतानि स्यूतान्यहिवल्लिदलवीटकानि नागलतापर्णवीटकानि तैर्निर्विभागाः सूच्यो वंशादिमय्य उपधानेषु रेजुः । त्वरया युगपद्विद्धं बहुलक्ष्यवर्गमनेकशरव्यगणमङ्के बिभ्रन्तः कामबाणा इव ॥

लीढोपकारविपुलोत्पलपल्लवाग्रा
मत्तालयो भवनभूमिषु जाग्रति स्म ।
विश्राम्यतो रतिपतेरवजित्य विश्व-
मात्तासिधेनव इवाभिनवाङ्गरक्षाः ॥ ८ ॥

लीढान्यास्वादितान्युपकारोत्पलानां पल्लवाग्राणि यैस्ते मत्तालयो लीलागृहेषु जाग्रति स्म । जगज्जित्वा विश्राम्यतः कामस्य गृहीतकरवालाः प्राणरक्षा इव ॥

प्राणेश्वरद्विगुणबाहुलतोपधानं
लीलानिषण्णवपुषामुपरि प्रियाणाम् ।

अन्योत्तरीयघटना मदनाज्ञयेव
तेने वितानकमणिप्रसृतैर्मयूखैः ॥ ९ ॥

प्रियाणां द्विगुणा भुजलता एवोपधानं यत्र । लीलार्थं निषण्णानां स्त्रीणामुपरि विताननरत्नांशुभिरुत्तरीयान्तरच्छादनं कामाज्ञयेव कृतम् ॥

कान्तेषु कञ्चुकविमोचनचञ्चुरेषु
व्यक्ता बभौ कुचतटी चटुलेक्षणानाम् ।
तत्कालकृष्टधनुषे ददती दशार्ध-
बाणाय चम्पकशरौघमिवांशुदण्डैः ॥ १० ॥

प्रियेषु वस्त्रहरणसक्तेषु व्यक्ता स्त्रीणां स्तनतटी बभौ । तत्कालकृष्टधनुषे कामाय शरव्रातं रश्मिभिर्ददतीव । दशार्धबाणायेत्यभिधानं साभिप्रायम् । स्तनद्वयकान्त्या कामो विलासिनो जितवानित्यर्थः ॥

निष्पीडितस्तनतटं दृढबाहुबन्ध-
बन्धुं सहेलकृतकण्ठहठग्रहं च ।
निर्मुच्य कञ्चुकमथाञ्चितलोचनाभि-
स्तत्कर्मणः पदमकल्प्यत कान्तलोकः ॥ ११ ॥

निष्पीडितो मृदितः स्तनभरो येन तम् । तथा दृढस्य बाहुबन्धनस्यालिङ्गनस्य बन्धुम् । तथा सहेलं कृतः कण्ठग्रहो येन तं कञ्चुकं निवार्य स्त्रीभिस्तत्कर्मणः स्तनपीडनादेः स्थानं प्रियवर्गः कृतः । कञ्चुके निवारिते स्तनमर्दादिकं प्रिया व्यधुरित्यर्थः ॥

चामीकराम्बुरुहकुड्मलभूमिकासु
रूढं कुचद्वयमधीरविलोचनानाम् ।
अग्रादनङ्गरसनाटकनर्तनाय
द्राक्कञ्चुकं जवनिकाभमपाचकार ॥ १२ ॥

चामीकराणि सौवर्णान्यम्बुरुहकुड्मलानि कमलमुकुलानि तेषां भूमिकासु रूपग्रहणेषु रूढं विश्रान्तं स्त्रीणां स्तनद्वयं कामरस एव नाटकं तस्य नर्तनं नानाचेष्टनमपि (?) जवनिकासदृशं कञ्चुकं पुरस्तादवारयत् । गृहीततत्तद्भूमिकस्य जवनिकापसारणमुचितम् ॥

केलिप्रदीपलतिकाप्रतियातनाभि-
र्निष्कञ्चुकाः प्रतिभुवो बभुरङ्गनानाम् ।
कंदर्पभूभुजि मनोभवनं प्रविष्टे
सीमन्तिता इव हिरण्मयवेत्रदण्डाः ॥ १३ ॥

कञ्चुकरहिताः स्त्रीणां स्तनप्रदेशा नैर्मल्याल्लीलादीपप्रतिबिम्बैर्बभुः । अतः संभाव्यते—कामभूपतौ चित्तराजधानीं प्रविष्टे सति सुवर्णवेत्रैः पार्श्वद्वयसंनिधानाद्द्विधा विभक्ता इव । राज्ञां च राजधानीप्रवेशावसरे पार्श्वद्वये वेत्रदण्डानां संनिधिरुचितः ॥

आच्छिद्य कञ्चुकमयं सिचयं निपीड्य
नैविड्यतो नखमुखैश्च विदारयद्भिः ।
नीरन्ध्रपीतनरसा कुचभूः पुरस्ता-
त्कोपारुणेव ददृशे युवभिर्वधूनाम् ॥ १४ ॥

नीरन्ध्रो घनः पीतनरसः कुङ्कुमाङ्गरागो यस्याः सा कुचभूः कोपारुणेव युवभिर्दृष्टा । कोपे कारणमाह—कञ्चुकवस्त्रं हृत्वा नैविड्यतो बलेन पीडयित्वा कुचभुवं नखाग्रैर्विदारयद्भिः पाटयद्भिः । यस्य च वस्त्रहरणादिकं क्रियते स रोषेण शोणो भवति ॥

सख्योऽथ पक्ष्मलदृशां तदवेक्ष्य तन्त्रं
स्मेराननार्पितकरं शनकैर्निरीयुः ।
तत्कर्पटाञ्चलसमीरविधूयमानो
दीपोऽपि निर्जिगमिषुत्वमिवाललम्बे ॥ १५ ॥

तत्तन्त्रं स्तनमर्दनादिकं दृष्ट्वा सख्यः परिचारिकाः स्मेरेषु सहासेष्वाननेष्वर्पितकरं लज्जाभयाद्धासगोपनार्थं न्यस्तहस्तं निर्जग्मुः । तासां सखीनां कर्पटाञ्चलस्य समीरेण विधूयमानः कम्प्यमानो दीपोऽपि निर्गन्तुकामत्वमिवाश्रयत् । तथा ताभिः क्रीडारब्धा यथा निश्चेतनानामपि लज्जा जायत इति भावः । अपिशब्दान्न केवलं सख्यः, यावच्छृङ्गारोद्दीपनोपयोग्यो दीपोऽपि ॥

नर्मोक्तिमन्त्रमुखरः परिवेष्टयन्तीं
कंदर्पशेवधिसनाभिनितम्बबिम्बम् ।
कृष्णोरगीमिव ततो झटिति प्रियायाः
कश्चिन्मसाररशनास्रजमाचकर्ष ॥ १६ ॥

कंदर्पस्य शेवधिर्हेमकुम्भस्तस्य सनाभि सदृशं नितम्बं वेष्टयन्तीं मसाररशना मरकतमेखलैव स्रक्तां कश्चिदाचकर्षाकृष्टवान् । चिरं नर्मोक्तिलीलाकथैव मन्त्रस्तेन मुखरः । दैर्घ्यवर्णाभ्यां कृष्णफणिनीमिव । अन्यश्च गारुडमन्त्रं पठन्हेमघटस्थां फणिनीमाकर्षति ॥

काञ्चीहठापहरणाय करे प्रियेण
न्यस्ते न्यधत्त दयिता त्रपया निरोद्धुम् ।
यत्पाणिपङ्कजमभूत्स्मरधूर्तहस्त-
संज्ञाप्रवृत्तिरिव सैव परस्परस्य ॥ १७ ॥

काञ्च्या रशनाया हठेन बलेनापहरणार्थं प्रियेण हस्ते न्यस्ते सति काञ्चीं रोद्धुं स्त्री स्वं हस्तपद्मं यन्न्यस्तवती सा करन्यसनं परस्परस्य स्मर एव धूर्तस्तस्य या हस्तसंज्ञा ययेङ्गितया गोपनीयोऽर्थः प्रकाश्यते तत्प्रवृत्तिरिवाभूत् । तेनैव काम उद्दीपीत्यर्थः ॥

वस्त्रं हरत्सु विजनेऽथ च चित्तचौर-
लोकेषु तूर्णमबलाजघनस्थलानाम् ।
वीक्ष्य प्रबोधसमयं रसपार्थिवस्य
काञ्ची चिरं कलकलं कलमाततान ॥ १८ ॥

ये चित्तस्य चौरा मनोहराः प्रियास्तेषु स्त्रीजनसंबन्धि वस्त्रं हरत्सु निवारयत्सु सत्सु रसपार्थिवस्य कामदेवस्य प्रबोधमेकाग्रतां वीक्ष्य मेखला चिरं शब्दमकरोत् । चौरेषु च वस्त्रं भयवशात्तूर्णं हरत्सु राज्ञः प्रत्यवेक्षां दृष्ट्वा पूत्कारः कस्यचिदुचितः ॥

प्राणेश्वरेण रभसापहृतोत्तरीय-
मेणीदृशो जघनबिम्बमपत्रपिष्णोः ।
अग्रेऽसृजन्नवनवद्युतिसंस्तवेन
कस्याश्चन स्वयमिवावरणान्तराणि ॥ १९ ॥

प्रियेण त्वरापनीतवसनं स्त्रिया जघनं नवनवकान्तिपरिचयेनान्यानि वस्त्राणीव पर्यधात् । यतोऽपत्रपिष्णोः सलज्जायाः ॥

स्तम्भेन निर्दयनिपीडनविक्लवानि
प्रत्यग्रवेपथुविशेषविशृङ्खलानि ।
प्रेमाकुलं समघटन्त ततोऽङ्गकानि
यूनां कथंचन मिथः परिरम्भणेषु ॥ २० ॥

सस्नेहमालिङ्गनेषु यूनामङ्गकानि स्तम्भेन स्तब्धताख्येन सात्त्विकेन भावेन हेतुना कथंचन संयुयुजिरे । स्तब्धयोः संयोजयितुमप्यशक्यत्वात् । रागवशान्निर्दयं निबिडं निपीडनेन विक्लवानि निःसहानि । तथा प्रत्यग्रो नवो यो वेपथुविशेषः कम्पाधिक्यं तेन विशृङ्खलानि विसंस्थुलानि ॥

शृङ्गारिणां युवतिभिः सह रागयोगा-
त्प्राक्सिद्ध एव मनसोरविभाग आसीत् ।
सुस्यूतयोः स्मरशरैरिव दृश्यते स्म
तस्मिन्क्षणे तु वपुषोरपि नो विभागः ॥ २१ ॥

कामुकानां रामाभिः सह मनसोरविभागो द्वैताभावः प्रागालिङ्गनात्पूर्वमेव, अभिष्व-

ङ्गात्सिद्धो न तु साधित आसीत् । तस्मिन्क्षणे आलिङ्गनावसरे वपुषोर्विभागो भेदो नो दृष्टः । तथा निबिडमालिलिङ्गुर्यथा शरीरयोरैक्यमिवाभूत् । अतः संभाव्यते—कामशरैः सम्यक्स्यूतयोः । स्यूतयोर्हि न भवति भेदः ॥

रोमाञ्चकञ्चुकतनुत्रभृतो ययुस्ते
शृङ्गारिणः सुरतसंगरवीरगोष्ठीम् ।
येषां समं शिततरस्मरकङ्कपत्रै-
श्चक्रे पदं हृदि वधूकुचमण्डलाग्रैः ॥ २२ ॥

रोमाञ्चाः कञ्चुका इव तनुत्रमिव कवचमिव बिभ्रन्तस्ते कामुकाः सुरतयुद्धे वीरभागं ययुः । येषां कामुकानां हृदये तीक्ष्णैः कामशरैः समं स्त्रीस्तनानां मण्डलाग्रै रागोपपुरोभागैः (?) खड्गैश्च पदं चक्रे प्रवेशः कृतः । वीरस्य च युद्धगमने शराणां खड्गानां च वक्षसि प्रवेशः ॥

अन्योन्यगाढभुजबन्धनबन्धुरत्वं
यूनामगाहत तथा परिरम्भमार्गः ।
जज्ञे यथा पृथुलहारलताफलानां
कंदर्पगन्धगजभूतिरजःप्रतिष्ठा ॥ २३ ॥

यूनां तरुणानामालिङ्गनक्रमो मिथो बाहुभ्यां बन्धनं तेन बन्धुरत्वं निर्विवरत्वं तथा प्रापयथा स्थूलानां हारमुक्ताफलानां कामगन्धहस्तिभूतिरजो मण्डनधूलिस्तद्भङ्गिरभूत् । आलिङ्गनवशाच्चूर्णीभूतानि हारमुक्ताफलानि काममदीपयन्नित्यर्थः ॥

एणीदृशां कुचतटी पटुयौवनोष्मा
हारावली च निबिडा जडिमप्रथाभिः ।
ताभ्यामुरःसु सममेव निपत्य यूनां
शीतातपक्लमशमोऽजनि मन्मथस्य ॥ २४ ॥

स्त्रीणां स्तनतटं बहुयौवनतापम् । मुक्ताहारलता च जाड्यातिशयैर्निर्भराभूत् । यूनामुरःसु युगपत्पतित्वा ताभ्यां स्तनतटीहारावलीभ्यां कामस्य शीतातपाभ्यां क्लमस्य शान्तिर्जनिता । अजनीति जनेर्हेतुणिजन्तस्य लुङि कर्मणि रूपम् ॥

नीरन्ध्रमात्तपरिरम्भविजृम्भणस्य
रम्भोरुभिः सह विलासिजनस्य कामः ।
प्रोतं विधातुमिव चेतसि रागसूत्रं
रोमञ्चसूचिनिचयं प्रचुरीचकार ॥ २५ ॥

स्त्रीभिः सह निबिडं गृहीतालिङ्गनविलासस्य तरुणलोकस्य चित्ते राग एव सूत्रं प्रोतं स्यूतमिव कर्तुं रोमाञ्च एव सूचयः सेवन्यस्तासां समूहं कामः प्रचुरीचकार। सूचीभिश्च सूत्रं सीव्यते। रम्भाधिका ऊरवो यासामिति विग्रहः॥

वामभ्रुवां निविडतुङ्गपयोधराग्रे
सत्यं स्वयं वसति पुष्पशरप्रतापः।
तस्मिन्नुरः परिचिते हि तदा युवानो
बभ्रुश्चिरं वपुरुपोढदृढश्रमाम्भः॥ २६॥

स्त्रीणां पीनोन्नतस्तनकोटौ स्वयं कामप्रतापो निश्चितं वसति। हिर्यस्मादर्थे। तस्मिन्स्तनाग्रे तरुणानां वक्षोलग्ने सति तरुणाः शरीरं धैर्यविनाशिघर्मजलमधारयन्। तापेनैव हि घर्मजलोत्पत्तिः॥

प्रेमाकुलं युवजनो वनजेक्षणानां
तं वीप्सयाधररसासवमाचचाम।
जीवाप्तये रतिपतेः पुनरुद्ववाम
यद्विभ्रमादमृतमाननपूर्णचन्द्रः॥ २७॥

स्त्रीणामोष्ठरसमधु युवजनः प्रेमाकुलं स्नेहनिर्भरं कृत्वा मुहुराचचाम पपौ। यस्याधररसस्य विभ्रमादमृतं मुखचन्द्रः कामस्य पुनर्जीवनायोदगिरत्। ओष्ठरसामृतपाने सति कामः सजीव इव संपन्न इत्यर्थः॥

कान्तावगूढवपुषस्तरुणीजनस्य
तानि क्रमान्मसृणतां मणितानि जग्मुः।
लीलाशुका यदनुवादविधेर्गुरूणा-
मग्रे प्रगे व्यधुरनङ्गरहस्यभेदम्॥ २८॥

कान्तैः कामुकैरवगूढमालिङ्गितं वपुर्यस्य तस्य तरुणीजनस्य मणितानि रतिकूजितानि मसृणतां श्रुतिप्रियत्वं प्रापुः। प्रातर्गुरूणां पुरो येषां मणितानामनुवादोऽनुभाषणं तद्विधेः क्रीडाशुकाः कामरहस्यभेदं सुरततन्त्रप्रकाशनं चक्रुः। सुरतावसरे स्त्रियो रतिकूजितानि पुनःपुनस्तथा चक्रुर्यथा शुकैरप्यधीतानीत्यर्थः। प्रगे इत्यव्ययम्॥

लीलारतोद्यदनुपाधिकसामरस्य-
लीनेष्वशेषकरणेषु हठोद्गतानि।
यूनां ययुर्बधिरकर्णपुटोपजाप-
सापत्न्यमेव दयिताजनसीत्कृतानि॥ २९॥

लीलापूर्वे रते सुरते उद्यदुद्गच्छदनुपाधिकमकृत्रिमं यत्सामरस्यं तेन लीनेषु शान्तस्वव्यापारेषु करणेषु सत्सु दयिताजनस्य सीत्कृतानि बधिरस्य श्रुतिविकलस्य कर्णपुटे उपजापो नीचैः कथनं तस्य सापत्न्यं साम्यं ययुः । अश्रूयमाणत्वात् । सुरतसुखावहितैः कर्णैः सीत्कृतानि न श्रुतानीत्यर्थः । हठेनोद्गतानि निर्गतानि ॥

न्यस्तानि मन्मथरसालसमङ्गनाभि-
यूनां तनूषु बभुरार्द्रनखक्षतानि ।
शृङ्गारमत्तकरिणो गलिताः कवाट-
सिन्दूरराजय इवालुलिता मदेन ॥ ३० ॥

कामरसेनालसं कृत्वा स्त्रीभिस्तरुणानां तनुषु लिखितानि सरसनखक्षतानि बभुः । अतः संभाव्यते—शृङ्गार एव मत्तगजस्तस्य कवाटे कटे याः सिन्दूररेखास्ता इव । यतो मदेनालुलिता आर्द्रीकृताः । मन्मथरसालसमित्यनेन तरुणानां सुकुमारतनुत्वं सूचितम् ॥

गीर्वाणपार्वणनिशारमणाननानां
चेतोविलुण्ठनचणानि कुचस्थलानि ।
आदेशतो रतिपतिक्षितिपस्य सद्यः
प्रापुः कठोरकरजक्षतपीडनानि ॥ ३१ ॥

पर्वणि प्रतिपत्पौर्णमास्यन्तरे भवः पार्वणः । पूर्ण इत्यर्थः । 'अन्' इति प्रकृतिभावः । पार्वणः पूर्णो यो निशारमणः । पार्वणनिशारमणवत्पूर्णचन्द्रवदाननं मुखं यासाम् । पूर्णचन्द्रमुख्यः स्त्रिय इति यावत् । देवस्त्रीणां कुचस्थलानि कामराजाज्ञया कठोरैरभङ्गुरैः करजैर्नखैर्यानि क्षतानि व्रणास्तैः पीडनानि प्रापुः । यतश्चेतोविलुण्ठनेन मनोहरणेन वित्तानि । विलुण्ठकस्य च राजाज्ञया शासनं युक्तम् ॥

विश्वोपभोगभृतिपत्त्रकतां रसानां
राजा निनाय निभृतं सुदृशां कपोलान् ।
तेषु व्यलक्ष्यत नवप्रियपाणिजाङ्कै-
स्तस्य स्वहस्तमतकुङ्कुमवर्णपङ्क्तिः ॥ ३२ ॥

रसानां राजा कामः कपोलान्सुदृशां विश्वोपभोगो जगद्राज्यमेव, विश्वे ये उपभोगास्त एव वा भृतिर्वेतनं तत्र पत्त्रकं शासनपट्टं तद्भावमनैषीत् । हिर्यस्मादर्थे । तेषु नवैर्दयितनखक्षतैस्तस्य कामस्य संबन्धिनी स्वहस्तेन मतस्याभिप्रायस्य कुङ्कुममयी वर्णपङ्क्तिर्दृष्टा । जयसाधकतमानां भटानां राजा स्वहस्ताक्षरसहितानि शासनपट्टानि ददाति ॥

प्रत्यग्रपुष्पशरविभ्रमसामरस्यं
कान्ताजनः प्रणयकोपसनाभि चक्रे ।

यस्मिन्पुरः प्रियतमस्य रदच्छदाग्रं
दन्तैः प्रसह्य दशति स्म स ताण्डवभ्रु ॥ ३३ ॥

स्त्रीलोकः प्रत्यग्रेषु नवेषु कामविलासेषु सामरस्यं प्रणयकोपस्य सनाभि समं चक्रे। यस्मिन्सामरस्ये सति पुरोऽग्रे स्थितस्य वल्लभस्यौष्ठं दन्तैः करणैः सपत्नीजनः सताण्डवे भ्रुवौ यत्रैवं कृत्वा दशति स्म। प्रीतिकोपे च सभ्रुकुटिदन्तैश्च दशन्ति ॥

लज्जावती परिजहार रतिप्रसङ्ग-
प्रोद्धात एव मुखराभरणोपरोधम् ।
तस्यास्त्वशेषपलटभागुणपैशुनाय
जज्ञे हठप्रविसृतः स्वककण्ठनादः ॥ ३४ ॥

रतिप्रसङ्गस्य प्रोद्धात आरम्भ एव काचिन्मुखराभरणानां रशनादीनामुपरोधं परिजहार तत्याज। यतो लज्जावती। मम सुरतप्रागल्भ्यं मा कश्चिज्ज्ञासीदिति काञ्चीकङ्कणादीनत्यजदित्यर्थः। तस्याः पुनः समस्तप्रगल्भगुणानां सूचनार्थं निजः कण्ठनादो जातः। यतो हठेन प्रविसृतो निर्गतः। विदग्धस्त्रीणां संभोगकाले कण्ठकूजितस्यावश्यंभावात् ॥

तन्वी तथा रतिपथातिरसाधिरूढा
व्यानञ्ज कापि पुरुषायितनैपुणानि ।
स्रस्तो यथा पृथुविमर्दतया स्वजूट-
बन्धोऽपि तां चिरतरं किरति स्म पुष्पैः ॥ ३५ ॥

रतिपथेऽतिरसमधिरूढा कापि तन्वी पुरुषायिते विपरीतसुरते नैपुण्यानि वैदग्धीस्तथा व्यानञ्ज प्रकाशितवती यथा सुरतक्षोभवशाद्बहुमर्दभावेन शिथिलो निजजूटबन्धोऽपि पुष्पैरकिरत्। अपिशब्दादनिष्टस्यापि सचेतनेभ्यः पुष्पस्य सिद्धिः ॥

काचित्तथा विबुधमुग्धमुखी गरीयो
धाष्टर्यं दधार विपरीतरतिक्रियासु ।
चेतोभुवो विवृतकार्मुककर्मतान्ते-
र्जज्ञे यथालकततिर्नवतालवृन्तम् ॥ ३६ ॥

काचिद्देवस्त्री विपरीतसुरतारम्भे तथा प्रागल्भ्यमावहद्यथा कार्मुककर्मणा धनुराकर्षणेन तान्तिः खेदो विवृता प्रकाशिता येन तस्य चेतोभुवः कामस्यार्थात्तस्या अलकततिर्नवं तालवृन्तं व्यजनं जज्ञे जाता। कम्पमानामलकमालां दृष्ट्वा तरुणानां कामश्चिरमदीपीत्यर्थः ॥

शृङ्गारिणोरथ मिथः परिचुम्बनानि
व्यातन्वतोर्विबभतुर्वदनेन्दुबिम्बे ।

अन्योन्यमात्तघटना मकरध्वजस्य
　　सर्वस्वसंभृतिसमुद्रपुटद्वयीव ॥ ३७ ॥

परिचुम्बनानि मिथोऽन्योन्यस्य व्यातन्वतोः कुर्वतोर्विलासिनोर्मुखचन्द्रौ विबभतुः । मिथोऽन्योन्यस्माद्विबभतुरिति वा योज्यम् । अन्योन्यमात्ता गृहीता घटना संघट्टो यया सा कामस्य सर्वस्वस्य संभृतिः संभारो यत्र तस्य समुद्गकस्य पुटद्वयीव । 'समुद्गपुटे इव द्वे' इति निपुणः पाठः ॥

धौतासिपट्टरुचिरं प्रियकेशपाश-
　　माक्रष्टुमर्पितकराः पुरुषायितेषु ।
तस्थुस्तथा युवतयो गणिता यथात्म-
　　सैन्ये प्रधानसुभटा इति मन्मथेन ॥ ३८ ॥

धौता येऽसिपट्टास्तद्वद्वर्णसंनिवेशाभ्यां रुचिरं प्रियकेशपाशं विपरीतरतेष्वाक्रष्टुं न्यस्तहस्तास्तरुण्यस्तथा तस्थुर्यथा मन्मथेन स्वसैन्यमध्ये प्रधानयोधा इति गणिताः । स्त्रीभिः पुरुषाणां केशपाशाकर्षणसमये कामो दीप्तोऽभवदित्यर्थः । सुभटानां खड्गसंबन्धः ॥

काचिद्बभार पुरुषायितविक्लवाङ्गी
　　स्वेदोदकद्रवदलक्तकमङ्घ्रिमूलम् ।
आर्द्रव्रणाङ्कमिव शातझषावचूल-
　　वाणौघकीर्णपथसंसृतिसाहसेन ॥ ३९ ॥

पुरुषायितेन विक्लवानि निःसहान्यङ्गानि यस्याः सा काचित्पादमूलं स्वेदोदकेन द्रवदलक्तकं यस्य तद्बभार । एतेन खेदानुरागौ द्योतितौ । अतः संभाव्यते—शातास्तीक्ष्णा ये झषावचूलस्य कामस्य वाणौघास्तैः कीर्णो यः पन्थास्तत्र संसृतिर्मार्गे चरणेनेव साहसं तेनार्द्राः सरसा व्रणा अङ्कश्चिह्नं यस्य तद्वदिव ॥

मीलद्विलोचनपुटाः स्फुरिताधरौष्ठा-
　　स्तस्थुश्चिरं मृगदृशः सुरतावसाने ।
ध्यानं जपं च युगपत्प्रतिपद्य सम्य-
　　गाराधयन्त्य इव मान्मथमन्त्रतन्त्रम् ॥ ४० ॥

सुरतसमाप्तौ स्त्रियः संकुचन्नेत्राः कम्पमानौष्ठयश्चिरं तस्थुः । अतः संभाव्यते—तुल्यकालं ध्यानं जपं च प्राप्य कामसंबन्धिमन्त्रतन्त्रमाराधयन्त्यः प्रसादयन्त्य इव । नेत्राणां मीलनं सुरतरसानुभवाद्ध्यानवशाच्च । अधराणां स्फुरणं दन्तक्षतव्यथया जपेन च ॥

सुरतविरतौ मीलन्नीलोत्पलप्रतिमेक्षण-

क्षणपिशुनिता पूर्वावाच्यप्रपञ्चचमत्कृति।

क न नवघनोदञ्चद्धर्मच्छटाघटनान्मिथो

गलदिव हठप्रेम्णा युग्मं रराज विलासिनाम् ॥ ४१॥

संभोगान्ते रसानुभावात्संकुचन्ति नीलोत्पलतुल्यानि यानीक्षणानि नेत्राणि तैः पिशुनिता सूचिता पूर्वाद्भुतावाच्यप्रपञ्चा वक्तुमशक्या चमत्कृतिर्यस्य तद्विलासिनोर्मिथुनं घना नवा उदञ्चन्त्यो या घर्मच्छटास्तासां घटनाद्धेतोर्हठेनात्यन्तं प्रेम्णा स्नेहेन गलदिव क न बभौ। नेदं घर्माम्बु, किं तर्हि, स्नेहरस एवेत्यर्थः॥

तासामण्डलितावखण्डदयिताश्लेषप्रहर्षात्कुचौ

रेजाते जलजच्छदायतदृशां स्वेदाम्बुनो बिन्दुभिः।

व्यावल्गन्मदनानुगत्वररतिश्रोत्राग्रवेगस्खल-

न्मुक्तादन्तुरहेमकुण्डललिपेरारूढवन्तौ धुरम् ॥ ४२॥

अखण्डं निबिडं दयितकर्तृकादाश्लेषान्मण्डलितौ मण्डलाकारौ संपन्नौ तासां कुचौ घर्मजलस्य कणैः शुशुभाते। व्यावल्गन्क्रीडासंचारी यो मदनस्तस्यानुगत्वर्यनुयायिनी या रतिस्तस्याः श्रोत्राग्राद्वेगेन स्खलत्पतन्मुक्तादन्तुरं यद्धेमकुण्डलं तस्य लिपेश्छ्रस्य धुरमारूढवन्तौ। सुवर्णकुण्डलसदृशावित्यर्थः। उपमोपक्रमोत्प्रेक्षेयम्॥

मुकुलितदृशो घर्माम्भोभिर्विमृष्टविशेषका

वपुषि विधृतोत्कम्पे सान्द्रस्फुरत्पुलकोर्मयः।

इति युवतयो मज्जं मज्जं रसे झषलक्ष्मण-

श्चिरमुपवहंल्लावण्यस्य क नानवधिं विधिम् ॥ ४३॥

सुरतखेदवशान्मीलन्नेत्रा घर्मजलैरुत्पुंसिततिलकाः सकम्पे शरीरे कृत्वा(?) स्फुरत्पुलकोर्मी रोमाञ्चोल्लासो यासाम्। ता युवतयो झषलक्ष्मणः कामस्य रसे मज्जं मज्जं निमज्ज्य निमज्ज्य लावण्यस्य विधिमियत्तारहितं क न बभुः। कामरसोऽत्र जलेनाभेदेनाध्यवसितः। मज्जं मज्जमिति 'आभीक्ष्ण्ये णमुल्च' इति णमुल्॥

तत्कालत्रुटदच्छहारफलकैरध्यास्यमानं वधू-

केलीतल्पतले किमुच्छलितत्तां गण्डोपधानं दधौ।

शृङ्गारैकमये पुपोष समये तस्मिन्नुपेत्य क्षितिं

तारान्तःपुरसुन्दरीभिरुत किं चन्द्रो रतिव्यत्ययम् ॥ ४४॥

वधूनां क्रीडाशयने गण्डोपधानं कपोलमसूरिकोच्छलिततां स्थानान्तरगमनं किं

दधौ । तत्कालं सुरतकलहे त्रुटन्त्यच्छानि हारफलकानि मुक्ताफलकानि तैरध्यास्यमानमुपर्याश्रीयमाणम् । तस्मिञ्श्रृङ्गारप्रकृतौ काले भूमिमवरुध्य तारा एवान्तःपुराङ्गनास्ताभिः समं चन्द्रो विपरीतसुरतं किं दधौ ॥

वेणीदण्डो रतिरसहठक्षोभविस्त्रस्तबन्धः
　पारेस्कन्धं व्यधित सशिरोरत्नखण्डः प्रतिष्ठाम् ।
तासामुद्यत्प्रसभसुरभिश्वासवातोपभोगे
　भोगो लोभादुपनत इवानङ्गकृष्णोरगस्य ॥ ४५ ॥

रतिरसेन हठेन क्षोभः कलहस्तेन विस्रस्तः शिथिलो बन्धो ग्रन्थिर्यस्य स वेण्येव दीर्घत्वाद्दण्डः स्कन्धस्यांसस्य पारे पश्चात्प्रतिष्ठां स्थितिमकरोत् । सह शिरोरत्नखण्डेन वर्तते यः सः । तासामुद्यन्निर्गच्छन्प्रसभमत्यर्थं सुरभिर्यः श्वासवातस्तस्योपभोगे लोभादागतः कामकृष्णाहेर्भोगः शरीरमिव । शिरोरत्नखण्डं फणारत्नस्थानीयम् ॥

ध्वंसं भेजेऽङ्गरागो निविडतरपरिष्वङ्गभङ्गिप्रसङ्गा-
　त्त्रुत्रोटाशेषरत्नाभरणपरिकरो भूयसा संभ्रमेण ।
शीर्णत्वं केशपाशोऽगमदिति सफलीभूय कान्तोपभोगा-
　दाकल्पोऽनङ्गलीलाविधिषु विधुरतामालिलिङ्गाङ्गनानाम् ॥ ४६ ॥

निविडमालिङ्गनादङ्गरागोऽनश्यत् । सर्वेषां रत्नभूषणानां सामग्री बहुना क्षोभेन चिच्छिदे । केशपाशः सस्रंसे । एवं कामक्रीडासु प्रियेषूपयोगादुपयुज्यमानत्वात्फलितो भूत्वा वेषो विधुरतां स्वरूपनाशमालिलिङ्गावापत् ॥

कीर्णेऽपि श्रवणोत्पले रतिरसारम्भोल्लसद्वल्लभ-
　प्रावारापहृतिह्रिया जघटिरे ये नाम नाल्पायुषः ।
ते कंदर्पविलासतान्तिहतये धूतेऽपि चेलाञ्चले
　कान्तानां सदनेषु चित्रमगमन्दीपाः कथाशेषताम् ॥ ४७ ॥

रतिरसारम्भेणोल्लसन्तः । सरसा इत्यर्थः । ये वल्लभास्तैः प्रावारापहृतिर्वस्त्रहरणं तेन ह्रिया लज्जया हेतुभूतया शमनार्थं स्त्रीभिः कर्णोत्पले क्षिप्ते दीपा अल्पायुषो न नाम जघटिरे न शान्तास्ते दीपाः कामविलासैर्या तान्तिः खेदस्तस्य हतये निवारणार्थं वस्त्राञ्चलेऽपि कम्पिते विलासिनामावासेषु कथाशेषतामगमन् । अशाम्यन्नित्यर्थः । एतेन रात्रिसमाप्तिः सूचिता ॥

आलीषु क्रमशः प्रविश्य गलितालक्ताङ्घ्रिमुद्रासखे
　न्यस्यन्तीषु दृशं विलाससशयने स्मेराननं वीप्सया ।

काचित्पादनखाञ्चलेन किमपि क्ष्मामालिखन्ती मुहुः
सव्रीडं च सविभ्रमं च कमितुश्चित्ते निखाताभवत् ॥ ४८ ॥

श्रमवशाद्गलितालक्तकयोरङ्घ्र्योः पादयोर्मुद्रा संस्थानसंक्रातिस्तत्सखे क्रीडाशयने सहासं मुखं कृत्वा सखीषु पुनः पुनर्देशं क्षिपन्तीषु सतीषु लज्जावशाचरणनखाग्रेण किमपि सलज्जं सविलासं च भूमिं लिखन्ती काचित्प्रियस्य चित्ते निखाता रोपिताभवत् ॥

पौनःपुन्योपचितसुचिरानङ्गकेलिश्रमार्ता
निद्रान्ति स्म द्विगुणतरुणीबाहुगण्डोपधानम् ।
ये विस्रब्धं क्वचन जघटे प्रत्युषस्तूर्यघोष-
स्तेषां योषित्कुलगुरुनवोच्चाटनामूलमन्त्रः ॥ ४९ ॥

पौनःपुन्येन वीप्सयोपचिता वर्धिता यानङ्गकेलिस्तया श्रमस्तेनार्ताः सन्तो ये निद्रान्ति स्म निदद्रुः । कथम् । द्विगुणास्तरुणीबाहुदण्डा एवोपधानं गण्डको यत्र । तेषां प्रभातपटहशब्दो योषित्कुलगुरोः कामस्य संबन्धी नव उच्चाटनामूलमन्त्रः क न संपन्नः । उच्चाटनात्समयभ्रंशान्निग्रहस्तत्र प्रधानभूतो मन्त्रः ॥

इत्थं शृङ्गारभङ्गीरसमयसमयाविष्कृतेः किं रजन्या
सार्धं नीहारधाम्ना स्फुटमघटि रतौ वैपरीत्यप्रयोगः ।
तस्मिन्नस्ताद्रिकेलीशयनतलवलद्विग्रहे ह्यग्रहीत्सा
पृष्ठारूढा विशीर्णे तिमिरकचभरे संकुचत्तारकत्वम् ॥ ५० ॥

एवं शृङ्गारमयप्रकाशनाद्रात्र्या समं चन्द्रेण विपरीतसुरतप्रयोगः किं कृतः । यतः सा रात्रिः पृष्ठारूढा भूमेश्चलिता परिवर्तमाना च । संकुचन्त्यस्तारका नक्षत्राणि कनीनिका च यस्य तद्भावमग्रहीत् । तस्मिंश्चन्द्रेऽस्ताद्रिरेव क्रीडाशयनं तत्र विषये वलत्कम्पमानः पुरुषायितेष्वधःस्थो विग्रहो यस्य तस्मिन्सति । एतेन राज्यवसानं प्रकाशितम् । 'रजन्याः सार्धम्' इति पठन्ति केचित् । एवं च व्याचक्षते—शृङ्गारभङ्ग्या रसमयसमयस्याविष्कृतिर्यस्या इति विशेषणं तत्तु न सहृदयानां मतमिति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये क्रीडावर्णनं नाम पञ्चदशः सर्गः ।

---

षोडशः सर्गः ।

शीतांशावथ शीर्यमाणमहसि क्रीडालतामण्डपे
भूयः शैलभुवा समं रतिपतावातन्वतोऽनुग्रहम् ।

इत्युत्ताण्डवभिन्नषड्जसचिवैर्वाचां प्रपञ्चैर्जगु-
श्चण्डीशानुचराश्चराचरगुरोः प्रत्यूषभोगावलिम् ॥ १ ॥

चण्डीशानुचरा बन्दिनः । तेषां तद्देवतावत्त्वात् । भगवतः प्रत्यूषे प्रातर्भोगावलिं कालोचितं काव्यमूचुः । तैरुत्ताण्डव उद्भटो भिन्नषड्जः प्रभातोचितो रागस्तस्य सचिवैर्वाचां विस्तरैः शीतांशौ चन्द्रे प्रातः क्षीयमाणमहसि नश्यत्तेजसि सति क्रीडालतामण्डपे विषये भगवत्या समं कामे पुनः प्रसादं कुर्वतः ॥

निद्रां रुद्र दरिद्रतां नय दृशां ध्वान्ते प्रशान्ते श्रिताः
पश्यैताः परभागलाभमधुना त्वत्कण्ठपीठीरुचः ।
किं चान्यद्यदसौ सुधांशुरुदधावामूत्रितान्तर्जल-
स्त्वच्चूडाजडतेजसस्तदुपमाद्वैराज्यमुत्सृज्यते ॥ २ ॥

हे रुद्र, त्वं दृशां निद्रां संकोचं दरिद्रतां क्षीणत्वं नय । त्रिनेत्रत्वाद्दृशामिति बहुवचनम् । यतस्त्वं पश्य । ध्वान्ते तमसि शान्ते सति त्वत्कण्ठ एव वर्तुलत्वात्पीठी तस्या रुचः परभागो विजातीयसंनिधावुत्कर्षः स एव लाभ उत्कृष्टवस्तुप्राप्तिर्न तु प्राप्तिमात्रं तं श्रिताः । इदानीं तमसो निवृत्त्या सति प्रकाशे श्यामाः कण्ठप्रभा उन्मज्जन्तीत्यर्थः । किं चान्यत् । न केवलं कण्ठप्रभा एव स्फुरन्ति यावदिदानीमयं चन्द्रः समुद्रे आसूत्रितं कृतमन्तर्जले ब्रुडनं येन स यद्भवति तत्ततस्त्वच्चूडाजडतेजसो भवन्मौलीन्दोरुपमैव द्वैराज्यमुत्सृज्यते गलितम् । सादृश्ये हि सति द्वयोः स्पर्धित्वाद्वैराज्यम् । चन्द्रेऽस्तं गते सति त्वच्चूलाचन्द्र एव शोभत इत्यर्थः ॥

मध्येवारिधि मग्न एव शशभृड्डिण्डीरपिण्डक्रमा-
न्नैवाद्यापि च रोचिषा तिलकिता प्राची कठोरत्विषः ।
तद्द्वित्रक्षणमांसलान्धतमसः प्रत्यागतौ प्रेयसा-
मावासादभिसारिकापृथुदृशां नन्वेष योग्यः क्षणः ॥ ३ ॥

डिण्डीरपिण्डः फेनगुलकस्तस्य क्रमश्चङ्क्रमस्तमाश्रित्य । ल्यब्लोपे पञ्चमीयम् । फेनगुलकवच्चन्द्रो मध्येसमुद्रं ब्रुडितः । कठोरत्विषः सूर्यस्य रोचिषा प्रभया प्राची पूर्वा दिङ् न तिलकिता भूषिता । चन्द्रोऽस्तं गतः सूर्यप्रभापि नोदितेत्यर्थः । तत्तस्माद्धेतोः प्रेयसामावासात्संकेतस्थानात् [प्रति]गृहं प्रत्यागमने विषये एष क्षणः कालोऽभिसारिकासु मध्ये पृथुदृशां योग्यः । प्रकाशाभावेन तासामलक्ष्यत्वात् । यतो द्वित्रा ये क्षणाः कालकलास्तान्यावन्मांसलं घनमन्धतमसं गाढतमो यत्र । अत ऊर्ध्वं तमसो विनश्वरत्वात् । द्वित्रेति द्वौ वा त्रयो वेति विग्रहः । 'बहुव्रीहौ संख्येये—' इति डजन्तः । 'अभिसारिकामृगदृशाम्' इत्यपपाठः । 'अभिसारिकापृथुदृशाम्' इति सार्थकः पाठः । पृथुदृशो दीर्घनेत्रामाविदर्शिन्यश्च ॥

निर्यान्तीनां कथमपि गृहात्प्रेयसः सुन्दरीणां
चेतो दातुं पदमपि पुरो गाहते नाभिमुख्यम्।
दर्शं दर्शं दयितवदनं भूय एवोत्सुकाना-
मूरुस्तम्भाकुलमथ तथैवेहते गात्रतन्त्रम्॥ ४॥

प्रेयसो गृहात्संकेतस्थानान्निर्यान्तीनामभिसारिकाणां चेतः कर्तृ एकमपि पदं पुरोऽग्रे दातुं संमुखत्वं न गाहते। अनिवृत्तोत्कण्ठत्वात्। कान्तमुखं दर्शं दर्शं दृष्ट्वा दृष्ट्वा पुनरपि अर्थात्कान्तान्प्रत्युत्सुकानां सोत्कण्ठानां तासां गात्रतन्त्रमङ्गमङ्गमथ तथैवेहते चेष्टते। पदमात्रमपि न ददातीत्यर्थः॥

अम्भोधौ सलिलं निमीलति तमीनाथः पथि स्वःसदां
कोष्णश्वासमयो वियोगविगमात्कोकानने चानिलः।
वह्निः पूषदृषत्सु पूर्वशिखरिण्युष्णांशुरुर्वीदिवा-
वक्ष्णोर्वर्त्मनि चोन्मिषन्ति बत ते भिन्ना मिथो मूर्तयः॥ ५॥

समुद्रे जलं निमीलति निस्तरङ्गं भवति। चन्द्रस्याल्पप्रभत्वात्। स्वःसदां देवानां पथि व्योम्नि तमीनाथश्चन्द्रो निमीलति निष्प्रभो भवति। कोकानां चक्राणाम्। विरहवशादुष्णश्वासप्रकृतिर्वायुः। पूषदृषत्सु सूर्यकान्तेषु वह्निरुन्मिषति ज्वलति। पूर्वाद्रावुष्णांशुः स्फुरति। अक्ष्णोर्वर्त्मनि नयनमार्गे उर्वीदिवावुन्मिषतः। दृग्गोचरे भवत इत्यर्थः। बताश्चर्ये। तव मूर्तयोऽन्योन्यस्माद्भिन्नाः। कासांचिन्निमीलनात्कासांचिदुन्मीलनात्॥

दिश शिव दृशं स्थाने स्थानेऽवनावधुनाप्यसौ
रजनिपयसां स्तोकः स्तोमो मनागवशिष्यते।
उपकमलिनीकूलं त्वङ्गद्रथाङ्गकुलाङ्गना-
नयनसलिलं यस्यापुष्णात्कवोष्णदशां निशि॥ ६॥

हे शिव, त्वं दृशं दिश। पश्येत्यर्थः। अद्यापि स्थाने स्थानेऽवश्यायाम्भसां स्तोकोऽल्पः स्तोमः पुञ्जो मनागवशिष्यते। पद्मिनीतटसमीपे त्वङ्गच्चक्रवाकीनयनसलिलमश्रु यस्य निशाम्बुस्तोमस्य कवोष्णदशामुष्णत्वमकरोत्। चक्रवाकीबाष्पयोगाच्छीतोऽप्यत्रश्याय उष्णः संपन्न इत्यर्थः॥

व्यञ्जन्नगूढमुदरे कमलं सराग-
पद्माकरापचितिदुर्ललिताग्रपादः।
जाते प्रभातसमयेऽप्यगजाभुजंग
पश्य स्वपित्ययमितो विधुरन्तरब्धेः॥ ७॥

उदरे मध्ये कमलं मृगं प्ररूढं व्यञ्जन् । सरागा ये पद्माकराः पद्मसरांसि तेषामपचितिः संकोचस्तत्र दुर्ललिता अग्रपादा यस्य स विधुश्चन्द्रः प्रभातसमये जाते समुद्रमध्ये स्वपिति । अस्तं गत इत्यर्थः । अथ च विधुर्विष्णुस्तत्पक्षे [कमला] पद्मा लक्ष्मीस्तस्याः करौ हस्तौ ताभ्यामपचितिः पूजा तत्र दुर्ललितावग्रपादौ यस्य । अपिशब्देन स्वापस्यासमय उक्तः ॥

म्लायल्लीलाभवनवलभीदीपकान्तौ भजन्ते
　याः प्रत्यूषे दयितमतनूत्कण्ठया कम्बुकण्ठ्यः ।
पार्श्वस्तम्भज्वलदभिनवोष्णांशुरत्नैरयत्ना-
　त्तासां तत्र क्व न किल दिशः सप्रकाशा घटन्ते ॥ ८ ॥

म्लायन्ती क्रीडाभवनेषु दीपकान्तिर्यत्र तस्मिन्प्रत्यूषे । अतनुः कामः । अतनुरनल्पा वोत्कण्ठा यता हेतुभूतया याः कम्बुकण्ठ्यः शङ्खगलाः प्रियं भजन्ते तासां पार्श्वस्तम्भेषु ज्वलन्ति यान्युष्णांशुरत्नानि सूर्यकान्तास्तैर्दिशो यत्नं विना सप्रकाशाः क्व न घटन्ते जाताः । यावत्प्रियमालिङ्गंस्तावत्प्रभातं जातमित्यर्थः ॥

अग्रे नीराजित इव नवावाप्तधैर्योऽर्यमाश्म-
　ज्वालाजालैरयमुदयते चक्रवर्ती ग्रहाणाम् ।
व्यक्तो योऽभूद्युवतिवदनोल्लेखसर्वस्वचौरो
　रात्रौ सोऽथ ब्रुडति जडगुर्भूमिभृत्कंदरासु ॥ ९ ॥

प्राप्तधैर्यः, सूर्यकान्तज्वालाजालैर्नीराजितः कृतशान्तिकोऽयं ग्रहाणां चक्रवर्ती सूर्य उदयते उदितः । अथ स जडगुः शीतांशुर्भूमिभृत्कंदरासु अस्ताद्रिगुहासु ब्रुडति। यश्चन्द्रो रात्रौ स्त्रीमुखशोभासर्वस्वचौरः । चक्रवर्ती कृतशान्तिक उदेति। चौरश्च भयान्निलीयते ॥

चिरमचिनुत स्वर्लोकस्त्रीविसारितकौसुम-
　प्रकरकरणिं ताराचक्रं यदम्बरकुट्टिमे ।
सपदि समदायानक्लाम्यत्पतङ्गतुरंगम-
　श्वसितपवनासङ्गेनेव स्यदात्तदपास्यते ॥ १० ॥

यत्ताराचक्रमम्बरकुट्टिमे दिव्यस्त्रीविसारितपुष्पशोभामवहत् । समदायानेन क्लाम्यन्तः खिद्यमाना ये पतङ्गतुरंगमाः सूर्याश्वास्तेषां श्वसितपवनस्तदासङ्गेनेव स्यदाद्वयात्ताराचक्रमपास्यते निवार्यते । आयानमश्वातम्ब (?) इति केचित् । तदा समदेति पदमसङ्गतम् ॥

क्व स्विद्विमुच्य गलतः स्वमणीन्प्रयातो
　देवोऽधुना त्रिजगतीदयितः सुधांशुः ।

प्रस्तौति यद्विरहकालमवेत्य सूर्य-
कान्तोऽपि संप्रति हठादनलप्रवेशम् ॥ ११ ॥

गलतो जलं स्रवतो नश्यतश्च स्वमणींश्चन्द्रकान्तांस्त्यक्त्वा चन्द्रस्त्रिजगत्या दयितः। आह्लादकत्वात्। क स्विद्गतः कुत्र नु गतः। यस्य चन्द्रस्य विरहकालमवेत्य ज्ञात्वा सूर्यकान्तोऽनलप्रवेशं सूर्यसंबन्धाज्ज्वलनम्, दुःखवशादग्नौ शरीरत्यागं च प्रस्तौत्यारभते। अपिशब्देन विपक्षत्वं सूचितम् ॥

हृष्यत्पङ्कजसौखसुप्तिकदशावस्कन्दनासादित-
प्रौढामोदमदः स वाति सपदि प्रत्यूषवेलानिलः ।
योऽशेषक्षणदाक्षणाधिकधनुर्दण्डश्रमश्रेयसीं
कंदर्पस्य ललाटतः प्रतितुटि स्वेदोर्मिमाचामति ॥ १२ ॥

हृष्यन्ति प्रबुद्धानि यानि पङ्कजानि तेषां सौखसुप्तिकदशा। सुखसुप्तं स्वपनं पृच्छति। 'पृच्छतौ सुस्नातादिभ्यः' इति ठक्। तस्य दशाया अवस्कन्दनमाक्रमणं तात्पर्येणानुकूल्यभजनं तेन हेतुनासादितः प्रौढ आमोदो येन। प्रत्यूषवेलायाः प्रातःकालस्यानिलो वहति यो वायुः कंदर्पस्य ललाटतः प्रतितुटि प्रतिक्षणं स्वेदोर्मिमाचामति निवारयति। अशेषः सकलो यः क्षणदाक्षणो रात्रिकालस्तदाधिकं धनुर्दण्डश्रमस्तेन श्रेयसीं प्रभूताम्। प्राभातिकवायुस्पर्शाद्विलासिनां कामः पुनरपि प्ररोहतीत्यर्थः ॥

पश्यारोढुमयं त्विषां परिवृढः पूर्वोर्वरीभृच्छिखां
प्रस्तौत्यप्रतिवस्तुवेगसुहृदं प्रस्पन्दयन्स्यन्दनम् ।
यस्योत्तुङ्गरथाङ्गसङ्गविगलद्ग्रावाग्रसंघट्टजं
श्रुत्वेव स्वनितं जवेन नलिनीखण्डोऽयमुद्बुध्यते ॥ १३ ॥

त्वं पश्य। अयं त्विषां परिवृढः प्रभापतिः पूर्वो य उर्वीभृत्पर्वतस्तस्य शिखामग्रमारोढुं प्रस्तौत्यारभते। अप्रतिवस्तोरप्रतिनिधेर्वेगस्य सुहृदं सहचारिणं स्यन्दनं रथं स्पन्दयंश्चालयन्। यस्य रथस्योत्तुङ्गं यद्रथाङ्गं तत्सङ्गेन विग(द)लंश्चूर्णीभवन्यो ग्रावाग्रसंघट्टः शिलाकुलं तस्माज्जातं शब्दमिव श्रुत्वायं नलिनीखण्डः पद्मिनीगणो जवेनोद्बुध्यत उन्मीलति ॥

नीरन्ध्रोदयरागसीधुशशभृद्बिम्बानुतर्षाञ्चिता
तारालीकुसुमोपकारगहने व्योमाङ्गणे यामिनी ।
नक्तं नूनमसेवतासवरसक्रीडां प्रभातेऽरुण-
द्योतोद्यन्मदशोणिमा स्खलति यत्संप्रत्यशेषाध्वसु ॥ १४ ॥

नीरन्ध्र उदयराग एव लोहितत्वात्सीधु मद्यं यत्र स शशभृद्बिम्ब एवानुतर्षः पान-

पात्रं तेनाश्रिता यामिनी नक्तं रात्रौ तारावल्येव कुसुमोपकारः पुष्पशयनं तेन गहने व्योमैवाङ्गणं तत्रासवरसक्रीडां नूनमसेवत । यद्यतः प्रभाते सा सर्वपथेषु स्खलति विवर्तते पतति च । अरुणद्योत एवोन्मदशोणिमा मदरागो यस्याः ॥

तल्पे स्वल्पीकुरु परिचयं देवदेवोपकण्ठ-
क्रीडावापीपयसि कुहरेन्दिन्दिरस्यन्दिवाचः ।
यन्मीलन्त्यः सपदि कुमुदश्रेणयः प्रस्तुवन्ति
त्वत्स्तोत्रायाञ्जलिपुटमिवाविर्भवत्कुड्मलौघाः ॥ १५ ॥

त्वं तल्पे परिचयं स्वल्पीकुरु । शय्यां त्यजेत्यर्थः । यद्यतो मीलन्त्यो निकटजले कुमुदपङ्क्तयः कुड्मलौघैर्हेतुभिस्त्वत्स्तोत्रार्थमञ्जलिपुटमिव प्रस्तुवन्त्यारभन्ते । कुहरे गर्भे इन्दिन्दिराणां भ्रमराणां स्यन्दिनी विलसनशीला वाग्यासाम् ॥

तनुषु तनुते चन्द्रग्राव्णां सिराव्रणरोपणं
झटिति हरते विश्वस्याग्रात्तिरस्करिणीं दृशोः ।
अपि च मिहिरोऽकूपारापस्मृतिक्षतिमान्त्रिको
हरिहरिदलंकारं सिंहासनीकुरुते गिरिम् ॥ १६ ॥

चन्द्रग्राव्णां चन्द्रकान्तानां तनुषु सिराव्रणानां नाडीव्रणानाम् । अविच्छिन्नप्रवाहत्वात् । रोपणं रविस्तनुते । चन्द्रकान्तानां शोषणत्वात् । विश्वस्य दृशोरग्रात्तिरस्करिणीं हरते । ध्वान्तरूपाम् । अपि च किं चाकूपारस्य समुद्रस्यापस्मृतिः क्षोभस्तस्य क्षतौ निवारणे मान्त्रिकः । क्षोभनिवारक इत्यर्थः । मिहिरः सूर्यो हरिहरित इन्द्रदिशोऽलंकारं भूषणं गिरिमुदयपर्वतं सिंहासनीकुरुते । आदित्य उदित इत्यर्थः ।

एता दिशस्त्रिदशनायकवल्लभायाः
प्राप्ते पयोधरधुरामुदयाद्रिशृङ्गे ।
देवावलोकय यविष्ठदिनेशरश्मि-
रेखा नवीनकरजाङ्कलिपिं पठन्ति ॥ १७ ॥

त्रिदशनायकस्येन्द्रस्य वल्लभाया ऐन्द्र्या दिशः स्त्रीत्वान्नायिकात्वेन व्यवहार्यायाः पयोधरधुरां स्तनभङ्गिं प्राप्ते उदयपर्वतशिखरे एता यविष्ठस्य बालस्य दिनेशस्य रश्मिरेखा नवीनानां सरसानां करजाङ्कानां नखक्षतानां लिपिं टङ्कं पठन्ति । लिपेश्च वर्णविन्यासरूपायाः पठनमुचितम् ॥

नियतमयमनेहा तापनस्येव रूढिं
द्रढयति भुवि धाम्नो वाङ्मयैकात्मनोऽपि ।

मुहुरिह हि कवीन्द्रा जैह्वचक्षुःप्रबोधा-
त्करबदरमिवाग्रे विश्वमालोकयन्ति ॥ १८ ॥

तापनस्य सूर्यसंबन्धिनो धाम्नस्तेजसो रूढिमयमनेहाः प्रातःकालो यथा द्रढयति तथा वाङ्मयमेकमात्मा रूपं यस्य तस्य च धाम्नो रूढिमवश्यं द्रढयति । प्रातःकालो रविसंबन्धि वाङ्मयरूपं च द्विविधं तेजः पृथिव्यां दृढीकुरुत इत्यर्थः । ब्राह्ममुहूर्तस्य सारस्वतक्षणत्वात् । हिर्यस्मादर्थे । जैह्वं जिह्वासंबन्धि यच्चक्षुस्तस्य प्रबोधात्कवीन्द्रा विश्वं करबदरमिव पुरः पश्यन्ति । धामद्रढिम्नैव हि चक्षुषः प्रबोधः ॥

दिङ्मय्यो दश देवताः परिणतध्वान्ताद्वयेऽनेहसि
प्रध्वस्ता इव खण्डिता इव निरालम्बा इवैक्ष्यन्त याः ।
जीर्णोद्धारमिवाधुना विदधते तासाममी विष्टप-
त्रय्युन्मीलनधार्मिका भगवतो रात्रिद्रुहो रश्मयः ॥ १९ ॥

परिणतं संक्रान्तं ध्वान्ताद्वयमन्धकारैक्यं यत्र । सकलविभागास्तमयात् । अनेहसि काले । रात्रावित्यर्थः । या दिङ्मय्यो दिग्रूपा दश देवताः । देवताशब्देनाद्वयप्रतिपक्षत्वमुक्तम् । प्रध्वस्ता नष्टा इव, खण्डिताः शकलिता इव, निरालम्बा निराश्रया इवैक्ष्यन्त तासामिवं रात्रिद्रुहो भगवतः सूर्यस्य रश्मयो जीर्णोद्धारं विनष्टस्य पुनर्योजनं विदधते । यतो विष्टपत्रय्या भुवनत्रयस्योन्मीलनं धर्मं चरन्ति । ये च धार्मिकास्ते त्रयीमुन्मीलयन्तः प्रचारयन्तो देवतानां जीर्णोद्धारं कुर्वन्ति ॥

साहाय्याय निजप्रियस्य नियतं राजीविनीनां जनो
व्यादायाम्बुरुहाननानि झटिति प्रस्तौति पातुं तमः ।
तस्यान्तर्घटिता विशङ्कटविशन्मत्तालिमालाछला-
ल्लक्ष्यन्ते हि सहस्रशस्ततं इतो निर्मुद्रतद्राशयः ॥ २० ॥

दिनपतेः साहाय्यकार्थे नूनं पद्मिनीवर्गः पद्मास्यानि व्यादाय विकास्य तमः पातुं निगरितुं प्रस्तौति । विशङ्कटं विशन्त्यो या अलिमालास्तासां व्याजान्निर्मुद्रास्तद्राशयस्तमःपूरास्तस्य पद्मिनीवनस्यान्तर्लक्ष्यन्ते ॥

आसंसारदृढप्ररूढनलिनीरागस्य पश्याग्रतो
गौरीकान्त विवस्वतः कुमुदिनी मन्ये नवोढा वधूः ।
प्रक्रान्ताभिनवावगूहनविधौ तस्मिन्हि दीर्घैः करै-
रायाता मधुरालियोगमपि सा संकोचमेवाश्नुते ॥ २१ ॥

आ संसारं जन्मकालादारभ्य दृढप्ररूढं नलिनीनां रागो लौहित्यं यस्मात् । रागो-

ऽभिष्वङ्गश्च दृढं प्ररूढो यस्य तस्य विवस्वतो भानोः कुमुदिनी नवोढा वधूर्भवतीत्यहं मन्ये । हे गौरीकान्त, त्वमग्रतः पश्य । पद्मिनीपतिरिति सूर्यः प्रसिद्धः, अहं पुनरेवं मन्ये कुमुदिनी तस्य नववधूरिति । ह्रियस्मादर्थे । दीर्घैः करै रश्मिभिस्तस्मिन्सूर्ये प्रक्रान्त आरब्धोऽभिनवोऽचरमोऽवगूहनविधिरालिङ्गनं येन तस्मिन्सति मधुरभ्रमर-युक्ता सा संकोचमेव प्राप्नोति । नवोढा च हस्तैर्भर्तर्यालिङ्गति सति मधुराणामालीनां योगं गतापि संकुचति लज्जावती भवति ॥

तरलभजलबिन्दूत्तंसितध्वान्तचक्र-
प्रकटपुटकपङ्क्तिं व्योमवेशन्तवीथ्याः ।
विततकरनिवेशादुद्धरन्नर्कदन्ती
नयति सरणिमग्रे चीनपिष्टारुणत्वम् ॥ २२ ॥

अर्क एव दन्ती गजोऽग्रे सरणिं पद्धतिं चीनपिष्टं सिन्दूरस्तद्वदरुणत्वं नयति । तर-लानि प्रभातप्रभावाच्चपलानि भानि तारास्तान्येव वर्णसंनिवेशाभ्यां जलबिन्दवस्तैरुत्तं-सिता या ध्वान्तचक्रमेव प्रकटं पुटकपङ्क्तिर्नलिनीदलावलिस्तामुद्धरन् । व्योमैव वेशन्तः सरस्तन्मार्गात् । कस्मात् । वितता ये करा रश्मयः करपुष्करं [च] तस्य निवेशात् ॥

कुर्वाणो निखिलं जगन्मुकुलितं मोहेन निद्रात्मना
ध्वान्ताडम्बरकालकूटगरलापीडोऽरुणद्यो दिशः ।
त्वन्मूर्त्यन्तरमर्यमा गिलति तं पश्याष्टमूर्ते यतो
विस्रस्ता कणिका इवाधिनलिनं भृङ्गा रुजन्त्यध्वगान् ॥ २३ ॥

निद्रारूपेण मोहेन संज्ञाभावेन जगत्संकुचितं कुर्वाणो यो ध्वान्ताडम्बर एव काल-कूटाख्यो गरलापीडो विषपुञ्जो दिशोऽरुणद्रुद्धवांस्तमन्धकारकालकूटमर्यमा सूर्यो गि-लति । त्वन्मूर्त्यन्तरं तव कालकूटग्रसितुरष्टमी मूर्तिः । यतस्तमोविषाद्विस्रस्ताः पतिताः कणिका इव भ्रमराः पान्थान्व्यथयन्ति । रुजेर्भाववचनकर्तृकत्वाभावात्कर्मणि षष्ठ्यभावः । अथवा त्वं कालकूटग्रसिता तव मूर्त्यन्तरमष्टमो मूर्तिः सूर्यस्तमोविषं नूनं निगिरति । भोजनावसरे कणाः पतन्ति । अष्टमूर्ते इति प्रकृतानुगुणमामन्त्रणम् ॥

हठत्रुट्यत्पङ्केरुहकुहरहेवाकविहर-
द्द्विरेफालीलीलामधुरतरगीतिश्रुतिधिया ।
इतो मन्दं मन्दं वहनहरिणेनाधिनलिनी-
सनीडं प्रातस्त्यश्चरति मरुदुद्यत्परिमलः ॥ २४ ॥

हठेन त्रुट्यन्ति फुल्लानि पङ्केरुहाणि तेषां कुहरे मध्ये विहरन्ती या द्विरेफाली तस्या मधुरतरा या गीतिर्गीतं तस्याः श्रुतिधीः श्रवणेच्छा तया हेतुभूतया नलिनीसमीपे पश्चि-

नीनिकटे वाहमृगेण मन्दं मन्दं हृत इव मरुदुद्यन्संक्रमन्परिमलो यस्य स वहति । मन्दो वहतीत्यर्थः । कालस्वभावसंपन्ने मन्दवहने मृगस्वभावाद्गीतलुब्धेन वाहमृगेण मन्दहरणमुत्प्रेक्षितम् । प्रतीयमानोत्प्रेक्षेयम् ॥

शान्ते मेदुरमेघमण्डलतुलाकारे तमोडम्बरे
द्रागार्द्रीकृतसान्द्रचन्द्रदृषदि ध्वस्तेऽप्यपां दुर्दिने ।
अस्तं चित्रशिखण्डिनामपि गते तेजस्यहो संप्रति
प्रस्तौति प्रतिसूर्यकान्तशिखरं नृत्तप्रसक्तिं शिखी ॥ २५ ॥

मेदुरं निबिडं यन्मेघमण्डलं तेन तुला यस्य स आकारो यस्य । मेघसमेऽन्धकारप्रपञ्चे शान्ते सति । आर्द्रीकृताः सान्द्रा बृहत्यश्चान्द्रदृषदश्चन्द्रकान्तशिला येन तस्मिन्नपां दुर्दिने जलप्रवाहे निवृत्तेऽपि । चित्रशिखण्डिनां सप्तर्षीणां विचित्राणां च तेजसि प्रकाशे दर्पे चास्तं गते सति । सर्वेषु सूर्यकान्तेषु शिखी अग्निर्मयूरश्च नृत्ते ज्वलने नाट्ये च प्रसक्तिं प्रस्तौति । अपिशब्दो विरोधद्योतकः । मेघालोको दुर्दिनमन्यमयूरनाट्यं च मयूरनृत्तहेतुः । तदभावेऽपि नाट्यमित्याश्चर्यम् ॥

इतस्ततस्तरुणसरोजसौरभस्पृहाभ्रमद्भ्रमरभरः समीरणः ।
वहत्यसौ दधदिव धूमधूम्रतां प्रबोधनाद्रविमणिजातवेदसः ॥ २६ ॥

तरुणः सरोजानां सौरभभरस्तद्विषयया स्पृहया भ्रमद्भ्रमरभरो यत्र स वायुरितस्ततो वहति । अतः संभाव्यते—सूर्यकान्ताग्नेर्ज्वलनादर्थात्तस्य धूमेन धूम्रतां दधदिव । पद्मान्विकासयन्वायुर्वहतीत्यर्थः ॥

उमारमण निद्रया विजहिहि क्षतिं चक्षुषां
विकाससुखमश्नुतां सुचिरमत्र धामत्रयी ।
भवन्तमुपसेवितुं बहिरिहाञ्जलिव्यञ्जनं
पुरंदरपुरःसरः सुरजनो ननूदीक्षते ॥ २७ ॥

उमारमणेति प्रकृतानुगुणमामन्त्रणम् । निद्रया चक्षुषां क्षतिं संकोचं त्वं विजहिहि त्यज । अत्र नेत्रेषु धामत्रयी सूर्यसोमाग्निरूपा विकासेन सुखमश्नुतां भजताम् । त्वां सेवितुमञ्जलीनां व्यञ्जनं प्रकाशनमेव चिह्नं यत्र । एवं कृत्वा इन्द्रमुखो देवजनो बहिरुदीक्षते ॥

त्रस्येद्यस्येक्षणदशशती वज्रनिष्पिष्यमाण-
श्लिष्यद्दर्वीसुरवरशिखारत्नरेणुच्छटाभ्यः ।
युद्धे सिद्धानवधिविजयोन्मेष एषोऽनिमेष-
भ्रष्टस्तिष्ठत्यवनतशिराः सोऽलमुग्र त्वदग्रे ॥ २८ ॥

श्लिष्यन्सक्तो दर्पो येषां तेऽसुरवरास्तेषां शिखारत्नानि वज्रेण निष्पिष्यमाणानि तेषां रेणुच्छटाभ्यो यस्य संबन्धिनी नेत्रदशशती त्रस्येद्भीतिं भजेत्। यावतामसुराणां पिष्टेभ्यश्चूडारत्नेभ्य उत्थिताद्रजसः सहस्रसंख्यान्यपि नेत्राणि भीतिं भजन्ति। तावन्तोऽसुरा येन हता इत्यर्थः । युद्धे सिद्धोऽनवधिरियत्तारहितो विजयोन्मेषो जयोल्लासो यस्य सोऽनिमेषाणां देवानां प्रष्ठोऽग्रणीस्त्वदग्रे नतशिरास्तिष्ठति । ब्रह्मादिसंनिधावपि प्रथममिन्द्रनिवेदनं प्रस्तूयमानवस्तुनि प्राधान्यात् ॥

सुरकरिमदस्रोतःप्रोतद्विरेफजटालता-
सुहृदि दिविपत्केशा यस्य श्रयन्ति पदद्वये ।
रुचिसखनखश्रेणीयोगाच्छिरोमणिशारतां-
मिव स निवसन्नग्रे शक्रो मनागनुगृह्यताम् ॥ २९ ॥

सुरकरिणो मदस्रोतसि प्रोता अनुषक्ता ये द्विरेफा भ्रमरास्तैर्जटालता जटासहितता तत्सुहृदि परिचिते यस्य पदद्वये रुचिसखा ये शक्रसंबन्धिनो नखास्तेषां श्रेणी तत्संयोगाद्दिविपत्केशाः सुरमूर्धजाः शिरोमणिरिव शारतां दधति । त्यक्तमौलिमणीनां प्रणमतां देवानां नखरश्मिव्याजात्पुनरपि मौलिमणियोग इव जायत इत्यर्थः । सोऽयं नमन्निन्द्रोऽनुगृह्यताम् । दृश्यतामित्यर्थः ॥

यस्याच्छमानसपथे विजिहीर्षयेव
याता विमानपदवीं कति नो मरालाः ।
आवासतामरसनालमृणालवल्ली-
मास्वाद्य वेतनमयाचितमाप्नुवन्ति ॥ ३० ॥

भक्त्याञ्चितं च घटिताञ्जलिसंपुटं च
त्वां स्तौति स स्तवकितं भगवन्यशोभिः ।
वाचा त्रयीकविरयं तिरयन्मुहूर्तं
जीमूतगर्जितजिता रथराजहंसान् ॥ ३१ ॥ (युग्मम्)

यस्य ब्रह्मणः संबन्धि अच्छं निर्मलं मानसं चित्तं सरोभेदश्च तत्पथे विहर्तुमिच्छयेव यस्य विमानपदवीं याताः कति नो मराला हंसा आवासोऽर्थाद्ब्रह्मण आश्रयस्तामरसं पद्मं तस्य नाले मृणालवल्लीमास्वाद्य चर्वयित्वायाचितमप्रार्थितं वेतनमर्थाद्वहनस्य भृतिमाप्नुवन्ति सोऽयं त्रयी वेदत्रयीकविता जीमूतानां मेघानां गर्जितं जयन्त्या वाचा त्वां स्तौति । यतो भक्त्यञ्चितं सभक्तिकं कृताञ्जलिपुटं च । स्तनिततुल्यत्वाद्रथराजहंसांस्तिरयन्नन्तर्हितान्कुर्वन् । यशोभिः स्तवकितं प्रसृतम् ॥

निःष्यन्दमानमुकुटेन्दुसुधोर्मिसेका-
त्संजायमाननवसंविदनुप्रवेशम् ।
चत्वार्यमुष्य भव पश्य किरीटतस्ते
पृच्छत्पदः किमपि पञ्चममुत्तमाङ्गम् ॥ ३२ ॥

भवेति प्रकृतानुगुणमामन्त्रणम् । त्वं पश्य । ते किरीटतो मुकुटादमुष्य ब्रह्मणः संबन्धि अदः पञ्चममुत्तमाङ्गं शिरश्चत्वारि शिरांसि किमपि पृच्छति । यतो निःष्यन्दमानः सुधास्रावी यो मुकुटेन्दुस्तस्य सुधोर्मिभिः सेकाद्धेतोः संजायमानो नवः संविदश्चेतनाया अनुप्रवेशो यस्य । ब्रह्मसंबन्धि पञ्चमशिरश्छित्त्वा हरेण स्वकिरीटे स्थापितमिति तस्य निर्जीवस्यामृतसेकात्पुनश्चेतना प्रविष्टेति तत्सगोत्रमुखचतुष्टयं वार्तां पृच्छतीति वाक्यार्थः॥

यः पादादमुचत्स्वविग्रहमहःसंतानसीमन्तितां
प्रागेवात्तकलिन्दजाजलपरीरम्भादिव स्वर्धुनीम् ।
स त्रैलोक्यविलङ्घनैकनिरघश्लाघो मघोनः सखा
श्रीकण्ठ प्रणतिं चिरं चरणयोः पुष्णाति कृष्णस्तव ॥ ३३ ॥

हे श्रीकण्ठ, संसारस्य विलङ्घने बलिबन्धने एका निरघा निर्मला श्लाघा लोकवादो यस्य । यतो मघोनः सखा शक्रकार्यप्रवृत्तः, स कृष्णस्तव चरणयोः प्रणामं करोति । यः कृष्णः स्वर्धुनीं गङ्गां पादादमुचदसृजत् । अत एव स्वविग्रहस्य निजशरीरस्य महः संतानेनार्थात्कृष्णस्थेन सीमन्तितां विभक्ताम् । अतः प्रागेव प्रयागात्पूर्वमात्तः कलिन्दजाया यमुनाया जलेन परीरम्भः संघटनं यया तामिव । स्वमहिमख्यापनार्थं यः पादान्न त्ववयवान्तराद्गङ्गां क्षिप्तवान्स पादयोः प्रणमतीति भङ्ग्या कृष्णभक्त्यतिशयो द्योतितः ॥

येनाङ्गेषु जगद्भरं कृतवता नोत्सार्यते मत्स्यता
गृह्णानेन शुभान्तरङ्गपदवीं कूर्मीकृतो विग्रहः ।
सोऽयं कौतुककन्दलीजनयिता चन्द्रार्धमूर्धध्वज-
ध्वस्तारातिकुलोऽपि ते चरणयोर्नारायणो लीयते ॥ ३४ ॥

अङ्गेषु जगद्भरं कृतवता । कूर्मरूपत्वात् । येन मत्स्यता नोत्सार्यते मीनरूपत्वं न त्यज्यते । समुद्रान्तरे मत्स्यस्य तदापि भावात् । तथा शुभस्यान्तरङ्गा शुभकारिणी पदवी प्रकारस्तं गृह्णानेन येन विग्रहस्तनुः कूर्मीकृतः कमठीकृतः । कौतुकमेवोल्लासनस्वभावात्कन्दली तस्या जनयितोत्पादकः । विचित्ररूपग्रहणात् । ध्वस्तारातिकुलो जितारिवर्गोऽपि नारायणस्तव चरणयोर्लीयते । अङ्गेषु जनपदभेदेषु । मत्स्यानां जनपदान्तराणां भावः । तथा शुभां तरङ्गपदवीं गृह्णानेन कूर्मिः कुत्सित ऊर्मिर्यस्य स विग्रहः कृत इति च कौतुकम् ॥

यः प्रोल्लङ्घयति स्म तारकभुवं स्वर्वाहिनीनिर्गम-
प्रोच्चण्डेन निरर्गलेन च रणोल्लासेन शक्त्येकभूः ।
आरूढः स भुजंगवैरिणमयं त्वद्वारि पारिप्लवः
सेवावाप्तिधिया स्थितिं विवृणुते स्कन्दो मुकुन्दो यथा ॥ ३५ ॥

यः स्कन्दस्तारकस्यासुरविशेषस्य भुवं स्थानं प्रोल्ल(दल)ङ्घयत् । केन । स्वर्वाहिन्याः सुरसेनाया निर्गमस्तेन प्रोच्चण्डेन दुःसहेन, तथा निरर्गलेन च सङ्ग्रामस्फारेण । शक्तेरायुधविशेषस्यैकभूः । सोऽयं स्कन्दः कुमारो भुजंगवैरिणं मयूरमारूढः पारिप्लवः सेवाक्षणान्वेषणचञ्चलस्त्वद्वारि स्थितिं विवृणुते करोति । मुकुन्दो यथा । हरिवत् । तत्पक्षे स्वर्वाहिनी गङ्गा । चरणः पादः । तारकाणां भुवं स्थानम् । शक्तिः सामर्थ्यम् । भुजंगवैरिणं गरुडम् ॥

अत्रैकादशधा विभक्तमपि ते रूपं भवानीं च यो
द्रष्टुं तुल्यमिवातिवत्सलतया धत्ते दृशो द्वादश ।
सोऽयं तारकनायिकाकुचकचद्वाह्लीकपत्राङ्कुर-
श्रेणीलुण्ठिकरस्तवास्तु भगवन्प्रीत्यै चिरं चक्षुषाम् ॥ ३६ ॥

अत्रास्मिन्स्थाने स्थितमेकादशधा विभक्तं तव रूपमेकादशरुद्रलक्षणम्, तथा भवानीं स्नेहवशाद्युगपद्द्रष्टुमिव द्वादश दृशो धत्ते । सोऽयं तारकस्यासुरस्य नायिकानां कुचेषु कचन्तो ये वाह्लीकपत्राङ्कुराः कुङ्कुमपत्ररचनास्तच्छ्रेणीनां लुण्ठिर्लुण्ठनम् । वैधव्ये सति स्त्रीणां भूषणेष्वनुपपन्नत्वात् । प्रीत्यै हर्षाय चिरमस्तु । कुमारे दृष्टिपातं कुर्वित्यर्थः ॥

यस्ते कुङ्कुमपङ्कपुण्ड्रकधुरामध्यास्य मध्येलिकं
चक्रे पञ्चशरावरोधसुदृशो लीलानभिज्ञं वपुः ।
स स्वाहाहृदयेश्वरोऽत्र पुरतो दूरानतस्तुद्यते
सद्यः पश्य गजाननेन करतः कीर्णैः पयः सीकरैः ॥ ३७ ॥

मध्येलिकं ललाटमध्ये कुङ्कुमपङ्केन पुण्ड्रकं तिलकं तद्धुरामध्यास्याश्रित्य यः पञ्चशरावरोधसुदृशः कामान्तःपुरपुरंध्रे रतेर्वपुर्लीलानभिज्ञं चक्रे । वैधव्यदानात् । स स्वाहाया हृदयेश्वरः प्राणेशोऽग्निर्भक्त्या दूरानतो गणपतिना करसकाशात्कीर्णैर्जलकणैस्तुद्यते । अग्नेर्हि जलकणस्पर्शो विरुद्धः ॥

ज्वालामालाजटिलितवपुः पावकोऽसौ शरीरं
विश्वेषामप्यहह महसा त्वद्गणानां दुनोति ।
तेऽप्येतस्य प्रबलविगलद्धर्मपाथस्तरङ्गै-
रङ्गं भङ्गं खरतरशिखाटोपमारोपयन्ति ॥ ३८ ॥

सर्वेषामपि त्वद्गणानां वपुरसौ पावको महसा तापेन दुनोति । यतो ज्वालामालाभिर्जटिलितं वपुर्यस्य । त्वद्दर्शनप्राप्तिहर्षात्ते त्वद्गणा अपि तत्तापवशात्प्रबलं विगलद्भिर्घर्मजलप्रवाहैरस्याग्नेरङ्गं ज्वालाभङ्गं समारोपयन्ति । खरतरोऽतिज्वालाडम्बरो यस्य ॥

पुरः प्रह्वो जिह्वापटलचटुलीभूतवपुषं
समीरोऽयं दूरात्परिहरति पश्य स्वसुहृदम् ।
तदुत्सेकाधिक्याद्गिरिदुहितरि क्लान्तिवसतौ
विपर्यस्यत्यस्य त्वयि हि हर सेवारसविधिः ॥ ३९ ॥

प्रह्वो भक्तिवशान्नम्रोऽयं समीरो मरुत्स्वसुहृदमग्निं दूरात्परिहरति वर्जयति । जिह्वानां ज्वालानां पटलं तेन चटुलीभूतं वपुर्यस्य । जिह्वाचटुलस्य च त्यागो युक्तः । यतस्तस्याग्नेरुत्सेकाधिक्याज्ज्वलनातिशयाद्गिरिदुहितरि गौर्यां क्लान्तेः खेदस्य वसतौ सत्यां त्वयि विषयेऽस्य समीरस्य सेवा विपरीता भवति । वायुवशादग्निर्जाज्वलीति, ततश्च गौरी क्लाम्यति, ततो वायुकृतोऽपकार एव गणितो भवतीत्यर्थः ॥

योऽन्तर्न्यस्तानवधिनिधिकं क्लृप्तवान्भूतधात्र्याः
क्रोडं क्रीडाविहरणचणः शोणपादांशुपुञ्जैः ।
रक्षाहेतोरिव रचयति न्यस्तसिन्दूरमुद्रं
स द्राग्मुद्रावनतवदनस्त्वां कुबेरः स्तवीति ॥ ४० ॥

निधिपतित्वाद्भूतधात्र्याः क्रोडं कुहरं न्यस्ता निखाता अनवधयोऽसंख्या निधयो यस्य तं संपादितवान् । यः शोणस्य रक्तस्य पादस्यांशुपुञ्जैः करणैर्न्यस्तसिन्दूरटङ्कमिव करोति । रक्षा चासौ हेतुस्ततः । यतो निधिप्रदेशेषु क्रीडाविहरणं संचारस्तेन वित्तः स कुबेरस्त्वां स्तवीति स्तौति । 'तुरुस्तुशम्य–' इतीट् । आपिशलिमते तस्य लोके सिद्धभावः । ते हि तुप्रभृतिभ्यश्छन्दस्येवेटमिच्छन्ति ॥

स्वर्लोकाक्रमणक्रियास्वनुदिनं दूरोत्पतत्पुष्पक-
प्रान्तप्रोतबृहत्सुवर्णघटिकासांकल्यमुट्टङ्कयन् ।
यः पातालवदम्बरेऽपि तनुते कुम्भैर्निधीनामिव
श्लेषं शेषविलासहार स पुरः सेवोन्मुखस्ते सखा ॥ ४१ ॥

स्वनगरात्प्रत्यहं स्वर्गाधिरोहे दूरमुत्पतद्यत्पुष्पकं कुबेरविमानं तस्य प्रान्ते प्रोतानां सुवर्णघटिकाणां हेमकिङ्किणीनां बाहुल्यान्नैरन्तर्याच्च सांकल्यं संकीर्णतामुट्टङ्कयन्नासूत्रयन्, यः पाताल इव गगनेऽपि निधिकुम्भैर्योगं करोति स ते सखार्थात्कुबेरः सेवोन्मुखो भवति । शेषविलासहारेत्यामन्त्रणम् । सुवर्णघटिका निधिकुम्भत्वेनोत्प्रेक्षिताः ॥

निसर्गभ्रूभङ्गव्यतिकरकरालाखिलमुखे
मनाक्पश्यैतस्मिन्सपदि तनये पद्मसुहृदः ।
भवद्द्वारोपान्तप्रणयवति दण्डाङ्कितकरे
प्रतीहाराशङ्कां क्षणमुपजुषन्ते दिविषदः ॥ ४२ ॥

मनाक्पश्य । दिविषदो देवा अस्मिन्सूर्यपुत्रे प्रतीहार इत्याशङ्कां क्षणं सेवन्ते । यतो निसर्गेण भ्रूभङ्गव्यतिकरकरालं भृकुटिभीषणमखिलं मुखं यस्य । तथा भवद्द्वारोपान्ते प्रणयवान्वर्तमानस्तस्मिन् । तथा दण्डेनायुधेनाङ्कितः करो यस्य तस्मिन् । प्रतीहारस्य च भ्रूभङ्गादियोगः प्रसिद्धः ॥

एतत्तर्कय कौतुकं कुमुदिनीनाथार्धमूर्धन्मना-
क्पश्यत्यद्य शनैरनुग्रहदृशा भक्तानुरक्ते त्वयि ।
स्मारं स्मारमपारलोचनशिखिज्वालावलेहव्यथां
दूरादेव विसंस्थुलैरवयवैः कालः किल ग्लायति ॥ ४३ ॥

हे कुमुदिनीकान्तस्य चन्द्रस्यार्धं मूर्धनि यस्य तस्यामन्त्रणम् । त्वमेतत्कौतुकं तर्कय । विसंस्थुलैः स्रस्तैरवयवैः कालो यमो ग्लायति । कदाचित्तस्मिन्क्रुद्धो भवानित्याह—भक्तानुरक्ते भक्तवत्सले त्वयि प्रसाददृष्ट्या पश्यति सति । कुतस्तर्हीत्याह—अपारा या लोचनाग्नेर्ज्वालास्तदवलेहेन व्यथा तां स्मारं स्मारं स्मृत्वा स्मृत्वा । पुनरपि मां मा धाक्षीदिति यमस्य ग्लानिः । किलेति दाहव्यथाया आम्नातत्वं द्योतितम् ॥

स्रस्तं हस्ताद्भवदभिसृतित्रासवैह्वल्यलोला-
त्कालस्यासौ कलय भगवन्षाण्मुखो वाहबर्ही ।
अत्तुं न्यञ्चत्तनुरपहरत्याशु पाशोरगेन्द्रं
तेऽमी क्षुभ्यन्त्यथ च सुचिरं संभ्रमेण त्रयोऽपि ॥ ४४ ॥

भवतामभिसृतिः संमुखागमनं तेन त्रासस्तेन वैह्वल्यं तेन लोलात्स्रस्तात् । महतामग्रे तेजोहान्या भयोत्पत्तेरवश्यंभावित्वात् । पूर्वश्लोकोक्ताद्वा हेतोः । यमस्य हस्तात्स्रस्तं पाशबन्धनरूपमुरगेन्द्रमत्तुं भोक्तुं षाण्मुखः कुमारसंबन्धी वाहमयूर उरगेन्द्रमपहरति । अत एव न्यञ्चन्ती नम्रा तनुर्यस्य । अथ तेऽमी त्रयः कालसर्पमयूराः संभ्रमेण तत्क्षणजनितेन क्षुभ्यन्ति । येन विश्वं ग्रस्तं तमपि ग्रसितुमित्यर्थप्रतीत्यर्थं पाशग्रहणम् ॥

सायं सायमुदंशुदीपपरिषद्यद्वद्धभाया दिशो
यात्यारात्रिकहेमपात्रपदवीं चण्डार्चिषो मण्डलम् ।
सोऽयं तोयकुलाधिदैवतमितः कंदर्पदर्पद्रुहः
कीर्तीः पश्य जपत्यनत्ययशशिश्वेताः प्रचेतास्तव ॥ ४५ ॥

त्वं पश्य । सोऽयं प्रचेता वरुणस्तव कीर्तिं जपति । अनत्ययः पूर्णो यः शशी तद्व-च्छ्वेताः । कंदर्पस्य दर्पाय द्रुह्यति तस्य । तोयकुलस्य नद्यादिरूपस्याधिदैवतम् । तोय-[स्य] कुलाधिदैवतमिति वा योजना । यद्वल्लभायाः पश्चिमदिशः संबन्धिन आरात्रि-कहेमपात्रस्य पदवीं शोभां सूर्यमण्डलं सायं सायं याति । यत उच्चैरंशुदीपानां परिप-द्यस्य तत् । अधिदैवतस्य च सायं योषिद्दीपयुक्तमारात्रिकं करोतीति दिशो योषित्वं व्यवहरणीयम् ॥

धृत्वा मूर्धन्यमरसरितः सादरं वारिपूरा-
नेतत्पक्षं यदपि भगवन्पूर्वमेवान्वगृह्णः ।
सद्यस्तत्राप्ययमुपसरन्नाप्तपापप्रमाथः
पाथोनाथो भवतु भवतोऽनुग्रहापाङ्गपातैः ॥ ४६ ॥

हे भगवन्, त्वं गङ्गां यच्छिरसि धृत्वा एतस्य वरुणस्य पक्षं नद्यादिरूपमुपसरणात्पू-र्वमेव यदप्यन्वगृह्णस्तथापि पूर्वमेवानुग्रहे सत्यपि सद्य उपसरन्नयं वरुणो भगवतोऽनुग्रहे-णापाङ्गपातैर्नेत्रत्रिभागेक्षितैराप्तः पापानां प्रमाथो नाशो येन स भवतु । 'धृत्वा' इति समञ्जसः पाठः । मूर्धनि धृत्वा धारणेनेत्यर्थः । 'धृतिर्धारणधैर्ययोः' इति कोषः ॥

सूक्ष्मां यस्य धियं वितर्क्य नलिनीनालान्तरालास्पदा-
दभ्यस्तं बिसतन्तुमप्युपचितस्थौल्यं हरिर्मन्यते ।
किंचिन्मुञ्च विलोचनाञ्चलमितश्चण्डीवरास्तोकया
तोकं सोऽङ्गिरसो गिरा त्वयि पुरः प्रस्तौति बन्दिव्रतम् ॥ ४७ ॥

ब्रह्महत्याभयादात्मानं निह्नोतुं नलिनीनालस्यान्तराले यदास्पदं स्थानं तस्मादभ्यस्तं परिचितं बिसतन्तुमपि स्थूलतरं हरिरिन्द्रो यस्याङ्गिरसस्य धियं सूक्ष्मां वितर्क्य मन्यते । मृणालसूत्रादपि बृहस्पतिमतिः सूक्ष्मेति मन्यत इत्यर्थः । सोऽङ्गिरसो देवर्षेस्तोकं पुत्रो बृहस्पतिरस्तोकयानल्पया वाचा बन्दिव्रतं प्रस्तौत्यारभते । हे चण्डीश, त्वं किंचिद्वि-लोचनाञ्चलमितो मुञ्च । 'अपत्यं तोकं तयोः समे' इति कोषः ॥

इतो रुद्राः पश्य त्रिनयन भवन्तं सममभी
नमस्यन्ति क्षोणीतलवलनपारिप्लवजटाः ।
हठन्यञ्चज्जूटस्खलितशशिलेखासु वदनं
विधेर्हंसा येषां निदधति मृणालाङ्कुरधिया ॥ ४८ ॥

त्वमितः पश्य । अमी रुद्रा भवन्तं समं सहैव नमस्यन्ति । 'नमस्तपो(नमो) वरिव-श्चित्रङः क्यच्' । अतः क्षोणीतले वलनमतिदैर्घ्यात् । तेन लोला जटा येषां रुद्राणाम् । हठेन न्यञ्चन्नधः पतन्यो जूटस्ततः स्खलितासु लुठितासु शशिलेखासु मृणालाङ्कुर इति बुद्ध्या विधेर्ब्रह्मणो हंसा वदनं चञ्चुं निदधति । हंसा हि मृणालाशिनः ॥

रुद्रा हिमाद्रितनयाधव नम्रजूट-
　विश्लिष्यदिन्दुशकलाहितपुष्पकृत्याः ।
आसीददूर्ध्वनयनाग्निशिखाभिरेते
　नीराजयन्ति तव देव पुरोऽङ्घ्रिपीठम् ॥ ४९ ॥

हे हिमाद्रितनयाया गौर्या धव भर्तः, नम्रजूटेभ्यो विश्लिष्यद्भिः पतद्भिरिन्दुशकलैराहितं पुष्पकृत्यं यैः । एते रुद्रास्तव पीठं नीराजयन्ति । आसीदन्तीभिरूर्ध्वनयनाग्नीनां शिखाभिः । नीराजनं शान्तिकर्म । तस्य पुष्पाण्यग्निश्चाङ्गम् ॥

एषां मौलिमृगावचूलमहसः संप्राप्य साहायकं
　त्वच्चूडाजडरश्मिरर्ककिरणन्यक्कारमारब्धवान् ।
ज्योत्स्नैव स्नपयत्यशेषभुवनाभोगान्तरालं ततः
　प्रत्यूषेऽपि दिनस्य पश्य सहसा संजायतेऽपह्नवः ॥ ९० ॥

एषां रुद्राणां मौलिषु मृगावचूलाश्चन्द्रास्तेषां महसस्तेजसः साहायकं संप्राप्य त्वन्मौलीन्दुः सूर्यांशुपराभवमारब्धवान् । ततो न्यक्कारार्थं ज्योत्स्नैव न त्वर्कांशवः सर्वभुवनानि स्नपयति निर्मलीकुरुते । त्वं पश्य । ततः प्रभातेऽपि दिनस्यापह्नवः संपद्यते । रात्रिर्न निवृत्तेति ज्योत्स्नामहिम्ना लोको जानातीत्यर्थः ॥

उद्दण्डैः फणमण्डलैस्तत इतो दीपायमानोन्मिष-
　द्रत्नैराहितमल्लिका इव पुरः स्वामिन्भवत्सेवया ।
पार्श्वं यान्त्युरगा हठात्सुरपतेः संरब्धवाराङ्गना-
　पाणिप्रेङ्खदसंख्यचामरमरुद्ग्रासक्रियागृध्नवः ॥ ९१ ॥

दीपवदाचरन्तीति दीपायमानानि रत्नानि येषु तैरुद्दण्डैरूर्ध्वीकृतैः फणमण्डलैर्भवत्सेवया हेतुभूतया आहिता धृता मल्लिका दीपाधारयष्टिरिव यैस्त उरगाः सुरपतेरिन्द्रस्य हठान्निवारिता अपि पार्श्वं यान्ति । यतः संरब्धाः सेवार्थं ससंरम्भा वाराङ्गनाश्चेत्यस्तासां पाणिषु प्रेङ्खन्ति कम्प्राणि चामराणि तेषां मरुत्तस्य ग्रासक्रियायां गृध्नवो लम्पटाः । सर्पाणां वायुभक्षत्वात् । मणिदीपानां वायुभयं नास्ति । पूर्वमेव भङ्गभयाभावात्तत्प्रत्यासत्तिः ॥

फूत्कारैस्तुदतोऽप्यपारगरलोद्गारैर्गिरीशोरगा-
　न्पश्यैते त्रिदशा अपि प्रतिकलं सर्वे नमस्कुर्वते ।
यत्सर्वाधमतां रसातलसमुत्पत्तेर्गता अप्यमी
　संक्रान्ता भवतोत्तमाङ्गघटनाद्विश्वोपरि स्थायिनः ॥ ९२ ॥

अपारो गरलस्य विषस्योद्गारो येषां तैः फूत्कारैस्त्रिदशांस्तुदतो व्यथयतोऽपि सर्पानेते त्रिदशाः प्रतिकलं मुहुर्मुहुर्नमस्कुर्वते । यद्यतो रसातलं सर्वभुवनानामधः स्थितं तत्र समुत्पत्तेः सर्वाधमतां गता अप्येते भवतोत्तमाङ्गे शिरसि धारणाद्विश्वस्योपरि स्थायिनः कृताः । अधमोऽपि महता मानितः सन्नमस्कार्यो भवति ॥

ये वेगोड्डयनावदारितनभःखण्डाभखड्गाङ्किता
रोहत्पुण्यलताफलानि गुलिकाभङ्ग्या च ये बिभ्रति ।
ते संप्रत्युभयेऽपि शंकर नमस्कारोपचाराय ते
न्यस्तं मस्तकमुद्धरन्त्यवनितो नाद्यापि विद्याधराः ॥ ९३ ॥

ये एके विद्याधरा वेगेनोड्डयनं गगनगमनं तेनावदारितं खण्डशः कृतं यन्नभस्तस्य खण्डं तद्वदाभा यस्य तेन खड्गेनाङ्किताश्चिह्निताः । तथा ये चान्ये विद्याधरा गुलिकाव्याजेन रोहत्पुण्यलताफलानि बिभ्रति ते उभयेऽपि विद्याधरा द्विविधास्तव नमस्कारसेवार्थं भूमौ न्यस्तं मस्तकमद्यापि चिरकाले प्राप्तेऽपि भूमितो नोद्धरन्ति नोत्थापयन्ति। भक्त्यतिशयादित्याशयः ॥

त्वत्सूनोः कलया तुरङ्गवपुषो दन्तावलास्यस्य ये
तानालोकय गायतो हयमुखान्प्रीत्यञ्चनैर्लोचनैः ।
वक्त्रे पक्त्रिमरोषपोषवलितापाङ्गाद्दृशो वीप्सया
दूरादेव कृतान्तवाहमहिषो येषां चिरं मुञ्चति ॥ ९४ ॥

दन्तावलो हस्ती तद्वदास्यं यस्य । त्वत्सूनोर्गणपतेः कलयांशेन ते तुरङ्गवपुषः सदृशमूर्तयः । मुखेन पशुरूपत्वात्, देहेन मनुष्यसादृश्यात् । तान्हयमुखान्किनरान् । प्रीत्याञ्चनं प्रसारणं येषां तैर्लोचनैः पश्य । येषां मुखे कृतान्तस्य यमस्य वाहमहिषो दृशो वीप्सया पुनः पुनर्मुञ्चति । पक्त्रिमः पक्वो यो रोषपोषस्तेन वलितापाङ्गाः कम्पमाननेत्रान्ताः । शाश्वतिकविरोधादिति भावः ॥

यस्याः खलीनमखिलं वपुरेव हर्षं
वर्वर्ष्टि या च दिविषन्महिषीजनस्य ।
वर्णे स्वरे च विहितातिशयामपूर्वां
गन्धर्वपङ्क्तिमवधारय तामपाङ्गैः ॥ ९५ ॥

यस्या गन्धर्वपङ्क्तेरखिलं वपुः खे आकाशे लीनम् । या च दिविषदां महिषीजनस्य स्त्रीवर्गस्य हर्षं वर्वर्ष्टि अत्यर्थं वर्षति । वर्णे स्थाय्यादौ स्वरे षड्जादौ धृतोऽतिशय आधिक्यं यया तामपूर्वां लोकोत्तरां गन्धर्वसंबन्धिनीं [पङ्क्तिं] अवधारय पश्येत्यर्थः । गन्धर्वा अश्वाश्च । तत्पक्षे सर्वं वपुः खलीनं कविका भवति । महिषीणां महिषाख्यपशुस्त्रीणां हर्षं करोतीत्यपूर्वम् । वर्णः शोणादिः, स्वरो हेषितम् ॥

आस्ते क्वापि सुपर्वभिस्तिलकितं सख्यं क्वचिद्राहते
नागैः क्वापि च किंनरैरनुगमं गीताकुलैः पुष्यति ।
कुत्राप्येति च संस्तवं रजनिकृल्लेखाङ्क वैरंकृति-(?)
रित्थं दर्शितविश्वरूपमिव ते द्वाराङ्गणं रङ्गति ॥ ९६ ॥

हे रजनिकृतश्चन्द्रस्य लेखाङ्कं चिह्नं यस्य तस्यामन्त्रणम् । ते तव द्वारस्याङ्गणं क्वापि सुपर्वभिर्देवैस्तिलकितं शोभितमास्ते । एवं सर्वक्रियासु द्वाराङ्गणं कर्तृत्वेन योज्यम् । एवं दर्शितं विश्वेषां रूपं येन तदिव द्वाराङ्गणं रङ्गति शोभते ॥

हरेणैता वैतालिककुलमुखाद्रात्रिविरति-
प्रतिष्ठा वैदग्धीविवरणविधानप्रतिभुवः ।
गिरः श्रुत्वा तल्पं चतुरमुदमोचि प्रियतमा
चिरं शिश्ये तस्य त्वधिहृदयमुत्सृज्य शयनम् ॥ ९७ ॥

रात्रेर्विरतिर्निवृत्तिस्तस्यां प्रतिष्ठा दृढत्वं तस्या वैदग्ध्येन विवरणं प्रकाशनं तत्र प्रतिभुवः पालनपरा गिरः श्रुत्वा हरेण तूर्णं शयनं मुक्तम् । अस्य प्रियतमा गौरी तु शयनमुत्सृज्य त्यक्त्वास्याधिहृदयं हृदये शिश्ये अशेत । शयनादुत्थितोऽपि भगवान्गौरीमेव स्मरन्नासीदित्यर्थः ॥

गौरीलीलाकचाग्रग्रहकलहभरक्षोदनिःष्यन्दमान-
क्रीडाचूलावचूलामृतकरकलिकाजन्मनः सीकरौघान् ।
शीर्णान्प्रातःसमीरैः पुनरपि रसनाभङ्गभीतिप्रसङ्गा-
च्छंभोर्भूषाभुजिष्या न लिलिहुरहयो वक्त्रमैत्रीजुषोऽपि ॥९८॥

गौरीकर्तृको यो लीलार्थमर्थाद्भगवतः कचाग्रग्रहः केशाकर्षणं तत्कलहे अर्थाच्चन्द्रस्य क्षोदो मर्दस्तेन निःष्यन्दमाना स्रवन्ती या क्रीडावचूलभूतामृतकरकलिका चन्द्रकला तस्या जन्मोत्पत्तिर्येषां तान् । तथा प्रातस्त्यैर्वातैः कीर्णान् । तथा वक्त्रे मैत्रीं परिचयं जुषन्ते तानपि कणौघानहयो [न] लिलिहुर्नास्वादयन् । कुतः । पुनरपि रसनाया जिह्वाया भङ्गो दारणं तस्य भयात् । पूर्वं हि नागानाममृतभक्षणाज्जिह्वाभङ्गो जात इति पुनरिति पदम् । शंभोर्भूषायां भुजिष्याः संपादका इत्यर्थः ॥

क्षिप्रक्षिप्तोडुपुष्पो मुखरखगकुलध्वानयुक्तिप्रणीत-
स्तोत्रारम्भः प्रदीपं निदधदधिनभः कर्परं भानुभङ्ग्या ।
चक्रे भक्त्येव दूरानमिततुहिनरुग्बिम्बमूर्धा सपर्या-
पर्याप्तिं स प्रसङ्गस्त्रिभुवनगुरवे चन्द्रचूडाय तस्मै ॥ ९९ ॥

स प्रसङ्गः प्रातःकालस्तस्मै त्रिभुवनगुरवे चन्द्रचूडाय सपर्यापर्याप्तिं पूर्णतामिव भक्त्या चक्रे। यतः क्षिप्रं क्षिप्तान्युडूनि तारा एव पुष्पाणि येन तथा मुखरस्य। प्रातःकाले तत्स्वभावात्। खगकुलस्य ध्वानयुक्त्या रुतव्याजेन प्रणीतः स्तोत्रारम्भो येन। तथा नभ एव कर्परं तत्र [भानु]भङ्ग्या सूर्यव्याजेन प्रदीपं निदधत्। तथा दूरमानमितस्तुहिनरुग्बिम्बमेव मूर्धा येन। पूजयितुश्च पुष्पादिक्षेपः प्रसिद्धः। त्रिभुवनगुरव इति साकूतम्। इति भद्रम्॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये प्रभातवर्णनं नाम षोडशः सर्गः।

---

## सप्तदशः सर्गः।

गल्वर्कक्षितितलबिम्बितार्कबिम्बप्रत्युप्तप्रतिनवरत्नपादपीठाम्।<br>
चूडेन्दुप्रविसृमराच्छरश्मिजालैरुन्मीलद्धवलवितानपौनरुक्त्याम्॥ १॥

आस्थानीमचरमसांध्यकर्मसिद्धेः सासूयं गिरिसुतया विलोक्यमानः।<br>
देवोऽथ त्रिपुरपुरंध्रिलोकलीलाबाह्लीकस्तबकमलिम्लुचो विवेश॥ २॥

नैर्मल्यप्रविशदहस्करांशुकाण्डैरुच्चण्डद्विगुणितहेमवेत्रदण्डाम्।<br>
बंहिष्ठैरपिहितबन्दिवृन्दनादामुद्गर्जन्मुकुटसरित्तरङ्गघोषैः॥ ३॥

भ्रश्यद्भिर्नमदमरेन्द्रमौलिरत्नैर्निर्यत्नप्रकटितनूतनोपकाराम्।<br>
वेल्लद्भिर्गुहशिखिनः शिखण्डखण्डैरारब्धप्रविततताळवृन्तवृत्ताम्॥ ४॥

(चक्कलकम्)

गल्वर्कः स्फटिकं तन्मये भूतले प्रतिबिम्बितानि यान्यर्कबिम्बानि तैः प्रत्युप्तानि संपादितानि प्रतिनवानि लोकोत्तराणि रत्नमयानि पादपीठानि यस्याम्। तथा चूडेन्दोः सकाशात्प्रविसृमरैरच्छै रश्मिजालैरुन्मीलदुत्पद्यमानं धवलितानां वितानानां पौनरुक्त्यं द्विधा भवनं यस्यां ताम्। तथा सवितानत्वाद्वैरल्येन प्रविशद्भिरहस्करांशुकाण्डैरर्कांशुभिर्द्विगुणिता हेमवेत्रदण्डा यस्याम्। वितानान्तरेणार्कांशूनां प्रवेशे दण्डाकारत्वात्। अत एव काण्डारोपः। तथातिबहुभिर्गङ्गाशब्दैरश्रुतबन्दिशब्दाम्। तथा दिदृक्षया भ्रमतां सुराणां मौलिरत्नैर्भ्रमादिव भ्रश्यद्भिरयत्नसंपन्नपुष्पप्रकाराम्। तथा हर्षवशादुल्लसद्भिः कुमारवाहमयूरपिच्छैः कृतविततवीजनचरित्राम्। 'नृत्तम्' इति वा पाठः। नृत्तं स्पन्दनम्। अचरमं प्राभातिकं यत्संध्याकर्म तत्सिद्धेर्गौर्या सासूयं दृश्यमानः। संध्यायाः स्त्रीलिङ्गत्वात्तद्वन्दनेन गौर्याः सेर्ष्यत्वम्। त्रिपुरस्त्रीणां लीलार्थं कुङ्कुमगुच्छास्तेषां पुरवधेन मलिम्लुचो हर्ता हर आस्थानीं सभां विवेश॥ चक्कलकम्॥

विभ्राणो वपुरहिमालि लुप्ततापं प्रत्युप्तामखिलगणैर्दिवादिसाराम् ।
आश्चर्यं चरितमुदश्चयन्नपूर्वां शर्वाणीदयिततमः सभामवापत् ॥ ५ ॥

अहिमालि फणिधरं वपुर्विभ्राणः । लुप्तः संसारिणां तापो येन स गौरीपतिः सकलगणैः सहिताम् । तथा आदिश्चासौ सारा च तां सभां दिवा प्रातरवापत् । आश्चर्यमित्यादिविरोधसूचकम् । अविद्यमाना हिमस्यालिः पङ्क्तिर्यस्य स लुप्तताप इत्याश्चर्यम् । गणैर्भ्वादिभिर्युक्तां दिवादिरेव धातुपाठच्छेदविशेषः सारो यस्या इत्यपूर्वत्वम् । दिवाशब्दोऽव्ययं प्रातर्वाचकम् । केचित्तु 'दिवादिसाराम्' इत्येकपदं कृत्वा एवं व्याचक्षते— दिवादौ स्वर्गादौ सारामिति । तत्तु न लाक्षणिकं हृदयंगमम् । 'दिव उत्' इति दिवशब्दस्योत्वप्राप्तेः । यच्च दिवशब्दो समानोऽस्ति (?) तन्न तथा मतम् । दिवशब्दस्य महाकविभिरप्रयुक्तत्वात् ॥

सस्फारस्फटिकविटङ्ककुट्टिमान्तःसंक्रान्ताखिलतनुभिर्गणैर्गणानाम् ।
पातालस्थलमधिरुह्य मूर्ध्नि भक्तेरुत्सेकात्सततमिवोह्यमानपादः ॥ ६ ॥

सस्फारः सविस्तारः स्फटिकमयो विटङ्क उन्नतभागो यस्य तस्य कुट्टिमस्यान्तः-प्रतिबिम्बितैर्गणकुलैर्भक्त्युद्रेकात्पातालं गत्वा सततमुपवेशनसमयेऽपि धार्यमाणपाद इव ॥

नेत्राग्निज्वलनविलीयमानचूडाखण्डेन्दुस्रवदमृतोपजातजीवान् ।
भूयोऽपि प्रमुषितसंपदो नृमुण्डान्कुर्वाणः श्वसितविषेण कङ्कणाहेः ॥ ७ ॥

नेत्राग्नेर्ज्वलनं तेन विलीयमानाच्चूडाचन्द्राद्द्रवतामृतेनोपजातो जीवः प्राणो येषां तान्नृमुण्डान्कपालानि केयूराहिविषश्वासेन पुनरपि गतचेतनान्कुर्वाणः । प्रतिप्रसवालंकारः॥

चिन्वानो दृढतरमह्युपोढभारं पादाब्जद्वितयमिवोच्चजूटबन्धम् ।
ग्रीवाया वलयमिवान्वहं दधानो दोर्दण्डं श्रितविषमांसलस्वरूपम् ॥ ८ ॥

दृढतरं कृत्वाहीनां सर्पाणामुपोढो भारो येन तमुच्चमुन्नतं जूटबन्धं बिभ्राणः । पादपक्षे दृढतरमप्युपोढो भारो यस्य । श्रितं विषमांसलं पीवरं स्वरूपं येन तं दोर्दण्डं दधानः । ग्रीवापक्षे श्रितविषं मांसलस्वरूपं यस्य ।

व्यग्राणां चटुघटनासु वीक्षमाणो नेत्रान्तैर्वदनममर्त्यमागधानाम् ।
नाथोऽथ प्रमथसभां प्रपद्य तस्यावासीनः शिरसि विलासविष्टरस्य॥ ९ ॥

चटुकारिणां सुरबन्दिनां [वदनेषु] दृष्टिं क्षिपन्गणसभां प्रतिपद्य विलासासनस्य शिरस्यासीनस्तस्थौ ॥ कुलकम् ॥

मारारेर्मरकतविष्टरप्रभाणामभ्यङ्गादनुसृतनीलिमोद्गमानि ।
सर्वाङ्गाण्यभिनवभूतिभूषणान्यप्यासेदुः सहचरतां गलस्थलस्य ॥ १० ॥

मरकतमयासनरश्मीनां संपर्कात्प्राप्तनीलत्वोदयानि भगवतः सर्वाङ्गाणि विभूतियुतान्यपि नीलत्वेन कण्ठतटस्य साम्यमापुः ॥

मिथ्यैव व्यधिषत तस्य पादपीठं सोत्कण्ठाः परिचरितुं पुरो भुजिष्याः ।
नम्राणां चिकुरभरा हि निर्जराणां तत्कृत्यग्रहणमनुक्रमेण चक्रुः ॥ ११ ॥

परिचरितुं सोत्कण्ठा भुजिष्या दास्यस्तस्य पादपीठं मिथ्यैव निष्प्रयोजनमेव चक्रुः । यतः क्रमेण नमतां देवानां चिकुरभराः केशास्तस्य पादपीठस्य कृत्यं कर्म चक्रुः । देवास्तत्पादयोरधो मूर्धानमक्षिपन् ॥

सावेगं कथमपि तस्य नोपशल्ये किंकर्यो विदुधुवुरग्रचामराणि ।
चूडेन्दुग्लपनकृतो विशङ्क्य पात्रं लालाटज्वलनमकाण्डताण्डवस्य ॥ १२॥

तस्योपशल्ये निकटे किंकर्यश्चामराणि सावेगममन्दं कथमपि नाधुवन् । मौलिचन्द्रग्लानिकृतोऽकालनाट्यस्य भालाग्निं पात्रं शङ्कित्वा । यद्यमन्दं चामराणि धुनीमो नेत्राग्निज्वलनेन चूडाचन्द्रो विलीयत इति शङ्कित्वा मन्दं चामराणि दास्योऽकम्पयन् ॥

हेरम्बो निजपितुराप्य जूटकूटादेणाङ्कं विनिदधदन्यदन्तधाम्नि ।
अभ्यङ्गादथ पृथुतत्करच्छटानां त्रुट्यन्तं प्रकृतमपि व्यधत्त दन्तम् ॥ १३

स्वपितुर्हरस्य जटाचन्द्रमवाप्य प्रकृतादन्यस्य दन्तस्य स्थाने निहितवान् । द्वितीयदशनप्रतिनिधित्वेन कृतवान्गणेशः । तस्य चन्द्रस्य रश्मिपङ्क्तीनां संपर्कात्प्रकृतमपि दन्तं त्रुट्यन्तं स्फुटन्तमकरोत् । इत्यर्थपदेनार्थोत्पत्तिः । हिमांशुसंपर्केण दन्तभङ्गो वस्तुगतिः ॥

प्राविक्षन्नथ शनकैरकैतवेन व्यञ्जन्तो विनयविनम्रतां शिरोभिः ।
सर्वेऽपि त्रिदिवसदो निवेद्यमानाः सावज्ञं किमपि शिलादनन्दनेन ॥ १४॥

अकैतवेन निर्व्याजं शिरोभिर्विनयविनम्रतां प्रकाशयन्तः सर्वेऽपि देवाः शिलादनन्दनेन नन्दिना किमप्यत्यर्थं सावज्ञं सावगणनं निवेद्यमानाः कृतनिवेदनाः ॥

दूरात्ते तदनु सुधान्धसो विवव्रुः संहत्य प्रणतिमयुग्मलोचनाय ।
तत्पादौ विरचयतां हि मौलिभूमौ स्वान्मौलीञ्जगदपि पादुकीकरोति ॥१५॥

ते सुधा अन्धो भोजनं येषां ते संहत्य मिलित्वा भगवते प्रणतिं चक्रुः । संहत्येति भक्त्युद्रेकप्रतिपादनम् । यतस्तस्य भगवतः पादौ शिरसि कुर्वतां पुरुषाणां जगत्कर्तृ स्वान्मौलीन्पादुकीकरोति पादपीठानि कुरुते ॥

चण्डांशुज्वलनतुषारधाममय्योऽप्यव्याजं पुररिपुणा विकीर्यमाणाः ।
दृग्लेखा बत वपुषोऽखिलामराणां संतापं जडिमपरिग्रहं च जह्रुः ॥ १६ ॥

अपिशब्दो भिन्नक्रमः पुररिपुशब्दात्परो द्रष्टव्यः । धामत्रयीप्रकृतयो भगवतापि निर्व्याजं न्यस्ता दृष्टिलेखा देवानां संतापं जाड्यं च निवारयामासुः । भगवद्दृष्टिपातमात्रे-

णैव तापजाड्यनिवृत्तिर्जातेत्यर्थः । बतेत्याश्चर्यसूचकम् । सूर्येन्द्वग्निभिस्तापजाड्यहरणं कथं भवतीत्यर्थः ॥

औचित्यान्निजनिजमासनं भजन्तस्ते पृष्टाः कुशलमथेन्दुशेखरेण ।
इत्यूचुर्नमुचिभिदादयः सुधायाः संबन्धादिव मधुरोद्गमैर्वचोभिः ॥ १७ ॥

निजनिजासनोपविष्टा भगवतौचित्याद्दूरागतः कुशलं प्रष्टव्य इति नयात्, न त्वितरवत्प्रत्युपकारलोभात्कुशलं पृष्टा नमुचिभिदादयः शक्राद्याः सुधापानादिव मधुरैर्वचोभिरेवमवदन् ॥

विश्वेषां पुरि पुरि यत्सदैव शेषे विद्वद्भिः पुरुष इति प्रतीयसे तत् ।
किं धामत्रितयमयानपायदृष्टेस्तस्मात्ते जगति परोक्षमस्ति वस्तु ॥ १८ ॥

त्वं नित्यमेव पुरिपुरि यच्छेषे ततो विद्वद्भिस्त्वं पुरुष इति प्रतीयसे यथार्थः कथ्यसे । कदाचिन्महतामेव पुरि पुरीत्याह—विश्वेषामिति । ब्रह्मादिकीटान्तानाम् । तस्मात्पुरि पुरि निवासाद्धेतोर्धामत्रयरूपनिर्दोषदृष्टेस्ते जगति मध्ये किं वस्तु परोक्षमस्ति । सर्वमेव दृश्यमित्यर्थः । एवं वचनोपोद्धात एव युक्त्या विपत्सूचनम् ॥

नन्वेवं किमपि विनिर्मलं प्रकृत्या त्वद्रूपं सुरसरिदम्बुवत्पुनीते ।
स्रोतोभिस्त्रिभिरथ कारणात्मभिस्तद्विश्वात्मन्कृतकमपि व्यनक्ति भेदम् १९

गङ्गाजलमिवैकं स्वभावेन निर्मलं च किमपि भवद्रूपं पवित्रयति । अथ कारणात्मभिर्हरिहरब्रह्माद्यैस्त्रिभिः स्रोतोभिस्त्वद्रूपं कर्तृ कृतकं स्वेच्छया कृतं भेदं प्रकाशयति । गङ्गाजलं च त्रिधा भिन्नम् ॥

धिङ्मूढा वितथमुदासनस्वभावं भाषन्ते पुरुष तव त्रिलोकभर्तुः ।
कर्त्री चेत्प्रकृतिरियं करोतु किंचित्कैवल्यं भवदधिरोहमन्तरेण ॥ २० ॥

धिङ् निन्दायाम् । मूढा मोहावृतचेतसः पुरुषाः । तवोदासीनस्वभावं ताटस्थ्यं वितथमसत्यं भाषन्ते । नन्व्यादित्वाह्युः । यतस्तव त्रिलोकभर्तुः । अथ यदि पुरुषनिरपेक्षतया प्रकृतेरेव कर्तृत्वमारोप्यते तर्हि भवत्संबन्धं विना केवलत्वं प्रकृतिः किंचित्करोतु । त्रिलोककर्तृत्वं दूरतोऽस्तु, त्वां विना तृणाञ्चनमपि कर्तुमशक्तेति प्रतिपादनार्थं किंचिद्ग्रहणम् । एतेन सांख्यमतं निराकृतम् । ते हि सत्त्वरजस्तमः साम्यावस्थालक्षणायाः प्रकृतेः कर्तृत्वं मन्यन्ते ॥

किं मिथ्या हर महदादिषु प्रयुङ्क्ते लोकोऽयं विकृतिमयेषु तत्त्वशब्दम् ।
एकस्त्वं निरुपधिरूपभृद्धि तथ्यं तत्तत्त्वं पुरुष बिभर्षि पञ्चविंशः ॥२१॥

महदादि येषां तेषु तत्त्वमिति शब्दमयं लोकः किं प्रयुङ्क्ते । मा प्रयुङ्क्तादित्यर्थः । यतो विकृतिमयेषु विकाररूपेषु । निरवधि अवच्छेदोपरागरहितं रूपं बिभ्रत्त्वमेकस्तत्त्वशब्दं तथ्यं बिभर्षि । पञ्चविंशतेः पूरणं पञ्चविंशम् । महद्बुद्धितत्त्वम् । संज्ञाशब्दोऽयम् ॥

किं कर्तुं तव पुरतोऽथ किं नु वक्तुं शक्ष्यामः क्षितिधरराजमूर्धशायिन् ।
त्वं खण्डं क्वचिदपि नो पदं व्यनक्षि त्रैलोक्यं ध्वनिवपुषश्च ते विवर्तः २२

हे कैलासवासिन्, तवाग्रे वयं किं कर्तुं वक्तुं वा शक्ष्यामः । यतस्त्वमखण्डं पदं स्फोटरूपं प्रकटयसि । शब्दब्रह्मस्वरूपस्य च ते त्रिभुवनमसत्यः परिणामः । एवं च तयोरेककर्तृत्वयोः सिद्धयोस्तवाग्रे किमस्माकं कर्तृत्वं वेत्यर्थः ॥

कुत्रापि प्रतिहतिमेति नान्तरिक्षं शब्दस्तद्गुणपदवीं न चातिशेते ।
तन्मूर्तिस्त्वमसि च तद्विभो जगन्ति व्याप्नोषीत्ययमुपपत्तिसंप्रदायः ॥२३॥

अन्तरिक्षं कर्तृ, प्रतिहतिं निरोधं नैति । शब्दस्तस्यान्तरिक्षस्य गुणत्वं नातिशेते । अनधिकत्वान्न त्यजति । एवं शब्दस्य गुणत्वे सिद्धे, गुणस्य च गुणिनि समवायाच्छब्दस्य जगद्व्यापकत्वं सिद्धम् । त्वं शब्दमूर्तिरसि । जगन्ति व्याप्नोषीत्ययमुपपत्तेर्न्यायस्य संप्रदायः ॥

नो किंचिद्बहिरुपपत्तिमेति वस्तु ज्ञानात्तत्प्रसरति किंतु चित्रवृत्ति ।
ज्ञानात्मा प्रभुरिति विश्वकर्तृभावो नो बौद्धैरपि भवतो बत व्यपास्तः॥२४॥

किंचिद्वस्तु कर्तृ, ज्ञानाद्बहिरुपपत्तिं नैति । चित्रवृत्ति अनेकरूपं ज्ञानात्प्रसरति । एवं ज्ञानस्यैव कर्तृत्वम् । भगवांश्च ज्ञानस्वरूपः । इति न्यायेन बौद्धैरपि विज्ञानवादिभिरपि जगत्कर्तृत्वं तव न निरस्तम् ॥

शून्यं तैरकथि न तुच्छमेव रूपं मादृक्षानधिगमनीयवृत्ति किं तु ।
तादृक्षं तव च वपुस्तथा च बौद्धास्त्वामेव क्व न परमार्थतो गृणन्ति॥२५॥

तैः शून्यवादिभिर्बौद्धैस्तुच्छमेव रूपं कर्मशून्यं नाकथि । किं तु मादृशैरल्पदृग्भिरनधिगमनीयाप्राप्या वृत्तिर्नानात्वं यस्य तच्छून्यं बौद्धैः कथितम् । भगवतश्च मूर्तिस्तादृक्षातिसूक्ष्मत्वाच्छून्येत्यर्थः । एवं सति शून्यवादिनो बौद्धास्त्वामेव, नान्यं परमार्थतः स्तुवन्ति॥

बोधात्मन्यनवधितां त्वयीह जानन्त्यन्यानि त्रिनयन सन्तु दर्शनानि ।
आत्मा त्वं तव च वपुस्त्रयोऽपि लोकास्तन्मानं त्वमिति च नार्हतोऽस्ति गर्हा२६

बोधस्वरूपे त्वयि अनवधितां बोधस्वरूपादेवावधिरहितत्वं जानन्त्यन्यानि दर्शनानि सन्तु, नापास्यानि । भगवदेकनिलीनत्वात् । योऽपि देहप्रमाणमात्मानं मन्यते अर्हन् क्षपणकस्तेनापि त्रैलोक्यलक्षणं शरीरं प्रत्यात्मत्वाद्व्यापकत्वमङ्गीकृतम् । अव्यापकत्वाद्या गर्हा सा नास्तीत्यर्थः ।

त्रैलोक्यं विभजति यो विचित्रतन्त्रं यस्माच्च प्रसरति सर्वजीवलोकः ।
चार्वाकास्तमिह वदन्ति यत्स्वभावं तद्भङ्ग्या त्वमसि शिवोररीकृतस्तैः॥२७॥

अनेकप्रकारं त्रिजगद्यो विभजति विभागेनावस्थापयति । तथा यस्मात्सर्वोऽपि जी-

वलोकः स्फुरति । तं विचित्रवस्तुनिर्मातारं यत्स्वभावं वदन्ति । स्वभावमेव निर्मातारं वदन्तीत्यर्थः । तद्भङ्ग्या विचित्रवस्तुनिर्मातृस्वभावभङ्ग्या तैश्चार्वाकैस्त्वमेवाङ्गीकृतः ॥

यं माया क्वचिदनिरुद्ध्यमानरूपा न स्प्रष्टुं प्रभवति नेति नेति सन्तः ।
यस्मिंश्च व्यवहृतिमाचरन्ति तं त्वां तात्पर्यादुपनिषदो विभो गृणन्ति॥२८॥

अनिरुध्यमानं रूपं यस्याः सा माया यं नैति । तथा यस्मिन्सन्तो नेति नेति 'नैवायं प्राणो नैव शरीरम्' इत्यादिक्रमेण व्यवहरन्ति । ते त्वामुपनिषदो वेदान्तास्त्वामेव तमिति तात्पर्याद्वजन्ति ॥

एकस्त्वं त्रिनयन दृश्यसेऽधिकर्तुं ज्ञातुं च त्रिभुवनमीश्वरः प्रकाशः ।
तादात्म्यं विवृतवती विमर्शशक्तिर्द्वैधेऽपि प्रथयति ते न भेददोषम्॥२९॥

इच्छद्भिः शशिमुकुट क्रियैकरूपं वैवश्याप्रणयविधायिनं वियोगम् ।
निर्व्यूढश्रुतिकविकृत्य विश्वकर्ता त्वं हर्ताभ्युपगत एव वेदविद्भिः॥ ३० ॥

यच्छायाष्टपदभिषेकतोऽपि सर्वे तात्पर्यादवसितजाड्यतां भजन्ते ।
तस्यात्मंस्तव जडतामुदीरयन्तः काणादा बत न कथंचन त्रपन्ते ॥ ३१ ॥

क्वावत्स्यत्कथमजनिष्यत प्रकाशं प्राणिष्यत्कथमथवैष जीवलोकः ।
आ सर्गादखिलजगद्वरिष्ठ नो चेत्कारुण्यात्प्रभुरभविष्यदष्टमूर्तिः ॥ ३२ ॥

वक्त्रेऽभूत्तव मुरजित्प्रतिग्रहीता त्वं श्रीवां सरसिजजन्मनो व्यलावीः ।
इत्थं ते हिमकरशेखर प्रसादः कोपो वा क्वचिदजनिष्ट नो महत्सु ॥३३॥

..................................................................................[1] ॥

इत्यादिस्तुतिमुखरेषु निर्जरेषु प्रत्यग्रप्रसृतकृपारसातिरेकः ।
तानित्थं कथयितुमिन्दुखण्डचूडः प्रारेभे रभसवशंवदैर्वचोभिः ॥ ३४ ॥

देवेष्वेवमादिस्तुत्या मुखरेषु सत्सु नवोल्लसत्करुणो भगवान्सत्वरैर्वाक्यैस्तान्देवान्वक्तुमारेभे ॥

प्राप्तानां मम सविधं विधूतधैर्या चर्यासौ विपुलमुपप्लवं व्यनक्ति ।
विश्लिष्यन्निजमहसां मुखानि यद्वः प्रातस्त्यं रजनिपतिं विडम्बयन्ति ॥३५॥

मन्निकटमागतानां वो हतधैर्येयमवस्था दुःसहमुपद्रवं सूचयति । यद्विगलन्निजतेजसां वो मुखानि प्राभातिकं चन्द्रमनुकुर्वन्ति । पाण्डूनि जातानीत्यर्थः ॥

विश्वापद्रदभिषजोऽपि किं भवन्तो वैक्लव्यव्यसनविसंस्थुलाननाः स्थ ।
प्रत्यर्थिप्रधनरसा विलङ्घ्य दैन्यं तेजो वस्तुलयति वाडवं हि धाम ॥३६॥

---

१. 'एकस्त्वम्' इत्यादि श्लोकपञ्चकस्यादर्शपुस्तके टीका त्रुटितास्ति.

आपदेव गदो रोगः । विश्वस्यापद्गदभिषजो निवारका अपि भवन्तो विक्लवत्वदुःखदीनमुखाः किं स्थ भवथ । हे प्रत्यर्थिभिः प्रधनं युद्धं तत्र रसो येषां तेषामामन्त्रणम् । दैन्यमुल्लङ्घ्य वस्तेजो वाडवं तेजोऽनुकरोति । 'विलङ्घ्यदैन्यम्' इत्येकपदं वा ।

ध्यानेन स्तिमिततमत्वमब्जयोनेरासीद्यत्प्राणिहितदीक्षमीक्षणेषु ।
चिन्तायाः परिचयने तदेव सद्यः साधिक्यक्रममपि नाधिकं धिनोति ॥३७॥

ध्यानेन समाधिना ब्रह्मदृष्टौ स्तिमिततमत्वं चिन्तायाः परिचये सति नाधिकं धिनोति प्रीणयति । सहाधिभिश्चित्तपीडाभिर्वर्तते यस्तद्भावेन सहितम् । अपिर्विरोधद्योतकः । अधिकस्य भाव आधिक्यं तेन सहितमपि नाधिकम् ॥

सावेगं युधि वलतां द्विषां शिरोभिर्यस्याग्रे समजनि मृत्युभाण्डभङ्गिः ।
तच्चक्रं कृशिमवशंवदाग्रिमार्चिःसंचारं किमिति मुरद्विषोऽधिशेते ॥३८॥

सोत्कण्ठं रणे स्फुरतां शत्रूणां शिरोभिर्मृत्युभाण्डभङ्गिर्यमाशनपात्रटङ्को यस्याग्रे जाता । शत्रुशिरांसि यमाशनभाण्डसमानि संपन्नानीत्यर्थः । कृशिमवशंवदोऽल्पोऽग्रिमार्चिःसंचारो यस्य तद्विष्णोरपि चक्रं किमधिशेते निष्प्रभावत्वात्सुप्तप्रायमास्ते ॥

यत्र श्रीरनिशविनिद्रदृक्सहस्रे विश्रम्य स्मरति न पङ्कजाकरस्य ।
सोऽकाण्डे किमिति विडौजसोऽस्य देहः संदेहं मुहुरिव कस्य न व्यनक्ति३९

नित्यविकसितसहस्रदृष्टौ यत्र विश्रान्तिमाप्य लक्ष्मीः पद्मसरसो न स्मरति । पद्मसरोविकासस्यानैकान्तिकत्वात् ..................................................[1] ॥

चित्रोद्यत्कृशिमविशेषवद्भिरङ्गैर्वैक्लव्यं विवृतवतां समीरणानाम् ।
किं त्वेषां पुनरपि जायते महद्भिर्निःश्वासैरनलसमांसलत्वयोगः ॥ ४० ॥

अभूतपूर्वजायमानकृशिमाधिक्यसहितैरङ्गैः । उपलक्षणे तृतीया । दैन्यं प्रकाशयतां वायूनां महद्भिर्निःश्वसितैरनलसत्वं चातुरी, मांसलत्वं पीवरता तद्योगः पुनरपि किं न जायते । सुखकृते तद्योगपीनत्वे गलिते दुःखनिःश्वासकृते एव मरुतां वर्तते इत्यर्थः ॥

पाण्डिम्ना परिचितमुज्झितप्रतापप्रावारं किमिति तथा वपुः खरांशोः ।
शुभ्रांशुभ्रमघटनाद्विना त्रियामामातङ्कं सृजति यथा रथाङ्गनाम्नाम् ॥ ४१ ॥

प्रताप एव प्रावारो बृहद्वस्त्रमुज्झितस्त्यक्तो येन तदर्कस्य शरीरं पाण्डिम्ना पाण्डुरत्वेन तथा परिचितमिति किं यथा रात्रिं विना चन्द्रमाश्चक्रवाकाणां शोकं सूर्यमण्डलं सृजति । सूर्यश्चन्द्रवत्पाण्डुर्जातः किमिदमिति तात्पर्यम् ॥

निःशेषत्रिभुवनघस्मराश्रितत्वात्तद्दहेः सहजमपह्नुतं क्व तेजः ।
युष्माकं सपदि विलोक्यतेऽस्य हा धिक् शोकोष्णश्वसिततरङ्गमात्रशेषः४२

---

१. आदर्शपुस्तके श्लोकोत्तरार्धटीका नास्ति,

समस्तस्य त्रिभुवनस्य घस्मरादनशीला श्रीर्यस्य तत्तेजो वह्नेस्तन्वा क्वापह्नुतं गोपितम् । अग्निर्हीनतेजाः किं जात इत्यर्थः । हा कष्टे । धिङ्निन्दायाम् । अस्याग्नेरूष्मा शोकोष्णा ये श्वसिततरङ्गास्तन्मात्रं शेषो यस्य स कथं दृश्यते । अग्नेः स्वोष्मा गलितः । दुःखोष्णश्वासकृत एव दृश्यत इति तात्पर्यम् ॥

क्रान्ताभिः प्रतिदिवसास्तशैलसीदच्चण्डांशुद्युतिभिरिवेश्वरः प्रतीच्याः ।
यस्तेजो दुरभिभवं बभार सद्यः स्वां शक्तिं दृशि विधृताम्भसि व्यनक्ति ४३

क्रान्ताभिराक्रमणेन स्वीकृताभिः प्रत्यहमस्ताद्रौ सीदतः प्राप्तास्तमयस्य चण्डांशोर्द्युतिभिरिव यः प्रतीच्या ईश्वरो वरुणो दुरभिभवं तेजो बभार स विधृताम्भसि सबाष्पायां दृष्टौ स्वां शक्तिं प्रकटीकरोति । सबाष्पेण नेत्रेण वरुणशक्तिः प्रकाशितेत्यर्थः ॥

अन्येषां सवनलिहामपि प्रयातः स प्राच्यः क्व नु निजतेजसोऽतिरेकः ।
नीरन्ध्रप्रविसृमराननानिलौघैः किं लीढः कथमपि दीपवच्छमेन ॥ ४४ ॥

मखभुजामपि स प्राच्यः प्राक्स्थितः स्वतेजोमहिमा क्व यातः । नीरन्ध्रं कृत्वा विसृमरैर्निःश्वासैः स तेजोमहिमा दीपवत्किं लीढः शमितः ॥

ईदृग्भिः स्मरमकरैकमान्त्रिकस्य व्याहारैरपहृतकल्पचित्तपीडाः ।
निर्वेदादभिमुखलोचनं कथंचित्प्रोत्क्षिप्य क्षणमवतस्थिरे मुखानि ॥ ४५ ॥

स्मर एव मकरः स्मरस्य वा मकरस्तस्यैक[स्य] मान्त्रिकस्य प्रभावशमहेतोर्हरस्येदृग्भिः सस्नेहाभिरुक्तिभिर्निवारितकल्पचित्तचिन्ताः । अत एव निर्वेदेन दुःखेनानभिमुखानि लोचनानि यत्र । एवं कृत्वा कथंचिन्मुखान्युत्क्षिप्य क्षणं देवास्तस्थुः ॥

देवोऽथ श्रुतिकविता पयोदनादप्रत्यर्थिस्वनरचनार्चितैर्वचोभिः ।
हंसानां रथपथवर्तिनां मुहूर्तं तन्वानो भयमिति सादरं जगाद ॥ ४६ ॥

श्रुतिकविता देवो ब्रह्मा सादरं जगाद । पयोनादस्य स्तनितस्य प्रत्यर्थी स्पर्धाकरो यः शब्दस्तद्रचनया पूजितैर्वचोभिर्निजरथभूतानां हंसानां भीतिं कुर्वन् । हंसा हि मेघद्वेषिणः ॥

संतापं किमपि विवृण्वते न केषां ये पादा इव दिविषन्मनोज्वरस्य ।
सन्त्यत्र त्रिनयन दुःसहप्रमेया दैतेयास्त्रिभुवनशात्रवस्त्रयस्ते ॥ ४७ ॥

दिविषदां देवानां यो मनोज्वरस्तस्य पादा इव ये केषां न संतापं प्रकाशयन्ति ते दैतेया दैत्यास्त्रिपुराख्यास्त्रयो दुःसहप्रमेया गहनस्वरूपास्त्रिभुवनवैरिणः सन्ति ॥

प्रागुद्यद्यमनियमादिमांसलाभिश्रेष्टाभिस्त्रिदिवमुनीन्विलङ्घयन्तः ।
संहत्य स्थिरतरनिश्चयेन ते मामाराद्धुं निरवधि तेपिरे तपांसि ॥ ४८ ॥

प्रथममुद्यद्भिर्यमैरहिंसादिभिर्निवृत्तिरूपैर्नियमैः शौचादिभिर्मांसलाभिर्घनाभिश्चेष्टाभिः

कर्मभिर्देवर्षीञ्जयन्तस्ते दैत्याः संहत्य मिलित्वा स्थिरनिश्चयेन मां सेवितुं निरवधि निष्प-रिच्छेदं तपांसि तेपिरे चक्रुः । तपःकर्मकस्यैव कर्मवद्भावादात्मनेपदम् ॥

त्रैलोक्यं तपसि विशङ्कमेव तेषां कल्पान्तज्वलननयेन बाधमाने ।
निर्व्याजक्रममथ दर्शनं पुरस्तात्तेभ्योऽहं व्यतरमनुत्तरानुरोधः ॥ ४९ ॥

कल्पान्ताग्निन्यायेन तेषां तपसि त्रिभुवनं बाधमाने सति जातानुरोधोऽहं निष्कपटं तेभ्यो दर्शनमदाम् ॥

संतप्ते वपुषि तपोभरेण कुर्वन्निर्वाणं वहनपतत्रिपत्त्रवातैः ।
सावेगं पटु घटिताञ्जलीन्पुरस्तात्तानाविष्कृतनिजमूर्तिरित्यवोचम् ॥ ५० ॥

तपस्तप्ते शरीरे वाहभूतहंसपक्षवायुभिस्तापच्छेदं कुर्वन्प्रकटीकृतमूर्तिरहं कृताञ्जलीं-स्तानुच्चैस्तूर्णं चेत्यवोचम् ॥

संतुष्टं निशिततपोविशेषमय्या वास्या वः सकलमपीह गात्रतन्त्रम् ।
युष्मभ्यं वरमहमीप्सितं प्रदास्ये भो वत्सा खलु विरचय्य तन्व्रतानि॥५१॥

तीक्ष्णया तपोरूपया वास्या 'कुञ्जिकया सर्वोऽपि भवतामङ्गप्रपञ्चस्तनूकृतः । अह-मिष्टं वरं भवद्भ्यो दास्यामि । तस्माद्व्रतानि विरचय्य कृत्वा खल्वलम् । व्रतेभ्यो निवर्तध्वमित्यर्थः । 'अलं खल्वोः' इति क्त्वाप्रत्ययः ॥

ईदृक्षप्रतततपःपणप्रयुक्त्या यं प्राप्तुं विवृतदुरोदरक्रियाः स्थ ।
अर्थं तं कथयत तत्र कापि मा भूदाशङ्का दितिकुलमौलिमण्डना वः॥५२॥

तप एव पणो द्यूतनिबन्धस्तत्प्रयोगेण यूयं यमर्थं लब्धुं विवृता प्रकटीकृता दुरोदर-क्रिया मया सह द्यूतव्यवहरणं यैस्ते स्थ भवथ । यदर्थमीदृशं तपः कृतमित्यर्थः । हे दिति-कुलस्य मौलिमण्डनाः, तमर्थं ब्रूत । तत्राभिलषितेऽर्थे वः संशयो मा भूत् । मण्डना इति 'रुधिमण्डि—' इति कर्तरि ल्युट् ॥

इत्यस्मद्गिरमधिरोप्य कर्णवीथीं नेदीयः प्रमदरसोक्षितेक्षणास्ते ।
मामेवं विनयमपाक्षरान्तरङ्गप्रोन्मीलत्पदमगदन्विनम्रकण्ठम् ॥ ५३ ॥

श्रवणादरेण विस्तीर्णत्वात्कर्ण एव वीथी तामस्मद्वचनमधिरोप्य । श्रुत्वेत्यर्थः । नेदीयो निकटमानन्दजलेनोक्षणं सेको येषां तानीक्षणानि येषाम् । 'रसोक्षणक्षणाः' इति वा पाठः । नेदीयान्प्रमदरसेनोक्षणक्षणः सेकावसरो येषां ते दैत्या विनयमयान्यक्षराणि येषां तान्यन्तरङ्गाणि विवक्षितप्रत्यासन्नानि प्रोन्मीलन्ति पदानि यत्रैवं मामवोचन् ॥

अन्यैः किं वरद वरान्तरैरवाप्तैरप्राप्तैरथ च न कोऽपि यैर्विशेषः ।
त्वद्वक्त्रप्रसृतवचोमृतौघलाभादस्माकं भवतु विभो झगित्यमृत्युः ॥ ५४ ॥

हे वरद, अलब्धैर्लब्धैर्वा यैर्विशेष उत्कर्षो न भवति तैर्वरान्तरैः किम् । न किंचिदित्यर्थः । त्वन्मुखनिःसृतवचनसुधाप्रवाहलाभादस्माकममृत्युरमरणं भूयात् ॥

नैवेदं वितरितुमीश्वरोऽस्ति कश्चिन्निश्चित्य द्रुतमितरं वरं वृणीध्वम् ।
इत्यस्मद्वचनमथोच्चुलुम्प्य तेऽत्र श्रोत्राभ्यां पुनरिदमादरादवोचन् ॥ ९५॥

इदममरणं दातुं कश्चिन्न समर्थः । यूयमन्यं वरं याचध्वम् । इत्यस्मद्वाक्यं सादरं श्रुत्वा ते भूय एवमवदन् ॥

नैवं चेत्प्रतिशृणुते भवानकस्मादस्मभ्यं दृढतपसापि निःसहेभ्यः ।
तर्ह्येको युधि रिपुणा शरोऽर्प्यमाणः सर्वेषां भवतु सहैव मृत्यवे नः॥९६॥

दृढेन तपसा पीडितेभ्योऽपि नस्त्वमेवं नाङ्गीकुरुषे तर्हि सङ्ग्रामे शत्रुणा प्रहितः शर एक एवास्माकं सहैवापृथक्त्वेन मरणायास्तु । 'प्रत्याङ्भ्यां श्रुवः' इत्यात्मनेपदम् ॥

मत्तस्तं वरमिति दीप्तमाप्तवन्तस्ते युक्त्या मतिमतिवर्तितुं यमस्य ।
त्रींल्लोकानथ च पृथक्पृथग्गिरोद्धुं संनद्धा व्यधिषत नूत्नयत्नसिद्धिम् ॥९७॥

मत्सकाशात्तं वरं लब्ध्वा यमस्य मतिं मरणविषयां युक्त्योल्लङ्घितुं त्रीणि भुवनानि पृथक्पृथगावरीतुं संनद्धा नूत्नस्य यत्नस्य सिद्धिं चक्रुः । 'नवीनो नूतनो नवः । नूत्नश्च' इति कोषः । अथ चापिचेत्यस्यार्थे ॥

तत्तत्त्वमान्तरमवेत्य ततः सुवर्ण-
दुर्वर्णलोहघटनाविकटैः प्रकारैः ।
तेभ्यः पृथक्त्रिषु जगत्सु पुरीरनल्प-
शिल्पाविकल्पसमयः स मयश्चकार ॥ ९८ ॥

तत्त्रिजगदाक्रमणलक्षणमान्तरमप्रतिभिन्नमपि तत्त्वमवेत्य ज्ञात्वा भयवशात्सेवावधानेनेङ्गितादिभिर्लक्षिताभिप्रायत्वात् । सुवर्णरौप्यलोहमयघटनया विकटैर्विस्तीर्णैः प्राकारैः पुरीर्नगरीस्त्रिषु भुवनेषु तेभ्यो दैत्येभ्यः स मयो विश्वकर्मपुत्रः कृतवान् । अनल्पशिल्पेऽविकल्पो निष्कम्पः समयो मर्यादा यस्य । आन्तरं तपःप्रयुक्तवरलक्ष्यमिति व्याख्येयम् ॥

अरुणमणिगरीयोगोपुरप्रोज्जिहान-
द्युतिनिवहनवीनोट्टङ्कितान्नेयवप्रम् ।
पुरवरमथ हैमं दैत्यनारीकटाक्षैः
कुवलयितगवाक्षं तारकाक्षोऽध्यरुक्षत् ॥ ९९ ॥

पद्मरागमयगुरुतरपुरद्वारप्रसृतांशुभरसंपादितनवाग्निमयप्राकारम् । तथा दैत्यस्त्रीदृष्टिभिः संजातोत्पलाः कृता गवाक्षा यस्य तत्सौवर्णं नगरं तारकाक्षो दैत्योऽधिरूढवान् । वक्ष्यमाणयोर्नगरयोर्द्यावापृथिव्यधिकरणत्वात्पारिशेष्यात्सौवर्णनगरस्य पाताले विधिः ॥

धवलभवनयोगादाप्तपर्याप्तसाम्य-
श्रिणि नभसि हसन्त्यामुल्लसद्भिर्मयूखैः ।
पुरि परिकरमाधाद्राजतोल्लासबन्धौ
स्वक इव कमलाक्षः प्रक्रमो विक्रमस्य ॥ ६० ॥

धवलानि सुधास्नातानि भवनानि गृहाणि भानां नक्षत्राणां वनानि कुलानि तद्यो-गात्सदृशे व्योम्नि रश्मिभिर्हसन्त्याम् । तथा राजतो रौप्यमयो यत्रोल्लासः । राजता राजभावश्च । तदुल्लासस्य बन्धौ परिचितायां नगर्याम् । अत एव निजपौरुषोल्लास इव कमलाक्षो दैत्यः परिकरं चकार । पुर्यां यन्नभसः साम्यश्रीः प्राप्ता तदधिकरणा पूरिति व्याख्येयम् ॥

भरत्रुट्यत्क्षोणीतलविसृतपातालतिमिर-
स्थिरासङ्गेनेव स्फुरदसितनिःशेषवपुषम् ।
नृणां लोके कालायसमयमयाल्लाज्जनपदं
ततो विद्युन्मालीत्यसिसलिलधाराभिरसिचत् ॥ ६१ ॥

भरेण बृहत्त्वान्नगरभरेण त्रुट्यतः स्फुटतः क्षोणीतलान्निर्गतं यत्पातालान्धकारं तत्सं-बन्धी स्थिरो यः संपर्कस्तेनेव कृष्णप्रकृति कालायसमयं कृष्णायोजातिकृतं जनपदं विद्युन्मालीति दैत्योऽसीनां सलिलं प्रभाविशेषस्तत्प्रधानाभिर्धाराभिरसिचद्व्यापत् । विद्यु-न्माली मेघश्च जलधाराभिः सिञ्चति ॥

ते प्राप्य त्रिपुरप्रथामथ पृथग्लोकान्रुजन्तः स्थिता
दिव्यान्यब्दशतायुतान्युपनमद्भिश्चापमृत्युश्रियः ।
यन्नाम्नाप्यधिरोहता श्रुतिपदं गीर्वाणवामभ्रुवां
गाहन्ते तनवोऽतिवेलपवनोद्वेल्लल्लतासौहृदम् ॥ ६२ ॥

अथ भुवनत्रये राजधानीकरणादनन्तरं त्रिपुराणीति प्रसिद्धिं प्राप्य दिव्यानि वर्ष-शतायुतानि वर्षदशसाहस्रीः पृथग्भुवनानि बाधमानाः स्थिताः । श्रुतेन येषां नाम्नापि देवाङ्गनानां तनवः सवेगवायुकम्पमानलताकान्तिं श्रयन्ति । नामापि श्रुत्वा कम्पन्त इत्यर्थः ॥

तापं रुचिक्षतिमथो विविधाश्च पीडा
विश्वस्य धातव इवोत्कुपितास्त्रयस्ते ।
आतन्वते सपदि दुःसहसंनिपाते
तस्मिन्भिषक्तु यदि भर्ग भवत्प्रसादः ॥ ६३ ॥

तापं दुःखम्, पित्तसंतापं च । रुचिक्षतिं विच्छायतामोजोभङ्गात्, अन्नविषयाभिलाषनिवृत्तिं श्लेष्मकृतां च । पीडा जनोपद्रवात्, वातकृताः पीडाश्च । ये कुपिता ईर्ष्यालवः, स्वप्रमाणातिरिक्ताश्च । धातवश्च वातपित्तकफा इव विकुर्वते । तस्मिन्दुःसहे संनिपाते दुःसहानां संनिपाते वा वातादिकोपे च भवतः प्रसादो भिषगगदंकारो भवति ॥

याः क्रीडद्विबुधावरोधनपरिष्कारार्ककान्तानल-
ज्वालातापलवावलेहमपि नो मध्येदिनं सेहिरे ।
ताः संतानकवीरुधो विधुनितास्तत्सैनिकैः सांप्रतं
दावाग्निर्यदि नाम रक्षति ततो नीचावमानज्वरात् ॥ ६४ ॥

क्रीडन्ति यानि विबुधावरोधनानि देववध्वस्तासां परिष्कारार्थं भूषणार्थमर्ककान्तास्तदग्निसंतापस्पर्शमपि या न सेहिरे ताः संतानकलतास्तच्चमूचरैर्व्यथिताः । नीचावमान एव ज्वरस्तस्माद्दावाग्निर्यदि रक्षति । दावाग्निर्वरम्, न तु दैत्यावमान इत्यर्थः ॥

पाशैर्बद्धशिरोधराः फणिमयैरुत्खातनाकिद्रुम-
स्कन्धालानतलेषु दानसलिलावग्राहिणो दिग्द्विपाः ।
नीतास्तैरजिरेषु यामगजतां स्रस्तेऽपि विश्वंभरा-
भारे व्रीडनिपीडनेन दधते दूरावनम्रं शिरः ॥ ६५ ॥

उत्खातानां देववृक्षाणां स्कन्धा एवालानानि तत्तलेषु सर्पमयैः पाशैर्बद्धग्रीवाः । तेषां मदजलस्यावग्राहः शोषोऽस्ति येषां दुःखवशात् । दैत्यैरङ्गनेषु प्रहरहस्तितां प्रापिता दिग्दन्तिनो भूभारेऽसत्यपि शिरो दूरनतं वहन्ति । यतो लज्जया नम्रम् ॥

किं वान्यत्ते तथाद्य त्रिनयन विनयातिक्रमाक्रान्तविश्वा
निःश्वासौघेन दीर्घीकृतचमरमरुडम्बराः स्वर्वधूभिः ।
सर्वं निर्वीरमुर्वीतलमथ निलयं नाकिनां मन्यमानाः
कर्तारो नूनमस्मत्परिकरमचिरान्नाममात्रावशेषम् ॥ ६६ ॥

अन्यत्किमिव वर्णयामः । अविनयेन जितविश्वा बन्दीकृताभिर्नाकनारीभिर्निःश्वासबहुलीकृतचमरवायवस्ते दैत्या भूतलं देवावासं च वीररहितं मन्यमाना निश्चितमस्मत्सामग्रीं नामैकशेषां करिष्यन्ति ॥

इत्थं प्रस्तावनायै विवृतवति वचः पद्मभूसूत्रधारे
तूर्णं वक्त्रप्रसादप्रसरजवनिकामग्रतोऽपास्य दूरम् ।

---

१. 'स्पृष्टास्ता नन्दने शच्या केशसंभोगलालिताः । सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः ॥' इति हयग्रीववधम्, (साहित्यदर्पणे). २. 'हतेऽपि भारे महतस्त्रपाभरादुवाह कृच्छ्रेण भृशानतं शिरः' इति माघः.

क्रोधाख्यः पर्षदानां विदधदधिमनोरङ्गपीठप्रवेशं
शैलूषो दृष्टहस्ताद्यसमविकृतिभिः सङ्गमङ्गीचकार ॥ ६७ ॥

प्रस्तावना आमुखे भाविवस्तूपक्षेपस्तदर्थे ब्रह्मण्येव सूचनात्सूत्रधारे वचो वदति वक्त्रप्रसाद एव प्रसरणाज्जवनिका तां तूर्णं निवार्य क्रोधप्रवेशात्पर्षदानां गणानां मन एव रङ्गपीठं तत्र प्रवेशं कुर्वन्क्रोधाख्यः शैलूषो दृष्टिहस्तादीनामसमाभिर्विकृतिभिर्विकारैः सङ्गमङ्गीचकारेति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये परमेश्वरदेवसमागमवर्णनं नाम सप्तदशः सर्गः ।

---

## अष्टादशः सर्गः ।

दैत्योदयासवरसं श्रवणानुतर्ष-
मार्गेण ते गणगणा विनिपीतवन्तः ।
रज्यद्विलोचनकपोलतलाः स्खलद्भि-
र्वाक्यैर्विलोलवलितभ्रु विकारमूहुः ॥ १ ॥

श्रवण एवानुतर्षश्चषकस्तत्पथेन दैत्योदयमेवासवरसं पीतवन्तः । अत एव रज्यन्ति सरागाणि संपद्यमानानि नेत्रगण्डतलानि येषां ते [गण्डसमूहाः] स्खलद्भिः किंचिन्निःसरद्भिर्वचनैर्विलोलवलिते भ्रुवौ यत्र । एवं कृत्वा विकारं प्रतिभेदमूहुर्वभ्रुः । मधुपानेन च नेत्रादिरागसंभवः ॥

तेऽक्षिभ्रुवभ्रमिकरालतरालिकाग्र-
माजघ्निरे करतलैर्घनमंसकूटम् ।
यत्संभ्रमेण विदलत्कनकोर्मिकोत्थं
चक्रे रजः पृथुविलोचनकूणितानि ॥ २ ॥

अक्षिणी च भ्रुवौ च तदक्षिभ्रुवम् । 'अचतुर–' इति साधुः । तस्य भ्रमिर्भ्रमणं तया दुर्दर्शे ललाटं ते गणा निजस्कन्धं हस्तैराजघ्निरे । 'स्वाङ्गकर्मका–' इत्यात्मनेपदम् । यस्मिन्नाहनने संभ्रमेण विदलन्त्यो याः कनकोर्मिकाः स्वर्णवालिकास्तदुत्थं रजः पृथूनां नेत्राणां कूणितानि किंचिन्निमीलनानि चक्रे । 'पृथु' इति वा भिन्नं पदम् । यच्छब्दश्च भिन्नपदीकृत्य यथार्थे वा व्याख्येयः । तदुक्तं त्रिलोचनपङ्क्ति(ञ्जि)कायाम्—'निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्था भवन्त्येवं पाठस्तेषां निदर्शनम्' ॥

प्राथम्यतः प्रमथवीरजनः सकोप-
निष्पिष्यमाणविविधाभरणाग्रचूर्णैः ।

उद्दामदानवजनस्य पुरंध्रिदृष्टे-
रश्रुप्रथार्थमिव धूलिभरं पुपोष ॥ ३ ॥

सकोपं कृत्वा निष्पिष्यमाणानां विविधानामाभरणानामग्रचूर्णैः सकललोको(?) रजोभरमुत्थितवान्। प्राथम्यतो युद्धात्पूर्वमेव दैत्यस्त्रीलोकस्य बाष्पजननार्थमिवेति संभावनम् ॥

साटोपपाणिमृदितस्वविलासहार-
तारेन्द्रनीलनिविरीसरजश्छटाभिः ।
व्यानञ्ज कश्चन पुरोन्तरदीप्यमान-
कोपप्रदीपगलदञ्जनधूलिपुञ्जम् ॥ ४ ॥

साटोपं ससंरम्भं पाणिभ्यां मृदितः कोपवशात्पिष्टो यः स्वविलासहारस्तत्र तारा ये इन्द्रनीलास्तेषां निविरीसाभिर्घनाभी रेणुच्छटाभिर्हेतुभिः कोऽपि अन्तरेऽन्तर्दीप्यमानस्य कोपप्रदीपस्य संबन्धी पुरो गलन्योऽञ्जनपुञ्जः कज्जलराशिस्तं व्यानञ्ज । पिष्टानां रत्नानां धूलिः कोपदीपकज्जलमिति संभावना ॥

अन्योन्यमर्दनरयादुदितासमोष्म-
ताम्रीभवद्विधृतधूमशिखोद्गमं च ।
कस्यापि पाणियुगलं स्वभुजप्रताप-
वह्नेर्विनिर्गमनमार्गमिवाचचक्षे ॥ ५ ॥

मिथोमथनाज्जाततापम्, तथा रक्तीभवत्, तथा प्रकाशितधूमोत्पत्ति च कस्यापि करद्वयं निजभुजप्रतापाग्नेर्निर्गममिव सूचितवत्। अग्निनिर्गमस्य च तापारुणत्वधूमा लिङ्गम् ॥

केनाप्यभज्यत तथा पृथुपद्मराग-
चूडामणिर्निविडपाणिविघट्टनाभिः ।
नासीद्यथोल्लसति तद्रजसि प्रसक्त-
रोषारुणाननरुचः परभागलाभः ॥ ६ ॥

निबिडं कृत्वा पाणिना घट्टनाभिः करणभूताभिः केनापि महापद्मरागमणिस्तथा भग्नो यथा तस्य रजसि स्फुरति रोषलोहिताया मुखशोभायाः परभागलाभो नासीत् । वर्णान्तरसंनिकर्षे परभागलाभस्य सद्भावात् ॥

कश्चिद्विशङ्कटपटुभ्रुकुटीकराल-
भालस्थलः किमपि घोरतरं बभाषे ।
नीतो रुषा कलुषतां स हठात्प्रवीरो
वाचां कथं त्वपरुषं प्रसरं व्यनक्तु ॥ ७ ॥

भ्रुकुटिदुर्दर्शललाटतटः कोऽपि कठोरमवदत्। कश्चिदिति निर्दिष्टस्य स इति परामर्शः। रुषा कलुषतामप्रसादं नीतः स वाचामुल्लासमपरुषं सुकुमारमरोषं च कथं व्यनक्तु। विरोधच्छायापक्षे कार्यस्य कारणानुगुण्यं हेतुः॥

कस्यापि तत्समयसंभ्रमदूरदीर्ण-
जीर्णव्रणप्रणयिनी तनुराबभासे।
द्रष्टुं भ्रुवोरसमलास्यरहस्यदीक्षां
वीरश्रिया कृतगवाक्षपरम्परेव॥ ८॥

तत्काले संभ्रमेण दूरं दीर्णाः स्फुटिता जीर्णाः पुराणा व्रणाः शरप्रवेशखातानि तेषां प्रणयिनी परिचिता तनुः शुशुभे। अतः संभाव्यते—भ्रुवोः कोपवशान्नाट्यरहस्ये दीक्षां नियमेन ग्रहणं वीक्षितुं वीरलक्ष्म्या विरचिता जालपङ्क्तिरिव। राज्ञी च जालान्तरेण नाट्यादि वीक्षते॥

क्रोधानुबन्धघनघर्मविकीर्यमाण-
विस्तीर्णदीर्णजरठव्रणविभ्रमेण।
कूपावलीर्विपुलवीररसाः प्रतापं
हर्तुं द्विपामिव च कश्चन संचिकाय॥ ९॥

क्रोधव्यसनेन घनो यो घर्मस्तेन पूर्यमाणानि विस्तीर्णानि दीर्णानि स्फुटितानि व्रणानि तद्व्याजेन घनवीररसाः कूपपङ्क्तीः शत्रूणां प्रतापं शमितुमिव संचितवान्॥

व्यालोलतारकगतिर्विकसत्सरोज-
श्रीसख्यवत्यरुणतामवलम्बमाना।
कस्यापि चित्रमहह प्रमथाधिपस्य
दृष्टिर्निशातमसिडम्बरमेव भेजे॥ १०॥

व्यालोलतारकयोः कनीनिकयोस्तारकाणामुडूनां च गतिर्यस्याः। तथा प्रफुल्लया पद्मश्रिया सख्यं सादृश्यं परिचयश्च तद्वती। तथारुणतां शोणत्वमरुणभावं च गृह्णती कस्यापि दृष्टिर्निशितं तीक्ष्णमसिडम्बरं खड्गप्रपञ्चमेव सेवितवती। अथ च निशायास्तमसि निशातमसि दृष्टिर्डम्बरं विषयग्रहणसामर्थ्यं भजते॥

संरूढरीढमरुणीभवदीक्षणान्त-
कान्तिच्छटाघटनया क्षणमीक्षमाणः।
आसन्नसंगरमहोत्सवशंसनाय
सिन्दूरपूरमिव कोऽप्यकिरत्कृपाणे॥ ११॥

संरूढा रीढा मदमन्थरत्वेनावज्ञा यत्र । एवं कृत्वा क्षणमर्थात्खड्गं वीक्षमाणः कोपरोपारुणनेत्रकान्तिसंपर्केण हेतुना सङ्ग्रामोत्सवसूचनाय खड्गे सिन्दूरमिवाक्षिपत् । उत्सवे च सिन्दूरक्षेपो युक्तः ॥

दुःशिक्षिताखिलविपक्षदिधक्षयान्त-
नेत्रेषु संघटितपाटलिमोद्गमेषु ।
माहात्म्यतोऽन्तकरिपोरखिलास्तदोद्य-
दाग्नेयदृष्टय इव प्रमथा बभूवुः ॥ १२ ॥

रोषवशान्नेत्रेष्वन्तर्घटितः पाटलिमोद्गमः शोणत्वं येषां तेषु सत्सु दुःशिक्षितानामवस्तुशिक्षितानामखिलानां विपक्षाणां दिधक्षया दग्धुमिच्छया भगवतः प्रभावात्प्रमथाः प्रकटीभवदग्निमयदृष्टय इवाभूवन् । अन्तकरिपोरिति प्रकृतानुगुणमभिधानम् । भगवताग्नेयदृशा यमस्य दाहात् ॥

कश्चिन्निनाय पटुपाटलिमावमृष्टा
दृष्टिच्छटास्तत इतः सुचिरं विमुञ्चन् ।
वक्तुं पुरः प्रतिभुवामशुभान्यनभ्र-
विद्युद्घटाजटिलतामिव दिङ्मुखानि ॥ १३ ॥

पटुना पाटलिम्ना शोणत्वेनावमृष्टाः स्पृष्टा दृष्टिच्छटा इतस्ततः क्षिपन्कश्चिद्वैरिणामशुभानि सूचयितुं दिङ्मुखानि अनभ्राया विद्युतस्ताभिर्जटिलतामिवानयात् । रोषारुणदृष्टयो वर्णधर्मकार्यैर्विद्युत्त्वेन संभाविताः । 'पटु' इति वा भिन्नं पदम् ॥

धुन्वन्परः परुषरोषतयोत्तमाङ्गं
प्रेङ्खोलकेलिमणिकुण्डलयुग्मभङ्ग्या ।
निन्ये निनर्तिषति वैरिकबन्धलोके
संनद्धतालपुटतामिव वक्त्रचन्द्रम् ॥ १४ ॥

क्रूररोषभावेन शिरः कम्पयन्कश्चित्कम्पमानक्रीडारत्नकुण्डलव्याजेन दैत्यकबन्धवर्गे निनर्तिषति सति मुखचन्द्रं सतालयुगलतामिवानैषीत् । संनिवेशकार्याभ्यां कुण्डलयोस्तालत्वसंभावनम् ॥

आवष्टयन्करतलेन घनाभ्यसूयः
कश्चिन्महीमुदितनूतनरन्ध्रयुक्त्या ।
सद्योऽतनोदिव मदाग्र्यधुराश्रितानां
द्वारं विकस्वरमधोगतये परेषाम् ॥ १५ ॥

घनरोषतः पाणिना भूमिं घट्टयन्कश्चिज्जातनवच्छिद्रयोगेण परेषामधोगतये किंचिद्द्वारं विवृतमकरोत् । यतो मदस्याग्रधुरं श्रितानाम् । पतनान्ताः समुच्छ्रया भवन्ति ॥

वीरोऽपरस्त्रिनयनानुचरः सरोषं
मृद्नँल्ललाटफलकं करपङ्कजेन ।
दग्धुं रिपूननलमाशु ततो न्वियेष
निर्मथ्य लब्धुमिव नेत्रदशाधिरूढम् ॥ १६ ॥

हस्तेन भालस्थलं मर्दंस्त्रिनेत्रसेवकः कश्चिच्छत्रून्दग्धुं नेत्रावस्थया स्थितमग्निं मथित्वा लब्धुमिवानुससार । त्रिनयनानुचर इति साकूतम् ॥

आकर्ण्य निर्णयमरातिमतप्रथाना-
मारोहतोऽभिनवदुःसहरोषकोटिम् ।
चित्तेऽनवाप्य धृतिरुद्ध इवावकाशं
कस्याप्यभूदधर एव दृढः प्रकम्पः ॥ १७ ॥

शत्रूणां सङ्ग्रामोद्योगरूपाणां मतानां निश्चयं पक्षान्तरनिरासेन स्थापनं श्रुत्वा रोषमारोहतः कस्यापि चित्ते धैर्येण रुद्धे आवृते, अतोऽवकाशमलब्ध्वेवौष्ठ एव कम्पो दृढोऽभूत् । तदा कस्यापि रोषवशादोष्ठ एव चकम्पे, न तु भयवशाद्धृदयमित्यर्थः ॥

धूमच्छटाप्रविकटभ्रुकुटीपुटस्य
कस्यापि वेपथुसखोऽधरपल्लवोऽभूत् ।
उग्रोग्रनिःश्वसितमारुतघट्टनाभिः
कोपानलस्य वलमान इव स्फुलिङ्गः ॥ १८ ॥

धूमरेखावद्भीषणभ्रूभङ्गस्य कस्यापि कम्पमान ओष्ठपल्लवो निःश्वासवाताहननैः कम्पमानकोपाग्निस्फुलिङ्ग इवाभवत् ॥

वर्षन्नजस्रमसमश्रमवारिबिन्दू-
नाताम्रलोलनयनान्ततडित्कडारः ।
कश्चित्प्रनर्तयितुमुग्रकबन्धकेकि-
लोकं स्पृहां व्यधित दिव्यधनुर्ग्रहाय ॥ १९ ॥

घनघर्मजलकणान्वर्षन्नरुणनेत्रान्ता एव विद्युतस्ताभिः कपिशः कश्चित्कबन्धा एव केकिनो मयूरास्तेषां लोकं नर्तयितुं दिव्यधनुषो लोकोत्तरस्य चापस्येन्द्रचापस्य च ग्रहणायाभिलाषमकरोत् । सेन्द्रचापो मेघो मयूरान्नर्तयति ॥

कस्यापि कोपधुतमूर्धविलोलमौलि-
माल्योत्पतन्मधुपशावशतच्छलेन ।
घर्माम्बुतिम्यदलकस्थलरूढलोल-
भ्रूवल्लरीनवफलावलिराविरासीत् ॥ २० ॥

कोपेन हेतुना धुतो यो मूर्धा तत्र विलोलं यन्मौलिमाल्यं ततो भयवशादुत्पतन्तो ये मधुपशावा भ्रमरकास्तद्व्याजेन घर्माम्बुना तिम्यदार्द्रीभवद्यदलिकस्थलं तत्र जाता या भ्रूवल्लरी भ्रूलता तत्संबन्धिनां फलानामावलिः पङ्क्तिराविरासीत् । अत्र भ्रमराणां भ्रूलताफलत्वेन संभावनम् ॥

मश्नन्मिथः करयुगं पृथुमन्युरन्यो
भग्नोर्मिकारुणमणेः शकलैर्ववर्ष ।
निर्व्यूढगाढतरमत्सरनिर्जिहान-
हव्याशनव्यवधिभाज इव स्फुलिङ्गान् ॥ २१ ॥

बहुरोषतो हस्तद्वयमन्योन्यं मश्नन्नन्यो भग्नवालिकापद्मरागरत्नस्य खण्डैर्हेतुभिर्मत्सर एव निर्जिहानो निर्गच्छन्यो हव्याशनोऽग्निस्तस्याव्यवधानमव्यवहितत्वं भजन्ते ये तान्स्फुलिङ्गानिव ववर्ष । हस्तमर्दभग्नवालिकापद्मरागखण्डा रोषाग्निस्फुलिङ्गत्वेन संभाव्यन्ते ॥

संध्येव गण्डतलपाटलिमा परस्य
प्रागाविरास्त तदनु भ्रुकुटीतमिस्रम् ।
पश्चात्ततोऽपि विचकास नवाट्टहास-
ज्योत्स्ना विपक्षमुखपद्मनिरासहेतुः ॥ २२ ॥

कस्यचित्कपोलयोः पाटलिमारुणत्वं पूर्वसंध्येवाविरासीत् । अथ भ्रुकुट्येव तमिस्रं तम आसीत् । अतोऽपि पश्चान्नवाट्टहास एव ज्योत्स्ना विचकास । विपक्षाणां दैत्यानां मुखपद्मानि तेषां निरासहेतुः संकोचकारिणी ॥

ऐक्षन्त वक्षसि नवश्रमवारिबिन्दू-
नन्यस्य संभ्रमविशेषभुवो भुजिष्याः ।
कोपश्रियोऽतिचतुरं हृदये विशन्त्या
मुक्तामणीनिव जवक्षतहारसूत्रान् ॥ २३ ॥

संभ्रमेण विशेषेण भूरुत्पत्तिर्येषां तान्घर्मकणान्कस्यचिद्वक्षसि दासा ददृशुः । अतः संभाव्यते— हृदयं विशन्त्याः कोपलक्ष्म्याः संभ्रमच्छिन्नहारसूत्राणि मुक्तारत्नानीव ।

अत्र घर्मकणानां मुक्ताफलोत्प्रेक्षया स्थौल्यं प्रतिपादितम् । अत एव मुक्तानामन्तः प्रवेशाभावः । 'हारसूतात्' इति वा पाठः । हारेण सूतानुत्पादितान् ॥

कश्चिद्बभार पुनरुक्तविपच्यमान-
रोमाञ्चसूचिसचिवं प्रमथप्रवीरः ।
तत्तत्समीकशतपीतचरारिखङ्ग-
खण्डोत्करोद्वमनसज्जमिवाङ्गमङ्गम् ॥ २४ ॥

पुनरुक्तमत्यर्थं विपच्यमाना जायमाना ये रोमाञ्चास्त एव तीक्ष्णतया सूचयस्तत्सचिवमेकैकमङ्गं कश्चिदवहत् । अतः संभाव्यते— तेषु तेषु समीकशतेष्वनेकरणेषु पीतचराः पूर्वं निगीर्णा येऽरिखङ्गखण्डोत्करास्तेषामुद्वमने सज्जमिव । अत्र रोमाञ्चाः खङ्गखण्डत्वेन संभाविताः ॥

कस्यापि पाणिकमले तरवारिलेखा
भ्रूवल्लरी च सुमहत्यलिके चकम्पे ।
मालिन्यभूश्च कुटिला च मतिः परेषा-
मुद्धूष्णुकम्पकलनास्त तयोस्तृतीया ॥ २५ ॥

कस्यापि हस्ते करट्टिका ललाटे च भ्रूलता चकम्पे । तयोः करट्टिकाभ्रुवोस्तृतीया शत्रूणां मतिरासीत् । यत उद्धूष्णुः कम्पकलना यस्याः । मालिन्यभूरित्यादि तिसृणां विशेषणम् ॥

आत्तः क्रुधा मृधविधानधृतानुबन्ध-
मुद्वेपथुः पृथुरुचिभ्रुकुटीजटालः ।
केयूरलौहितकभाभिरगाहतेव
खङ्गोऽपि कस्यचन कोपविपाटलत्वम् ॥ २६ ॥

मृधविधाने रणकरणे धृतोऽनुबन्धो व्यसनं यत्र । एवंकृत्वा गृहीतः । तथोद्वेपथुः । आधारभूतस्य हस्तस्य सकम्पत्वात्कम्पमानः । अथवा पाणिनर्तनात् । तथा रुचिरेव भ्रुकुटी तया जटालः कस्यापि खङ्गोऽप्यङ्गदपद्मरागांशुभिः कोपारुणत्वमिवाभजत् । कुपितस्य कम्पादिसंभवः ॥

द्राङ्निग्रहन्तुमितरः समरे रिपूणां
चक्रं चिरं चलयति स्म कराम्बुजेन ।
आवर्तमूर्तिरुदटङ्कि भुजोत्तरङ्ग-
सङ्गस्य येन नवशौर्यमहार्णवस्य ॥ २७ ॥

रिपूणां निग्रहन्तुं कश्चित्करेण चक्रमभ्रमयत् । भुजाभ्यामुद्गतेन तरङ्गेण सङ्गो यस्य तस्य शौर्योदधेरावर्तरूपं टङ्कितम् ॥

धाराजलह्रदपथाभिनवप्ररूढ-
रक्तोत्पलव्यतिकरेव कृपाणलेखा ।
केनाप्यमन्थरमरच्यत मुच्यमान-
रोषारुणारुणनिरङ्कुशदृष्टिपातैः ॥ २८ ॥

द्रुतं क्षिप्यमाणा रोषातिरक्ता अनियन्त्रणा ये दृष्टिपातास्तैर्हेतुभिः केनापि खड्गलेखा धाराजलमग्नि(?)गतस्निग्धप्रभाविशेषस्तदेव जलत्वेनाध्यवसितं तदेव ह्रदस्तत्पथेऽभिनवः प्ररूढो जातो रक्तोत्पलानां व्यतिकरोऽस्याः सेवारच्यत कृता । रोषरक्ता दृष्टिपाता रक्तोत्पलत्वेन संभाविताः ॥

कश्चित्तथाप्रथितरोषभरं करेण
वेगोद्धतं व्यधित कुट्टिमघट्टनानि ।
सद्यो यथा प्रथितनूतनरन्ध्रयोगा-
त्त्रासेन भग्नहृदयेव धरापि जज्ञे ॥ २९ ॥

प्रथितो रोषभरो यत्र । एवं कृत्वा । तथा वेगेनोद्धतं कृत्वा कश्चित्कुट्टिमानां घट्टनानि तथाकार्षीद्यथा सद्यः संपन्ननवच्छिद्रयोगाद्भूमिरपि भीत्या स्फुटितहृदयेव जज्ञे जाता ॥

कस्यापि वक्त्रमुदयात्परिपाटलश्रि
मिश्रीकृतार्धमसिदीधितिघोरणीभिः ।
नाशैकपैशुनकृते द्विषतामकाण्ड-
राहूपरागमिव कन्दलयांचकार ॥ ३० ॥

रोषवशादुदयन्ती परिपाटला श्रीर्यस्य । तथासिदीधितिघोरणीभिः खड्गप्रभापङ्क्तिभिर्मिश्रीकृतमर्धं यस्य तत्कस्यापि वक्त्रं नाशद्योतनायाकाण्डे दिनादौ राहूपरागमिव प्रकाशयामास ॥

आक्रन्दमावहदिवाविरतान्तराल-
पारिप्लवभ्रमरसंहतिझांकृतेन ।
प्रत्यर्थिवीरकमलागृहशङ्कयेव
कश्चिद्बभञ्ज निजविभ्रमपुण्डरीकम् ॥ ३१ ॥

रोषवशात्कश्चित्स्वविलासपद्ममस्फोटयत् ॥ अतः संभाव्यते—प्रत्यर्थिनो वैरिणो ये वीरास्तेषां कमला श्रीस्तस्या गृहमावास इति शङ्कया संभावनयेव । अत एव चान्तराले

पारिप्लवा चञ्चला या भ्रमरसंहतिस्तस्या झांकृतं रुतं तेन हेतुनाक्रन्दं विह्वलं शब्दं वि-भ्रदिव ॥

कोऽपि प्रकोपितमतिः परकिंवदन्त्या
दन्त्याहवप्रसरसंभृतसिंहवीर्यः ।
अङ्गैः समीकशतपीतचरारिखङ्ग-
धाराम्बु घर्मभरविभ्रमतो ववाम ॥ ३२ ॥

परेषां किंवदन्ती वार्ता तया प्रकोपिता मतिर्यस्य सः । दन्त्याहवं हस्तियुद्धं तत्प्रसरे संभृतं सिंहवीर्यं यस्य स कोऽपि घर्मजलव्याजात्सङ्ग्रामेषु पूर्वपीतं यदरिखड्गधाराम्बु त-वामोदवमत् ॥

कश्चित्पुरो विकिरति स्म विमृद्यमान-
हस्तोर्मिकोत्करगलत्तपनीयचूर्णैः ।
उन्मूल्यमानपरिपन्थिरमानिकेत-
पङ्केरुहप्रकरकेसररेणुपुञ्जम् ॥ ३३ ॥

विमृद्यमानो भज्यमानो यो हस्तोर्मिकोत्करस्तस्माद्गलन्ति तपनीयचूर्णानि सुवर्णरेण-वस्तैर्हेतुभिः कोपत उन्मूल्यमान उत्खातमूलो यः परिपन्थिरमानिकेतपङ्केरुहप्रकरो वैरि-लक्ष्मीनिवासपद्मसमूहस्तस्य केसरास्त एव [तदीय]रेणुपुञ्जं व्यानञ्ज । हस्तवालिका-सुवर्णचूर्णानि पद्मपरागत्वेन संभावितानि ।

कस्याप्यवेपत वपुः पुनरुक्तकोपा-
टोपाकुलं गलदनर्गलघर्मवारि ।
आसन्नसंगररसव्यसनानुषङ्गा-
द्वीरश्रियेव हठतः परिरभ्यमाणम् ॥ ३४ ॥

पुनरुक्तो यः कोपाटोपस्तेनाकुलं कस्यापि वपुर्गलदनर्गलं निर्निरोधं घर्मवारि यत्र। एवं कृत्वाकम्पत । आसन्नो यः संगरः सङ्ग्रामः स एव चर्व्यमाणत्वाद्रसस्तत्र व्यसनेना-नुषङ्गाद्धेतोर्वीरश्रिया स्त्रीत्वान्नायिकात्वेन व्यवहृतयालिङ्ग्यमानमिव । योषितालिङ्ग्यमा-नश्च गलद्धर्मजलः कम्पते ॥

श्यामोद्भमद्भ्रुकुटि पाण्डुतराट्टहास-
मुल्लासिशोणिमसखं च मुखं परस्य ।
कोपश्रियः सममिवारभतैणनाभि-
नासीरपीतनरसैरनुलेपकेलिम् ॥ ३५ ॥

श्यामोद्भ्रमन्ती भ्रुकुटिर्यस्य । तथाविच्छिन्नत्वाच्छुभ्राट्टहासम् । तथोल्लासिनः शोणिम्नोऽरुणत्वस्य सखं परिचितं चान्यस्य मुखं समं मिश्रैः कस्तूरीकर्पूरकुङ्कुमरसैः कोपश्रियो वीरलक्ष्म्या अङ्गरागसिद्धिमिवारब्धवत् ॥

दूरं प्रसार्य भुजदण्डयुगं मुखं च
व्यादाय कश्चिदथ जृम्भणविभ्रमेषु ।
आकृष्य दिग्वलयतोऽखिलवैरिलोका-
न्द्रागत्तुमारभत भैरवशिक्षयेव ॥ ३६ ॥

जृम्भाविलासेषु भुजद्वयं प्रसार्य मुखं च व्यादाय विकास्य कश्चिद्दिगन्तराद्वैरिवर्गमाकृष्य महाकालोपदेशेन भोक्तुमिवारब्धवान् ॥

दीर्यद्गभीरजरठव्रणरन्ध्रपुञ्ज-
संजातसंस्तवमुवाह परः शरीरम् ।
दोर्दण्डयष्टिकृतसंनिधिशौर्यकीर्ति-
हंस्यां यदातनुत विभ्रमपञ्जरत्वम् ॥ ३७ ॥

कश्चिच्छरीरं दीर्यन्तः स्फुटन्तो गम्भीरा अगाधा जरठाः पुराणा ये व्रणरन्ध्रपुञ्जास्तेषां संजातः संस्तवो यस्य तदुवाह । यच्छरीरं दोर्दण्डो भुजदण्ड एव यष्टिस्तत्र कृतसंनिधिः संनिहिता या शौर्यकीर्तिः सैव हंसी तस्या विलासपञ्जरभावमकरोत् । पञ्जरे च च्छिद्राणि भवन्ति । देहस्य रोषवशाद्विदीर्णव्रणच्छिद्रपरिचयो यो जातस्तेन कीर्तिहंस्या अनेकच्छिद्रसंकुलं पञ्जरमिव जातम् । यत्र दोर्दण्डो वासयष्टयाकार इत्यर्थः ॥

तेषां मुखेषु रिपुसैन्यमदान्धगन्ध-
दन्तीन्द्रगण्डतटखण्डनचण्डचारः ।
भालस्थलोड्डमरलोलवलत्कराल-
भ्रूवल्लरीभिरुदपुच्छयतेव कोपः ॥ ३८ ॥

तेषां गणानां मुखेषु कोप उदपुच्छयत पुच्छमिवोदक्षिपत् । भालस्थले उड्डमरमुड्डामरतया लोलं कृत्वा वलन्त्यो या भ्रूवल्लर्यस्ताभिर्हेतुभिः । भ्रुवः पुच्छत्वसंभावनात्कोपस्य सिंहताप्रतीतिः । रिपुसैन्य एव मदान्धगन्धदन्तीन्द्रास्तेषां गण्डतटखण्डने चण्डचारः क्रूरकर्मा । सिंहश्च गन्धदन्तिनां गण्डखण्डने पण्डितः । 'पुच्छभाण्ड—' इति णिचि लङि रूपम् ॥

उन्मीलदर्घकणविभ्रमघर्मविन्दु-
दूरोल्लसद्भ्रुकुटि पद्धतिधूपधूमम् ।

क्रोधाधिदैवतमिवार्चिचदुच्चरिष्णु-
शोणत्वरक्तवलिभिर्वदनं गणानाम् ॥ ३९ ॥

गणानां वदनं कर्तृ । कोप एव दैवतं तमार्चिचदिव । उच्चरिष्णु कोपवशाद्भ्राजमानं यच्छोणत्वं लौहित्यं तदेव रक्तवलयस्तैरुन्मीलन्तः स्फुरन्तोऽर्धकणविभ्रमा घर्मबिन्दवो यत्र । दूरमुच्छलन्त्युल्लसन्ती भ्रुकुटिपद्धतिरेव धूपधूमो यत्र । क्रोधाधिष्ठातृदैवतं वदनेनार्चितमिति वा व्याख्येयम् ।

संचुक्षुभे घटितघर्मजलेन चन्द्र-
चूडामणेः सदसि कोपमहार्णवेन ।
आरक्तगण्डरुचिविद्रुमदण्डभाजो
यस्यास्ति फेननिकुरम्ब इवाट्टहासः ॥ ४० ॥

भगवतः सभायां कोपसमुद्रेण संचुक्षुभे क्षुभितम् । भावे लिट् । घटितं स्फुरद्धर्मजलं यत्र । रोषवशादारक्तं यद्गण्डतटं तदेव विद्रुमदण्डस्तं भजते । यस्य कोपसमुद्रस्याट्टहासः फेनराशिरिवासीत् । चन्द्रोदये च समुद्रक्षोभ उचितः ॥

तेषां तथोन्मिषितदुर्धररोषतिग्मं
जग्मुस्तदा किमपि पाटलतां मुखानि ।
शंभोर्यथादित तदंशुभरैरकाण्डे
संध्यानुबन्धमिव शेखरचन्द्रखण्डः ॥ ४१ ॥

उन्मिषितः स्फुरन्दुर्धरो यो रोषस्तेन तिग्मं तीक्ष्णं कृत्वा तेषां मुखानि लौहित्यं किमपि तथा जग्मुर्यथा भगवतो मौलिचन्द्रस्तस्याः पाटलतायाः अंशुभरैर्हेतुभिरकाले संध्यानुबन्धमिव प्रापत् ॥

सस्फारसारसहितप्रसरानुबन्ध-
भाजोऽधिकं कमपि टङ्कयतः प्रचारम् ।
लोकस्य तस्य सरसोऽभिनवप्रकर्ष-
श्चित्रं स्फुटत्वमनयन्नवकोपयोगम् ॥ ४२ ॥

स्फारयुक्तो यः सारो बलं तेन सहितस्य प्रसरस्यानुबन्धं भजतः । तथाधिकं कमपि लोकोत्तरं प्रचारमुल्लासं टङ्कयतः । तस्य लोकस्य सरसो रसयुक्तः । कोपस्य चर्व्यमाणत्वात् । प्रकर्ष आस्फालनरूपो नवस्य कोपस्य योगं संपर्कं स्फुटत्वमनयत् । चित्रमित्याश्चर्यद्योतकम् । तत्पक्षे सरसो ह्रदस्य प्रकर्षो नैर्मल्यादिलक्षणम् । बकानां शकुनिविशेषाणामुपयोगं स्फुटत्वं न नयति सस्फारः सारसेभ्यो हंसेभ्यो हितो यः प्रसरस्तदनुबन्धं भजते । तथाधिकं जले विषये प्रचारं टङ्कयतः ॥

अन्योन्यनिर्दयविघट्टनतोऽप्यखण्ड-
चण्डाश्रिभिर्विवृतकोपभरै रदाग्रैः ।
भक्तो विभुं प्रति निरस्तसमस्तदम्भो
दम्भोलिदन्तवदृश्यत पुष्पदन्तः ॥ ४३ ॥

अन्योन्यं निर्दयं कृत्वा विघट्टनादप्यखण्डा अकुण्ठाश्चण्डा दुर्दर्शा अश्रयो धारा येषां ते रदाग्रैर्दन्ताग्रैर्हेतुभिः पुष्पदन्तो दम्भोलिमया वज्रमया दन्ता यस्य तद्वददृश्यत । रोषवशान्मिथो दन्तानां विमर्देऽपि कृते काठिन्यनिवृत्त्यभावात् । भगवन्तं प्रति भक्तस्त्यक्ताशेषदम्भश्च ॥

कोपग्रहोड्डमरनिर्भरघर्मगर्भ-
रोमाञ्चकञ्चुकपृथुश्वयथुप्ररोहः ।
बिभ्रच्छरीरमपि कीकसमात्रसार-
मापीवराङ्ग इव भृङ्गिरिटिर्विभासे ॥ ४४ ॥

कोपग्रहेण व्यसनेनोड्डमर उद्दामो घर्मो येषु तेषु गर्भेष्वस्थिसंधिषु यो रोमाञ्चकञ्चुकः स एव देहस्थूलत्वाभासनात्पृथुः श्वयथुप्ररोहः शोफोदयो यस्य स भृङ्गिरिटिरापीवराङ्गो मांसलगात्र इवाभात् । शरीरं कीकसमात्रसारमस्थिसारं दधदपि ॥

निर्मृज्य भालफलकात्किरतो हरित्सु
स्वेदाम्भसां सरभसं कणचक्रवालम् ।
नागाननस्य जवटे सलिलावगाहे
केलिं विनापि करसीकरसर्गमार्गः ॥ ४५ ॥

ललाटपट्टादुत्पुंस्य दिक्षु घर्मकणसमूहं क्षिपतो गजमुखस्याम्बुक्रीडां विनापि करसीकरसर्जनमभूत् ॥

उद्धूष्णुना श्रमजलेन गजाननस्य
सिन्दूररेणुरुदमृज्यत गण्डभित्तेः ।
आर्द्रप्रकोपजनितोऽथ स तत्र तस्य
तत्कृत्यकृज्झटिति पाटलिमा बभूव ॥ ४६ ॥

उत्पद्यमानेन घर्मजलेन गजमुखस्य गण्डात्सिन्दूरधूलिरुत्पुंसिता । अथ प्रत्यग्रक्रोधजनितं लौहित्यं तस्य गजाननस्य तत्कृत्यकृत्सिन्दूरकार्यकृद्बभूव ॥

झञ्झामरुत्सहचरं परुषं पुरस्ता-
न्मुञ्चन्विनिःश्वसितडम्बरमग्निजन्मा ।

वर्षैश्च धर्मपृषतैश्च पृथुप्रकोपो
नृत्तक्रियामकृत वाहनबर्हिणस्य ॥ ४७ ॥

झञ्झामरुद्वार्षिकः सशब्दो वातस्तस्य सहचरम्। तथा परुषं निःश्वासप्रपञ्चं क्षिपन्, घर्मजलकणान्वर्षैश्च कुमारो वाहमयूरनाट्यमकरोत्। वातमिश्रं च वर्षं मयूरस्य नृत्तहेतुः॥

ताम्रीभवन्मुखततिर्विततोज्जिहान-
भ्रूभङ्गधूमलहरीविकरालिताशः।
तापं किमप्यनुसरञ्शिखिभूरवाप
तत्र स्वकारणगुणानुगुणामवस्थाम् ॥ ४८ ॥

रोषवशादरुणीभवन्मुखपङ्क्तिः। तथा वितता उज्जिहाना उत्तिष्ठन्तो ये भ्रूभङ्गास्त एव धूमलहर्यस्ताभिर्विकरालिता आशा दिशो येन। तथा कमपि तापं भजञ्शिखिभूः कुमारः स्वकारणस्याग्नेर्गुणानामनुरूपामवस्थां प्रापत्। अग्नेर्ह्यरुणत्वादिकं गुणः॥

प्रापत्करालतरवारिहठग्रहेण
स्वच्छन्दतामविरतं विवशो ववल्ग।
चित्राय विद्विपदुरस्तटवप्रकेलि-
कल्लोलितोऽसकृदकल्प्यत वीरभद्रः ॥ ४९ ॥

कराला दुर्धर्षा या तरवारिः कट्टारिका तस्या हठेन ग्रहेण स्वातन्त्र्यं प्राप। विवशः। अर्थात्कोपस्य। अविरतं ववल्ग विकटं संभ्रमन्, विद्विषतामुरस्तट एव वप्रस्तत्र केलिकल्लोलितः क्रीडोल्लसितो वीरभद्रो नाम गण आश्चर्यायाकल्प्यत। क्लृप्तावुपसंख्यानाच्चतुर्थी। चित्रशब्दो विरोधद्योतकः। तत्पक्षे भद्रो गजजातिविशेषः। स करालतरा या वारिर्गजबन्धनस्तम्भस्तद्ग्रहणेन स्वच्छन्दतां यथेच्छकारितां प्राप्नोति। अविरतं वल्गति। वप्रकेलिर्दन्ताघातक्रीडा तया कल्लोलितश्च॥

तण्डुः पुनः पुनरकाण्डकराभिघात-
व्रातं विशन्नधिधरित्रि मदस्वतन्त्रः।
स्वस्या भ्रुवोऽनुसृतलास्यरहस्यकेले-
रुद्घट्टयन्किमपि तालमिवाबभासे ॥ ५० ॥

मदेन हेतुना स्वतन्त्रः। तथाधिधरित्रि धरित्र्यां पुनः पुनरकाण्डं कृत्वा घट्टनजातं ददत्तण्डुर्नाम स गणोऽनुसृता प्राप्ता स्पन्दरूपा लास्यकेलिर्यया तस्या भ्रुवः किमपि तालमुद्घट्टयन्निवाबभासे। भूमिघातव्याजेन तालोद्घट्टनमनुगुणप्रदर्शनार्थम्॥

द्वारावलीहठविशत्सुरलोकपाल-
मालानिषेधविधिसंततशीलनेन।

अभ्यस्तमाविरभवत्स्वयमश्रमेण
भ्रूलास्यकर्म सहसैव शिलादसूनोः ॥ ९१ ॥

द्वारावलीभिर्हठेन विशन्त्यो याः सुराणां लोकपालानां च मालास्तासां निषेधविषये संततं शीलनं परिचयनं तेनाभ्यस्तं भ्रूलास्यकर्म भ्रूस्पन्दनमक्लेशेन स्वयं शिलादसूनोर्नन्दिनः प्रकटमभवत् ॥

क्ष्मापीठपृष्ठमपि वध्यतोऽतिवेल-
मुद्वेलमत्सररसप्लवमानदृष्टेः ।
अभ्यासतो मुरजवादनविभ्रमेषु
नो नन्दिनः करतलं श्रममाससाद ॥ ९२ ॥

उद्वेलो वेलातिक्रामी यो मत्सरः स एव रसचर्वणाद्रसः । जलमपि रसः । तत्र प्लवमाना भ्रमन्ती दृष्टिर्यस्य । तथा भुवं घ्नतो नन्दिनः करतलं मुरजवादनविलासेष्वभ्यासान्न श्रान्तम् ॥

औत्सुक्यतो विवृतशैत्यविपक्षखड्ग-
धाराजलाप्लुतिषु रूक्षवचोनुबन्धि ।
तत्तद्विकारविशरारुतया पुरस्ता-
त्कस्यापि वक्त्रमतनोत्पवनप्रकोपम् ॥ ९३ ॥

विवृतं शैत्यं शितभावस्तीक्ष्णत्वं यैस्तेषां विपक्षखड्गानां धारास्तासां जलम् । स्निग्धः प्रभाविशेषो जलत्वेनाध्यवसितः । तत्राप्लुतयः स्नानानि तेष्वौत्सुक्यात् । तत्तद्विकारैर्मुखारुणत्वादिभिर्विशरारुत्वात् । रूक्षवचांस्यनुबध्नन्कस्यापि मुखं प्रथमं पवनस्य निःश्वासवायोः प्रकोपमकरोत् । अथ च विवृतं शीतलत्वं यैस्तेषु धाराजलेष्वाप्लुतयस्तास्वौत्सुक्यतोऽतिसेवनात्तैस्तैर्विकारैरङ्गच्छला(?)दिभिर्विशरारुत्वेन रूक्षाण्यस्निग्धानि वचांस्यनुबध्नाति पवनकोपोऽभवत् ॥

स्रोतांसि घर्मसरितो हठचूर्ण्यमान-
माणिक्यभूषणरजोभिरुरुप्रकोपः ।
भालस्थले सिकतिले कुरुते स्म वीर-
लोकः पटुभ्रुकुटिशैवलमांसलानि ॥ ९४ ॥

रोषवशाद्धठेन रभसेन चूर्ण्यमानानि यानि माणिक्यभूषणानि रत्नालंकारास्तद्रजोभिर्हेतुभिर्वीरवर्गो ललाटे घर्मनद्याः प्रवाहान्ससिकतानकरोत् । पटुर्या भ्रुकुटी सैव वर्णसंनिवेशाभ्यां शैवलं तेन मांसलानि । रत्नरेणवः सिकतात्वेन, भ्रूभङ्गाश्च शैवलत्वेन घर्मनद्याः संभाविताः ॥

सान्द्रस्वेदनदीष्णदोष्णि विकटभ्रूरङ्गपीठीभव-
द्भाले पाटलतानिचोलकविशत्प्रोच्चण्डगण्डस्थले ।
इत्थं क्वाप्यतिदृप्यदुल्वणगणग्रामे ननामेव भू-
स्तद्भूयः करपार्ष्णिघट्टनशताविर्भावगोष्ठीभरैः ॥ ९९ ॥

सान्द्रे स्वेदे नदीष्णे कुशले, अथवावयवार्थानुसरणद्वारेण नद्यां स्नाते दोषौ भुजौ यस्य। तथा भ्रुवोः स्पन्दनमेव नाट्यप्रवृत्तत्वान्नटीत्वेन प्रतीतयो रङ्गपीठीभवद्रङ्गपीठं संपन्नं भालं यस्य । भ्रूभङ्गकारिणीत्यर्थः । तथा पाटलता लौहित्यं तदेव निचोलको जवनिका तां विशत्प्रोच्चण्डं गण्डस्थलं यस्य तस्मिन् । दृप्यन्सदर्प उल्वणो यो गणग्रामः प्रमथसमूहस्तस्मिन्नेव कुप्यति सति । तस्य गणसमूहस्य भूयांसि करपार्ष्णिघट्टनशतानि हस्तपादताडनानि तेषामाविर्भावस्तद्गोष्ठीभरैर्नतेवाभवत् ॥

रोहद्वारुणवारबाणघटनोत्सिक्तामिवातन्वतां
तेषां मूर्तिमजस्रघर्मविसरां संख्येऽथ नेदीयसि ।
वीप्साकुट्टिमघट्टनोद्यदरुणच्छायाछटाविष्कृत-
प्रौढाग्नेयशरग्रहा इव हठादग्रे व्यवल्गन्कराः ॥ ९६ ॥

रोषवशादजस्रं घर्मविसरो यस्याः । अतः संभाव्यते—आत्यन्तिके सङ्ग्रामे सति रोहन्ती वारुणी वरुणदेवता वारबाणघटना कवचसंपर्को यस्यास्तामिव मूर्तिमातन्वतां तेषां करा वीप्सया पौनःपुन्येन कुट्टिमानां भूभागानां घट्टना ताडनं तयोद्यन्त्यरुणा छायाछटा तया हेतुभूतयाविष्कृतः प्रौढस्याग्नेयस्य शरस्य ग्रहो यैस्त इव व्यवल्गन् । अत्र घर्मजलं वारुणकवचत्वेन, भूताडनजातमरुणत्वं चाग्नेयशरत्वेन संभावितम् ॥

अन्योन्यं घट्टनायाजनि करतलयोर्दन्तदंशव्यथायाः
पात्रं चक्रेऽधरौष्ठं व्यतनुत वसुधा घट्टनक्लेशमङ्घ्रेः ।
इत्थं तेषां निजाङ्गान्यपि चिरमतुदन्पार्षदाग्रेसराणां
कोपाटोपोऽथ मा भूत्कथमरिपृतनानायिकानां रुजायै ॥ ९७ ॥

कोपस्याटोपः प्रपञ्चो हस्ततलयोर्मिथस्ताडनायः जातः । अधरमोष्ठं दन्तदंशेन व्यथायाः पात्रं चक्रे । तथाङ्घ्रेः पादस्य भूताडनेन क्लेशमकरोत् । एवं तेषां गणाग्रण्यानां कोपप्रपञ्चः स्वाङ्गान्यप्यव्यथत् । अथाक्षेपे । शत्रुसेनापत्नीनां रुजायै कथं मा भूत्। दण्डापूपिकया सिद्धेः ॥

तत्तद्युद्धवसुंधराचुलकितारातिप्रतापानल-
प्राग्भारं वमतामिवाट्टहसितज्वालावलीलीलया ।

तेषां रोषकषायितेक्षणपुटव्याजेन वीरश्रियो
दीपानाददिरे विचेतुमसुरान्संयन्निशायामिव ॥ ५८ ॥

तासु तासु युद्धवसुंधरासु रणभूमिषु चुलकितः पीतो योऽरातिप्रतापानलप्राग्भारो वैरिप्रतापाग्निप्रपञ्चस्तमिवाट्टहसितज्वालामालाछलेनोद्गिरतां तेषां रोषारुणनेत्रव्याजेन वीरश्रियः कर्त्र्यः संयदेव निशा तस्यामसुरानन्वेष्टुं दीपानिवागृह्णन् ॥

नृत्यद्भ्रूवल्लिकेतुव्यतिकरतरलैराननैर्दुर्निरीक्ष्या
दीक्षां कम्पे दिशन्तः प्रतिपदमवनेः पार्ष्णिभिर्वट्टनेन ।
नेत्रैः कोपोपरक्तैः क्षयसमयमिवानेकचण्डांशुबिम्ब-
प्रादुर्भावं सृजन्तो द्विपदशुभमिवाशेषतस्ते शशंसुः ॥ ५९ ॥

नृत्यन्तः स्पन्दमाना या भ्रूवल्ल्यस्ता एव विनाशपिशुनत्वात्केतवस्तेषां व्यतिकरेण तरलैश्चपलैर्मुखैर्दुर्दर्शाः । तथा पार्ष्णिभिः पादतलैस्ताडनेन भुवः कम्पे दीक्षां नियमपूर्वं ग्रहणं दिशन्तः । तथा कोपारुणैर्नेत्रैर्युगपदनेकेषां सूर्यबिम्बानामाविर्भावं कुर्वन्तस्ते गणाः सर्वतो द्विषताममङ्गलमिवासूचयन् । केतुदर्शनं भूकम्पो युगपद्बहुसूर्यदर्शनं चेत्यनिमित्तसूचनानि ॥

इति प्रथितदुःसहासमरुषां गणानां रण-
द्विलासवलयावलीमुखरितालिकैः पाणिभिः ।
घनश्वसनविस्फुरद्दशतयांशुकौघा अपि
क्रुधा ददृशिरे चिरं तरलतर्जनीका इव ॥ ६० ॥

एवं प्रसिद्धासह्यक्रुधां गणानां रणन्ती विलासवलयमाला तया मुखरितं सशब्दं कृतं ताडनवशादलिकं यैस्तैः पाणिभिः करैर्हेतुभिः । घनश्वसनैर्विस्फुरन्त्यः कम्पमाना दशा वस्त्रप्रान्ता यस्य तद्भावेन वस्त्रसमूहा अपि चपलतर्जनीका इव दृष्टाः ॥

इत्थं साम्राज्यमापद्विगलदविरलस्वेदवारिप्रवाह-
प्रौढारब्धाभिषेको मुखभुवि भगवत्किंकराणां प्रकोपः ।
द्वाःस्थेनेवारुणिम्ना तरलितविततभ्रूलतावेत्रदण्डं
गण्डाभोगात्प्रसादश्चतुरतरमथो दूरमुत्सारितोऽभूत् ॥ ६१ ॥

विगलन्निर्गच्छन्नविरलोऽनवरतो यः स्वेदवारिप्रवाहस्तेन प्रौढो लोकोत्तर आरब्धोऽभिषेको यस्य स भगवत्किंकराणां कोप एवं साम्राज्यमापत् । अथ वितता भ्रूलता एव वेत्रदण्डास्तरलिता यत्र । एवं कृत्वा द्वाःस्थेन प्रतीहारेणेवारुणिम्ना लौहित्येन द्रुतं प्रसादो

निष्कालितोऽभूत् । विशेषणबलाचात्र राजत्वप्रतीतौ प्रसादस्याननुगुणस्थानीयस्य दूरमुत्सारणमिति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये गणक्षोभवर्णनं नामाष्टादशः सर्गः ।

---

## एकोनविंशः सर्गः ।

आकष्टुमरिकोषेभ्यः श्रियं ते श्रितकौतुकाः ।
इत्थमुल्लासयामासुर्वक्रभ्रूवल्लिकुञ्चिकाः ॥ १ ॥

अरय एव कोषा अरीणां वा कोषास्तेभ्यः श्रियमाक्रष्टुं कुतूहलिनस्त एव वक्रा या भ्रूवल्ल्यस्ता एव कुञ्चिका उल्लासयामासुरभ्रमयन् । कुञ्चिकोल्लासेन कोषेभ्यो लक्ष्मीः कृष्यते ॥

चूर्णिताभरणस्वर्णमणिरेणुभरोर्मिभिः ।
तैः पुरस्ताद्विचकरे पटवासो जयश्रियः ॥ २ ॥

चूर्णिताश्चूर्णीकृता आभरणानां ये स्वर्णमणयस्तद्रजोभरैर्हेतुभिः पुरस्तात्प्रासैः पूर्वमेव जयलक्ष्म्याः पटवासः कर्पूरादिक्षोदो विचकरे कीर्णः । पिष्टरत्नरजोभिरेव वशीकृतेत्यर्थः । किरतेः 'ऋच्छत्यॄताम्' इति गुणे कृते विचकरे इति रूपम् ॥

घट्टयत्सु रुषा तेषु साटोपं करपङ्कजैः ।
हरसंसदि भीत्येव भित्तयोऽपि चकम्पिरे ॥ ३ ॥

घट्टयत्सु रोषवशात्साडम्बरं हस्तपद्मैः । अर्थात्सदस्ताडयत्सु तेषु भयेनेव हरसभायां भित्तयोऽपि कम्पिताः ॥

ज्वलता वह्निना शंभोरधिलोचनवेदिकम् ।
पराभिषेणने तेषां चक्रे नीराजनाविधिः ॥ ४ ॥

शंभोर्लोचनमेव वेदिस्तत्र ज्वलताग्निना कर्त्रा तेषां परेष्वभिषेणने सेनया गमने सति नीराजनाविधिः शान्तिकं कृतम् । प्रतीयमानोत्प्रेक्षेयम् ॥

दन्तक्षतानि तन्वाना नृत्यद्भ्रु दशनच्छदे ।
क्रोधक्रियैव सा तेषां वल्लभा समजायत ॥ ५ ॥

नृत्यन्त्यौ स्यन्दमाने भ्रुवौ यत्र । एवं कृत्वोष्ठे दन्तैः क्षतानि कुर्वती सा क्रोधरूपा क्रियैव तेषामिष्टा जाता । पुनः पुनः क्रोधमकुर्वन्नित्यर्थः । वल्लभा प्रिया नायिका चौष्ठे दन्तक्षतादि ददाति ॥

कान्तिस्तेषां च तत्काले लोहितायत्त्विषोर्द्विषोः ।
अभूदकाण्डसंध्येव नाशपैशुनकृद्द्विषाम् ॥ ६ ॥

तत्काले शत्रूदयश्रवणसमये रोषवशाल्लोहितायन्ती रक्ता संपद्यमाना त्विड्ययोस्तयोस्तेषां दृशोः कान्तिरकालसंध्येव द्विषां विनाशसूचनकृदभूत् । तेषां नेत्रारुणत्वदर्शनाद्वैरिणां विनाशोऽनुमित इत्यर्थः ॥

प्रकोपपाटलरुचस्ते भार्गवगुरोर्गणाः ।
कृतस्नाना इवैक्ष्यन्त मध्येऽरिरुधिरह्रदम् ॥ ७ ॥

रोषारुणास्ते भार्गवगुरो रामोपाध्यायस्य भगवतो गणा अरीणां रुधिरह्रदस्य मध्ये कृतस्नाना इव दृष्टाः । भार्गवगुरोरिति साकूतम् । भार्गवो हि वैरिरक्तेन स्नातवान् ॥

कोपाय समरोत्साहशंसिने घर्ममार्जितैः ।
तेऽङ्गरागपटैस्तूर्णं पूर्णपात्रमिवादिशन् ॥ ८ ॥

घर्मो घर्माम्भः । कार्ये कारणव्यपदेशः । तेन मार्जितैरुत्पुंसितैः । अङ्गरागा एव पटास्तैर्हेतुभिस्ते गणाः कोपाय पूर्णपात्रमारात्रिकामिवादुः । यतो रणोत्सवसूचकाय । उत्साहशंसी च पटादिना संविभज्यते ॥

अथ दक्षिणमाधूय पाणिं प्राणितधैर्यभूः ।
प्रमथानां श्लथीचक्रे कोपकोलाहलं हरः ॥ ९ ॥

दक्षिणं वामेतरम्, दक्षिणं कृत्वा वा पाणिं कम्पयित्वा भगवान्गणानां रोषकलकलमल्पीचक्रे । प्राणितं जीवितं धैर्यं तत्रावष्टम्भकहेतुर्भूः स्थानम् ॥

दन्तांशुभिः शिरःसिन्धुस्रोतोन्तरसधर्मभिः ।
तेषामशेषतो रोषदहनं शमयन्निव ॥ १० ॥

शिरःसिन्धोर्गङ्गायाः स्रोतोन्तरस्य प्रवाहमध्यस्य सधर्मभिः समानगुणैर्दशनरश्मिभिस्तेषां रोषाग्निं निर्वापयन्निव । जलेन ह्यग्नेः शम उचितः ॥

धामत्रयेण नेत्रेषु क्षिप्यमाणेषु नृत्यता ।
सांमुख्यमेत्य द्युसदां तेजः संविभजन्निव ॥ ११ ॥

अर्थाद्द्युसद्विषये क्षिप्यमाणेषु नेत्रेषु नृत्यता समन्तात्स्फुरता धामत्रयेण सूर्येन्दुवह्निलक्षणेन करणेन सांमुख्यं प्रसादमेत्य द्युसदां देवानां तेजः संविभजन्निव । दृष्टिपातेन देवास्तेजस्विनो जाता इत्यर्थः ॥

आत्तस्फूर्जथुपर्जन्यगर्जितप्रतिवादिना ।
स्वरेण रुचिरां वाचमिति च स्वैरमैरयत् ॥ १२ ॥

आत्तो गृहीतः स्फूर्जथुर्वज्रनिर्घोषो येन स पर्जन्यो मेघस्तद्गर्जितस्य प्रतिवादी सदृशस्तेन स्वरेणैवं वाचमवोचत् ॥ तिलकम् ॥

वदनैः सूच्यमानानामकाण्डपरिपाण्डुभिः ।
शुचां मनःसु वः कोऽयं नवः प्रावेशिको विधिः ॥ १३ ॥

असमयपाण्डुरैर्मुखैः सूच्यमानानां शुचां शोकानां प्रावेशिको विधिर्वो मनःसु कः । प्रवेशसमये गीयमानो ध्रुवाभेदः । शुचोऽत्र पात्रस्थानीयाः । अत एव सूच्यमानानामित्युचितम् । 'नासूचितस्य पात्रस्य निर्गमः प्रवेशो वा' इति ह्युक्तम् ॥

शुचिरूढमुपोढोग्रसंतापमथ वो मनः ।
छायासु चिरमाप्नोतु विश्रान्तिमसिवीरुधाम् ॥ १४ ॥

शुचि शोके रूढं स्थितम्, धृतदुःसहतापं वश्चित्तं खड्गलतानां छायासु कान्तिषु विश्राम्यतु । अथ च शुचिरूढः शुचावाषाढे रूढोऽतो धृतसंतापः कश्चिल्लतानां छायास्वातपप्रतिपक्षजातिषु विश्राम्यति । अथवा मनोनायकः शुग्लक्षणदुर्भगस्त्रीसंपर्कात्ससंतापो वीरुल्लक्षणसुभगनायिकासङ्गेन विश्रान्तिमेति ॥

उपप्लवरजस्तत्र स्थितिमेति कियच्चिरम् ।
ईशते ब्रह्मणो यत्र कुशाग्रजलविप्रुषः ॥ १५ ॥

ब्रह्मणः संबन्धिन्यो दर्भाग्रजलकणिका यत्रेशते ऐश्वर्यं भजन्ते तत्रोपद्रव एव मलिनीकरणाद्रजः कियच्चिरं स्थितिमेति । न तिष्ठतीत्यर्थः । यत्र च जलं तत्र रजः कथमवतिष्ठते । ब्रह्मणो दर्भाग्रजलबिन्दुपातनमात्रेणैव दैत्या नश्यन्तीत्यर्थः ॥

डिण्डीरमन्तरे कृत्वा यदभूदहितापदम् ।
तत्किं न कुरुते जिष्णोर्दोर्वीर्यमहितापदम् ॥ १६ ॥

डिण्डीरं फेनमन्तरे कृत्वा । फेनेनोपायेनेत्यर्थः । यदिन्द्रभुजवीर्यमहेर्वृत्रासुरस्य वधात्तापदायकमभूत्तज्जिष्णोरिन्द्रस्य संबन्धिनोर्दोषोर्भुजयोर्वीर्यमहितानां वैरिणामापदं किं न कुरुते । सतीन्द्रे किं भयमित्यर्थः ॥

शार्ङ्गं भ्रूलतयोर्लास्यमञ्जनं नन्दको दृशोः ।
हरेः कथं वा सहते विपक्षमृगचक्षुषाम् ॥ १७ ॥

हरेः संबन्धि शार्ङ्गं चापं कर्तृ, शत्रुस्त्रीणां भ्रुवोरिव लतयोर्वल्ल्योर्लास्यं कथमिव सहते । संनिवेशचौर्यद्वेषादिति भावः । हरेः संबन्धी नन्दकः खड्गस्तासां दृशोरञ्जनं कथमिव सहते । वर्णचौर्यद्वेषादिति भावः । नारायणसंबन्धिनोर्धनुःखड्गयोः सतोः शत्रूणामुत्कर्षः कथमित्यर्थः ॥

मरुतो दूरविस्रस्तास्मितपुष्पासु वेपथुम् ।
कथं तन्वन्ति न द्वेषियोषितां तनुवल्लिषु ॥ १८ ॥

स्मितमेव सितत्वभूषणत्वाभ्यां पुष्पाणि दूरं विस्रस्तानि विस्रंसितानि यासाम् । अन्तर्भावितण्यर्थोऽत्र स्रसिः । तासु द्वेषिस्त्रीणां शरीरलतासूत्कम्पं कथं न वायवः कुर्वन्ति । भयजननादिति भावः । मरुतां लताकम्पनस्वाभाव्यात्कम्पोक्तिसंगतिः ॥

तन्वन्वपुषि संतापमनन्तमरिसुभ्रुवाम् ।
ग्रथ्नाति न कथं वह्निर्गण्डयोर्भस्मपाण्डुताम् ॥ १९ ॥

शत्रुस्त्रीणां शरीरसंतापं खेदं कुर्वन्नग्निः, अर्थात्तासां गण्डयोर्भस्मवशात्पाण्डुतां पाण्डुरत्वम्, भस्मना वा पाण्डुतां कथं न ग्रथ्नाति कुरुते । वह्नेश्च भस्मपाण्डुतादिकरणमुचितम् ॥

मुखेषु ब्रह्मणः साम दानं स्वर्दन्तिगण्डयोः ।
दण्डो यमस्य भेदं च हृदि द्रढयतु द्विषाम् ॥ २० ॥

ब्रह्मणो मुखेषु साम वेदविशेषः । तथा स्वर्दन्तिगण्डयोरैरावणकपोलयोर्दानं मदजलम् । तथा यमस्य दण्डश्च द्विषां हृदि भेदमैकमत्याभावं द्रढयतु दृढं करोतु । सामाद्या उपायविशेषा अपि ॥

भास्वन्तोऽमी सहोदेत्य व्यञ्जन्तु प्रलयं द्विषाम् ।
रुद्धाङ्गा लोहसंनाहैरकाण्डजलदैरिव ॥ २१ ॥

अकालमेघैरिवायसकवचैराच्छादितगात्रा एते सूर्याः सहोदेत्य संहत्य द्विषां संहारं प्रकटयन्तु । अकालमेघाच्छादितत्वं भास्वतां सहोदयश्च संहारसूचकः ॥

अपि यद्दिशि सांमुख्यादन्वहं महसां निधेः ।
प्रतापो हीयते सोऽयं वरुणः केन सह्यताम् ॥ २२ ॥

यस्य वरुणस्य दिशि पश्चिमायामाशायामपि संमुखत्वात्तेजःपतेरपि तेजो ग्लायति । सोऽयं वरुणः केन सह्यते । अत्र च वस्तुवृत्तमपि वरुणोत्कर्षप्रतिपादनाय प्रौढोक्त्यान्यथा प्रतिपादितम् ॥

वीरश्रीरत्र तन्वाने कबन्धहठताण्डवम् ।
पुरः सरागा धनदे सारणीव विलीयते ॥ २३ ॥

कबन्धानां रणमुखच्छिन्नशिरसां पुरुषाणाम्, कस्य जलस्य बन्धस्तस्य हठताण्डवं वा नाट्यं संपादयत्यत्र वरुणे वीरलक्ष्मीः सारणी सूक्ष्मकुल्येव विलीयते । कीदृशी । धनदे कुबेरे पुरः प्राक् । अन्येभ्योऽधिकमित्यर्थः । सरागानुरक्ता । अथवा पुरःसरा । आज्ञाविधायित्वात् । अगाधा नदाः सरांसि यस्येति वरुणविशेषणम् । वरुणो हि तेषामधिष्ठाता ॥

युज्यते वो न चेतःसु सद्यः कौसीद्यसौहृदम् ।
गतेऽपि मुञ्चत ग्लानिं हानिं कुरुत वैरिणाम् ॥ २४ ॥

युष्माकं चित्तेषु सद्यः कौसीद्यमविजिगीषुता तत्सौहृदं न युक्तम् । एवं गतेऽपि ग्लानिं यूयं मुञ्चत । यूयं वैरिणां हानिं नाशं कुरुत ॥

गता वो यदपि भ्रान्ताः श्रान्ता दैत्या रणाध्वनि ।
कति नासिलतामूले दीर्घनिद्रारसज्ञताम् ॥ २५ ॥
सुरास्तथापि भीष्मस्य यौष्माकस्य भुजोष्मणः ।
ममोपस्कुरुतामंशो धाम्नो दग्धुं विरोधिनः ॥ २६ ॥

हे सुरा रणमार्गे भ्रान्ताः खिन्नाः कति न दैत्या युष्माकं खड्गलतामूले दीर्घनिद्राया मरणस्य रसज्ञतां प्राप्ताः । अध्वखिन्नश्च लतामूले निद्रां भजते । भवद्भिर्दैत्या यद्यपि जिता इत्यर्थः । तथापि भवद्भुजतेजसः कर्मभूतस्य मम तेजसो भागोऽरीन्भस्मीकर्तुमुपस्कुरुताम् । 'कृञः प्रतियत्ने' इति कर्मपदस्य भुजोष्मशब्दस्य षष्ठी । 'उपात्प्रतियत्न–' इति सुट् ॥ युग्मम् ॥

इत्याप्याप्यायमुग्रस्य श्रुतिग्राह्येण तेजसा ।
भगवन्तमवोचन्त ते भूयोऽपि सुधालिहः ॥ २७ ॥

श्रुतिभ्यां कर्णाभ्यां ग्राह्येणोग्रस्य भगवतस्तेजसा प्रभावेण वचनरूपेणाप्यायमुत्कर्षमाप्य प्राप्य ते सुराः पुनरपि हरमवोचन् । भगवद्वचनसंभावितावष्टम्भत्वाच्छ्रुतिग्राह्येणेत्युक्तम् । उग्रस्येति साकूतम् । तेजश्च कथं श्रुतिग्राह्यमाप्यायकं च भवतीति विरोधाभासः । आप्येत्याङ्पूर्वकस्याप्नोते रूपम् ।

स्वामिन्नस्त्येव नस्तेजो भवत्सेवनवेतनम् ।
तत्पृथूरःकवाटैस्तु पुरैर्दूरतिरस्कृतम् ॥ २८ ॥

हे स्वामिन्, भवत्सेवनस्येवाशास्यत्वाद्वेतनं भृतिमूल्यं तदेव नस्तेजोऽस्ति, न तु स्वकीयमित्यनौद्धत्यादनन्यशरणत्वस्य प्रतिपादनम्। उरांस्येव विस्तीर्णत्वात्कवाटाः पृथवो येषाम् । सबलैरित्यर्थः । पुरैर्दानवविशेषैस्तद्भगवत्सेवनरूपं तेजो दूरे तिरस्कृतम् । पुरैः पुरसंबन्धिभिश्च पृथुकवाटैः सूर्यादितेजस्तिरस्क्रियते । अथवा न तेजोऽस्त्येवेति व्याख्येयम् । 'संगलन्महसः' इत्युत्तरग्रन्थानुरोधात् ॥

वलन्नेत्राञ्चलप्लुष्टकालकामस्य ते वयम् ।
गृह्यमाणं न चेशान सोढुं प्रौढा महन्महः ॥ २९ ॥

हे ईशान, गृह्यमाणं तव महस्तेजः सोढुं वयं न प्रौढाः समर्थाः । यतश्चलन्नेत्राञ्चलेन करणभूतेन प्लुष्टौ दग्धौ कालकामौ येनेति महत्त्वप्रतिपादनम् ॥

तत्तान्युदात्तचरित स्वयं संहर्तुमर्हसि ।
नहि संरभते दीपो निरोद्धुं रोदसीतमः ॥ ३० ॥

हे उदात्तचरित उदात्तकर्मन्, तत्ततो हेतोः स्वयं न त्वस्माकमुत्तेजनद्वारेण तानि पुराणि संहर्तुमर्हसि । यतो रोदस्योर्द्यावापृथिव्योस्तमो हर्तुं दीपो न संरभते । तमोदृष्टान्तेन तेषां सर्वबाधकत्वं प्रतिपादितम् । अत्र धर्मिणो दीपस्योपादनतः प्रतीतेन द्यावापृथिवीतमःसंहारहेतुना सूर्येण सह परमेश्वरस्यार्थमौपम्यम् ॥

तदायुर्जुहुधि प्रेद्धहेतिभाजि हविर्भुजि ।
भूयोऽपि संविभज्यन्ते ककुभो येन भूतिभिः ॥ ३१ ॥

प्रेद्धा दीप्ता हेतीर्ज्वाला भजत्यग्नौ त्वं तेषामायुर्जुहुधि । विधिवत्प्रतिपक्षभूतिभिर्विभूतिभिश्च ककुभो दिशः पुनरपि येन संविभज्यन्ते ॥

तेजसा तेऽज सान्द्रेण संगलन्महसो वयम् ।
शीलितार्कांशुसंपर्कदीपसापत्न्यमाप्नुमः ॥ ३२ ॥

हे अज नित्य, 'तेजस्तेजसि शाम्यति' इति संगलन्महसो न्यग्भूततेजस्काः । अकिंचित्करा इत्यर्थः । वयं शीलितोऽभ्यस्तोऽर्कांशुसंपर्को यैस्तेषां दीपानां सापत्न्यमाप्नुमः । सूर्यसंनिधौ दीपवद्वयं तवाग्रत आस्महे इत्यर्थः ॥

तत्र कर्मणि निर्मातुं यत्नमर्हस्यगर्हितम् ।
यत्र ते स्वयमायाति भर्ग मार्गणतां हरिः ॥ ३३ ॥

अगर्हितं सर्वलोकोपकारकत्वात्स्तुत्यम् । विपर्यये नञ् । तत्र कर्मणि यत्नं निर्मातुं कर्तुमर्हसि । यत्र कर्मणि स्वयमप्रेरितो हरिर्विष्णुर्मार्गणतां याचकतां तद्रूपप्राप्त्या शरतां चैति ॥

तवोद्योगविधावङ्गीकृतपुष्पवदाकृतिः ।
उच्चै रथदशामेति शर्व सर्वेयमुर्वरी ॥ ३४ ॥

तवोद्योगविधौ सति अङ्गीकृता पुष्पवती पुष्पवत्त्वोपलक्षितफलयुक्ताकृतिः स्वरूपं यया सेयं सर्वा भूरुच्चैर्दशामुन्नतामवस्थामेति । अथवा अङ्गीकृता अङ्गं कृता रथाङ्गतया संपादिता पुष्पवतोरर्केन्द्वोः संबन्धिन्याकृतिर्यया· सा भूरुच्चै रथदशां महास्यन्दनरूपत्वमेति । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः ॥

पुरां पुराणपुरुष प्लोषाय यदि बुध्यसे ।
सत्त्वोत्तरगुणस्तर्हि सूतः संजायते विधिः ॥ ३५ ॥

पुरां दानवविशेषाणां दाहार्थं यदि बुध्यसे विस्फारितस्वपौरुषाग्निर्भवसि तर्हि तदा विधिर्विधानं सत्त्वोत्तरगुणोऽवष्टम्भाधिकगुणः सूतः सुष्ठुतो बद्धमूलो जायते । अथ च सत्त्वाद्गुणविशेषादुत्तरं रजस्तद्गुणो यस्य । प्रजापतेर्हि सृष्टिकारित्वाद्रजोगुणयोगः । विधिः प्रजापतिः सूतः सारथिर्जायते ॥

न कुत्र त्वयि संनद्धे निधनाय विरोधिनाम् ।
हर प्ररोहमभ्येति गिरि चापलतानवम् ॥ ३६ ॥

त्वयि संनद्धे सति गिरि वाग्विषये चापलतानवं चपलताल्पत्वं कुत्र न प्ररोहमुत्पत्तिमभ्येति । भवच्छौर्यगुणवर्णनसामर्थ्याभावात्सर्व एव वाक्चापल्यं त्यजन्तीत्यर्थः । अथ च गिरिरेव चापलता मन्दरपर्वतधनुर्दण्डो नवं प्ररोहमेति मन्दरश्चापरूपः संपद्यत इत्यर्थः ॥

त्वयि त्र्यक्षाक्षतक्षोभे प्रतिपक्षदिधक्षया ।
आक्रामञ्श्रवणाभ्यर्णमहीनो जायते गुणः ॥ ३७ ॥

प्रतिपक्षाणां दैत्यानां दिधक्षया दग्धुमिच्छया तया हेतुभूतया त्वय्यक्षतक्षोभेऽखण्डितसंरम्भे सति कर्णनिकटं प्राप्नुवन्गुण उत्कर्षोऽहीनोऽखण्डितो जायते । अथ चाहीनामिनो नागो वासुकिर्गुणो मौर्वी जायते ॥

किं च शात्रवसंहारे स्मेरमस्मन्महःकणः ।
त्रिलोकदुःसहं तेजो भावत्कं वरिवस्यतु ॥ ३८ ॥

किं चास्माकं महस्तेजस्तस्य कणो भावत्कं भवदीयं तेजो वरिवस्यतु । 'वरिवसः परिचर्यायाम्' इति क्यच् । शात्रवसंहारे स्मेरं सोल्लासम्, यतस्त्रिलोक्या दुःसहम् । सेवकवचैस्त्वत्तेजः परिचरत्वित्यर्थः । अथ च त्वत्तेजस्यैक्यमापद्यताम् ॥

वाचमुच्चाञ्जलिपुटो वालेन्दुमुकुटं प्रति ।
इति वक्रोक्तिभिः पूतामसूत दिविषद्गणः ॥ ३९ ॥

बद्धाञ्जलिर्देवजनो भगवन्तं प्रति वक्ष्यमाणार्थसूचनाद्वक्रोक्तिभिरादृतां वाचमूचे ॥

शेषां वचोमयीं मूर्ध्नि गृह्यमाणां सुपर्वभिः ।
पुनरप्यथ जग्रन्थ नाथो मन्मथमाथकृत् ॥ ४० ॥

वचनमयीं मालां पुनरपि भगवाञ्जग्रन्थोम्भितवान् । सुपर्वभिर्देवैर्हर्षप्राप्त्या सोत्सवैरिव गृह्यमाणाम् ॥

एवमस्त्वत्र संरम्भो गरीयानुररीकृतः ।
मया युष्मद्धिताधानसिद्धिशर्मणि कर्मणि ॥ ४१ ॥

एवमस्तु । युष्माकं हिताधानसिद्धेः शर्म यस्मात्तस्मिंस्तत्र कर्मणि मया गरीयान्संरम्भ उररीकृतो गृहीतः ॥

सूतसूतश्रियं क्षुण्णमक्षैर्धुर्यधरं सुराः ।
कैलासमिव संधत्त रथमस्मद्गुरक्षमम् ॥ ४२ ॥

सूतेन सारथिना सूता सुष्टुता श्रीर्यस्य । तथाक्षै रथाङ्गैः क्षुण्णं सेवितं धुर्यैधरं हयधारकं रथं हे सुराः, यूयं संधत्त । अत एव कैलासमिव । तत्पक्षे सूतं पारदम् । अक्षविंभीतकैर्धुर्या धरा भूमिर्यस्य ॥

मम वीररसो दूरमास्कन्द्य स्यन्दनग्रहम् ।
द्विषां ललाटतो मार्ष्टु भ्रमद्भ्रूभङ्गकालिकाः ॥ ४३ ॥

स्यन्दनस्य रथस्य ग्रहं ग्रहणमास्कन्द्य कृत्वा मम वीररसो वैरिणां ललाटाद्भ्रमद्भ्रूभङ्गैः कालिकाः श्यामिका मार्ष्टु निवारयतु । द्विषो हरत्वित्यर्थः । रसो जलं स्यन्दनं स्रुतिमाप्य कालिका मार्ष्टि ॥

सुपर्वाणोऽधिकुर्वाणा इव शात्रवमोजसा ।
वचोभिरिति भर्गस्य तुतुषुर्निस्तुषोर्मिभिः ॥ ४४ ॥

तेजसा हेतुना शात्रवं वैरिवर्गमधिकुर्वाणाः पराभवन्त इव सुपर्वाणो देवा निस्तुषोर्मिभिरनवद्योल्लासैर्वचोभिस्तुतुषुः ॥

अमृतमिति निपीय ते विमुद्रश्रुतिचुलकैः प्रसृतं हराम्बुराशेः ।
अधिगतधृतयः पुनः सुराग्र्या विधृतदृढस्थिति मेनिरेऽमरत्वम् ॥४५॥

हर एव गभीरत्वादम्बुराशिः । निर्गतं वचोरूपममृतमेव पीत्वा लब्धधैर्या देवा अमरभावं विधृता दृढा स्थितिर्येन तन्मेनिरे । इदानीमेवामरा जाता इति मेनिर इत्यर्थः ॥

तेषां प्रमोदसुहृदां द्युसदां तदानी-
मानीतधैर्यमधिगम्य वचः पुरारेः ।
वक्त्रं महो मुहुरवाप्नुवदन्यदेव
निर्मुक्तवैशसमयत्वगिवावभासे ॥ ४६ ॥

तेषां भगवतो वचः श्रुत्वा प्रमोदस्य हर्षस्य सुहृदां परिचितानां [तेषां] देवानामन्यल्लोकोत्तरं महस्तेजः प्राप्तवतां [देवानां] निर्मुक्ता त्यक्ता वैशसमयी विषादमयी त्वग्येन तदिवावभासे । हरिकन्धुकन्यायेन(?) तन्मुखैर्वैशसं त्यक्तं चेत्यर्थः ॥

तस्मिन्क्षणे प्रमदकाहलनाकिलोक-
कोलाहलप्रतिरवाङ्कगभीरगर्भः ।
शंभोररीनभिषिषेणयिषोः पुपोष
मङ्गल्यशङ्खघटनां स्फाटिकाद्रिराजः ॥ ४७ ॥

तस्मिन्नवसरे प्रसादेन हर्षेण हेतुना काहलः संरब्धो यो नाकिलोकस्तस्य कोलाहलस्तस्य प्रतिरवः प्रतिशब्दः सोऽङ्के यस्य स गभीरो गर्भो यस्य स कैलासो भगवतो मङ्ग-

ल्यो मङ्गलावहो यः शङ्खस्तस्य घटनामिव पुपोष । यतोऽरीनभिषिषेणयिषोः सेनयाभियातुमिच्छोः । श्वेतत्वसशब्दत्वाभ्यां शङ्खसंभावनम् ॥

प्रादुर्बभूवुरविदूरविपत्कलाप-
संतापपैशुनविशेषविशृङ्खलानि ।
अत्रान्तरे त्रिपुरदानवविष्टपेषु
स्पष्टान्यरिष्टपटलेन विचेष्टितानि ॥ ४८ ॥

अविदूरे निकटे आपत्कलापो विपत्समूहस्तस्य पैशुनं सूचनम् । [अविदूरं निकटे] पैशुनेन विश्रृङ्खलानि दुःसहानि । यतोऽरिष्टपटलेन वक्ष्यमाणेन भूकम्पादिदुर्निमित्तसमूहेन स्पृष्टानि चेष्टितानि दैत्यपुरेषु प्रादुर्बभूवुः प्रादुरासन् ॥

आसीदन्मृडचापदण्डगुणतासङ्गप्रसङ्गाश्लथा-
म्रेडोत्पीडनभीतिलोलभुजगाधीशानुबन्धादिव ।
भूः संपादितकम्पसंपदष्टथग्भावा ककुप्कुञ्जर-
श्रेणीकुम्भतटीगतागतशतश्रान्तिव्यथामन्वभूत् ॥ ४९ ॥

दैत्यानामनिष्टसूचनार्थं संपादिता कम्पसंपद्यस्याः सा भूमिः ककुप्कुञ्जरा दिग्गजास्तेषां श्रेणी पङ्क्तिस्तस्याः कुम्भतट्यः कवाटतटास्तेषु कम्पवशाद्गतागतानि तैः श्रान्तिः श्रमस्तेन व्यथामन्वभूत् । अत्र संभाव्यते—आसीदन्नभ्यर्णवर्ती यो मृडचापदण्डगुणतासङ्गप्रसङ्गो भगवद्धनुर्दण्डगुणभावानुबन्धस्तेनाश्लथं निबिडमाम्रेडोत्पीडनं ततो भीतिस्तया लोलः कम्पमानो यो भुजगाधीशो वासुकिस्तदनुवर्तनादिव । वासुकिर्हि भूमेराधारः । अतस्तत्कम्पे सत्याधेयभूता भूरपि चकम्पे इत्याशयः । अथवाधीशानुबन्धात्प्राप्तसंपदा पुरुषेण कुञ्जरकुम्भतटेषु विश्रम्यते ॥

बिम्बं रवेर्घटितराहुशरीरशेष-
संवादिताण्डवनिबन्धवलत्कबन्धम् ।
आसीददूरहरकूबरिचक्रताप्ति-
हेतोरिवोदरविसारिगभीररन्ध्रम् ॥ ५० ॥

राहोः शरीरं तस्य शेषमपमूर्धकलेवरं तस्य संवादी सदृशस्ताण्डवनिबन्धेन नाट्यव्यसनेन वलंश्चलन्घटितः कबन्धो यस्य तद्रवेर्बिम्बं कर्तृ, उदरे मध्यस्थाने विसारि प्रसरद्गभीरमगाधं रन्ध्रं यस्य तदिवासीत् । कुतः । हरस्य कूबरी रथस्तत्र चक्रत्वावाप्ती रथाङ्गत्वप्राप्तिः । अदूरासन्ना या चक्रत्वाप्तिः सा चासौ हेतुस्तस्मात् । चक्रं हि मध्ये सरन्ध्रं भवति ॥

गीर्वाणप्रतिपक्षपक्ष्मलदृशामङ्गेषु संसर्गिभि-
र्घोराम्भोधरकीर्यमाणरुधिरस्रोतश्छटाबिन्दुभिः ।

वैधव्यव्यसनाभिमुख्यसुहृदां रेजे चिरप्रेमत-
स्तन्वानैरिव सान्द्रकुङ्कुमरसैराप्रष्टुमालिङ्गनम् ॥ ९१ ॥

घोराः प्रलयसूचका अम्भोधरा मेघास्तैः कीर्यमाणा ये रुधिरस्रोतश्छटानां बिन्दवः कणास्तैर्देवस्त्रीणामङ्गेषु सक्तै रेजे शोभितम् । अतः संभाव्यते—बहुकालनिवासस्नेहादसुरस्त्रीरर्थादाप्रष्टुं प्रतिमोक्तुमालिङ्गनं कुर्वाणैर्घनकुङ्कुमरसैरिव । यतो वैधव्येन भर्तृवधेन व्यसनं दुःखं तस्मिन्नाभिमुख्यं तस्य सुहृदः परिचिताः ॥

संभ्रान्तान्तकवाहसैरिभकुलप्रोल्लासिताविर्भव-
ल्लाङ्गूलप्रतिवादिभिर्जनमनोभीहेतुभिः केतुभिः ।
व्योमाब्धेरुदयत्तरङ्गपदवीमारूढवद्भिर्दिशा-
माजह्ने हठसाध्वसाकुलतराभिव्यक्तवेणीलिपिः ॥ ९२ ॥

स्वामिकार्यसंपादनार्थं संभ्रान्तं संभ्रमवदन्तकवाहस्य सैरिभस्य महिषस्य कुलं महिषवर्गस्तेन क्षोभवशात्प्रोल्लासित उत्क्षिप्त आविर्भवन्यो लाङ्गूलः पुच्छं तस्य प्रतिवादिभिः सदृशैः । अतो जनमनसां भीहेतुभिः । तथाकाशसमुद्रस्योत्फुल्लकल्लोलदशां श्रयद्भिः केतुभिर्दिशां स्त्रीलिङ्गत्वात्स्त्रीत्वेन व्यवहार्याणां संबन्धिन्या हठसाध्वसेनातिभयेनाकुलतराया इतस्ततो वलन्त्या वेण्या लिपिर्भङ्गिराजह्ने प्राप्ता ॥

द्यावाभूम्योरपि पिदधता मध्यमर्चिःप्रवाहै-
र्दिग्दाहेनोड्डमरिततडिद्दण्डचण्डक्रमेण ।
शङ्के दृप्यन्परपरिभवाविर्भविष्यद्भवानी-
नाथस्थेयोविशिखशिखिनो निर्ममे पूर्वरङ्गः ॥ ९३ ॥

अहमिति शङ्के जाने । दिग्दाहेन दिग्ज्वलनेन दृप्यन्तो दृप्ता ये परे दैत्यास्तेषां परिभवार्थमाविर्भविष्यन्प्रकटीभविष्यन्यो भवानीनाथस्य भगवतः स्थेयान्स्थिरतरो विशिखशिखी बाणाग्निस्तस्य पूर्वरङ्गो नाटकादौ प्रकृतात्पूर्वं प्रकृतसूचकं वस्तु निर्ममे कृतः । द्यावाभूम्योराकाशभुवोर्मध्यं पिदधताच्छादयता । केन । उड्डमरित उड्डामरः कृतो यस्तडिद्दण्डवच्चण्डः क्रमस्तेन । तडिद्वतेत्यर्थः ॥

आसन्नेपूद्धुरतरपुरारातिबाणाग्ररङ्ग-
द्दुर्वारौर्वायुतसखशिखिप्लोषणोपप्लवेषु ।
दूरोदञ्चद्विपुलपुलकोल्लोललेखाकरालो
वारं वारं सरिदधिपतिर्वासरेऽप्युच्चकम्पे ॥ ९४ ॥

आसन्नेपूद्धुरतरं कृत्वा पुरारातेर्हरस्य बाणाग्रे रङ्गन्स्फुरन्दुर्वार औवार्युतसखो वाड-

वसहस्रसदृशो यः शिखी वह्निस्तेन प्लोषणानि दाहास्तदुपप्लवेष्वासन्नेषु सत्सु दूरमुदञ्चन्त्यो विपुलाः पुलकसदृश्यो या उल्लोललेखास्तरङ्गरेखास्ताभिः करालः । भयवशाद्विपुलकम्पो जायते । वारं वारं पुनःपुनर्दिनेऽपि समुद्रश्चकम्पे चक्षुभे ॥

आशङ्क्येव पिधास्यतोऽम्बरपथं पातं हरेषोर्भिया
स्वर्बाष्पाम्बुकणश्रियोऽनुसमयं पेतुः क्षितौ तारकाः ।
भूकम्पप्रचलासुराजिरहरिद्रत्नस्थलीषु क्षणं
यासां पङ्कजिनीदलोदरपयोबिन्दुभ्रमः पप्रथे ॥ ९९ ॥

अम्बरपथमाकाशमार्गं पिधास्यतश्छादयिष्यतो हरेषोः । हरेषुमाकाशपथश्छादकं संभाव्येत्यर्थः । ल्यब्लोपे कर्मणि पञ्चमी । स्वस्य पातमाशङ्क्येव क्षितौ तारकाः प्रतिकालं पेतुः । भिया स्वः स्वर्गस्य बाष्पाम्बुकणश्रियो रुदितबिन्दुतुल्याः । हरेषुकर्तृकपातमाशङ्क्य भियेवेति योज्यम् । यासां तारकाणां नलिनीपल्लवमध्यस्थितवारिकणभ्रान्तिर्जाता। कासु । भूकम्पचपलासुराङ्गणमरकतरत्नभूमिषु । पद्मिनीदलेषु हि जलं सकम्पं भवति । मरकतभुवश्च भूकम्पवशात्कम्पन्ते । नलिनीदलजलभ्रान्तिः ॥

यस्योच्चैः कटचीनपिष्टपटली दिग्दाहजन्मा रुचि-
र्भ्रश्यद्भिः करसीकरायितमथाकाण्डे च यस्योडुभिः ।
तस्यानर्गलदुर्निमित्तकरिणः क्रूरत्वमाक्रामत-
श्चक्रे व्योमनि नूतनैः कदलिकालीलायितं केतुभिः ॥ ९६ ॥

यस्यारिष्टहस्तिनः कटे कपोले चीनपिष्टपटली सिन्दूरपूरो दिग्दाहजाता दीप्तिर्भवति । तथा असमये पतद्भिस्तारकैर्यस्य करसीकरायितं करजलकणवदाचरितम् । तस्य क्रूरत्वं भजतो निर्नियन्त्रणारिष्टहस्तिनः केतुभिर्धूमकेतुभिर्ग्रहभेदैः कदलिका ध्वजयष्टिस्त[द्व]ल्लीलया चरितम् । क्यङन्तादुभयत्रापि भावे क्तः ॥

पुरारिशरवह्निना प्रथममेव धूमोत्करो
विकीर्ण इव पूर्णतामुपगतोऽथ पाथोधरः ।
रुरोध रुधिरैर्धरामधिलसत्तडिन्मण्डल-
प्रचण्डरुचिताण्डवक्षणविनिर्मितापह्नवैः ॥ ९७ ॥

प्रथमं संधानात्पूर्वमेव हरशराग्निना क्षिप्तधूमसमूह इव पाथोधरो मेघः पूर्णतामुपगतो घनो रुधिरैर्धरां भूमिं रुरोध च्छादयामास । अधिलसदुल्लसयत्तडिन्मण्डलं विद्युद्दाम तस्य प्रचण्डा या रुचिस्तस्यास्ताण्डवेन स्फुरणेन क्षणं विनिर्मितोऽर्थाद्वर्णसाम्यात्कृतोऽपह्नवश्छादनं येषां तैः । तडित्सु स्फुरन्तीषु रुधिराणि क्षणं न निरूपितानीत्यर्थः ॥

तैर्नृत्यन्मृत्युपादावगलदविरलालक्तकौघानुकारै-
रस्त्रासारैरपारैः पिदधति वसुधामम्बुदे भीतिभाजाम् ।
पिङ्गापाङ्गप्रणालप्रविसृमररुचिव्यक्तरक्ताश्रुरीत्या
दैत्यस्त्रीलोचनानामपि ववृषुरिव श्रेणयः शोणितानि ॥ ९८ ॥

हर्षवशान्नृत्यन्नृत्यं कुर्वन्यो मृत्युर्यमस्तस्य पादाद्गलन्नविरलो योऽलक्तकौघस्तमनुकुर्वद्भिरपारैरस्रासारै रुधिरप्रवाहैर्मेघे भूमिं छादयति सति भीतिभाजां दैत्यस्त्रीनेत्राणां पङ्क्तयः पिङ्गा रोदनवशादारक्ता येऽपाङ्गा नेत्रप्रान्तास्तेभ्यः प्रविसृमरा प्रसरन्ती या रुचिस्तया व्यक्तं कृत्वा रक्तं यदश्रु बाष्पं तस्य रीतिर्भङ्गिस्तया हेतुभूतया शोणितानीव ववृषुः ॥

प्रत्यग्रोत्पातवातास्त्वचि मुमुचुरिवापारमङ्गारपूरं
दूरं दिग्दाहसाहायकवदथ नभो दृग्धदृग्दाहमासीत् ।
वार्षासृग्विस्रगन्धो दितिजमृगदृशां पीडयामास नासा-
मह्नच्प्यह्नाय चाभूद्भृशमशिवशिवावाशितैः श्रोत्रशूलम् ॥ ९९ ॥

प्रत्यग्रा अपूर्वा उत्पातवाताः प्रलयवायवस्त्वचि स्पर्शनेन्द्रियेऽपारमङ्गारपूरं स्फुलिङ्गराशिमिव चिक्षिपुः । अग्निकणवद्व्यथां चक्रुरित्यर्थः । दिशां दाहो ज्वालाजटालत्वं तस्य साहायकं विद्यते यस्य तन्नभो दृग्धः संपादितो दृग्दाहो दृष्टिव्यथा येन तदासीत् । दिग्दाहमिवारिष्टमयमाकाशं वीक्ष्य दृष्टयोऽदह्यन्तेत्यर्थः । वार्षे वृष्टेर्यदसृग्रुधिरं तस्य विस्र आमगन्धित्वधारी यो गन्धः स नासामव्यथयत् । दिनेऽप्यमङ्गलसृगालीरुतैः कर्णपीडाभूत् । अत्र चैवंविधेषु दुर्निमित्तेषु दृष्टेषु भोजनाद्यभावाद्रसनेन्द्रियविघातोऽर्थादाक्षिप्तः ॥

सेवायै समकालमागतवतां षण्णामृतूनामपि
प्रत्यासत्तिगुणेन योऽजनि पुरे पूर्वं सुपर्वद्विषाम् ।
सारिष्टेषु तरुष्वकालकुसुमोल्लासात्स एवाभव-
त्तत्काले प्रविभक्तकालसुमनःसंभेदजृम्भाग्रहः ॥ ६० ॥

अर्थाद्दैत्यानां सेवार्थं युगपदागतवतां षण्णामप्यृतूनां नैकट्यवशेन दैत्यनगरे यः पूर्वं जातः स दुर्निमित्तेषु वृक्षेष्वकाण्डविकासाद्धेतोः स एव प्रविभक्तकालानामस्मिन्काले एता भवन्तीति विभक्तः कालो यासां सुमनसां पुष्पाणां संभेदेन युगपज्जृम्भाग्रहो विकासोऽभवत् । पूर्वं दैत्यानां सेवार्थमृतवो यानि पुष्पाणि समकालं व्यकासयंस्तानि तदा तत्र दुर्निमित्तवशाद्विकसितानीत्यर्थः ॥

पतदविरतरक्तवर्षबिन्दुव्यतिकरनिह्नुतचित्रवर्णपत्रैः ।
झटिति नयनयोरकालपुष्पैरजनि न दैत्यपरिग्रहस्य कम्पः ॥ ६१ ॥

दैत्यानां परिग्रहः परिवारस्तस्याकालपुष्पैः कम्पो न जातः । यतः पतदविरतमविच्छिन्नं रक्तवर्षं तस्य बिन्दूनां व्यक्तिकरेण संपर्केण निह्नुतश्छादितश्चित्रवर्णो येषां तानि पत्राणि येषां तैः ॥

भृगुपतिविजयायेवात्तगाढाभियोगाः
पथिषु दितितनूजाः संचरन्तः समन्तात् ।
अधिकरुधिरवर्षारम्भतः संभृतासु
प्रविदधुरवगाहं शोणितद्रोणिकासु ॥ ६२ ॥

अधिकं रुधिरवर्षारम्भात्संभृतासु पूरितासु रक्तद्रोणीषु स्नानं दैत्याश्चक्रुः । सर्वस्यैव जलस्य रक्तमयत्वापत्तेः । अतः संभाव्यते—भृगुसुतस्य रामस्य विजयायात्तो गाढोऽच्छिन्नोऽभियोग उद्योगो यैस्त इवेति हेतूत्प्रेक्षा । स हि क्षत्रियास्रेणैकविंशतिवारान्रक्तसरःसु स्नातवान् ॥

आत्ताः साकमिवोदकेन सिकतास्तत्तत्सरिडम्बरा-
दालम्ब्याम्बुधरोऽम्बराग्रमवमद्वर्षन्रजोराजिभिः ।
यत्सङ्गेन विनापि निष्फलजलक्रीडानुभूतिश्रमं
पांसुस्नानममर्त्यवैरिकटकस्तम्बेरमा भेजिरे ॥ ६३ ॥

रजोराजिभिः पांसुधाराभिर्वर्षन्मेघोऽम्बराग्रमालम्ब्याच्छाद्य सिकता इवावमत् । यत उदकेन साकं पीताः । ओदनक्रिण्ववत् । यासां रजोराजीनां सङ्गेन दैत्यगजाः पांसुस्नानमवापुः । कं विना । हस्तिनां स्नानादनन्तरं पांसुस्नानस्वभावत्वान्निष्फला या जलक्रीडानुभूतिस्तया श्रमः खेदस्तं विना । तावती रजोवृष्टिः पतिता यावत्या दैत्यहस्तिनां स्नानं सिद्धमित्यर्थः ॥

धूलीवृष्टिभिरप्यरिष्टपिशुनोत्सेकातिरेके भव-
द्दूरापूरितलोचनाभिरसुरस्त्रीणामरीणो गुणः ।
नैताभिर्बहुदुर्निमित्तनिमितातङ्कातिघोरा दिशो
दर्शं दर्शमवापि यन्नवनवत्रासव्यथासाक्षिता ॥ ६४ ॥

धूलीवर्षैररिष्टपिशुनानां दुर्निमित्तसूचकानामुत्सेकस्याधिक्यस्यातिरेके बहुलत्वे सत्यपि दैत्यस्त्रीणां गुण उपकारोऽरीणो महानभवत् । यतो दूरमत्यर्थमापूरिते लोचने याभिः । ततः को गुण इत्याह—बहुभिर्दुर्निमित्तैर्हेतुभिर्निमितो निश्चित आतङ्को दुःखं तेनातिघोरा दुर्दर्शा दिशो दर्शं दर्शं दृष्ट्वा दृष्ट्वा ताभिरसुरस्त्रीभिर्नवनवत्रासव्यथायाः साक्षिता साक्ष्यं नो आपि प्राप्ता । यदि दैत्यस्त्रियो रजोवर्षेण पूरितनेत्रा न स्युस्तदा बहूनि दुर्निमित्तानि दृष्ट्वा महद्दुःखमनुभवेयुरित्यर्थः ॥

तन्वन्वामपुमङ्गसंगमविधिं क्षुन्दन्नथो दक्षिण-
स्त्रीगात्राक्रमणक्रियामुपनतोऽपूर्वार्धनारीश्वरः ।
संहारानुगुणप्रपञ्चितबृहद्दुर्वारलीलायितः
कम्पो दानवविष्टपेषु कमपि त्रासप्रयासं व्यधात् ॥ ६५॥

वामं यत्पुमङ्गं सव्येतरः पुरुषभागस्तत्र संगमविधिं कुर्वन् । तथा दक्षिणस्त्रीगात्रस्याक्रमणक्रियां कुर्वन् । अत एवापूर्वोऽभूतपूर्वोऽर्धनारीश्वरः । अर्धनारीश्वरो हि दक्षिणं पुंभागं सेवते वामं स्त्रीभागम्, अयं तु विपरीत इत्यपूर्वत्वम् । संहारानुगुणं प्रलयानुरूपं प्रपञ्चितं विस्तारितं दुर्वारं लीलायितं येन स कम्पो दानवनगरेषु कमपि लोकोत्तरं भीतिप्रकर्षमकरोत् ॥

उद्वृत्तैर्दुर्निमित्तैरिति दितिजपुरोपान्तसंचारचर्चा
प्रारेभे प्रस्तुवानैरिव विपुलविपत्सैन्यदूत्यप्रयोगम् ।
किं चान्यत्संचिकाय त्रिदिवपथजुषां स्वैरमावासवीथी
सद्यो वर्धिष्णुतत्तच्छुभपिशुनबृहन्मङ्गलालिङ्गनानि ॥ ६६ ॥

उच्चैर्वृत्तैः संपन्नैरमङ्गलैर्दितिसुतनगरनिकटे संचारचर्चा संचरणानुबन्धः प्रारेभे । अतः संभाव्यते—विपुलं यद्विपत्सैन्यमापत्कुलं तस्य दूत्यं दूतकर्म प्रस्तुवानैरारभमाणैरिव । किंचान्यत् । त्रिदिवे नाके पथजुषां वास्तव्यानामावासवीथी स्वर्गः, वर्धिष्णूनि तानि तानि शुभपिशुनानि बृहन्ति मङ्गलानि तेषामालिङ्गनानि संचिकाय बभार । दैत्यनगरेषु दुर्निमित्तान्यभूवन् । सुरनगरेषु पुनर्मङ्गलानि प्रादुरभूवन् । आवासवीथी नायिकास्थानीया । मङ्गलानां चिरेणागमनादालिङ्गनमुचितम् । एतेन वक्ष्यमाणार्थस्योपक्षेपः कृत इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये गणोद्योगवर्णनं नामैकोनविंशः सर्गः ।

---

## विंशः सर्गः ।

दृप्तासुरप्राणपणापहारहेतोरवाक्षीणधृताक्षतन्त्रम् ।
पुरारये प्रारभतात्तयत्नमथो रथं कर्तुममर्त्यलोकः ॥ १ ॥

पुरारये हराय । 'क्रियया चोद्देश्ये' इति चतुर्थी । रथं कर्तुं सुरलोकः प्रयत्नमारेभे । धृतमक्षीणं संपूर्णमक्षाणां रथावयवविशेषाणां पाशकानां च तन्त्रं स्वोचिता प्रक्रिया

येन । अतः संभाव्यते—दृप्ताः सदर्पा येऽसुरास्तेषां प्राणास्त एव पणो द्यूतादौ परिकल्पितं जयलभ्यं धनादि तस्यापहारः स चासौ हेतुस्तस्मात् । पणश्चाक्षद्यूतत्वेन लभ्यते ॥

ततः स्वयं तत्र सुरानुबन्धाद्वसुंधरा कूबरितां प्रपेदे ।
दधत्यधोडम्बरलम्बमानरश्मिश्रियस्तुङ्गभुजंगभोगान् ॥ २ ॥

सुराणामनुबन्धः प्रार्थना तस्मात् । ल्यब्लोपे पञ्चमी । स्वयं भूः रथभावमग्रहीत् । डम्बरेण संरम्भेण लम्बमानाश्च रश्मयो वल्गास्तद्वच्छ्रीर्येषां ते । ततः कर्मधारयः । तांस्तुङ्गान्भुजंगभोगाञ्शेषफणा अधो दधती ॥

जुघूर्णिरे तस्य निसर्गदीर्घा जङ्घापदे संघटितास्तटिन्यः ।
सचेतनानेकरथाङ्गसङ्गाद्याः संततं कौतुकमेव तेनुः ॥ ३ ॥

तस्य जङ्घास्थाने संघटितास्तटिन्यो नद्यो जुघूर्णिरे बभ्रमुः । या नद्यः सचेतनस्यानेकस्य रथाङ्गस्य रथावयवभेदस्य चक्रवाकस्य च सङ्गात्कौतुकमाश्चर्यं चक्रुः । रथावयवानामचेतनत्वाद्विस्मयः ॥

परस्परं दिक्करिदानपङ्कयोगादिवाश्लेषविशेषभाजः ।
ततः परीवारपथं रथस्य समं दिशश्च प्रदिशश्च जग्मुः ॥ ४ ॥

समं दिशो विदिशश्च रथस्य परीवारपथमुपकरणदशां जग्मुः । मिथ आश्लेषविशेषं नैरन्तर्यं भजन्ते । अतः संभाव्यते—दिक्करिणां दानपङ्कयोगादिव ॥

आस्कन्द्य तं स्यन्दनमिन्दुमौलेर्वरूथतां तारकयूथमागात् ।
स पाण्डुकम्बल्यवलम्बिताङ्गो नीरन्ध्रयद्दीधितिभिर्बभूव ॥ ५ ॥

तं रथमाक्रम्य ताराकुलं वरूथो रथरक्षार्थं लोहाक्षमयावरणं तद्भावमगमत् । यस्य तारकयूथस्य नीरन्ध्राभिर्दीधितिभिरवलम्बितान्याच्छादितान्यङ्गानि यस्य स पाण्डुकम्बली [पाण्डु]कम्बलसंवीतो बभूव । तारादीप्तयः पाण्डुकम्बलत्वेन संभाविताः । 'पाण्डुकम्बलादिनिः' इतीनिः ॥

तस्यानुकर्षत्वपरिग्रहेण ग्रहैरुपान्तास्थितिराललम्बे ।
द्राग्वासवावासनिवासिनां तु व्यलोक्यताशेषशुभानुबन्धः ॥ ६ ॥

अनुकर्षो रथाधःस्थं दारु तद्भावग्रहणेन ग्रहैस्तस्योपान्ते समीपे एकादशस्थाने च स्थितिरालम्बे प्राप्ता । वासवावासे स्वर्गे निवासिनां देवानां पुनरशेषाणां शुभानामनुबन्धोऽनुषङ्गो दृष्टः । तदुक्तम्—'सर्वेऽप्युपान्ते शुभाः' । कार्यकारणयोर्देशभेदादसङ्गतिः॥

धर्मार्थकामैः समुदायवद्भिस्तत्र त्रिवेणुस्थितिरन्वरोधि ।
देवः परो यत्र शशाङ्कमौलिः स्वयं च मोक्षप्रतिभूर्विभूषा ॥ ७ ॥

समुदायवद्भिः समुदितैर्धर्मार्थकामैस्तत्र रथे त्रिवेणुस्थितिस्त्रिवेणुरूपत्वमालम्बे प्राप्ता । अथ च त्रिवेणूनां यतिविशेषाणां स्थितिः । अत एवोत्तरवाक्ये मोक्षप्रतिभूर्भगवान्विभूषा यत्रेत्युक्तिसंगतिः । भगवता हि परब्रह्मरूपेण तेषां मोक्षो दीयते । अनेन चतुर्वर्गसंनिधानं रथे प्रतिपादितम् ॥

इतस्ततस्तस्य गृहीतबन्धमध्यासनामोषधयोऽधिजग्मुः ।
प्रक्रान्तचक्रक्रियरात्रिराजतेजोवगूढेरधिरूढभासः ॥ ८ ॥

गृहीतबन्धं कृत्वा इतस्ततस्तत्रौषधयोऽध्यासनामधिजग्मुः । प्रक्रान्ता आरब्धा चक्रक्रिया रथाङ्गभावो येन तस्य रात्रिराजस्य चन्द्रस्य तेजसा अवगूढिरालिङ्गनं तया अधिरूढा उत्पन्ना भा यासां ताः । चन्द्रस्योषधिपतित्वात्पत्युरालिङ्गनाचाधिरूढभास्त्वमुचितम् ॥

तस्मिन्पतंगक्षणदाभुजंगौ रथाङ्गतासंगतिमग्रहीष्टाम् ।
यद्भाप्रभावादिव दानवेन्द्रास्तापं च जाड्यं च सहान्वभूवन् ॥ ९ ॥

तस्मिन्रथे पतंगक्षणदाभुजंगावर्केन्दू रथाङ्गतायाश्चक्रभावस्य संगतिमग्रहीष्टामभजताम् । ययोरर्कचन्द्रयोर्भानां प्रभावादिव दैत्यास्तापं खेदमातपं च, जाड्यं कार्ये कुण्ठत्वं शीतलत्वं च प्रापुः । तयोस्तिग्महिमकरत्वात् ॥

एकत्र पक्षे रजनीतमिस्रं तस्यापरत्रास्त दिनप्रकाशः ।
ताभ्यां स संभिन्नतनुश्च लोकालोकाचलस्य स्थितिमारुरोह ॥१०॥

एकस्मिन्पार्श्वे रात्रितमः, अन्यस्मिन्पार्श्वे दिनप्रकाश आस्त तस्थौ । ताभ्यां तमःप्रकाशाभ्यां संभिन्ना मिश्रा तनुर्यस्य स रथो लोकालोकपर्वतस्य सादृश्यमापत् । लोकालोको ह्येकपार्श्वे प्रकाशः, अन्यपार्श्वे तमोमयः ॥

तस्मिन्मिथः संघटनेन पक्षपदग्रहात्कूबरिणि स्मरारेः ।
दिनस्य रूपं रजनी विवेद दिनं रजन्याश्च चिराच्चरित्रम् ॥ ११ ॥

स्मरारेस्तस्मिन्कूबरिणि रथे पक्षे पार्श्वे पदस्य स्थानस्य ग्रहाद्ग्रहणाद्रजनी दिनस्य स्वरूपं चिराद्विवेदाज्ञासीत् । दिनं च रात्रेश्चरित्रं चिराद्विवेद । तयोर्जात्वपि संघटनाभावात् । अथ च दिनरजन्यौ नायिकानायकस्थानीयौ । तौ च पक्षपदग्रहादभिलषितवस्तुसाधननिबन्धान्मिथो रूपं शीलं च बुध्येते इत्यपि लेशतोऽर्थः ॥

तस्मिन्विरेजुर्युगवर्त्ममूर्तिमावर्त्य संवर्तकवारिवाहाः ।
उट्टङ्कयन्तो निविडं तडिद्भिरकाण्ड एवोड्डमराः पताकाः ॥ १२ ॥

युगो वोढुः स्कन्धनिषण्णः काष्ठविशेषः । तस्य वर्त्मस्थानं यत्र स्थाने युग आस्ते तदात्मना मूर्तिमावर्त्य परिणमय्य संवर्तकवारिवाहाः कल्पान्तमेघा विरेजुः शुशुभिरे ।

तेषां युगवर्त्मनि मूर्तिबन्धौचित्यात् । तडिद्भिर्हेतुभिः । पताकाश्च ध्वजानकाण्ड एव रणात्पूर्वकाल एवोद्दङ्कयन्तो रचयन्तः ॥

रथेऽवतस्थे दिवसो निशा च पूर्णेन्दुपूष्णोर्घटना च जज्ञे ।
इत्थं विरोधेऽपि बताखिलानामन्योन्यमद्वैतमिवाविरासीत् ॥ १३ ॥

दिनं रात्रिश्च रथे स्थितौ । पूर्णचन्द्रार्कयोश्च घटना सङ्गो जज्ञे जातः । एषां सर्वेषां विरोधेऽपि सति । अन्यतमकृतस्येतरेण विघातात् । रथे मिथोऽद्वैतमद्वयमिवाविरासीत् । एकत्र निवसनात्त्रिपुरसंहारलक्षणस्य [कार्यस्य] संपादनाच्च । द्वयोर्भावो द्विता । द्विता द्वैतम् । इति स्वार्थेऽण् ॥

चित्रं कथंचित्किल नोदलङ्घि संवर्तकाभ्रैः स्वचरित्ररेखा ।
तदापि तेषां तदशेषतो हि युगान्तमेवानुबबन्ध रूपम् ॥ १४ ॥

संवर्तकाभ्रैः कल्पान्तमेघैः स्वचरित्रस्य रेखा मर्यादा कथंचिन्नोदलङ्घि त्यक्ता । कथंचिदिति तदा तेषां रूपानुग्रहणात् । तदापि रूपान्तरग्रहणकाले तेषां रूपं कर्तृ, युगान्तं रथकाष्ठविशेषं कृतादिपर्यन्तं चानुबबन्धाशिश्रियत् ॥

तदाधिशिश्ये युगवर्त्मभाजामुद्भ्रान्तकल्पान्तमहाघनानाम् ।
वरूथताराभिरदूरयोगाद्गलद्गरीयःकरकानुकारः ॥ १५ ॥

युगवर्त्मस्थानानां कल्पान्तमेघानां संबन्धिन्यो गलन्त्यः पतन्त्यो गरीयस्यो गुरुतरा याः करका वर्षोपलास्तदनुकारो वरूथरूपाभिस्ताराभिर्निकटवासात्प्राप्तः । करकात्वेन ताराः संभाविता इत्यर्थः ॥

तस्य प्रशस्या युगतां प्रपद्य द्यौरद्युतन्मन्मथजिद्रथस्य ।
पुरो वलद्भिः प्रलयाम्बुवाहैर्निर्मृज्यमानेव तडित्कराग्रैः ॥ १६ ॥

तस्य हररथस्य युगभावं प्राप्य द्यौरद्युतत् । 'द्युद्भ्यो लुङि' इति परस्मैपदम् । अग्रे स्फुरद्भिः कल्पान्तमेघैस्तडित्कराग्रैर्विद्युत्पाणिभिरुत्पुंस्यमानेव । अम्बुवाहैरिति मार्जनानुगुणोक्तिः ॥

तस्मिन्विमाने मदनावरोधवैधव्यदीक्षागुरुलोचनस्य ।
धृतिश्च मेधा च बभूव शम्या सम्यक्समेत्य स्थितिसंनतिभ्याम् ॥ १७ ॥

मदनावरोधो रतिस्तस्या वैधव्यं भर्तृवधस्तदेव दीक्षा तत्र गुरु लोचनं यस्य हरस्य तस्मिन्विमाने रथे स्थितिसंनतिभ्यां मिलित्वा धृतिर्मेधा च शम्या बभूव । रथविशरारुतानिवृत्त्यर्था कीलिकासीत् ॥

विडम्बयंश्चुम्बितविस्फुलिङ्गं धूमं भविष्यत्पुरजिच्छराग्नेः ।
विचित्रवर्मत्वमियाय तत्र तारावलीदन्तुरमन्तरिक्षम् ॥ १८ ॥

भविष्यन्भावी यः पुरजिच्छराग्निर्हरबाणवह्निस्तस्य साग्निकणं धूममनुकुर्वदन्तरिक्षं तस्य रथस्य विचित्रं नानावर्णं वर्म रक्षासंनाहस्तद्भावमापत् ॥

फेनच्छलात्पीतचरं मुखेभ्यो भरेण पीयूषमिवोद्गिरन्तः ।
शक्रः प्रचेता धनदो यमश्च तस्मिन्धृतिं धुर्यतया बबन्धुः ॥ १९ ॥

शक्रः, प्रचेता वरुणः, धनदः, यमश्च तस्मिन्रथे धुर्यतया अश्वभावेन प्राधान्येन च धृतिं बबन्धुरासन् । पीतचरं पूर्वपीतममृतं फेनव्याजादुद्गिरन्त इव ॥

विगाहमानस्तुरगत्वमिन्द्रः साकूतमुच्चैःश्रवसा लुलोके ।
यमोऽश्वमूर्तिर्ददृशे च वाहवाहद्विषा रोषकषायितेन ॥ २० ॥

अश्वत्वं बिभ्रदिन्द्रः सरभसमुच्चैःश्रवसा दृष्टः । स्वजातित्वेन परिणामात् । वाहभूतो यो वाहद्विट् महिषस्तेनाश्वमूर्तिर्यमो रोषरूपेण दृष्टः । वाहद्विषेति साभिप्रायमभिधानम् ॥

ईक्षांबभूवे श्रवणान्तगैस्तैर्विलोचनैरश्वमुखीजनेन ।
महेश्वरस्यन्दनधुर्यतायै हयाकृतिः किंपुरुषाधिराजः ॥ २१ ॥

महेश्वरस्य स्यन्दने धुर्यतायै धूर्वहनार्थं हयरूपः किंपुरुषाधिराजो वैश्रवणोऽश्वमुखीजनेन किंनरीलोकेन श्रवणान्तगैः कर्णान्तप्राप्तैर्नेत्रैर्ददृशे । स्वसादृश्यप्राप्तेरिति भावः ॥

सावर्तमूर्तिर्वहलोज्जिहानफेनावलीढं दधदङ्गमङ्गम् ।
अपांपतिर्वाहतनुर्बभार निजाधिकारानुगुणं शरीरम् ॥ २२ ॥

आवर्ता वाजिलक्षणानि पयोभ्रमाश्च । सावर्ता मूर्तिर्यस्य । तथा दर्पवशाद्बहलं कृत्वा उज्जिहान उत्पद्यमानो यः फेनस्तेनावलीढं व्याप्तमङ्गमङ्गं दधदपांपतिर्वरुणो वाहतनुरपि शरीरं निजाधिकारस्य तोयैश्वर्यस्यानुगुणमनुरूपं बभार । अपांपतिरिति प्रकृतानुगुणम् ॥

तेषु ध्रुवं वाहतनूभवत्सु धुर्यत्वसिद्धावधिकाभिलाषः ।
शेषाङ्गमप्यश्वमयं विधातुं हयाननो वाक्पतिराचकाङ्क्ष ॥ २३ ॥

तेषु लोकपालेषु वाहरूपेण परिणतेषु सत्सु हयाननो वाक्पतिर्विष्णुमूर्त्यन्तरं शेषमङ्गमपि हयमयं कर्तुमाचकाङ्क्ष । यतो धुर्यत्वसिद्धौ प्राधान्यसिद्धावपि साभिलाषः ॥

कुहूः सिनीवाल्यथ तत्र योक्त्ररूपेण राकानुमती च तस्थुः ।
तुदंश्च धिन्वंश्च ततश्चकोरानभूत्तमश्चन्द्रिकयोः प्रयागः ॥ २४ ॥

कुहूः नष्टचन्द्रामावास्या । सिनीवाली दृष्टचन्द्रा । राकापूर्णचन्द्रा पूर्णिमा । अनुमती असंपूर्णेन्दुः । एता योक्त्ररूपेणाश्वसंयमनरज्जुत्वेन तस्थुः । ततो दर्शपूर्णिमावस्थानात्तमश्चन्द्रिकयोः प्रयागः संगमोऽभूत् । चकोराञ्ज्योत्स्नापायिपक्षिणो व्यथयन्प्रीणयंश्च । तमोदर्शनात्तेषां व्यथा ज्योत्स्नादर्शनात्प्रीतिः । धिन्वन्निति 'धिन्विकृण्व्योर च' इति रूपम् ॥

निरत्ययः सत्यतपोर्थकर्ममयैः स्वयं रश्मिभिरावभासे ।
स विप्रलम्भव्रतलोपहानिकौसीद्यकृत्तद्द्विषतां बभूव ॥ २५ ॥

सत्यमविसंवादिता । तपः कृच्छ्रादिः । अर्थः समृद्धिः । कर्मोद्यन्तृता (?) । तद्रूपै रश्मिभिर्वल्गाभिराबभासे शुशुभे । विप्रलम्भो विसंवादः । व्रतलोपः कृच्छ्राद्यकरणम् । हानिरर्थनाशः । कौसीद्यमालस्यम् । तत्करो दानवानामासीत् ॥

अनूरुवृत्तिग्रहकृद्भवस्य भास्वान्रथः कोऽपि बभौ स तस्य ।
रश्मिप्रकाण्डैश्चतुरात्मभिर्यः प्रकाशलक्ष्मीमलुनात्पुरेषु ॥ २६ ॥

अनु पश्चात् उरोर्महत्या वृत्तेः स्थितेर्ग्रहं करोति स भवस्य कोऽप्यपूर्वो भास्वान्दीप्तो रथः शुशुभे । चतुरात्मभिश्चतुःसंख्याकदेहै रश्मिप्रकाण्डैः श्रेष्ठाभिर्वल्गाभिः पुरेषु प्रकाशलक्ष्मीं प्रसिद्धिं योऽलुनान्निवारितवान् । अथ च भास्वान्सूर्यः । तत्पक्षेऽनूरोररुणस्य वर्तनकृत् । चतुर आत्मा रूपं येषां तै रश्मिभिः पुरेषु नगरेषु प्रकाशं लुनातीत्यपूर्वत्वम् ॥

स वेपमानैः पवनोपदेशाच्चित्रैः पताकासिचयैर्बभासे ।
उद्दीपनायेव शिवाशुगाग्रेरनेककल्लोलिततालवृन्तः ॥ २७ ॥

पवनस्य मरुत उपदेशात्कम्पमानैर्ध्वजपल्लवैः शुशुभे । पुरारिबाणवह्नेर्दीपनार्थमनेके बहवः कल्लोलिता वीजितास्तालव्यजनानि यत्र स इव । ध्वजपल्लवा व्यजनत्वेन संभाविताः ॥

तदा नवन्यादघनाशनाय मृत्युप्रनृत्यद्रसनासपत्न्यः ।
कम्पं दधुस्तस्य च वैजयन्त्यः स्वान्तेषु वैरिभ्य इव प्रदातुम् ॥२८॥

निःशेषेणादनं न्यादः, तद्रूपं घनं यदशनं तदर्थम् । सामान्यविशेषाभावे योजना । मृत्योर्यमस्य प्रनृत्यन्तः प्रसर्पन्त्यो या रसना जिह्वास्तासां सपत्न्यः सदृश्यः । तस्य रथस्य वैजयन्त्यः पताकाः कम्पं दधुः । यत्रोत्प्रेक्ष्यते—शत्रुभ्यश्चित्तेषु दातुमिव । विद्यमानस्य देयत्वात् । निःशेषेणाद्यते इति कर्मसाधनो 'नौ ण च' इत्यदेर्णः । तत्र हि भावेऽकर्तरि च कारके द्वयस्याप्यनुवृत्तेः । तथा च दृश्यते—[1] ॥

नद्धं तदिन्द्रायुधविद्युतोच्चैरमोघमेणाङ्कशिखस्य पत्रम् ।
अदूरगं दैत्यकबन्धबर्हिनृत्यप्रवृत्तेः समयं शशंस ॥ २९ ॥

एणाङ्कशिखस्य चन्द्रमौलेः पत्रं रथो भाव्यर्थसूचकशास्त्राङ्कितं भूर्जादि च कबन्धा एव बर्हिणस्तेषां नृत्यप्रवृत्तेः समयमदूरगं निकटस्थं शशंस । अचिरेणैव दैत्यकबन्धा नर्तितार इति रथं दृष्ट्वा जनैर्ज्ञातमित्यर्थः । इन्द्रचापतडिद्भिः सहितम् । तथा अमोघं सफलम् । इन्द्रायुधविद्युद्भिश्च मयूरनाट्यहेतुः कालो ज्ञायते । पत्रं च समयं विशिष्टं कालं शंसति ॥

---

१. अत्र किमपि त्रुटितं भाति.

सोमावचूलो यजमानमूर्तिरुपोढमन्युर्भगवान्पुरेषु ।
आसादितस्तोत्रशतोऽथ सद्यस्तद्वेदिकां शस्त्रमयीं चकार ॥ ३० ॥

सोमश्चन्द्रोऽवचूलं भूषणं यस्य स भगवांस्तस्य रथस्य वेदिकां प्रधानयोद्धृस्थानं शस्त्रमयीं सपाशुपताद्यस्त्रां चकार । यतः पुरेषु दैत्यविशेषेषु उपोढो मन्युः क्रोधो येन । तथा यजमानमूर्तिरष्टमूर्तित्वादात्मरूपः । आसादितानि स्तोत्रशतानि भक्तजनस्तुतयो येन । अथ च यजमानमूर्तिः स्वोद्देशेन यागकर्ता यस्य यज्ञस्य वेदिकामग्न्युद्दीपनस्थानं शस्त्रमयीं करोति । तत्पक्षे सोमस्तृणविशेषो यज्ञाङ्गम् । मन्युर्यज्ञः । पुरेषु नगरेषु । स्तोत्रशतानि सामकदम्बकस्तुतयः ॥

एकत्र नीतो दिशि शंकरस्य रथे परिस्कन्दधुराममर्त्यैः ।
यो ब्रह्मदण्डो न्यपतत्स एव दैत्येषु नूनं वचसा मुनीनाम् ॥ ३१ ॥

रथे एकस्यां दिशि देवैः परिस्कन्ददशां यो ब्रह्मदण्डो ब्रह्मणः शापत्रासश्च प्रापितः स एव पुरेषु नूनमपतत् ॥

तस्मिन्परिस्कन्दपदं विमाने देवस्य खट्वाङ्गविभूषणस्य ।
अन्यासु काष्ठासु च कालरुद्रो दण्डो ज्वरश्च प्रथयांबभूवुः ॥३२॥

अन्यासु तिसृषु दिक्षु कालरुद्रो दण्डो ज्वरश्च परिस्कन्ददशाः प्रापुः ॥

गर्वादथर्वाथ रथाङ्गरक्षस्तस्यैकपार्श्वे प्रणयं बबन्ध ।
पुराभिचाराय महोमयेऽग्नौ कुर्वन्निवापाङ्गरुचास्रहोमम् ॥ ३३ ॥

अथर्वा आभिचारिककर्मप्रधानो वेदविशेषः, तस्य रथस्यैकपार्श्वे प्रणयं परिचयं चकार । महस्तेजस्तन्मयेऽग्नौ पुराभिचाराय दैत्योच्चाटनायास्रहोमं कुर्वन्निव । अभिचारे रक्तहोम उचितः ॥

तस्येतरच्चक्रमरक्षि तेन पुरःसरेणाङ्गिरसा मुनीनाम् ।
सुरद्रुहामैन्द्रपदाधिरोहे सदैव यत्संततिरन्तरायः ॥ ३४ ॥

सुरद्रुहामसुराणामैन्द्रपद इन्द्रत्वेऽधिरोहस्तत्र यत्संततिर्बृहस्पतिरन्तरायो विघ्नभूतः । बृहस्पतेर्देवगुरुत्वात् । तेन मुनीनां पुरःसरेणाङ्गिरसा द्वितीयं चक्रं रक्षितम् ॥

पुरः पुराणैः सह सार्धमृग्भिः सामान्यसामान्यजवं ववल्गुः ।
विलोकयन्त्यास्पदसंस्तवेन वक्त्राणि यन्तृत्वभृतो विधातुः ॥ ३५ ॥

ऋग्भिः ऋग्वेदेन सार्धम्, तथा पुराणैः पञ्चलक्षणैः सह सामानि रथस्याग्रेऽसामान्यजवं बहुवेगं ववल्गुः पुस्फुरुः । यन्तृत्वभृतः सूतभूतस्य ब्रह्मणो मुखानि प्रतिष्ठापरिचयेन पश्यन्ति । वेदा हि ब्रह्ममुखान्निरासन् ॥

सहेतिहासैश्च सहेतिहासैर्यजूंषि सोद्रेकवलद्वपूंषि ।
पृष्ठे प्रतिष्ठामतिशय्य तस्य रक्षाभरक्षान्तिसखत्वमूहुः ॥ ३६ ॥

हेतीनामायुधानां हासः स्फुरणम् । सहेतिहासेन वर्तन्ते ये तैरितिहासैः पुरावृत्तैः सह तस्य पृष्ठे प्रतिष्ठामाश्रित्य स्थित्वा यजूंषि रक्षालक्षणे भरे या क्षान्तिस्तत्सखत्वमवहन् । सोद्रेकं सोत्कर्षं वलत्स्फुरद्वपुर्येषाम् । एतेन तेषां निर्भयत्वं प्रतिपादितम् ॥

यासां शरीरं पदमन्तरात्मा वाक्यं प्रमाणं परिकर्ममार्गः ।
विद्वन्मुखालंकरणं गिरस्ताः सिषेविरे तत्परिपार्श्ववृत्तिम् ॥ ३७ ॥

पदं यासां शरीरम् । पदस्य प्रथमोपलक्ष्यमाणत्वाच्छरीरत्वम् । वाक्यं यासामन्तरात्मा । वाक्यस्य शरीरभूतैः पदैर्व्यज्यमानत्वात्प्राधान्याच्चान्तरात्मत्वम् । प्रमाणं यासां परिकर्ममार्गः । तस्य विचारहेतुत्वात् । विद्वन्मुखेऽलंकरणभूतास्ता वाचस्तत्पार्श्वे वृत्तिमभजन् ॥

तत्कर्मसाहायकसामरस्यं सारस्वतस्यावधयो रसस्य ।
अदुर्दशां तत्र चतुर्दशापि प्रपद्य हृद्या विदधुश्च विद्याः ॥ ३८ ॥

सारस्वतस्य रसस्य चर्व्यमाणत्वात्प्रसरस्यावधयः पर्यन्तभूमयश्चतुर्दशविद्या अदुर्दशां प्रपद्य । तदा वीतविघ्नैर्मुनिभिरुपास्यमानत्वात् । तत्कर्मणि साहायकं तत्र सामरस्यं तुल्यां वृत्तिं चक्रुः । 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश' ॥

पद्मं च सिन्धुं च महीधरं च मुक्त्वा किलैकत्र सदा घटन्ते ।
यस्मिन्मिथः स्त्रीण्यपि कारणानि ययौ स तस्य प्रणवो मुखत्वम् ॥ ३९ ॥

पद्मं समुद्रं महीधरमत्र कैलासं त्यक्त्वा यस्मिन्नेकस्मिंस्त्रीण्यपि कारणानि ब्रह्मादयो मिथोऽन्योन्यं घटन्ते स प्रणवस्तस्य रथस्य मुखभावं गतः । अस्य ह्यकारोकारमकारलक्षणास्तिस्रो मात्रा ब्रह्मादिरूपाः ॥

सितासितानर्गलपक्षजालक्रमेण रोहज्जवतारतम्यः ।
पृषत्कवत्संनिदधे हि चापे संवत्सरो मत्सरिणः पुरेषु ॥ ४० ॥

शुक्लकृष्णावनर्गलौ यौ पक्षौ दिनपञ्चदशकरूपौ कालिकविशेषौ पक्षाः पत्राणि च तेषां जालं तत्क्रमेण रोहदुत्पद्यमानं जवतारतम्यं यस्य संवत्सरस्य । गत्वरत्वात् । पृषत्कवच्छर इव संवत्सरः पुरारेश्चापे संनिहितः ॥

चापे तदध्यासनतो हिमर्तुग्रीष्मश्रियो भीष्मतया गुणस्य ।
प्रागेव सेवां व्यधितेव भाविपृषत्कसोमज्वलनप्रभावः ॥ ४१ ॥

धनुषि विषये तस्य संवत्सरस्याध्यासनत आश्रयणाद्धिमर्तुग्रीष्मसंबन्धिनो गुणस्य

शीतोष्णलक्षणस्य भीष्मतया व्यक्तत्वेन भाविनौ भविष्यन्तौ पृषत्के शरे सोमज्वलनौ तयोः प्रभावः शीतोष्णलक्षणः पूर्वमेव सेवामकरोत् ॥

श्रीनायकः सायकतामकाण्डचण्डक्रुधः खण्डशशाङ्कमौलेः ।
प्रागेव वाहाण्डजपक्षवेगगत्यां चिराभ्यस्त इवाललम्बे ॥ ४२ ॥

अकाण्डे तपःक्षयाभावेऽपि चण्डक्रुधोऽतिक्रुद्धस्य हरस्य विष्णुः शरभावमग्रहीत् । अतः संभाव्यते—पूर्वमेव वाहो योऽण्डजो गरुडस्तस्य पक्षैश्च वेगेन गतिर्गमनं तत्र चिराभ्यस्त इव । शरश्च हि पक्षवेगेन गच्छति । अकाण्डग्रहणाद्धरस्य स्वातन्त्र्यं प्रतिपादितम् ॥

शौरिः शरीभूततनुः पुरस्तान्निमग्नमग्निं विभरांचकार ।
विनिह्नुतस्यापि हठात्स्फुरन्तं भरं प्रभाणामिव कौस्तुभस्य ॥४३ ॥

शरः संपद्यमानो विष्णुरग्रे निक्षिप्तमूलं वर्तमानमग्निं दध्रे । स्वात्मगोपनार्थं गोपितस्यापि कौस्तुभस्य बलान्निर्यान्तं दीप्तिभरमिव ॥

स्फुरन्पुरस्ताच्छतशः शरस्य स्वाहाकुटुम्बः पटलैः शिखानाम् ।
यात्राप्रसङ्गे व्यधितेव शंभोरव्याजनीराजनचेष्टितानि ॥ ४४ ॥

शतशः शतसंख्यैर्ज्वालाकदम्बैः स्फुरन्नग्निर्यात्रावसरे नीराजनचेष्टितानि शान्तिकर्माणीवाकरोत् ॥

सोमोऽपि सोमार्धभृतः शरस्य प्रोट्टङ्कयामास निवासमग्नौ ।
विलायिताभिः सविधाग्निधाम्ना सुधाभिराप्यायितजीवलोकः ॥४५॥

[1]

..........................................................................

सवह्निमह्नाय विवर्धमानमग्रे विवृण्वन्नवलीढसोमः ।
नेतुं शरः शूलकरस्य मन्यौ पुराणि पूर्णाहुतितामियेष ॥ ४६ ॥

अग्निमग्रे धारयन्नवलीढो धृतः सोमश्चन्द्रो येन स शूलिनः शरो रोषे पुराणि दैत्यविशेषान्पूर्णाहुतिभावं नेतुमैच्छत् । अथ चाग्निं विभ्रदवलीढः सोमस्तृणविशेषो येन स मन्यौ यज्ञे पूर्णाहुतिं ददाति ॥

विधुः स्वयं सायकतामियेष विधुश्च तस्याथ पुरो निलिल्ये ।
अस्तानि ताभ्यां न कथं पुराणि विध्वस्ततासंस्तवमाप्नुवन्तु ॥४७॥

विधुर्विष्णुः स्वयमप्रेरितः शरभावं काङ्क्षितवान् । विधुश्चन्द्रस्तदग्रे निलीनः । ताभ्यां विधुभ्यां नारायणेन्दुभ्यामस्तान्यवगणितानि पुराणि विध्वस्तताया विध्वंसस्य विधुभ्यामस्तत्वस्य च संस्तवं कथं नाप्नुवन्तु । यो विधुभ्यामस्तः स विध्वस्तः कथं न भवति ॥

---

१. आदर्शपुस्तकेऽस्य श्लोकस्य टीका नास्ति.

सर्गप्रसङ्गे जगदेकजिष्णोर्विष्णोः स्थितिः कर्म किल प्रणीतम् ।
अहो पुराणां चरितं तु तेषु यत्सोऽपि संहारपुरःसरोऽभूत् ॥४८॥

किलेत्यागमे । सृष्ट्यारम्भ एव हरेः स्थितिः कर्म व्याख्यातम् । पुराणां चरितं पुनरहो अद्भुतम् । सोऽपि स्थितिकार्येपि हरिस्तेषु संहारार्थमग्रणीरभूत् ॥

यस्यास्ति वैकुण्ठतया प्रसिद्धिस्तस्मिञ्शरे पञ्चशरान्तकस्य ।
चक्रे शशाङ्केन हुताशतप्ते पानक्रियेव स्वसुधारसेन ॥ ४९ ॥

यस्य शरस्य वैकुण्ठतया वैकुण्ठभावेन विकुण्ठोऽतीक्ष्णस्तद्भावेन च प्रसिद्धिः । तस्मिन्हरस्य शरे चन्द्रेण कर्त्रा निजामृतरसेन करणेन पानक्रियेव चक्रे । [तप्तस्य] जले ब्रोडनं पानक्रिया । कुण्ठस्य च शरादेरग्नितापनात्पूर्वं पानक्रिया युक्ता । वैशब्दः प्रसिद्ध्यर्थः ॥

अद्वैतमूर्तेर्विशिखेन शंभोः प्रत्युप्तशीतांशुहुताशनेन ।
अतन्यतान्योन्यविरोधभाजोरेकत्र शीतातपयोर्निवेशः ॥ ५० ॥

अद्वैता निर्द्वन्द्वा मूर्तिर्यस्य । विश्वमयस्येत्यर्थः । हरस्य बाणेन परस्परविरुद्धयोः शीतातपयोर्निवेश एकस्मिन्स्थाने कृतः । यतः प्रत्युप्तौ निवेशितौ चन्द्राग्नी यत्र ॥

यस्यासिताश्रीरधिकण्ठपीठमाभाति मूर्धा च धृतार्धचन्द्रः ।
ऊर्ध्वाक्षिरोहद्बहुहेति तस्य विभोः किमस्त्रान्तरदुर्ग्रहेण ॥ ५१ ॥

असिता श्रीः श्यामा शोभा, असेः खड्गस्य भावोऽसिता तया श्रीर्यस्य कण्ठपीठे भवति । मूर्धा च धृतोऽर्धचन्द्रः शरविशेषोऽपि येन स आभाति । तथा ऊर्ध्वाक्षि तृतीयं नेत्रं रोहन्त्यो बहवो हेतयो ज्वाला आयुधानि च यस्य तद्भवति । तस्य विभोरन्यास्त्राध्यासनेन किम् ॥

इत्थं मुकुन्दं च हविर्भुजं च विभावरीशं च विधाय शस्त्रम् ।
मूर्त्यन्तरैरेव निजैस्तथासावक्रीडदाद्यः पुरुषोऽष्टमूर्तिः ॥ ५२ ॥

इदानीं कविर्भगवतः स्तुत्यर्थं स्वातन्त्र्यमाह—एवं नारायणादीनस्त्रीकृत्य स्वैरेव मूर्त्यन्तरैर्निजाभिरेव मूर्तिभिः सोऽक्रीडत् । यत आद्यः पुरुषोऽष्टमूर्तिः ॥

कालं च कामं च यदा प्रसह्य काक्षेक्षितैरेव तिरश्चकार ।
एकस्य लोकत्रितयस्य जेतुरस्त्रं तदानीं कतरद्बभूव ॥ ५३ ॥

अक्षश्चक्षुरिन्द्रियं तस्येक्षितानि रोषरूक्षेक्षितानि काक्षेक्षितानि । ईषदर्थे कादेशः । काणाक्षपातमात्रैरित्यर्थः । कालं च कामं च यस्तिरश्चकार जितवांस्तस्य कतरदस्त्रम् । न किंचिदित्यर्थः ॥

यस्यासकृद्भैरवविग्रहस्य लोकत्रयग्रासरसोवहेला ।
तिस्रः पुरस्तस्य पुरोऽपकर्तुं को नाम संरम्भधुराधिरोहः ॥ ५४ ॥

महाकालरूपस्य यस्य विश्वग्रासोऽवहेला हेलासाध्यस्तस्य तिस्रः पुरो दैत्यविशेषा-न्नगरीश्च जेतुं कः संरम्भः । न कश्चिदित्यर्थः ॥

शिरो विरिञ्चस्य नखाञ्चलेन मृणाललावं किल यो लुलाव ।
चिक्रीड स स्यन्दनवारवाणत्राणादितन्त्रक्रियया पुरेषु ॥ ९५ ॥

मृणालमूलमिव ब्रह्मणः शिरो यो नखाग्रेण लूनवान्स वारवाणं वर्म त्राणास्तदा-दिकरणेन पुरेषु दैत्येष्वक्रीडत् । दण्डापूपिकया पुरदाहस्य सिद्धेः ॥

अध्यासीनो रथमवितथस्तोत्रतन्त्रप्रयोग-
व्यग्राशेषत्रिदशवदनन्यस्तनेत्रत्रिभागः ।
देवो रेजे तदनु दनुजध्वंसदीक्षैकसत्री
तस्मिन्काले शिशुकुमुदिनीकान्तलेखावचूलः ॥ ९६ ॥

रथमारोहंस्तथा अवितथः सत्यो यः स्तोत्रतन्त्रप्रधानः प्रयोगस्तस्मिन्व्यग्राः संर-ब्धा ये अशेषत्रिदशास्तेषां वदनेषु न्यस्तो नेत्रत्रिभागोऽनुग्रहसूचकः कटाक्षपातो येन । तथा दनुजध्वंस एव दीक्षा तस्य एकसत्री अनवरतदाता चन्द्रमौलिर्दिदीपे ॥

भक्त्या नित्याहितहठनतिस्तत्क्षणं मार्गणत्व-
स्वीकारेण प्रसृतविततकाण्डसारल्ययोगः ।
शंसन्नद्रेर्नियतनमनं चापदण्डत्वमग्रे
मन्ये तस्य त्रिभुवनगुरोः शार्ङ्गपाणिर्ललज्जे ॥ ९७ ॥

अहं मन्ये—तस्य त्रिभुवनगुरोरग्रे हरिर्ललज्जे । यतो भक्त्या नित्यमाहिता हठन-तिर्दण्डप्रणामो येन । तत्क्षणं मार्गणत्वस्य शरभावस्य याचकत्वस्य च स्वीकारेण ग्रह-णेन प्रसृतो विततोऽकाण्डे सारल्येन ऋजुत्वेनानम्रत्वेन च योगो यस्य । यतो नित्यं नमनं तत्र तदद्रेर्धनुर्दण्डत्वं शंसन्स्तुवन् । मन्दरः शिलामयो नमति, मया तु मार्ग-णरूपेण नित्यभक्तेन च न नम्यते, किं त्वकाण्डे स्तब्धता धार्यते इति हरेर्लज्जा । त्रिभुवनगुरोरिति साकूतमभिधानम् ॥

अग्रे कूबरिचक्रयोर्दिनकरश्यामाभुजङ्गौ शरे
ज्वालालाञ्छनमित्युवाह भगवानादृत्य धामत्रयम् ।
यत्तत्रापि पुरत्रयस्य कदनादैच्छत्स लब्धास्पदं
त्रैलोक्येऽपि निजं यशो रचयितुं सोऽभूद्विचित्रः क्रमः ॥९८॥

कूबरिणो रथस्य चक्रयोः पुरः सूर्येन्दू, तथा शरे ज्वालालाञ्छनोऽग्निः, इति धामत्रयं तेन स्वयं स्थानत्रयं चादृत्य भगवान्यदवहत्तत्रापि पुरत्रयस्य दैत्यत्रयस्य नगरत्रयस्य च

नाशात्स्वयशस्त्रिभुवने प्राप्तस्थानं कर्तुमैच्छदिति क्रमोऽद्भुतः । य आत्मनि धामत्रयं वहति स पुरत्रयनाशात्त्रिजगत्स्थायि स्वयशः कर्तु कथमि[च्छती]ति वैचित्र्यम् ॥

देवः स्यन्दनमिन्दुशेखरमणिस्तं सोऽध्यरुक्षत्ततः
सर्वाङ्गीणभुजंगमण्डनकृतायःकङ्कटोट्टङ्कनः ।
त्वङ्गत्तुङ्गतरङ्गसंगतशिखागङ्गाम्बुपूराहित-
प्रादुर्भूतशिरस्त्रभङ्गिरधिकप्रक्रान्तवीरव्रतः ॥ ५९ ॥

सर्वाङ्गीणाः सर्वाङ्गव्यापिनो ये भुजंगास्त एव मण्डनानि भूषणानि तैः कृतमयःकङ्कटस्य लोहकवचस्योट्टङ्कनं भङ्गिर्यस्य । तथा त्वङ्गत्तुङ्गतरङ्गसंगतो यः शिखागङ्गाम्बुपूरस्तेनाहितो निर्मितः प्रादुर्भूतस्य प्रकटस्य शिरस्त्रस्य शिरस्त्राणस्य भङ्गिश्छद्मो यस्य । यतोऽधिकं प्रक्रान्तमारब्धं वीरव्रतं येन स चन्द्रशिखारत्नो रथमधिरूढवान् ॥

आरूढस्य दृढाभिमानगरिमप्रस्यन्दतः स्यन्दनं
बाणेनाग्निमयात्मना रचयितुं नामावशेषान्द्विषः ।
दर्शंदर्शमदर्शदाश्रितजनस्तं कालकूटं गले
लौहोरश्छदशङ्कया धृतनवोद्रेकं पुरद्रोहिणः ॥ ६० ॥

दृढो योऽभिमानगरिमा तदुल्लासाद्धेतोः आग्नेयस्वभावेन शरेण शत्रून्नाममात्रावशेषान्कर्तुं रथमारूढवतः पुरजितः कण्ठे कालकूटविषं दृष्ट्वा दृष्ट्वा सेवकजनोऽद्राक्षीत् । लौहोरश्छद इति शङ्कया । नायं कालकूटः, अपि त्वायस उरश्छद इत्यद्राक्षीत्। अदर्शदिति लुङ्यङि गुणे च कृते रूपम् ॥

अक्षैरक्षतधुर्यवृत्तिरधिकावाप्तोग्ररश्मिग्रहा-
दासीदन्निबिडश्रियं हृतदृशं प्रोद्यद्रजोडम्बरैः ।
यः पद्मं विधृतप्रथं रथमिवाध्यास्ते सदा सूततां
सूते कूबरिणि प्रभोः समतनोत्सोऽथ श्रुतीनां कविः ॥ ६१ ॥

यो ब्रह्मा सदा पद्मं रथमिवाश्रयति स श्रुतीनां कविः [ब्रह्मा] सुष्ठु उते संबद्धे तस्मिन्हररथे सारथिभावमकरोत् । अक्षैर्बीजैरखण्डिता धुर्या सर्वपद्मेभ्यो ज्यायसी वृत्तिर्यस्य । तथा अधिकमवाप्त उग्ररश्मौ सूर्ये ग्रहो येन तस्मात् । आसीदन्ती निबिडा श्रीर्लक्ष्मीर्यस्य । तथा प्रोद्यन्तो ये रजोडम्बरा रेणुप्रबन्धास्तैर्हृता आवर्जिता दृग्येन । इति पद्मपक्षे । रथपक्षे तु—अक्षै रथाङ्गैरक्षता धुर्याणां वाहानां वृत्तिर्यत्र । श्रीः शोभा । रजो मकरन्दः ॥

कौतूहलं मनसि कस्य न स व्यधत्त
यस्मिन्पुरो भगवतः पुरशासनस्य ।

गर्वं चतुर्वदनताधिगमेन धुर्य-
पालीव सारथिरपि प्रथयांचकार ॥ ६२ ॥

स रथो मनसि कौतूहलं कस्य न व्यधत्त । सर्वेषामेवाश्चर्यमकरोदित्यर्थः । यस्मिन्हरस्य रथे धुर्यपाली चतुःसंख्याकाश्वश्रेणीव सारथिर्ब्रह्मा चतुर्मुखतासंबन्धि दर्पमवहत् ॥

मित्रेणारिदशान्वभावि जगृहे बाणारिणा बाणता
प्राप्याग्रेसरतामथाभिववृते दण्डक्रिया सामभिः ।
नासीरत्वपरिग्रहेऽभिनवता लेभे पुराणैरहो
तस्मिन्विस्मयवेधसो भगवतः पत्रे पुराणां रिपोः ॥ ६३ ॥

मित्रेणादित्येन सुहृदा च अरिदशा चक्रावस्था शत्रुत्वं च प्राप्ता । बाणस्य बलिसुतस्य शरस्य च अरिणा बाणता शरभावो गृहीता । अग्रवर्तित्वं प्राप्य सामभिः प्रथमोपायैर्वेदैश्च दण्डक्रिया चतुरङ्गबलकर्म तुर्योपायविधिश्च प्रारब्धा । पुराणैः पञ्चलक्षणैः जीर्णैश्च नासीरत्वस्याग्रेसरत्वस्य ग्रहणे सामग्री लब्धा । पुराणां रिपोः पत्रे रथे इति सर्ववाक्येषु योज्यम् । एवं सति विस्मयवेधस इत्युचितम् ॥

कोपात्पाटलिमा कपोलयुगले यः प्रादुरासीद्विभोः
स व्यक्तिं न जगाम धामनि घने भालाग्निनेत्रार्चिषाम् ।
उष्णीषासितदन्दशूककुटिलस्फूर्जत्फणासंचयैः
किं चान्यत्प्रकटोत्कटा भ्रुकुटयः सामान्यमानिन्यिरे ॥ ६४ ॥

हरस्य गण्डयोः क्रोधवशाल्लोहितत्वं यदुत्पन्नं तल्ललाटाग्निमयनेत्रदीप्तीनां घने तेजसि सति व्यक्तिं नागतम् । किं चान्यत्—भ्रुकुटयो भ्रूभङ्गा उष्णीषभूताः शिरोवेष्टनभूता असिताः कृष्णा ये दन्दशूकाः सर्पास्तेषां संबन्धि कुटिलं कृत्वा स्फूर्जदुन्नमयत्फणामण्डलं तैः सामान्यं सादृश्यमानिन्युः । पूर्वत्र वर्णमात्रम्, उत्तरत्र वर्णसंनिवेशावव्यञ्जनकारणम् ॥

अग्रे निर्वर्त्य संवर्तकसलिलमुचः स्पन्दनं स्यन्दनस्य
प्रस्थाने विश्वभर्तुर्विधुरपुरपरिप्लोषरोषग्रहेण ।
श्लिष्यत्सौवर्णकोणप्रतिभटतडितस्तत्क्षणाद्धन्यमानाः
क्षुभ्यद्गम्भीरभेरीपरिकरकरणेरन्तरङ्गीबभूवुः ॥ ६५ ॥

संवर्तके प्रलये सलिलमुचो मेघास्तत्क्षणे प्रस्थानावसर आहन्यमाना अत एव क्षुभ्यन्त्यः शब्दायमाना गम्भीरा भेर्यः पटहास्तेषां परिकरः प्रबन्धस्तस्य करणिः सादृश्यं तस्यान्तरङ्गीबभूवुः । मेघाः पटहाः संभाविता इत्यर्थः । किं कृत्वा । विधुराणि सुजेयानि पुराणि दैत्यास्तेषां प्लोषार्थं दाहार्थं रोषग्रहस्तेन हेतुना हरस्य प्रस्थाने रथ-

स्याग्रे स्पन्दनं चलनं कृत्वा । तथा श्लिष्यन्त्यः सौवर्णकोणप्रतिभटाः सुवर्णमयपटहवादनलगुडिकासमास्तडितो येषां ते । एतेन वक्ष्यमाणार्थोपक्षेपः कृत इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये रथबन्धनं नाम विंशः सर्गः ।

---

एकविंशः सर्गः ।

अथाभ्यमित्रीणमवेक्ष्य शर्वरीकुटुम्बलेखाभरणं गणावली ।
इतस्ततः संनहनोद्यमक्रमादनर्गलव्याप्टततामगाहत ॥ १ ॥

अथ हरममित्राञ्शत्रूनगच्छन्तं दृष्ट्वा संनहने संनद्धत्वे उद्यम उत्साहस्तत्क्रमाद्गणपङ्क्तिरितस्ततोऽनर्गलं निर्विलम्बं व्यापृततां व्यापारमभजत् ॥

न कौतुकं तद्विदलय्य वैरिणो भवस्य वीरैर्यदवापि मङ्गलम् ।
वरूथिनी तस्य हि सा जगत्पतेः सवीरभद्रादित एव पप्रथे ॥ २ ॥

भवस्य वीरैर्भटैः शत्रूञ्जित्वा मङ्गलं प्राप्तं यत्तन्नाश्चर्यम् । हिर्यस्मादर्थे । प्रभोः सा सेना आदितो वैरिदलनात्पूर्वमेव वीरभद्राख्यगणसहिता वीराणां भद्रं मङ्गलं तद्युक्ता [च] प्रथिता । यः पूर्वमेव वीरभद्रसहितस्तस्य शत्रुजयेन वीरभद्रप्राप्तिः किमुच्यत इत्यर्थः ॥

परानपेक्षो विजयः पिनाकिनस्तथापि संवर्मयति स्म तच्चमूः ।
तमोंऽशुमात्रेण विनिघ्नतो रवेः पुरोऽर्ककान्तैरपि किं न दीप्यते ॥ ३ ॥

हरस्य विजयो यद्यप्यन्यं नैवापेक्षते । सर्वेभ्योऽधिकबलत्वात् । तथापि हरसेना वर्मणा संनह्यति स्म । 'सत्यापपाशरूप—'इत्यादिना णिच् । रश्मिमात्रेणान्धकारं वारयतः सूर्यस्याग्रे सूर्यकान्तैरपि किं न दीप्यते । अपि तु दीप्यत इत्यर्थः । पिनाकिन इति विजयानुगुणमभिधानम् ॥

असेर्मयूखैरथ लोहवर्मणा गणो महाकाल इतीन्दुलक्ष्मणः ।
विशङ्कटभ्रूकुटिकान्तिभिश्च स त्विषं स्वनाम्नोऽप्यधिकाधिकां दधौ ॥ ४ ॥

खड्गरश्मिभिस्तथा आयसेन कवचेन तथा विशङ्कटा वक्रा या भ्रुकुटयस्तासामंशुभिश्च महाकाल इत्यन्वर्थान्नाम्नोऽप्यधिकां दीप्तिं महाकालो नाम हरस्य गणोऽवहत् ॥

प्रायेण भेरीरणितैर्घनस्वनैः स्फुटोर्मिभिर्नृत्यति वाहबर्हिणि ।
उपोढदार्ढ्यः शरभूरवोचत स्वमासनस्थैर्यविशेषकौशलम् ॥ ५ ॥

स्तनितसमैः प्रस्थानानकशब्दैर्वाहमयूरे नृत्यं कुर्वति सति धृतदार्ढ्योऽविचलः शरभूः कुमारो निजमासने स्थैर्यविशेषस्तत्र कौशलमदर्शयत् ॥

कृतप्रयाणोऽग्रत एव गच्छतामभूदनर्थाय मतङ्गजाननः ।
प्रचस्खलुस्ते हि पदे पदे गलत्तदीयदानह्रदपङ्किले पथि ॥ ६ ॥

युद्धार्थं गच्छतामग्रे निर्भयत्वात्कृतप्रस्थानः करिमुखो गणपतिरनर्थायाभूत् । हिर्यस्मादर्थे । तदीयो गजमुखसंबन्धी यो दानह्रदो मदप्रवाहस्तेन पङ्कवति मार्गे गच्छन्तः स्खलितवन्तः ॥

तमस्यदीने पृतनारजोपमे प्रभोः स गच्छन्सुरसिन्धुनन्दनः ।
स कुम्भसिन्दूररदाङ्कुरच्छलादभूदिवाग्रे धृतहस्तदीपकः ॥ ७ ॥

प्रभोरग्रे गच्छन्स गाङ्गेयः कटसिन्दूरपूरितदशनाग्रव्याजाद्धृतो हस्तदीपको मार्गसंदर्शनार्थं गृह्यमाणो दीपो येन स इवासीत् । तमस्यदीने घने सति सेनारजोपमे ॥

वहन्विलोलश्रुतितालवृन्ततां समक्षमुक्षन्वमथूदबिन्दुभिः ।
बभूव भूम्ना द्युसरित्सुतो यतां पथि प्रयाणश्रमवैशसच्छिदे ॥ ८ ॥

श्रुती कर्णौ ते एव विस्तारदैर्घ्याभ्यां तालवृन्ते वीजिते विधूतकम्पिते येन तद्भावं बिभ्रत् । तथा वमथुः करसीकरस्तज्जलकणैः समक्षं सम्यगुक्षन्सिञ्चन् । गाङ्गेयो यतां गच्छतां भूम्नातिशयेन प्रस्थानखेदच्छेदायाभूत् । जलसेकव्यजनयोस्तापप्रतिपक्षत्वात् ॥

विलोलकर्णाञ्चलमारुतोद्धतस्वकुम्भसिन्दूररजोविकूणिते ।
स वीक्षितुं वर्त्म तदान्तरान्तरा कथंचिदुन्मीलयति स्म लोचने ॥ ९ ॥

स्वभावाद्विलोलश्चपलो यः कर्णाञ्चलस्तेन मारुतस्तेनोद्धूतं यत्स्वकुम्भसिन्दूररजस्तेन संकुचिते नेत्रे गजमुखो मार्गे मध्ये मध्ये उदमीलयत् । निम्नसंभावनया पतनभयादित्यर्थः ॥

करे गणानां करवालवल्लरीततिः परेषामदिशद्विषव्यथाम् ।
उपेयुषी जङ्गमतां तरङ्गिता हरस्य कण्ठादिव रश्मिसंहतिः ॥ १० ॥

गणानां हस्ते खड्गलतापङ्क्तिः शत्रूणां विषवद्व्यथामदात् । अतः संभाव्यते—जङ्गमत्वात्स्थावरत्वं प्राप्तवती हरकण्ठनिर्गता रश्मिमालेव । अथवा हरस्य कण्ठान्निर्गतांशुपङ्क्तिर्विषव्यथामिव शत्रूणामदात् । येन विषं जीर्णं तस्य वयं किं कुर्म इत्यर्थः । जङ्गमतां प्राप्ता गणानां हस्ते खड्गपङ्क्तिरित्यारोपः ॥

अनीककोलाहलकेलिविस्तरप्रतिश्रुता काहलतां जगाहिरे ।
अपास्तमौनाः पुरतः पुरद्विषो दिशः प्रयाणोत्सवमङ्गलैरिव ॥ ११ ॥

सैन्यकलकलक्रीडाप्रबन्धप्रतिशब्देन हेतुना दिशः काहलतां शब्दायमानत्वमापुः । अतः संभाव्यते—हरस्य प्रस्थानोत्सवगीतैर्हेतुभिस्त्यक्तमौना इव । दानवभयात्स्त्रीत्वव्यवहारावच्छेदात्पूर्वं तासां मौनमासीत् । राजप्रस्थाने च वारनारीगीतस्योचितत्वात् ॥

प्रयाणलीलावसरे पिनाकिनो विवृण्वती वेगनिरङ्कुशां दशाम् ।
पुरश्च मौलौ च सुपर्ववाहिनी विनिद्रकोलाहलतामगाहत ॥ १२ ॥

पिनाकिनः प्रस्थानावसरे सवेगामवस्थां प्रकाशयन्ती सुपर्ववाहिनी देवसेना गङ्गा च पुरो मुकुटे चासंकुचितकलकलतामभजत् ॥

विलासपङ्केरुहसौरभापतद्विशालभृङ्गावलिभिर्विरेजिरे ।
क्व सैन्यसारङ्गदृशोऽपि नोच्छ्वसत्कृपाणरेखैरिव पाणिपल्लवैः ॥ १३ ॥

लीलापद्मे सौगन्ध्येनागच्छन्तीभिर्विस्तीर्णाभिर्भ्रमरपङ्क्तिभिर्हेतुभूताभिः सखड्गैरिव हस्तैः सैन्यस्त्रियोऽपि क्व नादीप्यन्त ॥

पदं चुचुम्ब प्रतिबिम्बिता विभोर्वरूथिनी सा स्फटिकाद्रिसानुषु ।
श्रयन्त्यरातिक्षतितारतम्यतः प्रभावतोऽनेकशरीरतामिव ॥ १४ ॥

स्फटिकाद्रिशिखरेषु प्रतिबिम्बिता सा प्रभोः सेना पदं चुचुम्ब सादरं पस्पर्श । अतः संभाव्यते—अरातीनां शत्रूणां क्षतिर्हननं तत्र तारतम्यमतिवाञ्छा ततो हेतोः प्रभाववशाद्बहुमूर्तितामिव सेवमाना ॥

निनाय माद्यन्सुरसिन्धुनन्दनो बत स्वसेनामपि दौस्थ्यपद्धतिम् ।
तदीयमाघ्राय हि दानसौरभं गजो विदद्रौ क्व न कस्य योधिनः॥१५॥

माद्यन्मदमयो गजमुखः स्वसेनामपि दुरवस्थत्वमनैषीत् । हिर्यस्मादर्थे । कस्य न योधिनः सर्वेषामेव योधानां गजो हस्ती गजेन्द्रमदसौगन्ध्यं घ्रात्वा क्व न विदद्रौ । सर्वत्रैव पलायितः । गजजातेर्गजान्तरगन्धोद्विग्नत्वात् ॥

रवेण भेर्या घननादबन्धुना शिखी विशाखस्य नटत्वमादधे ।
अवाप्य शिक्षामिव तत्क्षणं यतो द्विषत्कबन्धा अपि नृत्तमादधुः ॥१६॥

स्तनितसदृशेन पटहशब्देन विशाखस्य कुमारस्य शिखी मयूरो नटत्वमादधेऽनृत्यत् । यतः शिखिनः शिक्षामिव प्राप्य द्विषतां कबन्धा अपि नृत्तमादधुर्ननृतुः ॥

धृता रथाङ्गैः स्फटिकारुणोपलप्रभाविभागातिथिभिर्नगाध्वसु ।
रथाः परेषामपि तत्र भेजिरे विनिद्रचन्द्रार्कमयारितामिव ॥ १७ ॥

हरादन्येषामपि रथा विनिद्रावुदितौ यौ चन्द्रार्कौ तन्मयमरि चक्रं यस्य तद्भावमिव दधुः । यतो रथाङ्गैश्चक्रैरूढाः । स्फटिकानि चारुणोपलाः पद्मरागास्तेषां प्रभास्तासां विभागस्यातिथिभिः परिचितैः । स्फटिकचक्रत्वाच्चन्द्रत्वं पद्मरागचक्रत्वादर्कत्वमिति प्रभाणां विभागः ॥

अहो महो दैत्यजनाभिषेणने तदीश्वरस्यानुपमश्रि पप्रथे ।
रथाङ्गमूर्ती दिनकृन्निशाकरौ विसृत्वरे यत्प्रसरे ममज्जतुः ॥ १८ ॥

त्रिपुरयात्रायां हरस्य तेजोऽनुपमा साम्यरहिता श्रीर्यस्य तत्पप्रथे । विसरणशीले यत्प्रसरे तेजःस्फारे चन्द्रार्कौ मग्नौ ॥

उपर्यहीन्द्रो गिरिशस्य भूषणं बभौ रथात्मा तदधो वसुंधरा ।
अथास्त तत्पाददशेन्दुसूर्ययोरहो तदा विश्वविपर्ययोऽभवत् ॥ १९ ॥

अहो तदा विश्वस्य विपर्यासोऽभूत् । यत उपरिष्टाच्छेष आसीत् । यतो हरस्यालंकारः । तस्य शेषस्याधो रथरूपा भूमिः । चन्द्रार्कयोस्तत्पाददशा रथचरणत्वम् । सदा शेषोऽधः, तदूर्ध्वे भूः, तदुपरि चन्द्रार्कौ । तदा न तथेति विश्वविपर्ययः ॥

हठाद्विनिर्यन्नथ कोऽपि मत्सरात्कराद्विकृष्यैणदृशोंऽशुकाञ्चलम् ।
जवेन गत्वापि मनाग्वतावशो बभूव वीप्सावलितार्धकंधरः ॥ २० ॥

सङ्ग्रामगमनमनिच्छन्त्या योषितो हस्तात्स्ववस्त्रान्तं नीत्वा हठान्निर्गच्छन्कश्चित्ततो वेगेन किंचिद्गत्वा वीप्सया पौनःपुन्येन वलिता तिर्यकृतार्धकंधरा येन सोऽभूत् । यतोऽवशो गन्तुमशक्तः । स्नेहस्मरणेन स्वातन्त्र्यनिरोधात् ॥

हठोत्कया कश्चन कान्तया रहः कृतावगूहः प्रतिमुक्तिसिद्धये ।
निमज्ज्य तत्स्पर्शरसामृतह्रदे बतोत्तरीतुं सहसैव नाशकत् ॥ २१ ॥

हठेनात्यर्थमुत्कोत्कण्ठा तया हेतुभूतया प्रतिमोचनार्थं स्त्रिया कृतालिङ्गनः कश्चित्तस्याः स्पर्शरस एवामृतह्रदस्तत्र निमज्ज्य सहसोत्तरीतुं नाशकत् । सहसैवेति वचनं क्षणान्तरे उत्तरणप्रतिपादनार्थम् ॥

चचाल कश्चित्परितोषविह्वलैः पदैः प्रवीरो धृतधैर्यविप्रुषः ।
स्ववल्लभाया निविडावगूहनामवाप्य पाथेयमिवाधरामृतम् ॥ २२ ॥

धृता धैर्यस्य विप्रुट् अंशो यया तस्याः स्ववल्लभाया निबिडं कृत्वालिङ्गनात्पाथेयं श्रमहरमिवौष्ठामृतं प्राप्य आनन्दसंभ्रान्तैः पदैः कश्चिद्रणाय चलितः ॥

विजित्वरः सत्वरमेषि चेच्छिवं न चेत्पुनर्नौ त्रिदिवेऽस्तु संस्तवः ।
इतीरयित्वा तरलायितेक्षणा कथंचिदाप्रष्टुमियेष वल्लभम् ॥ २३ ॥

प्राप्तविजयस्त्वं यद्येषि तदा मङ्गलम् । न चेत्सङ्ग्रामादेषि तदावयोः स्वर्गे संगमः । अनेन मरणव्यवसायः सूचितः । इत्युक्त्वा काचित्कथंचित्प्रियं प्रतिमोक्तुमैच्छत् ॥

प्रपद्य नाकं करवालवर्त्मना सुपर्वनारीः परिरब्धुमिच्छसि ।
न तत्सहे तेऽहमिति प्रियोऽन्यया न्यरुध्यतेर्ष्याकलुषाक्षरैः पदैः ॥२४॥

खड्गमार्गेण स्वर्गं प्राप्य देवस्त्रीरालिङ्गितुमिच्छसि । तद्देवयोषिदालिङ्गनं न सहे । इतीर्ष्यया मत्सरेण कलुषाणि रूक्षाण्यक्षराणि येषां तैः पदैः करणभूतैरन्यया कथंचिन्निरुद्धः ॥

रुरोध काचिद्दयितं ततोऽश्रुभिः पिधीयमानाकुललोचनाभवत् ।
उपांशु निर्गत्य ययौ स संयुगे तदन्तरे वीररसैककिंकरः ॥ २५ ॥

काचित्प्रियमरुणत् । ततो बाष्पैराच्छाद्यमानव्याकुलनेत्रा साभूत् । तदन्तरे तच्छिद्रकाले उपांशु शनैर्निर्गत्य सङ्ग्रामाय गतः । यतो वीररसस्यैककिंकरः । अस्यामश्रुच्छादितनेत्रायां गन्तुं मम समय इति विचार्य गतः ॥

हठात्प्रयान्तं प्रियमङ्गनेतरा विमुञ्चती दैन्यसखे विलोचने ।
सितासितापाङ्गतरङ्गितांशुभिर्जुगोप रक्तेव नवेन वर्मणा ॥ २६ ॥

प्रियगमनेन सदैन्ये नेत्रे भर्तरि स्नेहवशात्किरन्ती काचिद्धठाद्गच्छन्तं वल्लभं नवेन कवचेनेव जुगोप ररक्ष । सितासिता अपाङ्गतरङ्गिता येंऽशवस्तैः । यतो रक्ता सानुरागा । कटाक्षकान्तिव्याजादायसं कवचमिव पर्यधापयदित्यर्थः ॥

अशक्नुवन्त्यस्तरसेतराः प्रियान्विमोक्तुमिन्दीवरदीर्घदृष्टयः ।
प्रतुष्टुवुः साध्वसगद्गदैः पदैः कथाश्चिरायानुपयोगिनीरपि ॥ २७ ॥

वल्लभान्सहसा प्रतिमोक्तुमसमर्था अन्या भयवशेन श्लिष्टैः पदैः सङ्ग्रामप्रस्तावानुचिताः कथाः प्रारेभिरे । विलम्बनार्थमिति भावः ॥

परः प्रियायाः प्रतिमुक्तिलालनाकृते स्थितोऽग्रे मुहुरार्तचेतसः ।
सरूपमुत्खातकृपाणरश्मिभिर्दृशोरुवापेव वियोगजं तमः ॥ २८ ॥

विरहभयाद्दीनचित्ताया वल्लभायाः प्रतिमोचने लालनायाः करणार्थं पुरः स्थितः कश्चिदुत्खातस्य कोषान्निष्कृष्टस्य रश्मिभिर्हेतुभिः सरूपं रूपसहितं विरहजमन्धकारमिवोप्तवान् । अत्र खड्गप्रभास्तमस्त्वेन संभाविताः ॥

विलिप्यमानाननमोजसः कणैर्जयश्रियः संवननौषधैरिव ।
स्थिरानुरागव्रततत्पराः पराः स्वयं प्रियं वामदृशोऽनुवव्रजुः ॥ २९ ॥

जयलक्ष्म्या वशीकरणौषधैरिवौजसः कणैर्विलिप्यमानमुखं प्रियं दृढानुरागव्रते तत्पराः सक्ताः काश्चित्स्त्रियः स्वयं वल्लभमनुजग्मुः ॥

सितातपत्रैः शबलं विदिद्युते विकोपसैन्यासिविसृत्वरं महः ।
रथीभवन्त्यां भुवि शेषमूर्धभिः सहैव पातालतमः समुद्गतम् ॥ ३० ॥

आकृष्टेभ्यः खड्गेभ्यो निर्गच्छंस्तथा श्वेतातपत्रैश्चित्रं तेजो दिद्युते । संभाव्यते—भुवि रथरूपायां सत्यां शेषफणाभिः सहोत्थितं पातालान्धकारमिव ॥

अनीकिनीवीरुधि गुच्छविभ्रमो भवस्य बभ्रे धवलोष्णवारणैः ।
अनेकनिस्त्रिंशगभस्तिसंस्तवादकाण्डविस्तारितषट्पदैरिव ॥ ३१ ॥

भवस्य संबन्धिनी अनीकिनी सेना सैव वीरुल्लता तस्यां सितच्छत्रैः स्तबकभावः प्राप्तः । बहुखड्गप्रभासङ्गाद्भूतभ्रमरैरिव । गुच्छेषु हि भ्रमरैर्भाव्यम् ॥

प्रभोः पुरो दिव्यवचोऽधिदैवतव्रतप्रथामात्तवतः पिनाकिनः ।
गणैर्विवव्रे बहुधातुलक्षणप्रकर्ष एवानवधिक्रियात्मभिः ॥ ३२ ॥

दिव्यं वचः संस्कृतवाणी तत्राधिदैवतव्रतप्रथामधिष्ठातृत्वं गृहीतवतो भगवतोऽग्रे गणैरतुलस्योत्साहप्रधानत्वादनन्यसदृशस्य सेवाक्षणस्य प्रकर्षो बहुधा बहुभिः प्रकारैर्विवव्रे धृतः। अनवधिरियत्तारहिता क्रिया रणानुगुणो व्यापारो यस्य स आत्मा येषां तैः। अथ च गणैर्भूप्रभृतिभिर्बहूनां धातूनां यल्लक्षणं धर्मस्तत्प्रकर्षो विव्रियते। क्रिया साध्यमानैकरूपा सा येषां तैः। दिव्यानां दिवि निवसतां वचसि दैवतभावं गृहीतवत इति वा मुख्यार्थे व्याख्येयम्॥

नवान्तकभ्रूकुटिभङ्गिसङ्गिभिर्व्यलोकि सेना तरवारिडम्बरैः।
विचेष्टितं पत्युरवेत्य बिभ्रती विभूषणं कालभुजंगमैरिव॥ ३३॥

यमभ्रूभङ्गसदृशैरेकधारखङ्गप्रपञ्चैर्हेतुभिः स्वामिनोऽभिप्रायं बुद्ध्वा कृष्णसर्पैर्भूषणमिव कुर्वती सेना जनेन दृष्टा। अत्र तरवारीणां भुजंगमत्वेनोत्प्रेक्षणम्॥

मृगाङ्कमौलेर्व्रजतो वसत्यधो रथाङ्गताभाजि पतङ्गमण्डले।
प्रसृत्य तद्रश्मिभिरुष्णवारणं प्रपञ्चितच्छायमुपर्युपर्यभूत्॥ ३४॥

चक्ररूपेऽर्कबिम्बेऽधोगते सति तत्प्रभाभिर्हरस्य च्छत्रमुपर्युपरि कृतच्छायमभूत्। बुध्नेऽर्कांशुसङ्गाच्छायाया उपरिवर्तित्वम्॥

जगत्प्रभोः पाण्डुरमुष्णवारणं कचत्किरीटादुपरि प्रतिष्ठया।
अदर्शि बद्धेर्ष्यतयोपगत्वरद्वितीयपूर्णेन्दुधिया शिखेन्दुना॥ ३५॥

मुकुटादुपरिस्थित्या दीप्यमानं तथा श्वेतं छत्रं चन्द्रेणागच्छदपरचन्द्रभ्रान्त्या समत्सरमदर्शि। 'किलेन्दुना' इति पाठः। 'शिखेन्दुना' इति पाठे द्वितीयपूर्णेन्दुशब्दस्यासंगतिः स्यात्॥

खरांशुचन्द्रौ समसप्तकस्थितौ रथेऽवधार्याधिकगर्वदुर्धरः।
शरीभवन्मूर्तिमवेक्ष्य शार्ङ्गिणं विधुंतुदोऽभूत्पुनरुद्भवद्भयः॥ ३६॥

सूर्येन्दू रथचक्रतालक्षणतुल्यकार्यकरणात्परस्परं संमुखतया स्थितौ दृष्ट्वा राहुर्बहुगर्वेण दुर्धरोऽभूत्। समसप्तकस्थितयोरर्केन्द्वोरुपरागसंभवात्। विष्णुं बाणरूपं दृष्ट्वा राहुः पुनरुद्भवद्भयं यस्य सोऽभूत्। विष्णोरेव राहोर्भयं युक्तम्। विशेषेण शररूपात्॥

रथः पथा नाकसदां स्यदाकुलं प्रतिष्ठमानः स पिनाकधन्वनः।
चकार चक्रत्वजुषोऽप्यहो मुहुर्नियोगशून्यं न पदं विवस्वतः॥ ३७॥

स्यदेन वेगेनाकुलं कृत्वा आकाशेन प्रस्थानं कुर्वन्स हरस्य रथश्चक्ररूपस्यापि सूर्यस्य नियोगेनाधिकारेण रहितं पदमाकाशं नाकरोत्। चक्ररूपस्याप्यर्कस्याकाशेनैव गमनात्॥

अरिष्टमन्यत्किमतोऽपि मृग्यतां सुरद्विषां यद्गगनाग्रसङ्गिनि।
रथे विभोरात्तरथाङ्गरूपयोः सहोदयोऽभूत्तपनैणलक्ष्मणोः॥ ३८॥

जनेन दैत्यानामन्यदमङ्गलं किमन्विष्यताम् । नभः सक्ते रथे गृहीतचक्ररूपयोः सूर्येन्द्वोः सहोदयो यदभूत् ॥

तदा स्यदः स्यन्दनमिन्दुलक्ष्मणस्तथाध्यशेतानवधौ दिवः पथि ।
यथा गणानां रणतारतम्यतो मनोऽपि पश्चाच्चरतामशिश्रियत् ॥ ३९ ॥

अनवधावियत्तारहिते आकाशे हररथो वेगं तथाश्रयत्, यथा युद्धश्रद्धाधरमपि गणानां चेतः पश्चादगमत् । मनसोऽप्याशु रथोऽगमदित्यर्थः ॥

रथाङ्गचन्द्रार्ककराग्रसंग्रहप्रसक्तशीतातपदैन्यहानये ।
गणाङ्गनानां हरपत्रपार्श्वयोः सपौनरुक्त्याः परिवृत्तयोऽभवन् ॥ ४० ॥

चक्ररूपयोश्चन्द्रार्कयो रश्मीनां योगेन हेतुना प्रसक्तौ यौ शीतातपौ ताभ्यां दैन्यं तन्निवारणाय हररथपार्श्वयोः परिवर्तनानि गणस्त्रीणां पुनःपुनरभवन् । एकत्र पार्श्वे तापे लग्ने सति गणस्त्रियोऽन्यं पार्श्वमगमन्, शैत्यदैन्यात्ततोऽप्यक्रान्तिक्रमित्यर्थः ॥

अकाण्डनैविड्यनिपीडनस्फुटद्विलासमुक्तासररत्नरेणुभिः ।
मरुद्विकीर्णैः कटकैणचक्षुषां रजोऽसृजद्व्योमगतापि सा चमूः ॥ ४१ ॥

अकाण्डेऽकाले नैविड्येन संकटत्वेन स्फुटंश्चूर्णीभवन्यो विलासमुक्तासरो लीलामुक्तादाम तद्रजोभिर्हेतुभिराकाशस्थापि सेना रजोऽसृजत् ॥

सा सोमार्धशिरोमणेरगणितैः शार्ङ्गैः कृतालिङ्गना
भङ्गिं प्राप पताकिनी रिपुजनीवैधव्यवैक्लव्यभूः ।
आरूढैररिवीरलोककदनानन्ताभियोगान्तक-
क्रीडावाहलुलायसंहतिहठाभिव्यक्तशृङ्गश्रियम् ॥ ४२ ॥

अरिवीरलोकस्य कदनं मारणं तत्रानन्ताभियोगेऽभ्युद्यतो योऽन्तको यमस्तस्य क्रीडावाहभूता लुलायसंहतिर्महिषपङ्क्तिस्तस्या हठेनाभिव्यक्तानां शृङ्गाणां श्रियमारूढैः । महिषशृङ्गसमैरित्यर्थः । शार्ङ्गैः कोदण्डैः कृतास्पदा हरस्य सेना शोभां प्रापत् । रिपुजनीनां शत्रुवधूनां वैधव्येन भर्तृवधेन वैक्लव्यस्य भूः स्थानम् ॥

द्राक्कर्तास्मि स्मयरसजुषामद्य शान्तिं पुराणा-
मेवं संधामनुसृतवतस्तर्जनीवान्तकस्य ।
तत्रैकैको गिरिशकटके पार्षदानां करेषु
प्रासस्त्रासव्यसनगुरुतामाससाद द्विषत्सु ॥ ४३ ॥

तत्र हरसैन्ये गणानां हस्तेष्वेकैकः प्रास आयुधविशेषो रिपुत्रासव्यसने गुरुतामुपदेशकतां प्राप । भयदुःखे कृतवानित्यर्थः । अतः संभाव्यते—स्मयरसं दर्पं धारयतां

त्रिपुराणामद्य तूर्णं शान्तिं निर्वाणं कर्तास्मीत्येवं संधां प्रतिज्ञां कुर्वतो यमस्य तर्जनी प्रदेशिन्यङ्गुली । तर्जनीति प्रकृतानुगुणमभिधानम् । प्रासान्दष्ट्वेवारयो मुमुहुरित्यर्थः ॥

नासीरपार्षदभटेषु ततः प्रतोलीं
लोलीकृतासिषु हठादधिरूढवत्सु ।
वामभ्रुवः पुरपुरेष्वभवन्नकाण्डे
मग्ना भियेव निजबाष्पजलह्रदेषु ॥ ४४ ॥

नासीरः सेनामुखं तत्र ये पार्षदभटा गणयोधास्तेषु हठाद्बलेन प्रतोलीं रथ्यामाश्रितवत्सु सत्सु भीत्येव त्रिपुरनगरेषु स्त्रियो निजाश्रुप्रवाहमग्ना अभवन् । एते वीरा अस्मदीयभर्तॄन्हनिष्यन्तीति पुरस्त्रियोऽरुदन्नित्यर्थः ॥

वीरैस्तस्य प्रकृतिचपलैर्विश्वजैत्रस्य शंभो-
र्विस्रम्भासूत्रितनवनवोपप्लवेष्वन्तिकेषु ।
द्वारश्लिष्टाररपुटतया ताः पुराणां पुराणां
पत्न्यो मीलद्दृश इव बभुर्भीतिमोहग्रहेण ॥ ४५ ॥

विश्वजैत्रस्य सर्वजेतुः शंभोः संबन्धिभिर्वीरैर्विस्रम्भेण निर्भयमासूत्रिताः कृता नवनवा उपप्लवा उपद्रवा येषु तेष्वन्तिकेषु निकटस्थानेषु सत्सु द्वारश्लिष्टानि पिहितान्यररपुटानि द्वाःपट्टानि यस्य तद्भावेन हेतुना नगर्यो भीतिमूर्छापातेन संकुचद्दृश्य इव बभुः । विस्रम्भासूत्रितेति यतिभङ्गोऽनुप्रासानुरोधादङ्गीकृतः ॥

आक्रामत्सु भटेषु बालशशभृन्मौलेर्बलादन्तिकं
त्रासोद्भ्रान्तपिधीयमानविकटद्वाराग्रपट्टस्वनैः ।
दूरोत्क्षिप्तभुजायमानतनुभिः सीमन्त्यमाना ध्वजै-
रब्रह्मण्यमुदैरयन्निव पुरस्ता नाकसद्वैरिणाम् ॥ ४६ ॥

हरस्य योधेषु हठात्समीपं जयत्सु सत्सु त्रासोद्भ्रान्त्या भयचकितत्वेन पिधीयमानानि श्लिष्यमाणानि विकटानि यानि द्वाराग्रपट्टानि तेषां शब्दैर्हेतुभिर्देवद्विषां नगर्योऽब्रह्मण्यमुपद्रवनिवेदकं शब्दमुदैरयन्नकुर्वन् । दूरमुत्क्षिप्ता अत एव भुजायमाना भुजसमास्तनवो मूर्तयो येषां तैर्ध्वजैः सीमन्त्यमाना विभक्तीक्रियमाणाः । बलिनाक्रम्यमाणश्चोत्क्षिप्तभुजं पूत्करोति ॥

विशति शशिकलाशिखस्य सैन्ये त्रिपुरपुरेषु भयैकदन्तुरेषु ।
ध्वजसिचयचयोऽपि वातधूतो रभसमिवाध्यवसत्पलायनाय ॥ ४७ ॥

हरस्य कटके प्रविशति सति त्रिपुरनगरेषु भयैकव्याप्तेषु सत्सु ध्वजवस्त्रसमूहोऽपि

पलायनार्थमिव त्वरामाश्रयत् । यतो वातधूतो वायुकम्पितः । एतेनाप्यसुराणामनिमित्तं सूचितम् । 'उपान्वध्याङ्वसः' इति सकर्मत्वम् ॥

शंभोः सेनापटहरणिताडम्बरः कम्पसंप-
त्संपर्कायाजनि स तुहिनप्रक्रियामाददानः ।
यस्मिन्नन्तर्विशति दितिजप्रेयसीनां न भूयः
कर्णे रूढिप्रणयमपुषन्शेखरेन्दीवराणि ॥ ४८ ॥

हरस्य सेनायाः पटहरटितस्यानकध्वनेराडम्बरः कम्पसंपदः संपर्कायाजनि जातः । अत एव हिमसमकार्यकारित्वं गृह्णन् । यस्मिन्पटहशब्दप्रबन्धेऽन्तर्विशति सति दैत्यस्त्रीणां कर्णे रूढत्वं भूषणकर्णोत्पलानि नागमन् । हेमन्ते चोत्पलानां प्ररोहाभावः ॥

विशद्गिरिशसैनिकप्रवरपाणिहेलावल-
त्कृपाणकिरणच्छटापिहितसंकुचन्मूर्तयः ।
पुरः सुरविरोधिनां रुरुधिरे चिरेणाननं
स्पृशन्त्य इव तत्क्षणं व्यतिकरेण कालस्य ताः ॥ ४९ ॥

विशन्तो ये हरसेनाचरास्तेषां पाणिषु वलन्तो वल्गन्तो ये कृपाणाः खड्गास्तेषां किरणच्छटाभिः पिहिताश्छादिता संकुचन्ती मूर्तिर्यासां ता दैत्यानां नगर्यस्तत्क्षणं वृत्तान्तेन यमस्य मुखं विशन्त्य इवारोचन्त । कालस्येति प्रकृतानुगुणम् । खड्गांशुसंपर्को यममुखप्रवेशरूपत्वेनोत्प्रेक्षितः ॥

सस्रंसे श्रवणोत्पलं विजघटे कण्ठादथैकावली
श्रोत्राभ्यां मणिकेलिकुण्डलयुगं विभ्रश्य दूरं ययौ ।
इत्थं दानवसुभ्रुवां हरचमूनादश्रुतौ पप्रथे
त्रासेनैव भविष्यदक्षतबृहद्वैधव्ययोग्यः क्रमः ॥ ५० ॥

दैत्यस्त्रीणां कर्णोत्पलं स्रस्तम् । कण्ठादेकावली मुक्तासरो विजघटे च्युतः । रत्नकुण्डलद्वयं कर्णाभ्यां पतित्वा दूरमगमत् । एवं हरसेनासिंहनादाकर्णने दानवस्त्रीणां भयेनैव भाव्यक्षतं संपूर्णं यद्वैधव्यं तत्र योग्यः क्रमोऽवस्था पप्रथे संपन्नः । वैधव्ये हि स्त्रियः कर्णोत्पलादि परिहरन्ति ॥

वाणीभूतसुरारिवैरिणि लसत्सारथ्यपथ्यस्थिति-
ब्रह्मण्यागतवत्युपोढसुदृढाटोपं पुरद्वेषिणि ।
आसन्ने तदनीकिनीपरिकरे सङ्ग्रामरङ्गोहिणां
क्षुभ्यत्सत्त्वमुदस्तदुःसहरजो रोहत्तमश्राभवत् ॥ ५१ ॥

बाणीभूतः शररूपः संपन्नः सुरारिवैरी नारायणो यस्य । तथा लसन्ती सारथ्यपथ्या सारथिभावपथानपेता स्थितिर्यस्य स ब्रह्मा यस्य । तस्मिन्हरे धृतस्थिराडम्बरमागतवति सति तस्य हरस्यानीकिनीपरिकरे सेनाडम्बर आसन्ने सति; असुराणां स्थानं क्षुभ्यन्ति सत्त्वानि प्राणिनः सत्त्वं च गुणो यत्र, तथा उदस्तमुत्थितं रजः पांसुर्गुणश्च, तथा रोहत्तमोऽन्धकारो गुणश्च यत्र तदभवत् । हरिब्रह्मसंबन्धात्सत्त्वाद्युक्तिसंगतिः ॥

उद्गच्छदुच्छ्रिदुरकच्छपकेतुवैरि-
दुर्वारसैन्यजरजःपरिरम्भणेन ।
गण्डस्थलीषु पुरविष्टपसुन्दरीणां
जज्ञेतरां विरहपाण्डिमपूर्वरङ्गः ॥ ९२ ॥

कच्छपो मीनः स ध्वजो यस्य स कामस्तस्य वैरी हरस्तस्य दुर्वारं यत्सैन्यं तस्माज्जातमुद्गच्छदुतिष्ठद्यद्रजस्तत्संनिपातेन पुरस्त्रीणां कपोलेषु विरहेण पाण्डुत्वस्य पूर्वरङ्गो जातः ॥

इत्थं सैन्ये धरित्रीधरवरदुहितृप्राणनाथस्य तस्मि-
न्नासन्ने दानवानां पुरि परिचितितामाससाद प्रसादः ।
येनाकाण्डप्रकम्पाकुलिततनुलताः पौरपारिप्लवाक्ष्य-
स्त्रासेनेवोपभुक्ता दधुरधिकतरस्वेदरोमाञ्चचर्चाम् ॥ ९३ ॥

गौरीपतेः कटके एवं निकटं प्राप्ते सति प्रसादोऽभावः (?) परिचयं प्रापत् । येन हेतुना त्रासेन भयेनेवोपभुक्ताः सर्वाङ्गव्याप्ताः नायकव्यवहारसमारोपात्कम्पिताश्च कम्पव्याकुलदेहाः पौरस्त्रियोऽधिकयोः स्वेदरोमाञ्चयोश्चर्चां दधुरधारयन् । कृतोपभोगाश्च स्त्रियः कम्परोमाञ्चयुक्ता भवन्तीति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकवि-
राजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
गणप्रस्थानवर्णनं नामैकविंशः सर्गः ।

---

## द्वाविंशः सर्गः ।

तन्निशम्य पुरवैरिणो बलं सर्वतोऽप्यभिसरत्पुरः पुरीः ।
मन्दिरेषु सहसैव जज्ञिरे गाढरोषपरुषाः सुरद्विषः ॥ १ ॥

पुरवैरिणो हरस्य तद्बलं सर्वतोऽपि पुरीर्नगरीः स्त्रीलिङ्गत्वान्नायिकाव्यवहारयोग्या अभिसरद्गच्छद्दृष्ट्वा स्वगृहेष्वसुरा गाढकोपेन परुषा उल्बणा जाताः ॥

अप्रयुक्तवति चन्द्रशेखरे बाणमग्निमयमप्यनर्गलम् ।
पूर्वमेव दितिजा निजक्रुधा दह्यमानतनवोऽवतस्थिरे ॥ २ ॥

हरे आग्नेयं शरमक्षिपत्यपि सति प्रागेव दैत्या दह्यमानवपुषः क्रुधासन् ॥

पश्यतां स्मयरसेन दोर्युगं बिम्बिता भ्रुकुटयोऽसवर्त्मनि ।
स्वर्द्रुहां हठगलग्रहोच्छ्वसत्कालपाशकरणिं प्रपेदिरे ॥ ३ ॥

दर्परसेन हेतुना भुजद्वयं वीक्षमाणानां स्वर्द्रुहामसुराणामंसेषु प्रतिबिम्बिता भ्रूभङ्गा हठेन कण्ठरोधार्थमुच्छ्वसतां यमपाशसर्पाणां साम्यमापुः । उपमोपक्रमोत्प्रेक्षेयम् ॥

जृम्भमाणकटुकोपदारुणास्तेऽरुणारुणमुखत्विषोऽभवन् ।
कल्पितैर्हरशराग्निभीतितो रक्तचन्दनविलेपनैरिव ॥ ४ ॥

जृम्भमाणः कटुर्दुःसहो यः कोपस्तेन दारुणास्ते दैत्या अरुणवदरुणा मुखत्विड्येषां तेऽभवन् । अतः संभाव्यते—हरशराग्निभयात्कल्पितै रक्तचन्दनाङ्गरागैरिव । चन्दनं हि शीतवीर्यम् ॥

तैः कृतान्तकरपाशपन्नगस्फारितस्फुटफणागणात्मसु ।
शोणकान्तिकृतवह्निवृष्टयो दृष्टयो मुमुचिरेऽसियष्टिषु ॥ ५ ॥

तैरसियष्टिषु दृष्टयो मुमुचिरे मुक्ताः । शोणकान्त्या कृता वह्निवृष्टिर्याभिस्ताः । अग्निवद्दुःसहा इत्याशयः । कृतान्तस्य करे पाशपन्नगास्तैः स्फारितो योऽसौ फणागणः स आत्मा यासामिति प्रहर्तृभावत्वानुगुण्याददतिशयभीषणत्वं प्रतिपादितम् ॥

निर्गमोन्मुखरमाकुलीभवद्विष्टराम्बुरुहचुम्बिता इव ।
बिम्बितारुणविलोचनास्तदा तैरवाहिषत खड्गयष्टयः ॥ ६ ॥

निर्मलत्वाद्बिम्बितान्यरुणानि विलोचनानि यासु ताः खड्गयष्टयस्तैरसुरैरवाहिषत । अतः संभाव्यते—निर्गमे उन्मुखी या रमा तस्या आकुलीभवद्यद्विष्टराम्बुरुहमासनपद्मं तेन चुम्बिता इव । लक्ष्म्या निर्गमोन्मुखत्वं भाविनाश्रयनाशेन भयात् ॥

भ्रूकुटीपरिणतेरुपागता निर्जिहानबहुशाखतामिव ।
वर्धमानहठरोपदुर्धरैस्तैः क्रुधा दुधुविरेऽसिवीरुधः ॥ ७ ॥

भ्रूभङ्गप्रतिबिम्बनान्निर्जिहाना उत्पन्ना बहवः शाखा यस्य तद्भावमिवोपगतास्तैः क्रुधा खड्गलताः कम्पिताः । वर्धमानेन हठरोषेण दुस्तरैः ॥

कस्यचित्करविघट्टनस्फुटत्कुट्टिमाग्रविवरं वरक्रुधः ।
तत्क्षणग्रसनलालसान्तकव्यात्तवक्त्रकुहरायितं दधौ ॥ ८ ॥

वरक्रुधः कस्यचित्करविघट्टनेन स्फुटद्यत्कुट्टिमाग्रविवरं कर्तृ तत्क्षणं ग्रसने लालसो योऽन्तकस्तेन व्यात्तमुद्घाटितं वक्त्रकुहरं तद्वदाचरितं दधौ ॥

कोऽपि कोपतरलाग्रपाणिना घट्टयन्नसकृदंसमण्डलम् ।
गन्तुमन्तकपुरं पुरः स्वयं निर्ममे पटहताडनामिव ॥ ९ ॥

कोपेन तरलश्चपलो योऽग्रपाणिस्तेन पुनः पुनः स्कन्धमण्डलं घट्टयन्कोऽपि पटह-ताडनामानकध्वनिमिव स्वयमकरोत्। अन्तकपुरं यमनगरं गन्तुम्। अन्तकपुरगमन-समये पुरः पटहस्ताड्यत इत्याचारः॥

नर्तयन्नरि करेण कश्चन व्रश्चनाय परिपन्थिनां बभौ।
आत्मनो यमपथप्रवृत्तये सज्जयन्नवरथक्रियामिव॥ १०॥

परिपन्थिनां वैरिणां व्रश्चनाय च्छेदार्थमरि चक्रं करेण नर्तयन्कश्चिद्बभौ। अतः संभाव्यते—यमपथे प्रवृत्तिस्तदर्थमात्मनो नवरथक्रियां सज्जयन्सज्जीकुर्वन्निव॥

मृद्नतः करयुगं मिथोऽग्रतस्तद्भुवा विततधूमरेखया।
प्रापि कस्यचन बन्धनोन्मुखप्रेतराट्प्रहितशृङ्खलालिपिः॥ ११॥

क्रुधा मिथः करयुगमं मृद्नतो मथ्नतः कस्यचित्तद्भुवा मथनजातया धूमरेखया बन्ध-नोन्मुखेन प्रेतराजा यमेन प्रहिता या शृङ्खला तद्भ्रमः प्रापि प्राप्तः। यमशृङ्खलावद्भयंकरी धूमरेखासीदित्यर्थः॥

कस्यचिद्वपुषि तत्क्षणस्फुटद्रूढपूर्वजरठव्रणस्त्रजः।
सत्वरापसृतिसिद्धये बहुद्वारविभ्रममबिभ्रत श्रियः॥ १२॥

कस्यापि शरीरे तत्क्षणं स्फुटन्त्यो रूढपूर्वा जरठा [या] व्रणस्रजो बहुद्वाराणां [टङ्कं] सादृश्यमधारयन्। द्वारवद्व्रणानां विवृतत्वमभूदित्यर्थः। श्रियो लक्ष्म्याः सत्वरमपस-रणसिद्ध्यर्थमित्युत्प्रेक्षणम्। व्रणानां स्फुटितत्वं वीररसपूरितत्वेनाङ्गानां विकासात्॥

मण्डलाग्रमुरुकोपकोटरात्केनचिद्रणरसेन कर्षता।
कालसूत्रघटनेव सर्वतस्तन्मरीचिभिररच्यतात्मनः॥ १३॥

उरोर्महतः कोपकोटरात्परिवारान्मण्डलाग्रं खड्गं कर्षता केनचित्खड्गांशुभिः करणै-रात्मनः कालसूत्रघटनेव यमसूत्रपात इव कृतः। खड्गरश्मयो यमवास्तुसूत्रत्वेन संभा-विता इत्यर्थः॥

केचिदुच्छ्वसितघर्ममार्जितैरङ्गरागघुसृणैरितस्ततः।
उच्छलद्भिरचिराद्गलिष्यतां पूर्वरङ्गमसृजामिवासृजन्॥ १४॥

स्वेदगलितैरङ्गरागैर्हेतुभिः पतिष्यतां रुधिराणां पूर्वरङ्गमिव केचिदसृजन्॥

कोऽपि पाणिधृतखड्गतेजसां निर्झरैः क्षणविनिह्नुताननः।
सिंहिकासुतकबन्धशङ्कया भास्वतः कृतभयो व्यभाव्यत॥ १५॥

पाणिना धृतो यः खड्गस्तत्तेजसां निर्झरैः प्रवाहैः क्षणं छादितमुखः कोऽपि सिंहि-कासुतस्य राहोः कबन्धः शिरोरहितकायस्तत्संभावनया भास्वतः सूर्यस्य कृतभयो व्यभाव्यत॥

कोपपाटलिमसंविभक्ततां नीयमान इव गण्डरेखया ।
कस्यचिद्वदनतः श्रमाम्बुनो डम्बरः सघुसृणोद्गमोऽगलत् ॥१६॥

कस्यापि मुखात्सकुङ्कुमः स्वेदजलप्रबन्धोऽगलत् । अतः संभाव्यते—गण्डरेखया कोपारुणत्वसंविभागं नीयमान इव । गण्डरेखया स्त्रीलिङ्गत्वान्नायिकास्थानीयया संविभक्तः । कृतोपभोग इति च लेशतोऽर्थः ॥

ते ततो वपुषि लोहनिर्मितैर्वर्मभिः प्रकृतिमेचका बभुः ।
नूतनाम्बुधररञ्जिताञ्जनक्ष्माधरभ्रमविधानबन्धवः ॥ १७ ॥

प्रकृत्या मेचकाः कृष्णास्ते लोहकङ्कटैर्बभुः । नूतनैः सजलैरम्बुधरैर्मेघै रञ्जितो योऽञ्जनाद्रिस्तद्भ्रमकारिणः ॥

कल्पितश्चिरमयोमयोऽप्यहो स्वर्द्रुहां समरचेलसंचयः ।
कोपपाटलविलोचनत्विषा मङ्क्षु वध्यपटतामिवापठत् ॥ १८ ॥

स्वर्द्रुहां दैत्यानां शस्त्रमयोऽपि कल्पितः समरचेलानां रणवस्त्राणां संचयः कोपपाटला रोषारुणा या विलोचनत्विट् नेत्रप्रभा तया हेतुभूतया वध्यपटताभावमिवापठद्भ्रञ्जितवान् । रक्तपटावृतो वध्यो हन्यत इत्याचारः ॥

मृत्युवाहमहिषस्य शृङ्गयोर्वप्रकेलिघनकर्दमैरिव ।
लिप्यमानवपुषश्चकाशिरे ते तदायसतनुत्ररश्मिभिः ॥ १९ ॥

यमवाहमहिषस्य शृङ्गयोस्तटाघातपङ्कैर्लोहकङ्कटांशुभिर्लिप्यमानाङ्गा इव ते बभुः ॥

नूतनाभ्ररुचयो निसर्गतः संगता निभृतलोहवर्मभिः ।
जज्ञिरेऽसिमहसा सुरद्विषां मूर्तयस्त्रिगुणितासितत्विषः ॥ २० ॥

निभृतैर्निश्चलैर्लोहकङ्कटैः संगताः, तथा नवमेघश्यामा दैत्यानामाकृतयः, असिमहसा त्रिगुणकृष्णाभा जाताः ॥

निःसरत्सु दनुजेषु संयते संयतेद्धकवचेषु भूमिषु ।
भाविनीं सुवसतिं स्वविष्टपे मन्यते स्म तनयो विवस्वतः ॥ २१ ॥

संयतानि बद्धानीद्धानि कवचानि यैस्तेषु संयते सङ्ग्रामाय निःसरत्सु निर्गच्छत्सु यमः स्वभवने सुवसतिं वसद्बहुलजनत्वममन्यत ॥

आतपत्रमुपरि प्रपेदिरे भेजिरे च चमराञ्चलानिलम् ।
यत्सुरारिपतयस्तदास्त तत्केवलं विकसदूष्मशान्तये ॥ २२ ॥

दैत्या यच्छत्रं दधुः यच्च चमरवायुं भेजुः, तत्केवलं तापशमनायैव, न तु विभूतिव्यञ्जनार्थम् । तस्या अचिरेण नाशात् ॥

उच्छ्रितैरुपरि नाकवैरिणां रत्नखण्डखचितैरचुम्ब्यत ।
कालमण्डलितपाशपन्नगश्रीरजस्रमसितोष्णवारणैः ॥ २३ ॥

दैत्यानामुपर्युन्नतैः कृष्णच्छत्रैः कालस्य मण्डलिता ये पाशसर्पास्तच्छोभा दधे । रत्नखण्डखचितत्वेनाहिफणारत्नधर्मत्वमाक्षिप्तम् ॥

जज्ञिरे त्रिपुरदानवाः शिरोरत्नबिम्बितवलक्षचामरैः ।
शांभवाशुगहुताशसंस्तवात्प्रागिव प्रसितभास्मनोर्मयः ॥ २४ ॥

शिरोरत्नेषु प्रतिबिम्बितैः शुभ्रचामरैर्हेतुभिर्दैत्या हरशरपातात्पूर्वमेव जातभस्मवीचय इव जाताः । जानातेर्वा लिटि कर्मणि रूपम् ॥

पद्मरागघटिकांशुशारिता छत्रपङ्क्तिरसिता सुरद्विषाम् ।
प्राप मारकतसीधुकुन्तलप्रक्रियामहरधीशजन्मनः ॥ २५ ॥

पद्मरागघटिकाया अंशुभिः शारिता दैत्यानां कृष्णा च्छत्रपङ्क्तिरहरधीशाद्दिनपतेः सूर्याज्जन्मोत्पत्तिर्यस्य तस्य यमस्य मारकताः सीधुपूर्णा ये कुन्तलाश्चषकास्तत्प्रक्रिया-मधात् ॥

सान्द्रतूर्यनिनदा विपाण्डुरच्छत्रसंहतिमती पताकिनी ।
निर्जरप्रतिभुवां तदा बभावन्तकाट्टहसिताञ्चितेव सा ॥ २६ ॥

कोणबाहुभिरुरःस्थलश्रियस्ताडयन्त्यलसमन्द्रदुन्दुभीन् ।
सा ध्वजिन्यतत तूर्यनिःस्वनक्रन्दितान्युपनमत्प्रभुक्षतिः ॥ २७ ॥

वक्षःस्थलशोभान्पटहान्दुन्दुभिपटलवादनदण्डभुजैस्ताडयन्ती सा सेना तूर्यनिः-स्वना एव क्रन्दितानि व्यधात् । यत उपनमन्ती प्रभुक्षतिः स्वामिक्षतिर्यस्याः । ध्वजि-न्यत्र नायिकास्थानीया ॥

कर्णतालवलनान्यनारतं तद्गजा विदधिरे मदोद्धताः ।
व्यञ्जयन्त इव दन्तसंसरत्संनिधेश्चपलतां प्रभुश्रियः ॥ २८ ॥

दैत्यदन्तिनः कर्णतालकम्पांश्चक्रुः । अतः संभाव्यते—तद्दन्तेषु संसरन्नुल्लसन्संनि-धिर्यस्याः श्रियश्चापलं ख्यापयन्त इव । पूर्वं दन्तिनां दन्तद्वारेण श्रीरधो गतासीदिती-तिहासः । तालो वाद्यभाण्डविशेषः ॥

दन्तिनां श्रुतिपुटैरनेकशो नर्त्यमानतनुभिर्व्यतन्यत ।
क्लाम्यतो द्रुततरागतिश्रमादन्तकस्य नवतालवृन्तता ॥ २९ ॥

मदवशात्कम्प्यमानैर्हस्तिनां कर्णपुटैर्यमस्य नवव्यजनभावो गृहीतः । यतः कार्यगौ-रवात्तूर्णमागमनेन जातखेदस्य ॥

---

१. आदर्शपुस्तके 'सान्द्रतूर्य—' इत्यादिश्लोकस्य टीका नास्ति.

वाजिभिर्निकटविप्लवार्जितैः प्रेषितैर्गगनवर्त्महेषितैः ।
द्रागदूरयमवाहसैरिभत्रासवैशसमिवाभ्यधीयत ॥ ३० ॥

दर्पवशादाकाशवर्त्मविसृष्टैर्हेषितैः करणैर्वाजिभिः कर्तृभिरदूरे यमवाहमहिषात्रासस्तेन वैशसमिवोक्तम् । अश्वानां महिषैः सह शाश्वतिकविरोधात्रासवैशसम् ॥

दीर्घकाञ्चनखलीनदीधितिप्रोतमाननमवाहि वाजिभिः ।
आन्तरस्य महसो निरेष्यतश्चुम्ब्यमानमिव वीचिडम्बरैः ॥ ३१ ॥

वाजिभिराननं दीर्घाणां काञ्चनखलीनानां कविकानां रश्मिभिः संबद्धमवाहि धृतम् । अतः संभाव्यते—आन्तरस्यान्तर्वर्तिनो महसस्तेजसो जीवरूपस्य वीचिस्फारैः स्पृश्यमानमिव । यतो निरेष्यतोऽभ्यन्तरान्निर्गमिष्यतः । वाजिनां मरणेनाश्रयाभावात् ॥

वक्त्रनिर्यदनलार्चिषां मिषादन्तकाय धृतहस्तदीपकाः ।
अग्रतः पिशुनिताशिवाः शिवा वाशितानि दिवसेऽपि तेनिरे ॥३२॥

दिनेऽपि शिवा रटितानि चक्रुः । यतः सूचितामङ्गलाः । वाशन्तीनां शिवानां मुखादग्निज्वाला निर्गच्छतीति वस्तुगतिः । अतः संभाव्यते—मुखनिर्गच्छदग्निज्वालानां व्याजाद्यमाय धृता हस्तदीपिका याभिस्ताः । रजोन्धकारे स्फुरति मार्गादर्शनात् ॥

पप्रथे यमवरूथिनीपृथुच्छत्रपङ्क्तिभिरिव क्षतातपा ।
दूरविस्तृतपतत्रमेचकैः पेचकैः परिचिता नभःस्थली ॥ ३३ ॥

दूरं विस्तृतानि पतत्राणि पक्षास्तैर्मेचकैः कृष्णैः पेचकैरुलूकैर्हेतुभिर्नभःस्थली वारितातपा संपन्ना । अतः संभाव्यते—यमवरूथिन्याः पृथुभिश्छत्रपङ्क्तिभिरिव ॥

सा तदा त्रिदशलोकवैरिणां स्वैरिणां प्रचलिता पताकिनी ।
विन्ध्यहास्तिकवदास्त विस्तृतप्रस्फुरत्करटवाशिताञ्चिता ॥ ३४ ॥

स्वैरिणां स्वतन्त्राणां दैत्यानां सा सेना करटानां काकानां वाशितं रटितं विस्तृतं स्फुरितं तेन व्याप्तासीत् । विन्ध्यहस्तिसमूहवत् । तत्पक्षे स्फुरन्तः करटा गण्डा यासां ता वाशिताः करिण्यस्ताभिरञ्चिता । हास्तिकमिति 'अचित्तहस्तिधेनोष्ठक्' ॥

नर्तितोड्डमरमृत्युदेवताकाञ्चिमारकतकिङ्किणीलिपिम् ।
आश्रितैः परभृतामितस्ततो मण्डलैर्मुखरतान्वबध्यत ॥ ३५ ॥

नर्तिता उड्डमरा मृत्युदेवता तस्याः काञ्चौ मारकतीनां मरकतमयीनां किङ्किणीनां लिपिं सादृश्यं प्राप्तैः कोकिलानां कुलैर्मुखरत्वमितस्ततो धृतम् । स्वाभाविकमुखरशब्दपरिहारेण मुखरतानुबन्धनमशुभसूचकम् ॥

काकघूकमविमूकतां तथा गाढमापदधिदैत्यवाहिनि ।
येन नैव पिहिताम्बरोदरः सान्द्रतूर्यनिनदोऽपि पप्रथे ॥ ३६ ॥

दैत्यसेनायां काकघूकं कर्तृ अविमूकतां मौखर्यं तथापत्, यथाकाशव्याप्यपि पटह-शब्दो न प्रथितः । काकघूकमिति 'येषां च विरोधः शाश्वतिकः' इति रूपम् । अपि-र्भिन्नक्रमः ॥

व्योमपट्टकतले निरर्गलाः पङ्क्तयो बलिभुजां विरेजिरे ।
उद्यदन्तकनिदेशशंसनं कल्पयन्त्य इव वर्णराजयः ॥ ३७ ॥

उद्यन्विजयाय कृतोद्योगो योऽन्तकस्तस्य निदेश इत्थं सेवा कार्या इत्याज्ञा तस्याः शंसनं प्रतिपादनं कल्पयन्त्योऽक्षरमाला इव बलिभुजां काकानां पङ्क्तयो व्योमैव पट्टकं तस्य तले विरेजिरे रेजुः । आज्ञा च पट्टकतले लिखिता भवति ॥

हेमचक्रसचिवासितोल्लसद्वारवाणघटनेन ते बभुः ।
आवहन्त इव दुष्प्रवृत्तये भूरिचण्डकरमण्डलं नभः ॥ ३८ ॥

हेममयानि चक्राणि वारवाणेषु शोभार्थं क्रियन्ते । तत्सचिवानामुल्लसतां वारवाणानां कञ्चुकानां घटनेन ते दैत्या बभुः । अमङ्गलवार्तासूचनार्थं भूरयश्चण्डकरमण्डलाः सूर्य-बिम्बा यस्य तन्नभः कुर्वन्त इव । संहारकाले बहूनामर्काणामुदयो युगपद्भवति ॥

आत्तमण्डलितचण्डकार्मुकाः कामुका दितिजवामचक्षुषाम् ।
कङ्कणानि रविजाङ्गनोपदाकल्पनाय बहुशोऽवहन्निव ॥ ३९ ॥

गृहीतमण्डलाकारधनुषो दैत्यस्त्रीणां कामुका दैत्या यमस्त्रीणां कोशलिकाः कल्पयितुं कङ्कणानि दधुरिव । धनुषामाकर्षणेन मण्डलाकारत्वात्कङ्कणत्वसंभावनम् ॥

श्यामचर्मफलकाब्जिनीदलव्याकुलोद्यदसिशेवलच्छटा ।
सा दधौ शमनकेलिदीर्घिकादीर्घतामसुरलोकवाहिनी ॥ ४० ॥

श्यामाश्चर्मफलका उद्यमनपट्टा एवाब्जिनीदलानि तैर्व्याकुला असय एव शेवलच्छटा यस्याः सा दैत्यानां वाहिनी सेनैव नदी शमनस्य यमस्य केलिदीर्घिका लीलापुष्करिणी तद्वद्दीर्घतां दधौ ॥

ते कुकर्मनिधयो जगाहिरे स्वैर्वपुर्भिरसिपत्रयोगिताम् ।
संमुखं तदपि निर्जरद्विषश्चक्रिरे चिरमरौरवग्रहम् ॥ ४१ ॥

ते दैत्याः स्वैः शरीरैरसिपत्रस्य खड्गस्य नरकविशेषस्य च संग्रहं चक्रुः । ...... ॥

पङ्कटङ्कशितिकङ्कटाङ्कितैर्वर्ष्मभिर्विहितवैकृतोर्मयः ।
तेऽथ जग्मुरधिखड्गमण्डलीवारिधारमवगाहनेप्सवः ॥ ४२ ॥

अथ ते जग्मुः । रणभूमिमित्यस्य सकर्मणो व्यभिचाराभावान्न ग्रहणम् । खड्गमण्ड-लीवारिधारां खड्गधारानैर्मल्यं तत्संमुखं स्नातुकामाः । अतिशयोक्त्या कवयो जलशब्देन खड्गधारानैर्मल्यव्यवहारिणः । यतः पङ्कटङ्काः कर्दमाकाराः शितयो नीला ये कङ्कटास्तैर-

ङ्कितैर्वर्ष्मभिर्देहैर्हेतुभिर्विवृताः प्रकाशिता वैकृतोर्मयो विकृत्युल्लासा यैः। सपङ्कस्य च स्नानमुचितम् ॥

गाढपाटलविलोचनाञ्चिता सा चमूररुचदग्रयायिनी।
बिभ्रती तुलितलोहया त्विषा कोपपावकहसन्तिकालिपिम् ॥४३॥

रोषवशाद्गाढपाटलैर्विलोचनैः सा चमूररुचद्दिदीपे। अतः संभाव्यते—विडम्बितशस्त्रया भासा हेतुभूतया कोपाग्नेरङ्गारशकटिकासाम्यं दधती। सा हि लोहमयी सच्छिद्रा च भवति। लिपिः सादृश्यम् ॥

पृष्ठनिष्ठबहुतूणपङ्क्तयस्तेऽरयो मखलिहां चकाशिरे।
प्रस्थितौ यमपुरे पुरः पुरामुद्गता दुरितभारिका इव ॥ ४४ ॥

पृष्ठे निष्ठा यासां ता बहवस्तूणपङ्क्तयो निषङ्गमाला येषां ते दैत्या दिदीपिरे। अतः संभाव्यते—पुरां यमपुरे विषये प्रस्थितौ पुरः पूर्वं निर्गताः पापभारिका इव ॥

चित्ररत्नवलयांशुशारितैः कार्मुकैर्दृढशिरेऽमरद्रुहः।
भीतितो दितिजभावनिह्नवं कर्तुमात्तविविधायुधा इव ॥ ४५ ॥

मारणभीत्या दैत्यभावच्छादनं कर्तुं गृहीतनानाविधायुधा इव दैत्या जनेन दृष्टाः। कैः करणैः। मणिकङ्कणकिरणैश्चित्रितैश्चापैः ॥

ते परस्परविमर्दनिर्दयत्रुट्यदङ्गदमणीरितैः कणैः।
सैन्यरेणुजलदच्छटोदये ज्योतिरिङ्गणगणानदीदृशन् ॥ ४६ ॥

रणरसेनाहंपूर्विकयान्योन्यं यो विमर्दस्तेन निर्दयं त्रुट्यद्भ्यो बाहुभूषणमणिभ्य ईरितैर्निःसृतैः कणैर्हेतुभिस्ते दैत्या ज्योतिरिङ्गणगणान्खद्योतानिवादर्शयन्। कदा। सैन्यरेणुमेघमालोदये। प्रावृष्येव हि खद्योतैर्भाव्यम्। अदीदृशन्निति 'उरत्' इत्यकारः ॥

उपनतवति मृत्युनोपरोधे कटकरजोजवजन्यमानबाष्पैः।
प्रतिपदमविदूरवंशनाशैः स्वयमिव तैरवशं भयादरोदि ॥ ४७ ॥

सैन्यरजसा जवेन जन्यमानमुत्पाद्यमानं बाष्पमस्रं येषां तैः। स्वयमप्रेरितैरिव तैररोदि। जनितेऽजनितत्वमुत्प्रेक्ष्यते। अत्र हेतुः—यमेन कर्त्रा उपरोधे प्राप्तवति सति। प्रतिस्थानमविदूरेऽचिरेण वंशनाशो येषां तैः ॥

ते गाढगाढघटमानपटुप्रकोप-
रज्यद्विलोचनरुचो दिविषद्विपक्षाः।
हृष्यत्कृतान्तपुरनिर्भरकीर्यमाण-
सिन्दूररेणुसचिवा इव चक्रुराशाः ॥ ४८ ॥

गाढगाढं भृशं घटमानेन रोषेण रज्यन्ती रक्ता संपद्यमाना नेत्रकान्तिर्येषां ते सुरद्विषो दिशो भाविसंहारोत्सववशाद्धृष्यद्यत्कृतान्तपुरं तेन निर्भरं कीर्यमाणेन सिन्दूररजसा सहिता इव व्यधुः । हर्षे सिन्दूरप्रक्षेप आचारः ॥

चञ्चच्चमूभररजोहठलिप्यमान-
धुर्याक्षकूबरयुगा युगपत्तदानीम् ।
ते स्यन्दनीकृतधरं गिरिशं विजेतुं
दैत्या रथं स्वमिव पार्थिवतामनैषुः ॥ ४९ ॥

स्फुरत्कटकरेणुना हठेन लिप्यमाना धुर्या वाजिनः, अक्षा नाभिकाष्ठम्, कूबरो युगंधरः, युगं च येषां ते दैत्या निजरथं पृथिवीमयतामिवानैषुः । अत्र हेतुः—रथीकृतभूमिं गिरिशं जेतुम् ॥

निर्गच्छतो निजपुराद्दितिजव्रजस्य
काकावली ककुभमभ्यचिनोदुदीचीम् ।
तस्य प्रवेशविधये स्वदिशो यमेन
प्रोत्सारिता विवृतमार्गमयोर्गलेव ॥ ५० ॥

निजपुरात्प्रस्थानसज्जस्य दैत्यकुलस्य वामां दिशं काकपङ्क्तिरर्थाद्वाशितैरव्यथयत् । तस्य दैत्यकुलस्य विस्तीर्णमार्गं कृत्वा दक्षिणदिशि प्रवेशार्थं यमेन वारिता शस्त्रार्गलेव ॥

चक्रन्द दुन्दुभिरवैरवशं रुरोद
विस्तारिभिः करटिनां करसीकरौघैः ।
तेषां चमूरभिनवोपनतक्षयानां
दुःखोचितं किमिव नासकृदाचचार ॥ ५१ ॥

अपूर्वोपनतमरणानां तेषां सेना शोकयोग्यं किमिव न चकार । सा पटहशब्दैः क्रन्दितवती । हस्तिनां करजलकणै रोदितवती । अमङ्गलपरम्परादर्शनात् । स्वकृतं मङ्गलावहमप्यमङ्गलावहमेव संभावितमित्यर्थः ॥

किंचिन्निमीलदलसालसनेत्रतन्द्रा
गर्वाद्वपुश्च शिथिलाकुलमावहन्तः ।
मध्येऽरिशस्त्रशयनीयमदूरदीर्घ-
निद्रारसत्वमिव ते बहुशः शशंसुः ॥ ५२ ॥

गर्वान्निमीलन्नेत्रत्वाच्छरीरं शिथिलं चात एव वहन्तो दैत्या रिपुशस्त्रशय्यायां विषयभूतायां दीर्घनिद्रायां रसो यस्य तद्भावमिव सूचितवन्तः । गर्वनिद्रयोर्धर्मसाम्यादुत्प्रेक्षोत्थानम् । निद्रावसरे च नेत्रसंकोचशैथिल्यादयो भवन्ति ॥

हन्मश्चेत्समरेऽमरव्रजमथो हन्यामहे तेन वा
द्यामासाद्य पदं रतेरुभयथाप्येतद्वधूराप्नुमः ।
ध्यायं ध्यायमिति प्रकामविकसच्छृङ्गारवीरोर्मयः
केचित्तत्र सुरारयो बहुरयोत्साहोदयं निर्ययुः ॥ ९३ ॥

मारणमरणयोरन्यतरदवश्यं भावि भटानामिति निश्चयः । अतो रणे वयं देवसमूहं चेन्मारयामस्तदा जीवन्त एव स्वर्गं प्राप्य रतिस्थानमप्सरसः प्राप्नुमः । अथ तेन देवसमूहेन वयं मार्यामहे तदाप्यप्सरस एव वयं प्राप्नुम इति च स्मृत्वा विकसन्तः शृङ्गाररसोर्मयो येषां ते केचिद्दैत्याः शीघ्रं गृहान्निर्जग्मुः ॥

उद्यद्भिर्विषसीकरैर्वृतमुखास्तद्वाहिनीदन्तिना-
माक्रान्तेऽम्बरवर्त्मनि प्रकटितावर्ताः करा रेजिरे ।
दैत्याकर्षणकेलिसंभ्रमरुषां मृत्योर्भटानामिव
व्यक्ताः पाशमहोरगास्तत इतो व्यावल्गितुं प्रस्तुताः ॥ ९४ ॥

विषं जलं च । तत्कणैर्वृतमुखाः, तथा व्यक्तावर्ताः, तत्सेनाहस्तिनां हस्ताः शुशुभिरे । अतः संभाव्यते—दैत्याकर्षिणां पाशसर्पा इव । तेऽपि सविषाः सावर्ताश्च भवन्ति ॥

योद्धुं सार्धमधिज्यकार्मुकगणग्रामाण्यनीकैर्हठा-
त्तान्निर्गन्तुमुदञ्चितोद्यमरसान्नाकेसदां वैरिणः ।
संभाव्यापुनरागमं परिणतौत्सुक्याज्जवोद्गत्वरैः
स्वाः पुर्यः परिरेभिरे मणिदृषद्भित्तिप्रभाबाहुभिः ॥ ९५ ॥

कटकैः सार्धं युद्धाय निर्गन्तुं सरसानसुरान्निजनगर्यो रत्नभित्तिप्रभाभुजैः करणैरालिलिङ्गिरे । यतोऽपुनरागमं मत्वा सोत्कण्ठाः ॥

निर्गच्छत्सु प्रियेषु प्रधनविधिधिया दानवेन्दीवराक्ष्य-
स्त्रासस्वेदापनीतैः कुचमुकुलतटास्कन्दिबाह्लीकपङ्कैः ।
उत्तंसैः स्रंसमानैरथ पृथुविकसद्वेपथूद्वेगयोगा-
दूहुः प्रागेव गात्रं दधदिव नियताद्दूरवैधव्यचिह्नम् ॥ ९६ ॥

विधवत्वलक्षणं दधदिव शरीरं दानवस्त्रियो भर्तृवधात्पूर्वमेव दधुः । रणचिकीर्षया वल्लभेषु निष्क्रामत्सु भयजातस्वेदगलितैः स्तनकुङ्कुमैस्तथा कम्पवशात्पतितैर्भूषणैश्च हेतुभिः ॥

दर्शं दर्शं सुराणां कटकमभिविशत्ताः पुरीर्मुक्तशङ्कं
सातङ्कान्तःपुरस्त्रीजनजनितघनाक्रन्दवाचालशालाः ।

गीर्वाणद्वेषिणस्ते हठकठिननवक्रोधदष्टौष्ठरक्तै-
र्वक्त्रैरापीतपूर्वं नियतमुदवमन्वैरिवीरप्रतापम् ॥ ९७ ॥

निःशङ्कं ता नगरीः प्रविशमानं देवसैन्यं दृष्ट्वा दृष्ट्वा सदुःखाभिः पुरस्त्रीभिः कृतेन क्रुष्टेन सशब्दगृहास्ते दैत्या रोषदष्टौष्ठारुणैर्मुखैर्हेतुभिर्नूनं पीतपूर्वं शत्रुप्रतापमुदगिरन् । वमनं च सशब्दं भवति ॥.

अन्योन्यं ते ध्वजिन्यावथ सुरदनुजाधिष्ठिते सौष्ठवेन
श्लिष्यन्त्यौ फेनपिण्डोपमविधृतसितच्छत्रपालीकराले ।
स्वीचक्राते प्रसर्पत्पटुपटहरवारभ्यमाणोर्मिघोष-
स्फारेणानल्पकल्पात्ययसमयमिलत्सागरद्वन्द्वलीलाम् ॥ ९८ ॥

फेनपिण्डसदृशश्वेतच्छत्रपङ्क्तिसहिते तथा बलेन मिलन्त्यौ ते सेने भेरीशङ्खशब्दभरेण हेतुना कल्पान्तकालमिलत्सागरद्वयशोभां जगृहतुरिति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकवि-
राजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये
दैत्यपुरीक्षोभवर्णनं नाम द्वाविंशः सर्गः ।

---

## त्रयोविंशः सर्गः ।

समघटत पताकिनीयुगं तदथ मिथः प्रथमानयत्सरैः ।
द्युसदसुरभटैर्मदोत्कटैः प्रकटितदुर्धरसंगरक्रियम् ॥ १ ॥

मदोत्कटैः सुरासुरभटैरन्योन्यं प्रकटिता दुर्धरा संगरक्रिया करणं यत्र एवं कृत्वा तत्सेनाद्वयं समगंस्त ॥

मणिसखयमपाशपन्नगस्फुटफणविभ्रमसख्यचञ्चवः ।
परिणमदहिमांशुमण्डला विबभुरकोषकृपाणयष्टयः ॥ २ ॥

परिणमत्प्रतिबिम्बसंक्रान्तमहिमांशोरादित्यस्य मण्डलं यासु ता विकोषाः कोषाकृष्टाः खड्गलता विबभुः । अत उत्प्रेक्षते—मणिसखा मणिसहिता यमपाशसर्पफणा इति विभ्रमो विशिष्टो भ्रमस्तत्सख्येन ख्याताः । अथवा फणाविलाससादृश्येन ख्याताः । 'कालपन्नग' इति वा पाठः । कालाः कृष्णाः ॥

अशुभपिशुननिःसरद्घनश्रमजलसिक्तशराः सुरद्रुहः ।
हरमनलशरं जिगीषवो दधुरिव कल्पितवारुणेषुताम् ॥ ३ ॥

वीरैर्विजितश्रमैर्भवितव्यमित्यशुभस्यामङ्गलस्य पिशुनं सूचकं निःसरद्घनं यच्छ्रमजलं तेन सिक्ताः शरा येषां ते दैत्याः कल्पितो वारुणो वरुणमन्त्रसंस्कृत इषुः शरो यैस्त-

द्भावमिव दधुः । वरुणस्य जलदैवतत्वाज्जलशरतामिव दधुरित्यर्थः । किं कर्तुम् । अग्निशरं हरं जेतुम् । जलं ह्यग्नेर्विपक्षः ॥

शिखिमयवपुयोऽग्रभाविनो विधृतभया विशिखात्पिनाकिनः ।
दिविषदसिसखे श्रियः पुरामचरममेव ममज्जुरम्भसि ॥ ४ ॥

भविष्यतोऽग्निरूपाद्धरस्य शराद्भीता इव त्रिपुरलक्ष्म्यः सुरखड्गधारावर्तिनि जले पूर्वमेव ममज्जुः । भीतानां जले मज्जनं युक्तम् । विशेषतो वह्नेः ॥

अमरकटककिंकरा मुखश्वसनविपूरिततूर्यचर्यया ।
अथ दधुरभिसृत्य मृत्यवे पुरबलभोजनकाहलामिव ॥ ५ ॥

अमरसेनादासा निःश्वासपूरिततूर्यचरित्रेण यमायैत्य पूरकटकभक्षणे काहला भोजनाह्वानार्थस्तूर्यशब्दस्तामिव दधुः ॥

उपगतवति शंकरे ततो भुवनगुरावुभयोरनीकयोः ।
धनुरनमदवाप मुक्ततामथ तु बताविनतोऽपि सायकः ॥ ६ ॥

भुवनेषु मध्ये गुरौ हरे समीपप्राप्ते सति देवासुरकटकयोर्धनुराकर्षणादनमत् । अनतस्तु शरो मोक्षं प्राप । महतो दृष्ट्वा सर्वो नमति । भयसंभ्रमादनमंस्तु महतां प्रसादान्मुक्तिं लभते । गुरावाचार्ये च समीपप्राप्ते लोको नमति । आचार्यशक्तिपातात्कश्चिदनमन्नपि मोक्षं लभेत ॥

सुरशरनिकरोऽम्बरेऽरुचज्जवचटुलोभयपक्षति भ्रमन् ।
उपनमदसुरास्रपारणामद इव दर्शितनृत्तविभ्रमः ॥ ७ ॥

जवेन चटुले उभे पक्षती यत्र एवं कृत्वाम्बरे भ्रमन्नमरशरव्रातोऽरुचत् । अत उत्प्रेक्ष्यते—उपनमदसुररक्तपारणया मदो यस्य अत एव दर्शितनृत्यविलास इव । मत्तश्च नृत्यति । पक्षती बाहुस्थानीये । 'मुद' इति वा पाठः । हेतौ पञ्चमी । 'पक्षतिक्रमम्' इति वा पाठः ॥

समरतरुरनङ्कुशाङ्कुरः पुलकितमूर्तिरशेषदिक्ततिः ।
चिरमजनि शरैरितस्ततः प्रविसृमरैरमरेन्द्रवर्त्मनि ॥ ८ ॥

दिवि प्रसरणशीलैः शरैरनङ्कुशा निर्निरोधा अङ्कुरा यस्य स रणद्रुमो जातः । सर्वदिक्पङ्क्ती रोमाञ्चितमूर्तिर्जाता । दिशां स्त्रीलिङ्गत्वात्स्त्रीत्वे रोमाञ्चितत्वोक्तिर्युक्ता ॥

अपि कटकयुगे धनुष्मतामघटि परस्परमीरितैः शरैः ।
उरसि विवृतवीप्समप्सरःकुचमुकुलप्रणयाग्रदूतता ॥ ९ ॥

अन्योन्यं प्रेरितैः शरैः सेनाद्वयवर्तिनां धानुष्काणां वक्षसि विवृता वीप्सा पौनःपुन्यं यत्र एवं कृत्वाप्सरसः स्तनकुड्मलानां प्रणये परिचयेऽग्रदूतता पुरोदूत्यमघटि सं-

पादिता। हृदि शरप्रवेशेन मरणाद्भुवमप्सरसः प्राप्तिः। सैन्ययोर्मध्ये कोऽपि नापलायतेत्यर्थः॥

मुखमकृत तथा परो रिपोर्विपुलविसारितमार्गणार्गलम् ।
श्वसितमरुदवाप नो यथा पुनरपि तत्र किल प्रवेशनम् ॥ १० ॥

परो वैरी रिपोर्मुखं विपुला विसारिता मार्गण एवार्गला यस्य तत्तथाकरोद्यथा श्वसितमरुत्प्राणवायुस्तत्र पुनः प्रवेशनं नावाप। मरणं प्रापेत्यर्थः। पृथोरर्गलाया दाने च वायोरपि प्रवेशाभावः॥

शरपटलविघट्टनोच्छलद्दहनशिखाकपटेन शस्त्रिणाम् ।
द्विषदसुविघसाय कङ्कटा अपि विकसद्रसना इवाबभुः ॥ ११ ॥

शरभरेण विघट्टनयोल्लसन्तीनामग्निज्वालानां व्याजेन शस्त्रिणां कवचा अपि द्विषत्प्राणभक्षणार्थे [अपि] लोलमानजिह्वा इवाबभुः॥

प्रवसदसुरथापरो रयादुरसि निमग्नमुखे शिलीमुखे ।
अजनि किल मुहूर्तविघ्नितत्रिदशवधूनिविडावगूहनः ॥ १२ ॥

वेगाच्छरे वक्षसि प्रविष्टाग्रे सति प्रवसन्तो निर्यान्तोऽसवः प्राणा यस्य सोऽपि परो मुहूर्तं विघ्नितं जातविघ्नं त्रिदशवध्वा निविडं कृत्वावगूहनमालिङ्गनं यस्य तथाजनि संपन्नः। वक्षसः शरान्तरितत्वात्क्षणमालिङ्गनविघ्नः॥

चतुरमसुरसायको मुखे गजवदनस्य कृतावरोहणः ।
पुनरपररदाङ्कुरोद्गमभ्रममपुषन्मुहुरीशचक्षुषाम् ॥ १३ ॥

चतुरं कौशलवशादलक्षितं कृत्वा गणपतेर्मुखे शत्रुणा कृतमधिरोहणं प्रवेशनं यस्य सोऽसुरबाण ईशस्य दृष्टीनां भूयो द्वितीयस्य दशनाङ्कुरस्योत्पत्तिभ्रान्तिमकरोत्। ईशस्येश्वरस्यापि बहूनामपि दृष्टीनामितीशचक्षुषामित्यस्य ग्रहणम्॥

क्षणमसुरचमूमतङ्गजा द्विरदमुखस्य मदं विषेहिरे ।
वहनहरिमवेक्ष्य तस्य तु त्रुटितधृति त्वरितं विदुद्रुवुः ॥ १४ ॥

दैत्यदन्तिनो दन्तिवदनस्य मदं क्षणं सोढवन्तः। मुखमात्रसाम्येन तत्पराक्रमसाम्यसंभावनयेति भावः। अथ तस्य गणपतेर्वाहसिंहं दृष्ट्वा ते पलायिताः। सिंहस्य गजान्तकत्वात्॥

उपनतसमरोत्सवग्रहादिव दधतः पटुचीनपिष्टताम् ।
विधृतनिविडताण्डवः करे परशुरशोभत विघ्नविद्विषः ॥ १५ ॥

उपनतः प्राप्तो यः सङ्ग्रामोत्सवस्तद्ग्रहाद्धेतोरिव पटु बहुलं चीनपिष्टं सिन्दूरो यस्य तद्भावं दधतो गणपतेः करे परशुरायुधविशेषो विधृतं निविडं ताण्डवं नानाविधं स्फुरणं येन सोऽशोभत। उत्सवे सिन्दूरस्ताण्डवं चोचितम्॥

विशिखकुसुमवृष्टिभिः पुरः करिवदनोऽञ्चितचर्चमर्चताम् ।
मिहिरसुतपुरप्रवेशने व्यतनुत विघ्नहतिं धनुष्मताम् ॥ १६ ॥

विशिखाः शरा एव कुसुमवृष्टयस्ताभिरर्चतां पूजतां धानुष्काणां मिहिरसुतपुरप्रवेशने यमनगरप्रवेशे विघ्नानां हतिं हननं गणपतिरकरोत् । निर्विलम्बं शत्रूनवधीदित्यर्थः ॥

द्विरदनवदने जिगीषया विषमतमात्तबृहन्मदोद्गमाः ।
उपरि करटसंकटानना दितिजभटाः सहसैव जज्ञिरे ॥ १७ ॥

गणपतौ जिगीषया दैत्यभटा विषमतमोऽनन्यसामान्य आत्तो गृहीतो मदोद्गमो दर्पोत्पत्तियैः । अतोऽमङ्गलसूचनार्थमुपरि करटैः काकैः संकटमुखा जाताः । महद्भिः सह विरोधेऽन्येषामवश्यपराभवनीयत्वात् । अथवा जिगीषयेति प्रतीयमानहेतूत्प्रेक्षा । गणपतेर्हि मदो दानम् । करटो गजगण्डः । गणपतिं प्रति प्रतिपक्षतया तद्रूपाभावापत्त्यध्यवसायः ॥

हठकठिनविटङ्ककीकसस्खलितनिशातविपक्षसायकम् ।
कवचपरिचयानपेक्षतामभजत भृङ्गिरिटेरहो वपुः ॥ १८ ॥

भृङ्गिरिटेर्गणविशेषस्य वपुर्देहः कवचग्रहणानपेक्षतामपेक्षारहितत्वमभजत । यतो हठेनातिमात्रं कठिनानि विटङ्कान्युन्नतानि कीकसान्यस्थीनि तेभ्यः स्खलिता निशितास्तीक्ष्णा अपि शत्रुशरा यत्र तत् । कीकसैरेव कङ्कटकृत्यस्य शरनिवारणस्य संपादनात् । देव्यवगणनाद्धि भृङ्गिरिटिरस्थिमात्रशरीरः ॥

प्रतिकटकभटान्विशङ्कटप्रविसरदायुधमुक्तियुक्तिभिः ।
चतुरमुपनयन्कबन्धतामतनुत तण्डुरखण्डताण्डवम् ॥ १९ ॥

विशङ्कटानि विशृङ्खलानि प्रविसरन्ति स्फुरन्ति यान्यायुधानि तन्मुक्तौ युक्तिभिः शत्रुसेनाभटान्कबन्धतामपशिरस्त्वं नयंस्तण्डुर्गणविशेषोऽखण्डमविकलं ताण्डवं विस्तारितवान् ॥

चलकरयुगलक्रमाहतद्विपकरटद्वितयेन नन्दिना ।
किमु मुरजमवाद्यताग्रतः शशिशिरसो रणरङ्गनर्तने ॥ २० ॥

हर्षवशात्करतलद्वयेन क्रमेणाहतं द्विपसंबन्धि करटद्वितयं गण्डद्वयं येन तेन नन्दिना हरस्य रणरङ्गे यन्नर्तनं नानाक्रियाकरणं तत्र मुरजं किं वादितम् । नर्तने हि मुरजवादनमुचितम् ॥

चतुरतरतया निरस्य तानरिविशिखानखिलानितस्ततः ।
प्रकटिततनुरग्निभूरभूच्छरवणतः पुनरुद्भवन्निव ॥ २१ ॥

इतस्ततः शत्रुशरांश्चातुर्येण निवार्य प्रकटितमूर्तिः कुमारः शरवणात्पुनरुद्भवन्निवासीत् । शरजन्मा हि कुमारः ॥

पतितमधिकबन्धमुच्छलच्छकलितदन्तितनूद्गतं शिरः ।
अधिदितिजबलं प्रनर्तनैरपरगणाधिपसंशयं दधौ ॥ २२ ॥

पतितं ततो दैत्यसेनायामधिकबन्धं कबन्धोपरि उत्फलत्सत् कृत्तहस्तिशरीरोत्थितं शिरो द्वितीयगजमुखभ्रान्तिमधात् ॥

श्रवणपुटविवर्तनानिलक्रममुखरश्रुतिकम्बुचुम्बितः ।
द्विरदनवदनस्य पप्रथे स्वयमसकृज्जयशङ्खवादनम् ॥ २३ ॥

श्रवणपुटयोर्विवर्तनं धूननं तेनानिलस्तेन करणेन क्रमेण मुखराश्च ये श्रुतिशङ्खास्तच्चुम्बिनः शङ्खधारिणो गजमुखस्य बहुशः स्वयं जयशङ्खवादनं सिद्धम् । जये सति शङ्खो वाद्यत इत्याचारः ॥

प्रतिमिततनुरग्निजन्मनो व्यरुचदसौ तडिदुज्ज्वलासृजि ।
नवमुदिरधिया ससंभ्रमं कृतपरिरम्भ इवाङ्कबर्हिणः ॥ २४ ॥

तडिद्वदुज्ज्वलं सशोभमसृग्यस्य तस्मिन्नसौ खड्गे प्रतिबिम्बितोऽङ्कबर्हिणो लाञ्छनमयूरो व्यरुचत् । नवो मुदिरो मेघ इति बुद्ध्या कृतालिङ्गन इव । मेघश्च श्यामो विद्युत्वांश्च ॥

झटिति विरचितेऽसिलेखया पुलकभृता हठतो गलग्रहे ।
असमशरनिपीडनाकुलः सुभटजनो दृढरक्ततामगात् ॥ २५ ॥

पुलकं गुणविशेषं रोमाञ्चं च बिभर्ति तया खड्गलतया नायिकास्थानीयया मारणनिमित्ते रागप्रयुक्ते च गलग्रहे सति सुभटलोकोऽसमैः शरैरसमशरेण कामेन च पीडितः सन् दृढरक्ततां घनरुधिरत्वमभिषङ्गवत्त्वं चागमत् ॥

व्यसुरसुरभटोऽधिरूढवान्दिवमुपयुज्य सुरैणचक्षुषः ।
अगमयदितरोऽथ पश्यतो द्विगुणितमत्सरतां सुधान्धसः ॥ २६ ॥

युद्धे व्यसुर्विगतप्राणः, अतो दिवमारूढवान्, अन्यो दैत्यभटोऽप्सरसो भुक्त्वा तद्भोगं पश्यतो देवान्द्विगुणरोषत्वमप्रापयत् । कथमयमस्माभिर्जित्वा हतोऽस्मद्रूपं प्राप्यास्मन्नारीभोगं कुरुत इति भावः ॥

समिदभिमुखमुज्झितासुषु त्रिदशदशामुपलब्धवत्स्वहो ।
अपि सुररिपुषु स्वबान्धवैर्विनिदधिरे स्थिरमत्सरा दृशः ॥ २७ ॥

समिति सङ्ग्रामेऽभिमुखं कृत्वा त्यक्तप्राणेषु, अतो देवत्वं प्राप्तवत्सु, असुरेषु स्वैरपि स्थिररोषा दृष्टयो निक्षिप्ताः । कथमेतेऽस्मज्ज्ञातयोऽपि सन्तो देवत्वं गृहीतवन्त इति भावः ॥

समिदुपगमदुःसहोच्छ्वसन्महसि धृतोष्मभरः स्ववर्ष्मणि ।
निजजनयितुरापदाग्निभूरसृगरुणोल्बणहेतिकस्तुलाम् ॥ २८ ॥

समितः सङ्ग्रामस्योपगमेनोल्लसत्तेजसि शरीरे धृतदर्पभावः तथासृजा रुधिरेणारुणायुधः कुमारो निजजनयितुरग्नेस्तुलां स्पर्धामापत् । अग्निर्हि समिधामुपगमेनोल्लसति शरीरे धृततापोऽसृग्वच्च रक्तज्वालः ॥

धृतवति शमने सपाशतामनुसृतशारिभरेषु दन्तिषु ।
समजनि सुरविद्विषामसुग्लहहरणाय दुरोदरक्रिया ॥ २९ ॥

शमने यमे सपाशतां पाशाख्यायुधविशेषवत्त्वं साक्षतां च धृतवति तथा हस्तिषु प्राप्तः शारीणां हस्तिपर्याणानां द्यूतक्रीडाफलकानां च भरो यैस्तेषु सत्सु दुरोदरक्रिया जयपराजयविषयं युद्धं द्यूतं च प्राणपणहरणाय प्रादुर्भूता ॥

सकलदिगनुबद्धसैनिकस्फुरदसिसंहतिबिम्बिताननः ।
दशमुखपदवीमिवासुरो हरबलकम्पकृतो परोऽगमत् ॥ ३० ॥

सकला दश या दिशस्तत्स्थितानां सैनिकानां स्फुरत्सु खड्गेषु प्रतिबिम्बितमुखोऽन्योऽसुरो हरकटककम्पकरणार्थमिव दशमुखदशामगात् । दशमुखेन रावणेन हि पूर्वं कैलासं चालयता गणानां कम्प उत्पादितः ॥

मुहुररिविशिखान्प्रतीच्छता चतुरगतागतकेलिशालिना ।
श्रवणपुटयुगेन खेटकक्रममपुषद्वदने विनायकः ॥ ३१ ॥

शत्रुबाणान्प्रतीच्छता चतुरं गतागतकेल्या शोभमानेन कर्णद्वयेन गणपतिः खेटकस्योद्यमनस्य क्रमं भङ्गिमपुषत् । खेटकस्य हि मुखरक्षा मुख्यो व्यापारः ॥

गजवदनरदाग्रघट्टनाशकलितमूर्तिषु नाकवैरिषु ।
कुपितशमनदन्तसंततिप्रहृतिरसः पुनरुक्ततामगात् ॥ ३२ ॥

गजमुखस्य दन्ताग्रैर्घट्टनया खण्डिततनुष्वसुरेषु कुपितस्य यमस्य दन्तपङ्क्त्याप्रहरणरसः पुनरुक्ततामापत् । गजमुखदन्ताग्रघट्टनेनैव तत्कार्यकरणात् ॥

सकलवपुरुपोढसायकव्यतिकरकण्टकभग्नतालुना ।
वदनत इव मृत्युनोज्झितः पुनरभजद्व्रणितोऽपि कोऽप्यसून् ॥३३॥

व्रणितोऽपि व्रणवान्कृतोऽपि कश्चित्पुनः प्राणानभजत् । अत उत्प्रेक्ष्यते—मुखाद्यमेन त्यक्त इव । कुत इत्याह—सकले वपुषि धृता ये सायकास्तेषां व्यतिकरः समूहः स एव कण्टकास्तैर्भग्नं पाटितं तालु यस्य तेन । तालुनि पाट्यमाने हि मुखगतमपि भोज्यं त्यज्यते ॥

प्रथमगलदुपोढकुङ्कुमश्रमसलिले वपुषि द्युसद्विषः ।
द्विषदिषुघटनासु कस्यचिद्विसृतमसृङ् न झगित्यलक्ष्यत ॥ ३४ ॥

शत्रुशरप्रवेशात्प्रथमं गलत्सकुङ्कुमं श्रमजलं यस्य तस्मिन्नसुरस्य शरीरे द्विषत्संबन्धिनीषु शरघटनासु सतीषु निर्गतं रक्तं न लक्षितम् । वर्णसंनिवेशयोः सादृश्यादिति भावः ॥

रचयितुमिव दूततां मिथः कथमपि संधिकृते जयश्रिया ।
दिविषदसुरसैन्ययोश्चिरं विवृतगतागतता व्यतन्यत ॥ ३५ ॥

कथमपि कृच्छ्रेण संधिकृते दूत्यं कर्तुमिव जयलक्ष्म्या सुरासुरकटकयोर्विषयभूतयोर्विवृतं गतागतं येन तद्भावः कृतः । दूतो हि गतागतानि चिरं करोति । क्षणं जयलक्ष्मीर्देवेषु क्षणं चासुरेष्वासीदित्यर्थः ॥

बहुशरकरसीकरावलीमुचि करवालमदच्छटातिथौ ।
रणकरिणि गलद्भटासृजा परिममृषे मुखधातुविभ्रमः ॥ ३६ ॥

बहवः शरा एव करसीकरावली तां मुञ्चति तस्मिन्, तथा करवालाः खड्गा लक्षणया खड्गधारा एव मदाम्बुच्छटा तदतिथौ तत्प्रणयिनि रण एव करी तस्मिन्, मुखधातोः सिन्दूरस्य विभ्रमः शोभा गलता भटासृजा प्राप्तः ।

धूमो ममज्ज करवालरुचिच्छटासु
भेदोऽप्यलम्भि रुधिरोर्मिषु नो शिखाभिः ।
आग्नेयमस्त्रमिति नाकिभटैः प्रयुक्त-
मप्यास्ससाद न कथंचिदपि स्फुटत्वम् ॥ ३७ ॥

खड्गेषु धूमो ममज्ज न प्रतिबभौ, तथा रक्ततरङ्गेषु ज्वालाभिर्भेदो न प्राप्तः । इत्यतो देवयोधैः प्रयुक्तमप्याग्नेयमस्त्रं कथंचिदपि प्रकटत्वं नापत् ॥

अस्त्रं पलं च सममेव पचन्शवानां
यस्तत्क्षणं प्रयुयुजे सुहुताशनोऽन्यैः ।
हृष्यत्पिशाचरजनीचरपूतनाना-
मूरीचकार स महानसवह्निकृत्यम् ॥ ३८ ॥

अन्यैः सुरैर्योऽस्त्राग्निः प्रयुक्तः स तत्क्षणमस्रं रक्तं पलं मांसं च सद्यः पचन्, पिशाचानां सूदशालाग्निकरणीयमङ्गीचकार । 'महानसः सूदशाला' इति मालाकोषः ॥

वरुणदहनजिष्णुब्रह्मविष्ण्वादिभिर्यै-
र्जगति विवृतमोजो दैवतैरस्त्रजातैः ।
स्वयमकृषत तस्यां यत्र तेऽपि प्रयोगं
कथमिव विजयाशा तत्र संशीतिपात्रम् ॥ ३९ ॥

यैर्वरुणादिभिर्दैवतैरस्त्रजातैरोजो वीर्यं विवृतं प्रकाशितं तेऽपि वरुणादयोऽस्यामस्त्र-

जातौ स्वयं प्रयोगमकार्षुः, तत्र जयसंभावना कथं संशीतेः संशयस्य पात्रम् । येषां वरुणादीनां संनिधापनमात्रादस्त्राणां वीर्यवत्त्वं ते यत्र प्रेरिताः संनिदधते तत्र को जयसंदेह इत्यर्थः । दैवतशब्दः पुंलिङ्गो न प्रसिद्धः ॥

त्रिदिवयुवतिरुद्यत्संप्रहाराभिमुख्य-
प्रवसदसुमनल्पप्रेमकल्लोलितापि ।
कमपि किल कबन्धीभूतमुज्झांचकार
व्यधिकरणमवेत्यालिङ्गनं चुम्बनं च ॥ ४० ॥

उद्यते संप्रहारे सङ्ग्रामे आभिमुख्येन प्रवसन्तोऽसवः प्राणा यस्य । तथा कबन्धीभूतं कंचिदप्सरास्तत्याज । कीदृशी । अनल्पेन प्रेम्णा रागेण कल्लोलिता चञ्चलीकृतापि । किं कृत्वा तत्याज । आलिङ्गनं चुम्बनं च व्यधिकरणं विभिन्नाधारं ज्ञात्वा । यतः शिरोरहितं कलेवरं कबन्धः ॥

वीरोऽरिशस्त्रगलदस्रवसावसेकै-
र्बीभत्सवृत्ति किल वर्ष्म यथायथाधात् ।
चित्तं द्युलोकललनासु तथातथा स
शृङ्गारवर्त्मनि विभावदशामियाय ॥ ४१ ॥

अरीणां शस्त्रैर्गलतास्रेण वसाया चावसेकैर्बीभत्सस्थिति वर्ष्म देहं वीरो यथायथाधत्त तथातथा स वीरो नाकनारीषु शृङ्गारमार्गे विभावदशामालम्बकत्वं जगाम । शृङ्गारबीभत्सयोर्विरोधाच्चित्रत्वम् ॥

सङ्ग्रामाभिमुखोज्झितासुरसुरो विस्पष्टदंष्ट्राङ्कुर-
क्रूरास्योर्जितवीरलोकगतये योऽखण्डयन्मण्डलम् ।
जज्ञे तेन दिनाधिपस्य किमपि त्रासाय कृत्वा पुरः
संप्राप्तस्वकबन्धसंधिविधुरस्वर्भानुसंभावनाम् ॥ ४२ ॥

संप्राप्तः स्वकबन्धसंधिर्येन स विधुरः क्रूरो यः स्वर्भानुस्तत्संभावनामुत्पाद्य तेन सूर्यस्य किमपि त्रासाय जज्ञे पर्यवसितम् । जनेर्भावे लिट् । तेन केन । यो युद्धत्यक्तप्राणः क्रोधवशात्प्रकाशदंष्ट्रः सूर्यस्य मण्डलमर्जितवीरलोकगमनार्थमखण्डयदभिनत् । वीरा हि सङ्ग्रामे संमुखं त्यक्तप्राणाः सूर्यमण्डलं भित्त्वा परं धाम प्रविशन्तीति स्मृतेः । दंष्ट्राक्रूरमुखत्वाद्राहुभ्रान्त्या सूर्येण त्रस्तमित्यर्थः ॥

अङ्गमङ्गमनिमग्ननिरूढप्रासदन्तुरितवृत्ति दधानः ।
कोऽपि नर्तनरतिं रणहर्षे दोःशतैरिव बबन्ध कबन्धः ॥ ४३ ॥

अनिमग्ना अत्रुडितास्तथा निरूढा ये प्रासा आयुधविशेषास्तैर्दन्तुरिता करालिता

वृत्तिर्यस्य तदङ्गमङ्गं वहन्कोऽपि कबन्धो रणेन हर्षे सति भुजशतैरिव वृत्तसक्तिं दध्रे । प्रविष्टानेकप्रासं तत्र युद्धमभूदित्यर्थः । हर्षे च नर्तनमुचितम् ॥

समरपरिहृतासोः कस्यचिन्नाकनार्या
समजनि रतिकेलिश्चुम्बनोल्लासमात्रः ।
तदधरपरिपीतस्फीतपीयूषपूरैः
पुनरपि हि स सद्यो जीवितव्यं प्रपेदे ॥ ४४ ॥

समरे परिहृतास्त्यक्ता असवः प्राणा येन तस्य कस्यचिन्नाकनार्या रतकेलिश्चुम्बनोल्लासप्रमाणः संजातः । हिर्यस्मादर्थे । तस्या नाकनार्या अधरात्परिपीताः । संक्रान्ता इत्यर्थः । तथाविधा ये स्फीताः पीयूषपूरास्तैः पुनरपि जीवितव्यं जीवितं स वीरो लेभे । नाकनारीणां वीरकरङ्केष्वभिष्वङ्गः ॥

वासः कृत्तिभिरासवर्द्धिरसृजा लीलावदंशः पलै-
र्मुक्ताभिः कटजन्मभिश्च दयितालोकस्तनालंकृतिः ।
किं किं नेत्थमसिध्यदुद्यतमृधोल्लासे निशाचारिणा-
मन्योन्यप्रहितामरासुरशरस्त्रग्दार्यमाणैर्गजैः ॥ ४५ ॥

उद्धते मृधोल्लासे युद्धस्फारेऽन्योन्यं प्रहिता ये देवासुरशरास्तेषां स्रजा पङ्क्त्या दार्यमाणैः खण्ड्यमानैर्हस्तिभिर्हेतुभी राक्षसानां किं किं नासिध्यत् । सर्वं सिद्धमित्यर्थः । इत्थमनेनप्रकारेण कृत्तिभिश्चर्मभिर्वासः । असृजा रक्तेनासवर्द्धिर्मद्यसमृद्धिः । पलैर्मांसैर्लीलापूर्वमवदंशोऽन्तरान्तरा चर्वणम् । कटजन्मभिर्गण्डजाताभिर्मुक्ताभिश्च दयितालोकस्य स्तनयोरलंकृतिर्भक्तिरभूत् । सपरिवारा राक्षसास्तत्र सुखमवसन्नित्यर्थः ॥

श्लिष्यन्निशातशरदारणनिर्जिहान-
सुव्यक्तमौक्तिकभृताखिलदिग्विभागैः ।
उद्धाट्यमानयमराजमहानसान्धः-
स्थालीलिपिः करटिनामुदटङ्कि कुम्भैः ॥ ४६ ॥

करटिनां हस्तिनां कवाटैर्यम एव राजा तत्संबन्धिनी उद्धाट्यमाना उद्घ्रियमाणा या महानसान्धःस्थाली तस्या लिपिः सादृश्यमुदटङ्कि टङ्किता । कीदृशैः । श्लिष्यद्भिर्निशातैः शरैर्दारणेन पाटनेन निर्जिहानानि निर्गच्छन्ति सुव्यक्तानि स्फुटानि यानि मौक्तिकानि तैर्भृता अखिला दिग्विभागा यैः ॥

तमसिपरिकरेण प्रौढिमानं दधाने
विततमहिमभाजि प्रोन्मदेभाश्रयेण ।

समररजनिकाले स्वप्रतापप्रदीपै-
र्ददृशुरखिलवारास्तत्त्वमग्र्यं जयस्य ॥ ४७ ॥

असिपरिकरेण खङ्गसमूहेन तथा प्रोन्मदानामिभानामाश्रयणेन तं प्रसिद्धं प्रौढिमानं दधाने तथा विस्तीर्णमहिमधारिणि रणरात्रिसमये सर्वे वीरा जयस्य तत्त्वं स्वप्रतापा एव प्रदीपास्तैर्ददृशुः । प्रतापैर्जयं लब्धवन्त इत्यर्थः । तमसि तिमिरे च भानां नक्षत्राणां चाश्रयेण प्रोन्मदे दीपैस्तत्त्वं पदार्थो दृश्यते ॥

इत्थंकारं करालोऽसमसमररसो दुर्वहान्योन्यवैर-
स्वैरस्वाराज्यरज्यन्निखिलमुखरुचामास्त देवासुराणाम् ।
उच्चण्डैर्मुण्डखण्डैरधिधरणि शरव्रातघातात्पतद्भिः
पुष्णन्नुष्णांशुसूनोः प्रमदवनगलन्नारिकेलीफलानि ॥ ४८ ॥

असमो यः समररसः स इत्थंकारं करालो भीषणोऽभूत् । केषाम् । देवासुराणाम् । कीदृशानाम् । दुर्वारं यदन्योन्यवैरं तस्य स्वैरं स्वतन्त्रं यत्स्वाराज्यमिन्द्रत्वं तेन रज्यन्ती रक्ता निखिला मुखरुग्येषाम् । किं कुर्वन् । उष्णांशुसूनोर्यमस्य अधिधरणि भूमौ प्रमदवनादन्तःपुरोचितोद्यानाद्गलन्ति यानि नारिकेलीफलानि तानि पुष्णन् । कैः । शरव्रातेन घातात्पतद्भिर्मुण्डखण्डैः । कुर्वन्निति लक्षणे शतृ ॥

बले दृप्यत्येवं शिशुशशभृदुत्तंसशिरसो
जयश्रीविस्रम्भग्रथितपरिरम्भव्यतिकरैः ।
बृहत्कोपाटोपप्रकटनविशेषस्थिरतर-
स्फुरद्युद्धश्रद्धं त्रयमपि पुराणामघटत ॥ ४९ ॥

शिशुर्लेखामात्रः शशभृच्चन्द्र उत्तंसो भूषणं यस्य तच्छिरो यस्य तस्य हरस्य बले एवं दृप्यति सति पुराणां त्रयमपि समगंस्त । कथम् । बृहतः कोपाटोपस्य प्रकटनेन विशेषेण स्थिरतरा युद्धश्रद्धा यत्र एवम् । दर्पः कैर्हेतुभिः । जयश्रिया विस्रम्भेण ग्रथिताः कृता ये परिरम्भव्यतिकरास्तैः । 'प्रथित' इति पाठः समीचीनः । मृत्युभयात्कथंचिदपि न मिलद्भिः पुरैस्तदा क्रोधाच्छत्रुजयसंभावनया मिलितमित्यर्थः ॥

ते रेजुर्दनुजा भुजार्गलहताशेषद्विषन्मन्दिर-
श्रीसंचाररसाः प्रकोपविगलद्धर्मोर्मिभिर्मूर्तिभिः ।
दीर्घक्लेशपरिग्रहासहतया शीघ्रं हरास्त्रानल-
ज्वालाश्लोषमवाप्तुमाहितबृहत्तैलानुलेपा इव ॥ ५० ॥

प्रकोपेन विगलन्तो घर्मोर्मयो यासां ताभिर्मूर्तिभिस्ते दनुजा रेजुः । भुजार्गलैर्हतो निवारितोऽशेषद्विषन्मन्दिरेषु श्रियः संचाररसो यैस्ते । अत उत्प्रेक्ष्यते—दीर्घो दीर्घकाल-

स्थायी क्लेशः पीडा तस्य परिग्रहेऽसहतया हेतुभूतया शीघ्रं हरास्त्राग्निज्वालाभिः प्लोषं दाहं प्राप्तुमाहितः कृतो बृहत्तैलानुलेपो यैस्ते ॥

कालत्वं भ्रुकुटीषु वेपथुरथो दन्तच्छदे भीष्मता-
भाजामूष्मभरश्च चेतसि पदं तेषां बबन्ध क्रुधा ।
अन्योन्याहितसङ्गकृष्णहिमगुज्वालाध्वजोट्टङ्कितं
श्रीकण्ठाशुगपातवैशससमासत्तिप्रभावादिव ॥ ९१ ॥

रोषवशाद्भीष्मतां भयानकत्वं भजतां तेषां पुराणां भ्रुकुटिषु कालत्वं काष्र्ण्यं यमत्वं वा, तथा दन्तच्छदे ओष्ठे वेपथुः कम्पः, तथा चेतसि ऊष्मभरस्तापः पदं बबन्ध । अत्र हेतूत्प्रेक्षा—अन्योन्यमाहितसङ्गैर्मिलितैः कृष्णहिमगुज्वालाध्वजैर्विष्णुचन्द्राग्निभिरुट्टङ्कितो निर्मितो यः श्रीकण्ठाशुगस्तस्य पातेन वैशसं दुःखं तस्य समासत्तिर्नैकट्यं तत्प्रभावादिव । कृष्णादीनामन्वर्थतयोत्प्रेक्षणम् ॥

रोहद्दुर्वारगर्वा अपि शशिशकलोत्तंसविध्वंसनाय
व्यायस्तैरस्त्रतन्त्रैः प्यधिषत दिविषद्वीरवर्गस्य वर्ष्म ।
ते दैत्याः क्रूरकृत्यास्तदवनिवनितालोकवक्त्रे तु चित्रं
तास्ता लीला विनश्यद्घनघुसृणपटे प्रापुरन्तर्हितत्वम् ॥ ९२ ॥

ते दैत्या दिविषद्वर्गस्य वर्ष्म शरीरं व्यायस्तैरितस्ततः क्षिप्तैरस्त्रतन्त्रैः प्यधिषत आच्छादितवन्तः । किमर्थमपि शशिशकलोत्तंसस्य हरस्य विध्वंसनाय नाशायापि । इत्यपिर्भिन्नक्रमो योज्यः । क्रूरकृत्याः अत एव रोहन्दुर्वारगर्वो येषाम् । चित्रमाश्चर्यं । तदवनौ दैत्यभूमौ वनितालोकस्य वक्त्रे तास्ताः प्रसिद्धा लीला अन्तर्हितत्वं प्रापुर्विनष्टाः । अन्यदाच्छादितमन्यदन्तर्हितमित्याश्चर्यम् ॥

हस्तैरस्त्रव्युदस्तैः प्रसृतसरसिजं लूनदण्डैर्विपाण्डु-
च्छत्रैरुच्चण्डफेनं स्फुटमसिभिरभिव्यक्तशैवालवल्लि ।
लीलानृत्यत्कबन्धभ्रमरकरचनैर्नर्तितावर्तचक्रं
सङ्ग्रामोर्वीसरस्ते दनुजमदगजा लोडयन्तो जगर्जुः ॥ ९३ ॥

अस्त्रेण व्युदस्तैः कृत्तैर्हस्तैः स्फुरितपद्मम्, तथा लूनदण्डैश्छत्रैर्बहुफेनं खड्गैः प्रकटितशैवललतम्, तथा लीलया नृत्यतां कबन्धानां भ्रमरकरचनैः पादरेचकादिभिर्नर्तितमावर्तचक्रं यत्र तत्सङ्ग्रामसरो लोडयन्तो दनुजा एव मदगजा जगर्जुः । 'वर्तित' इति पाठः ॥

असृक्स्रोतः प्रोतस्थलगलदसिच्छेदपटलैः
परीतं वीराणामुपहितनवीनासवमदम् ।

तदा सङ्ग्रामोर्वीतलमविरलेन्दीवरदल-
प्रसन्नौघक्रान्तान्तकचषकसाचिव्यमचिनोत् ॥ ९४ ॥

असृक्स्रोतसा रक्तप्रवाहेण प्रोतं पूरितं यत्स्थलं तत्र गलन्तो म्रियमाणास्तेषामसिच्छेदपटलैः परीतं व्याप्तं सङ्ग्रामोर्वीतलमविरलेन्दीवरदलेन संकुचितोत्पलपत्रेण प्रसन्नौघेन मदिराप्रवाहेणाक्रान्तस्य पूरितस्यान्तकचषकस्य यमपानभाजनस्य साचिव्यं सादृश्यमचिनोदवहत् । अत एव वीराणामुपहितः कृतो नवीनो मद्यमदो येन तत् । स्थलं चषकस्थानीयम् । असृक् प्रसन्नास्थानीयम् । असिच्छेदा इन्दीवरदलस्थानीयाः ॥

अन्तःसंप्राप्तवीरस्थितिरपि विवृतोद्रेकसेका सुराणां
सर्वत्रापि प्रवल्गत्पटहरणरसालम्बमानाम्बराग्रम् ।
वृद्धत्वं दर्शयन्त्यप्यनुपरतरजोविक्रिया विस्मयाय
प्रायः सैन्यद्वयी सा समजनि दिविषद्दानवाजिक्रियासु ॥ ९५ ॥

अन्तः संप्राप्ता वीरस्थितिर्यया सा तथा विवृत उद्रेकेण सेको यया तथा प्रवल्गन्तः पटहा यत्र स रणरसो यस्याः, तथा अम्बरस्याकाशस्याग्रमालम्बमाना आश्रयन्ती, तथा वृद्धत्वं वृद्धिं दर्शयन्ती तथा अनुपरतानपेता रजोविक्रिया यस्याः सा सेनाद्वयी सुरासुरयुद्धेषु आश्चर्याय जाता । आश्चर्यं च अन्तः संप्राप्ता वीनां पक्षिणामीरस्थितिः पलायनं यया सा । विभिः पक्षिभिर्वृत उद्रेक उत्सेको यस्याम् । अथवा विगता इरा भूमिर्यस्याः सा स्थितिर्यस्याः । विवृत उद्रेकेणात्यर्थं सेको यया सा । कथं हि भूमेः सेको युक्तः । यस्याः पटहरणे रसः साम्बराग्रमालम्बमाना कथम् । या वृद्धा सा अनुपरतरजाः कथम् ॥

आग्नेयास्त्रप्रभाभिर्घनघटितपरीरम्भमुज्जृम्भमाणं
दुर्वारं वारुणास्त्रं यदजनि पिहिताशेषसङ्ग्रामभूमि ।
तस्य क्रोधानुरोधोत्कटकटकयुगान्योन्यनिर्मुच्यमान-
क्रूरक्रूरेषुघातोद्धतरुधिरभरैर्निह्नवोऽह्नाय चक्रे ॥ ९६ ॥

यद्वारुणास्त्रमाग्नेयास्त्रदीप्तिभिर्घनो निबिडः परीरम्भः संश्लेषो यस्य तदजनि । तथा उज्जृम्भमाणं दुर्वारं पिहिता अशेषा सङ्ग्रामभूमिर्येन तस्य क्रोधानुरोधेनोत्कटं यत्कटकयुगं तेनान्योन्यं निर्मुच्यमानाः क्रूरक्रूरा ये इषवस्तैरुद्धतं यद्रुधिरं तस्य भरैर्निह्नवोऽपलापश्चक्रे । द्रवत्वारुणत्वाभ्यां सदृशेन रुधिरेण संसृष्टयोराग्नेयवारुणास्त्रयोरपह्नवः कृत इत्यर्थ इति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये युद्धवर्णनं नाम त्रयोविंशः सर्गः ।

---

चतुर्विंशः सर्गः ।

क्रोधोत्सेकादिति दितिभुवां तत्र तेषां त्रयाणां
प्रत्यासत्तौ पुनरुपययौ यौवनं संख्यरेखा ।
हित्वा दूरे तुलितपलितं कोषमुत्खातखड्ग-
ज्योतिर्व्याजादसितकवरीरीतिमामुञ्चतीव ॥ १ ॥

क्रोधस्योत्सेकाद्बाहुल्यात्तेषां त्रयाणां दैत्यानां प्रत्यासत्तौ सत्यां संख्यरेखा सङ्ग्रामस्थितिर्यौवनमुपययौ बाहुल्यमगात् । तुलितं पलितं जराशौक्ल्यं येन तं कोषं परिवारं परिवर्त्योत्खातस्य निष्कृष्टस्य खड्गस्य व्याजादसितायाः कवर्याः केशविशेषस्य गतिं भङ्गिमामुञ्चती । आङत्र स्वार्थे । प्रियप्राप्तौ च स्त्री विरहजातं पलितं त्यक्त्वा कृष्णां कवरीं दधती यौवनमायाति ॥

तत्तद्वीरप्रवरवरणप्रेप्सया वीप्सया ता
यातास्तस्यां रणभुवि तथा सान्द्रतामिन्द्रवध्वः ।
तत्रान्योन्यं कथमपि यथा संभ्रमाद्भ्रूणहत्या-
भीत्या बाणप्रकरकिरणं धन्विनो नान्वतिष्ठन् ॥ २ ॥

तेषां तेषां वीरप्रवराणां वरणं ग्रहणं तस्य प्रेप्सया प्राप्तुमिच्छया वीप्सया पौनःपुन्येनाप्सरसः सान्द्रत्वं बाहुल्यं तथा याता यथा तत्र रणभुवि धन्विनो भटा बाणप्रकरस्य किरणं कथमपि नाचरन् । कस्मात् । भ्रूणहत्यायाः स्त्रीवधाद्भीत्या संभ्रमात् । वाशब्द इवार्थः । यत्कोषः—'उपमायां विकल्पे वा' । 'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्' ॥

धूल्या दृष्टिं त्वचमविरतक्षिप्यमाणास्त्रतन्त्रै-
र्घ्राणं गन्धोत्कटकरिमदैस्तूर्यनादैः श्रवांसि ।
अन्योन्योत्कोपनपटुवचो विप्लवैश्चाबबाधे
जिह्वां जज्ञे तदपि कृतिनामुत्सवायैव युद्धम् ॥ ३ ॥

युद्धं धूल्या रजसा दृष्टिमाबबाधे । तथा अविरतं संततं कृत्वा क्षिप्यमाणैरस्त्रतन्त्रैस्त्वचं बबाधे । तथा गन्धोत्कटैः करिमदैर्घ्राणं बबाधे । तथा तूर्यशब्दैः कर्णान्बबाधे । तथान्योन्यमुत्कोपनानि पटूनि वचांसि तैर्विप्लवास्तैर्जिह्वां बबाधे । तदपि तथापि । पञ्चेन्द्रियबाधेऽपीत्यर्थः । युद्धं कृतिनां वीराणामुत्सवायैव जातम् । वीरत्वादिति ॥

रक्तैः सिन्दूरितमविरतोज्जृम्भमाणोपकारं
वक्त्राम्भोजं शरशतहठक्षिप्यमाणैर्भटानाम् ।

संख्यस्थानं पिहितगगनैरुद्धितानं घनास्त्रैः
सद्यो लीलासदनपदवीमाससादान्तकस्य ॥ ४ ॥

संख्यस्थानं युद्धप्रदेशोऽन्तकस्य क्रीडागृहगतिं प्राप । सुखं तत्र यमोऽरंस्तेत्यर्थः । लीलागृहगुणानाह—रक्तैः सिन्दूरितं सिन्दूरितवदिव कृतम् । तथा शरशतेन हठेनाक्षिप्यमाणैश्छिद्यमानैर्भटानां मुखपद्मैर्भूय उज्जृम्भमाण उपकारः पुष्पप्रकारो यत्र । तथा घनैरस्त्रैराच्छादिताकाशैरुन्नतवितानम् ॥

नीरन्ध्रं यत्प्यधित हरितामन्तरालं करालं
वल्गत्कौक्षेयकरुचिमयाकृत्यजस्रं तमिस्रम् ।
तस्य श्लिष्यन्नवनववरावाप्तिपर्याप्तलोभ-
स्वर्लोलाक्षीजनमुखशशिज्योतिषापह्नवोऽभूत् ॥ ५ ॥

वलगन्ती या कौक्षेयकरुचिः खड्गकान्तिस्तन्मयी आकृतिर्यस्य तत्तमिस्रं खड्गप्रभान्धकारो नीरन्ध्रं संकटतया हरितां दिशामन्तरालं प्यधित छादितवत्, तस्य खड्गप्रभान्धकारस्यापह्नवोऽभूत् । व्यपगमोऽभूदित्यर्थः । केन नवनवानां वराणामवाप्तौ पर्याप्तलोभोऽतिलुब्धो यः स्वर्लोलाक्षीजनोऽप्सरोवर्गस्तस्य मुखशशिनां श्लिष्यता ज्योतिषा प्रकाशेन । प्रकाशे सति ह्यन्धकारपक्षनिरासः ॥

एकस्थानाक्रमणविवृता खर्ववैराभिमर्षै
दर्शं दर्शं त्रिपुरमसुरैः सार्धमन्यैः समन्यौ ।
भर्गे साभ्यर्थनमिव मुहुस्तत्र संभूय भूयो
देवाः सेवावनतशिरसश्चिक्षिपुर्लोचनानि ॥ ६ ॥

एकस्थानस्याक्रमणेन विवृतं प्रकाशितं यदखर्वमनल्पं यद्वैरं तदभिमर्षात् । तैर्हि पूर्वमेवमेकत्र स्थाने मृत्युर्वृतः, अत एव वैरप्रकाशनम् । क्रोधवशाद्धि स्वच्छिद्रकालविस्मरणं भवति । अन्यैरसुरैः सार्धं सरोषं त्रिपुरं मुहुर्लक्षयित्वा देवाः संभूय युगपद्धरे दृष्टीः पुनः पुनः क्षिप्तवन्तः । चतुरं त्रिपुरनाशायेति भावः । साभ्यर्थनं सप्रार्थनम् । प्रार्थनासंभवात्कातर्ययुक्तमिवेत्यर्थः ॥

नृत्यद्वक्रभ्रुकुटिघटिताटोपलालाटनेत्र-
स्पर्धाबन्धप्रणयि धनुषः कुञ्चितस्याञ्चनेन ।
दैत्यग्लानत्रिजगदगदंकारचारित्रसीमा
सोऽरातिभ्यः समधित ततो हव्यभुङ्मित्रमस्त्रम् ॥ ७ ॥

ततो देवप्रेक्षणादनन्तरं स हरो हव्यभुङ्मित्रमग्निहसितमस्त्रं समधित संहितवान् । केभ्यः । अरातिभ्यः । 'क्रियया चोद्देश्ये' इति चतुर्थी । सत्यै शेते इतिवत् । कस्य । ध-

नुषः, अञ्चनेन कर्षणेन कुञ्चितस्य । अस्त्रं कीदृशम् । नृत्यन्ती कम्पमाना वक्रा या भ्रुकुटिस्तया घटिताटोपं यल्ललाटनेत्रं तस्य स्पर्धाबन्धप्रणयि परिचितम् । दैत्यग्लानस्य त्रिजगतः अगदंकारचारित्रे वैद्यकर्मणि स्वास्थ्यापादने सीमा अवधिः । 'रोगहार्यगदंकारः' इति कोषः ॥

वैरिद्वेषादपि परिणतिं गृह्णता बाणतायां
कृष्णेनाविष्कृत इव हठाद्विभ्रमः स्वप्रभाणाम् ।
अस्त्रप्रोतप्रबलहुतभुङ्निर्जिहानोग्रधूम-
स्तोमोऽपुष्णादसुरसुदृशामश्रुणः पूर्वरङ्गम् ॥ ८ ॥

अस्त्रे प्रोतो लग्नः प्रबलो हुतभुगग्निस्तत्र निर्जिहानो निर्गच्छन्नुग्रो धूमः पुरनारीणां वैधव्यकारणस्याश्रुणः पूर्वरङ्गं पीठिकामपुष्णादपुष्यत् । उत्प्रेक्ष्यते—कृष्णेन यथार्थनाम्ना हरिणाविष्कृतः प्रकटीकृतः स्वभानां विभ्रम इव । कीदृशेन । वैरिषु द्वेषाद्बाणतायां शरभावेऽपि परिणतिं गृह्णता । अपिर्भिन्नक्रमो बाणतायामपीत्यनेन योज्यः । धूमाकुलाक्ष्यः पुरस्त्रियो वैधव्यात्पूर्वमेवाश्रु मुमुचुरित्यर्थः ॥

व्यञ्जन्कौतूहलबहुलतामाशये खेचराणां
यो लक्ष्यत्वं युधि विवृतवान्बाणपक्षं लुलाव ।
बाणत्वं स त्रिभुवनगुरोरावहञ्शार्ङ्गधन्वा
तन्वा सार्धं श्रियमपि हठाद्दग्धुमैच्छत्पुराणाम् ॥ ९ ॥

स शार्ङ्गधन्वा हरिस्तन्वा वपुषा सार्धं श्रियमपि दग्धुमैच्छत् । हरस्य बाणत्वं शरभावमावहन्कुर्वन् । स कः । यो युधि युद्धे लक्ष्यत्वं विवृतवान्प्रकाशितवान् । बाणस्यासुरविशेषस्य पक्षं बन्धुवर्गं लुलाव । अत एवाश्चर्यबाहुल्यं व्यञ्जन् । येन शरव्यत्वं प्राप्य बाणपक्षो लूनः स बाणत्वं प्राप्यान्यं दहतीत्याश्चर्यम् ॥

येनोदस्तो नभसि स बलेर्मन्दिराणि प्रवेष्टुं
लक्ष्म्या मन्येऽनघपरिघतामाययौ दण्डपादः ।
बाणीकृत्य त्रिपुररिपुणा मुच्यमानोऽतिदूरं
स त्रैलोक्याक्रमणचणतां भूय एव प्रपेदे ॥ १० ॥

स हरिर्भूयः पुनरेव त्रैलोक्याक्रमणेन चणः ख्यातस्तद्भावं प्रपेदे । त्रिपुररिपुणा हरेण बाणीकृत्य शरभावमापद्योन्मुच्यमानः । येनाकाशे ऊर्ध्वं क्षिप्तः स दण्डपादो दण्डाकारः पादः अनघपरिघतां दृढार्गलभावमाययौ । किं कर्तुम् । लक्ष्म्या मन्ये मन्दिराणि प्रवेष्टुम् । दण्डपादे ऊर्ध्वोत्क्षिप्ते सति लक्ष्मीर्बलिगृहान्नाविशदित्यर्थः ॥

निर्मुक्तायाः सपवनजवं व्योम्नि भर्गेण हेते-
रेकस्या अप्यहह कति नो हेतयस्ताः प्रसस्रुः ।

याः प्रत्यङ्गं विहितवलनाः प्रेतराजार्प्यमाण-
प्रेङ्खज्जिह्वापटलपटुतामालिलिङ्गुः पुराणाम् ॥ ११ ॥

वायुसदृशवेगं हरेण क्षिप्ताया एकस्या अपि हेतेरेकस्यायुधस्य ता हेतयो ज्वालाः प्रसस्रुः । अपिर्विरोधे । एकहेतेर्बहुहेतिरहहेति प्रसरणलक्षणो विरोधः । याः पुराणां प्रत्यङ्गं विहितवलनाः कृतवेष्टनाः प्रेतराजेन यमेनार्प्यमाणं भक्षणार्थं संसृज्यमानं प्रेङ्खत्स्फुरज्जिह्वापटलं तत्पाटवं प्रापुः । यमजिह्वाकर्तव्यं ग्रासं ज्वाला अकुर्वन्नित्यर्थः ॥

तापं बिभ्रत्यसमविशिखासङ्गतो वेपमानै-
रङ्गै रागव्यतिकरमयीमादधानेव दृष्टिम् ।
ज्वालैकैका दितिसुतपतीन्दूरमुक्ताम्बरश्री-
रालिङ्गन्ती चतुरमकरोदाकुलान्मोहनेन ॥ १२ ॥

असमस्य विशिखस्य शरस्यासङ्गादेकैका ज्वाला दैत्यान्मोहनेन मोहापादनेनाकुलान्द्रुतमकरोत् । कीदृशी । तापं बिभ्रती पोषयन्ती । तथा कम्पमानैरङ्गै रागस्य रञ्जनस्य व्यतिकरस्तन्मयीं दृष्टिमादधानेव । तथा दूरं मुक्ताम्बरश्रीराकाशलक्ष्मीर्यया । असुराणामालिङ्गन्ती कान्ता चासमविशिखस्य कामस्यासङ्गात्संतापात्सकम्पैरङ्गैः साभिष्वङ्गां दृष्टिं कुर्वतीव त्यक्तवस्त्रालिङ्गन्ती सुरतेन पुरुषानाकुलान्करोति ॥

नेतुं दैत्योत्करमचरमन्यादतामादधानः
पूर्वं प्राणाहुतिमतनुतत्सुन्दरीनेत्रनीरैः ।
चण्डीभर्तुः स विशिखशिखी ज्वालजिह्वाजटालो
विष्वग्विश्वग्रसनरसिकाहंकृतित्वं प्रपेदे ॥ १३ ॥

चण्डीभर्तुर्हरस्य स शराग्निर्विष्वक्समन्ताद्विश्वग्रसने रसिकाहंकृतिर्यस्य तद्भावं प्रपेदे । विश्वग्रासारम्भमकरोदित्यर्थः । कीदृशः । अतनुभिरनल्पैस्तत्सुन्दरीणां दैत्यकान्तानां नेत्रनीरपूरैर्बाष्पप्रवाहैः पूर्वं प्राणाहुतिमादधानः । किं कर्तुम् । दैत्योत्करमचरमन्यादतामपश्चिमभोजनतां नेतुम् । यतो ज्वालजिह्वाभिर्जटालः । भोजनार्थिना च जिह्वाजटालेन सता पूर्वं प्राणाहुतिः क्रियते ॥

ज्वालादण्डाः पुरपरिभवारम्भसंरम्भयोगे
लोलाः कोलाहलितककुभि व्योम्नि भर्गास्त्रवह्नेः ।
नव्योत्साहोत्सवबृहदुपक्रान्तनृत्तक्रियाया
रेजुर्व्यक्ता इव सुबहवो बाहवो विश्वलक्ष्म्याः ॥ १४ ॥

पुराणां परिभवारम्भार्थं संरम्भयोगे लोला लम्पटा हरास्त्राग्नेर्ज्वालादण्डा व्योम्नि रेजुः । अत एव कोलाहलिताः कोलाहलवत्यः कृताः ककुभो दिशो येन । अत्रोत्प्रेक्षा—

नव्योत्साहो यो भावित्रिपुरसंहारादुत्सवस्तत्र वृद्दत्युपक्रान्तारब्धा नृत्तक्रिया यया तस्या विश्वलक्ष्म्याः सुबहवोऽनेके बाहव इव । उत्सवे हि नृत्तमुचितम् ॥

तत्तन्नानारसशबलिताशेषविश्वोपसर्ग-
क्रीडानाम्नि प्रकरणविधावात्तनिर्वाहसीम्नि ।
स प्राविक्षद्द्रुततरमथालङ्घ्यदैर्घ्याशुगाग्नि-
ज्वालाजालान्तरजवनिकां दैत्यशैलूषलोकः ॥ १५ ॥

स दैत्या एव शैलूषा नटास्तेषां लोकः अलङ्घ्यं दैर्घ्यं यस्य तज्ज्वालाजालान्तरं तदेव जवनिकाच्छादनपटी तां प्राविक्षत् । तैस्तैर्नानारसैः क्रोधलोभादिभिः शबलितः सहितो यो विश्वोपसर्गो जगदुपद्रवः स एव क्रीडा सा नाम यस्य तस्मिन्प्रकरणविधौ दशाङ्कयुक्तनाट्यबन्धविशेषे आप्ता निर्वाहसीमा समाप्तिर्येन तस्मिन्सति । नानारसैः श्टङ्गारादिभिश्चित्रिते नाट्ये निर्वाहिते सति शैलूषाणामन्तर्धानाय जवनिकाप्रवेशो युक्तः ॥

तेषामङ्गे मरकतमणिप्रोतसत्पद्मराग-
स्वर्णक्रीडाभरणसचिवे दानवाधीश्वराणाम् ।
धूमस्तोमाकुलितविकसद्विस्फुलिङ्गात्तसङ्ग-
श्रीकण्ठास्त्रानलमुखशिखा नो मुहुर्व्यक्तिमूहुः ॥ १६ ॥

धूमस्तोमेन पुञ्जेनाकुलितो विकसितैर्विस्फुलिङ्गैरात्तसङ्गो यः श्रीकण्ठास्त्रानलस्तस्य मुखे शिखा ज्वाला व्यक्तिं लक्षितत्वं नो ऊहुर्बभ्रुः । कुत्र । तेषां दानवानामङ्गे । ज्वालाव्यञ्जनाभावे हेतुमुपन्यस्यति—मरकतमणिभिः प्रोतानि सत्पद्मरागाणि स्वर्णमयानि क्रीडाभरणानि तत्सचिवे तद्युक्ते । मरकतैर्धूमस्य, पद्मरागैः स्फुलिङ्गानाम्, स्वर्णभूषणैरग्निज्वालानां सादृश्यादलक्षितत्वम् ॥

घोरक्रूराकृतिविकृततां किं जगत्कण्टकाना-
मन्यत्तेषामखिलदिविषद्वैरिणां वर्णयामः ।
येषामग्रे हठजयवलत्कीलजालस्य मन्ये
बाणाग्नेरप्यजनि सहसोत्कम्पसंपद्भयेन ॥ १७ ॥

अखिलस्य जगतः कण्टकानामुपद्रवकारिणां तेषां घोरक्रूराकृतिः शरीरं तस्य विकृततां विकारवत्त्वं किमन्यद्वर्णयामः । अन्यच्छब्दस्य प्रथमं सामान्येनोपक्रान्तस्य पश्चाद्घोरक्रूरेति विशेषोपन्यासः । येषामग्रे हठेन जवेन वलत्कीलजालं यस्य तस्य बाणाग्नेरपि तूर्णमुत्कम्पसमृद्धिर्जाता । मन्ये तेभ्यो भयेनेति संभावनम् ॥

संनद्धानामपि परिकरं रत्नमन्त्रौषधीनां
मोघीकृत्य त्रिनयनशराग्रेसरो जातवेदाः ।

गात्रं गात्रं द्युसदसुहृदां निर्दहन्नट्टहासं
व्यानञ्जेव प्रकटितटसत्कारनादैस्तदस्त्राम् ॥ १८ ॥

त्रिनयनशरस्याग्रस्थोऽग्निरट्टहासमिव व्यानञ्ज व्यक्तीकृतवान् । कैः । तदस्त्रां पुरकीकसानां टसत्काररूपैर्नादैर्गात्रं गात्रमङ्गमङ्गं निर्दहन्निति हेतुः । किं कृत्वा । संनद्धानामग्निदाहाभावार्थं गृहीतानामपि रत्नमन्त्रौषधीनां परिकरं समूहं मोघीकृत्य निष्फलतां नीत्वा । शत्रूणां रक्षणोपायविघटनादट्टहासोक्तिः ॥

विश्वं बाष्पं व्यसृजदसकृद्यद्ध्वजे व्योमभाजि
स्पष्टीचक्रुः समिदुपचिताः कस्य ये नोपतापम् ।
सोदर्यत्वादिव धृतघनस्नेहयोगः स तेषां
चक्रेऽङ्केऽङ्के शरहुतवहो गाढमालिङ्गनानि ॥ १९ ॥

स शराग्निस्तेषामङ्केऽङ्के गाढमालिङ्गनानि चक्रे । यतो धृतो घनस्नेहेन मेदोवसादिना योगो येन । सोदर्यत्वादिव सादृश्यादिव । तदेव दर्शयति—यद्ध्वजे येषां ध्वजे व्योमभाजि उन्नमिते विश्वं बाष्पमश्रु व्यसृजदमुचत् । सङ्ग्रामे उपचिताः सन्तो ये कस्य नोपतापं चक्रुरित्यर्थः । अग्नेर्ध्वजे धूमे च सति बाष्पनिर्यासो भवति । अग्निश्च समिद्भिरुपचितः संतापकारीति शब्दसाम्यम् ॥

व्योमोत्सङ्गं गिरिशविशिखोल्लिख्यमानाग्निशृङ्ग-
च्छ्यूताः स्यूता दिशि दिशि तदा प्राक् प्यधुर्धूमलेखाः ।
पश्चादासन्नसुरसुदृशामश्रुणे मुच्यमान-
स्वर्वन्दिस्त्रीचरणनिविडायोमहाशृङ्खलौघाः ॥ २० ॥

गिरिशविशिखे उल्लिख्यमानोऽपूर्वत्वेन संधीयमानोऽग्निस्तस्य शृङ्गाणि शिखास्तैश्छ्यूता वान्ताः, तथा दिशि दिशि स्यूता धूमलेखाः प्राक् पूर्वं व्योमोत्सङ्गं प्यधुश्छादितवत्यः । धूमलेखाः पश्चादसुरीणामश्रुणे आसन् । धूमलेखानां द्विविधं कार्यम्—व्योमाच्छादनमश्रुजननं च । तच्च ताभिः क्रमेण संपादितम् । अत एव मुच्यमानानां स्वर्बन्दिस्त्रीणां चरणेषु निबिडा अयोमया महान्तः शृङ्खलौघाः । अत्र रूपके सादृश्यसंबन्धः कार्यकारणसंबन्धश्च निबन्धनम् ॥

सेनाधूलीतमसि नभसि व्याप्तिपर्याप्तिभाजि
भ्राजिष्णुत्वं भजति च गणे सर्वतः खेचराणाम् ।
तेषां शूरस्थितिमजहतां प्रस्खलन्मण्डलाग्र-
च्छाये तस्मिन्महति सहसा धाम वह्नौ ममज्ज ॥ २१ ॥

शूरस्थितिं शूरभावमजहतां तेषां पुराणां धाम तेजस्तस्मिन्नग्नौ ममज्ज मग्नम् ।

प्रस्खलन्ती नश्यन्ती मण्डलाग्राणां छाया कान्तिर्यत्र तस्मिन्सति । सेनाधूल्येव तमस्तस्मिन्नभसि विषये व्याप्तिपर्याप्तिं भजति । तथा खेचराणां देवानां गणे च भ्राजिष्णुत्वं दीप्तत्वं भजति । शूरस्यादित्यस्य च वह्नौ धाम मज्जति । आदित्यपक्षे मण्डलं विम्बम् । खेचरास्तारकाः ॥

बन्दीभूतत्रिदिववनिताकोष्णनिःश्वाससङ्ग-
म्लायद्वालव्यजनपवनाभ्यस्तशीतातपानाम् ।
ईशानास्त्रज्वलनघटनाद्ब्यानशे दानवानां
चित्रं तेषां प्रमयसमयेऽप्यङ्गमङ्गं प्रतापः ॥ २२ ॥

ईशानस्य हरस्यास्त्राग्निसंबन्धात्प्रतापस्तेषामङ्गमङ्गं प्रमयसमयेऽपि मरणकालेऽपि [प्रतापो] व्याप्तवान् । बन्दीभूता हठहृता यास्त्रिदिववनितास्तासां शोकवशात्कोष्णाः किंचिदुष्णा ये निःश्वासास्तेषां सङ्गेन म्लायन्वालव्यजनपवनश्चामरमरुत्तेन हेतुनाभ्यस्तौ शीतातपौ यैः । एतेन प्रमयात्पूर्वं प्रतापवर्णनम् । प्रतापः प्रकृष्टतापः, अरिभयजननी वार्ता च ॥

हित्वा तेषां घनमपघनं संसरच्छंकरास्त्र-
प्रान्तप्रोतानलसदवथुं विश्वसाम्राज्यलक्ष्मीः ।
स्वैरं भेजे सुचिरशिशिरोदञ्चदानन्दबाष्प-
स्रोतःसिक्तं पुनरपि सुराधीश्वरस्याङ्गसङ्गम् ॥ २३ ॥

घनं कृत्वा संसरञ्शंकरास्त्रप्रान्तप्रोतो योऽनलस्तेन सदवथुं सतापमसुराणामपघनमङ्गं हित्वा विश्वसाम्राज्यलक्ष्मीरिन्द्रस्याङ्गसङ्गं पुनरपि स्वैरं भेजे । कीदृशम् । सुचिरं शिशिरेणोदञ्चतानन्दबाष्पस्रोतसा सिक्तम् । स्त्री च संतप्तं त्यक्त्वेतरं सेवते ॥

नृत्यत्कीलापटलजटिला व्याप्नुवन्तः समन्ता-
दुर्वीमभ्रंलिहलहरिभिर्भस्मशेषैः शरीरैः ।
तत्तद्दीप्तौषधितिलकितोत्सङ्गकैलासभूभृ-
च्छृङ्गश्रेणीस्मरणसरणिं तेऽपुपञ्शंकरस्य ॥ २४ ॥

नृत्यता कीलापटलेन ज्वालाजालेन जटिला आवृताः । तथाभ्रंलिहलहरिभिर्भस्मशेषैः । आकाशव्यापिभिर्भस्मशेषैरित्यर्थः । शरीरैरुर्वीं व्याप्नुवन्तस्ते दैत्यास्ताभिर्दीप्ताभिर्ज्वलन्तीभिरोषधिभिस्तिलकितोत्सङ्गः शोभितमध्यः कैलासभूभृत्तस्य शृङ्गश्रेणी तस्याः स्मरणसरणिं शंकरस्यापुपन् । भस्मशेषाणि ज्वालावृतानि पुरशरीराणि दृष्ट्वा ज्वलितौषधिं कैलासशैलं हरोऽस्मार्षीदित्यर्थः ॥

भिन्नं भिन्नं निशितविशिखज्योतिषा प्रज्वलन्तो
दैत्येन्द्रास्ते समरवसुधावेदिसीम्नि त्रयोऽपि ।

त्रैलोक्यापत्प्रशमनमये सप्ततन्तावपर्णा-
भर्तुर्जग्मुः सदजिनतनोरग्रतो वह्निकृत्यम् ॥ २५ ॥

निशितविशिखज्योतिषा शराग्निना भित्त्रं भित्त्रं पृथक्पृथग्रणवेदिमार्गे प्रज्वलन्तस्ते त्रयो दैत्या वह्निकृत्यमग्निकार्यं जग्मुः । कुत्र । त्रैलोक्यापदः प्रशमनप्रकृतौ सप्ततन्तौ यज्ञे । कस्य । अपर्णाभर्तुर्हरस्य । सदजिनं हस्तिचर्म यस्याः सा तनुर्यस्य । यज्ञे च त्रयोऽग्नयो वेदौ वह्न्युद्दीपनस्थाने ज्वलन्ति । सदजिनतनोरपर्णाभर्तुरिति यज्ञानुगुणम् ॥

उद्यद्दानह्रद इव वलद्धूमदण्डच्छटाभि-
र्दूरं मुञ्चन्वमथुकणिका दिङ्मुखेषु स्फुलिङ्गैः ।
सिन्दूराभासखमुखतया सोऽस्त्रभूर्वीतिहोत्रो
भङ्गं दन्तावल इव पुरश्रीनलिन्याश्चकार ॥ २६ ॥

दन्तावलो हस्तीव सोऽस्त्रभूर्वीतिहोत्रोऽग्निर्भङ्गं नाशं चकार । कस्याः । पुरश्रीस्त्रिपुरलक्ष्मीरेव नलिनी पद्मिनी तस्याः । सिन्दूराभासखं सिन्दूरदीप्तिसदृशं मुखमारम्भो यस्य तद्भावेन । कीदृश इव । वलन्तीभिर्धूमदण्डच्छटाभिरुद्यन्दानह्रदो यस्य । स्फुलिङ्गैरग्निकणैः करसीकरानिव दिगग्रेषु किरन् । हस्तिपक्षे—सिन्दूरेणभायाः सखि मुखमाननं यस्येति विग्रहः ॥

तेषां दैर्घ्यप्रसरसुहृदो रेजिरे सिन्दुवार-
श्वेतोदस्तानलमलरजोराशयस्ते त्रयाणाम् ।
यैः कृष्णोरःस्थलतललिपिन्यन्तरिक्षे शिशिक्षे
निर्विक्षेपैरुपनतनवब्रह्मसूत्रप्रतिष्ठा ॥ २७ ॥

तेषां त्रयाणां सिन्दुवारवच्छ्वेता उदस्ता उत्थिता अनलमलभूता रजोराशयो रेजिरे रेजुः । दैर्घ्यप्रसरस्य सुहृदः परिचिताः । यैरुपनतं नवं यद्ब्रह्मसूत्रं यज्ञोपवीतं तस्य प्रतिष्ठा शिशिक्षे । कुत्र । कृष्णोरःस्थलस्य लिपिः सादृश्यं यस्य तस्मिन्नन्तरिक्षे नभसि । उरःस्थलं च यज्ञोपवीतस्थानम् ॥

भस्मस्मेरोऽसितफणिनिभाविर्भवद्धूमदण्डो
व्यञ्जन्सान्द्राञ्जनजवनिकाविभ्रमात्कालकूटम् ।
लालाटाक्षिद्युतिभृदुपरि प्रोतकीलाकलापः
शंभोरेवानुकृतिमकरोत्सायकाग्निः क्रमेण ॥ २८ ॥

शंभोः शराग्निः शंभोरेव साम्यमकरोत् । यतो भस्मना स्मेरो धवलः । तथा असितफणिनः कृष्णसर्पस्य वर्णाकारत्वाभ्यां निभ आविर्भवन्धूमण्डदो यस्य । तथा सान्द्रायाञ्जनजवनिका कज्जलतिरस्करिणी तद्विभ्रमात्कालकूटं व्यञ्जन् । तथा लालाटस्याक्ष्णो

द्युतिभृदुपरि प्रोत ऊर्ध्वगो ज्वालाकलापो यस्य । स्वामिनो भृत्यः साम्यं करोतीत्येवकारोपन्यासः ॥

पक्कानामप्यनवधिमता स्वप्रतापानलेन
स्वर्गारीणां बतबत वपुर्दुर्जरं मेदुराणाम् ।
बिभ्रद्दीप्तां रुचिमपि मुहुर्यन्निगीर्यैव शुष्मा
धूमोद्गारान्कटुककटुकान्भोगिराजः ससर्ज ॥ २९ ॥

अनवधिमता परिच्छेदरहितेन निजप्रतापाग्निना पक्कानां च तथा मेदुराणां घनानां मेदस्विनां चासुराणां वपुर्दुर्जरं दीप्तां रुचिं दीप्तमशनाभिलाषं बिभ्रदपि शुष्माग्निरतिकटुकान्धूमोद्गारानुत्सृष्टवान् । दुर्जरस्य द्रव्यस्य हि कटुकात्मको विपाकोऽनुभवसिद्धः ॥

त्रैलोक्योपप्लवशममयोत्साहमाहात्म्यभाजां
सर्वाशानां विवृतहसितोल्लासभङ्गिर्मुखेषु ।
तेषामङ्गाज्जवनपवनाडम्बरैः कीर्यमाणो
भस्मस्तोमस्तरुणतगरोद्गारबन्धुर्ववल्ग ॥ ३० ॥

जवनस्य जवाधिकस्य पवनस्याडम्बरैस्तेषामङ्गात्कीर्यमाणः क्षिप्यमाणो भस्मराशिर्ववल्ग आवृतवान् । कीदृशः । सर्वदिशां मुखेषु विवृता प्रकटीकृता हसितोल्लासस्य भङ्गिः सादृश्यं येन । यतस्त्रैलोक्यस्योपप्लवानां शमस्तन्मय उत्साहस्तन्माहात्म्यं भजन्तीनाम् । उत्साहे हासो युक्तः । तथा तरुणो यस्तगरोद्गारस्तगराख्यपुष्पविकासस्तस्य बन्धुः ॥

भङ्गिर्लेभे चतुरमरुता दिक्षु विस्तार्यमाणै-
र्गीर्वाणारिप्रवरवपुषामुन्मिषद्भूतिलेशैः ।
तत्तत्कल्लोलितचरजगद्विप्लवातङ्कशङ्का-
संकोचोत्कत्रिभुवनगुरुक्षिप्यमाणाक्षतानाम् ॥ ३१ ॥

चतुरेण मरुता दिक्षु कीर्यमाणैर्दैत्यदेहानामुन्मिषद्भिर्भूतिकणैर्भङ्गिः सादृश्यं लेभे । केषाम् । ते ते कल्लोलितचरा उल्लासितपूर्वा ये विप्लवा उल्काबाधव्यसनानि (?) तेषां शङ्का तस्याः संकोचे निवारणे उत्को यस्त्रिभुवनगुरुर्महेश्वरस्तेन क्षिप्यमाणानामक्षतानां मन्त्रसंस्कृतानां तण्डुलादीनाम् । त्रिभुवनगुरुरित्यनुगुणम् ॥

फेनोण्डूकप्रकरकरणिं व्योमसिन्धौ बबन्ध
व्यानञ्जाङ्गे त्रिदिवकरिणां किं च शृङ्गारभङ्गिम् ।
दैत्येन्द्राङ्गानलमलरजोडम्बरोऽशेषदिक्षु
क्षिप्तो दृप्तप्रमसृमरमरुच्चक्रवालक्रमेण ॥ ३२ ॥

प्रसृमरमुल्लसद्यन्मरुच्चक्रवालं तस्य क्रमेण क्रमणेन सर्वदिक्षु क्षिप्तो दैत्येन्द्राङ्गनामनलोऽग्निस्तस्य मलरजोडम्बरो भस्मप्रपञ्चः फेनस्योण्डूकाः पिण्डास्तत्प्रकरस्य कर्णिसादृश्यं व्योमसमुद्रे प्राप । तथा त्रिदिवकरिणां शृङ्गारभङ्गिं सिन्दूरमण्डनसादृश्यं व्यानञ्ज व्यक्तीकृतवान् । आकाशव्यापी बभूवेत्यर्थः ॥

इत्थं सिद्धे दितिजविजये पत्रिणा शैलपुत्री-
भर्तुर्निर्वर्तितजगदभिप्रायपूर्तिक्रमेण ।
भूयो भूयः प्रमदमदिरापानगोष्ठीगरिष्ठ-
क्षैब्यक्षुण्णा इव दिविषदोऽनर्गलं ते ववल्गुः ॥ ३३ ॥

ते दिविषदः सुराः पुनः पुनरयन्त्रणं ववल्गुर्ननृतुः । प्रमदो हर्ष एव मदिरा तस्याः पानगोष्ठी तया गरिष्ठं क्षैब्यं तेन क्षुण्णाः सेविता इव । कस्मिन्सति । हरशरेण दैत्यविजये एवं सिद्धे निर्वर्तितः संपादितो जगदभिप्रायस्य स्वसुखसंपत्तिरूपस्य पूर्तिक्रमः पूरणस्थितिर्येन । क्षीबश्चानियन्त्रणं नृत्यति ॥

निष्कृष्टायाः श्रिय इव गृहाम्भोजसौगन्ध्यलुभ्य-
द्भृङ्गश्रेणीः पदनददयःशृङ्खलाः प्रेङ्खयन्त्यः ।
ता निर्जग्मुस्तदनु दनुजाधीश्वराणां गृहेभ्यो
हेलाखेलाः प्रमदपदवीवीजनान्नाकिबन्द्यः ॥ ३४ ॥

पुराणां गृहेभ्यस्ता नाकिनां बन्द्यो हठहृता नार्यो निर्ययुः । कीदृश्यः । पदेषु नदन्त्योऽयःशृङ्खलाः प्रेङ्खयन्त्यो वाहयन्त्यः । अत्रोत्प्रेक्षा—पुरगृहेभ्यो निर्वासिताया लक्ष्म्या गृहभूतं यदम्बुजं तत्सौगन्ध्यलुब्धा या भ्रमरपङ्क्तयस्ता इव । हर्षमार्गोल्लासनात्क्रीडामन्थरगामिन्य इत्यर्थः ॥

दैत्यध्वंसोड्डमरितमृडोपक्रियोपक्रमात्ता
हित्वा तास्ताः प्रकृतिविकृतीरुद्धतः साध्यसिद्धेः ।
आज्ञाविश्राणनचटुलितभ्रूलते शूलपाणौ
भूयोऽप्यापन्निजनिजवपुःसौहृदं नाकिलोकः ॥ ३५ ॥

साध्यस्य पुरवधस्य सिद्धेरुद्धतो नाकिलोको निजनिजेन वपुषा सौहृदं युक्तत्वं पुनरपि प्रापत् । शूलपाणौ हरे आज्ञादानेन चटुलिता भ्रूलता येन तस्मिन्सति । तास्ता यन्त्रभावापादनरूपाः प्रकृती रूपान्तरापत्तीस्त्यक्त्वा । कीदृशीः । दैत्यध्वंसार्थमुड्डमरिता गृहीता या मृडोपक्रिया ईश्वरोपकारस्तदुपक्रमार्थमात्ताः । पुरवधप्रवृत्तस्य हरस्याङ्गतायै गृहीता यन्त्रादिरूपावस्थास्त्यक्त्वा ब्रह्मादिभिः स्वं स्वं रूपं प्राप्तमित्यर्थः ॥

प्रत्यक्सिन्धौ स्मरजिदिषुणा क्षिप्यमाणः प्रदीप्तै-
रङ्गैर्ज्वालापटलघटनादादितेयारिलोकः ।
स्वर्नाथास्त्रप्रहरणभयोद्भ्रान्तदावाग्निमग्न-
क्ष्माभृद्वर्गः स्मरणसरणिं कस्य चेतो न निन्ये ॥ ३६ ॥

स्मरजित इषुणा शरेण प्रत्यक्सिन्धौ पश्चिमसमुद्रे क्षिप्यमाण आदितेयारिलोको देववैरिजनः स्वर्नाथास्त्राद्वज्रात्प्रहरणभयेनोद्भ्रान्तः संभ्रान्तोऽत एव दावाग्निमग्नो यः क्ष्माभृद्वर्गो गिरिगणस्तस्य स्मरणसरणिं स्मर्यमाणत्वं कस्य न चेतो निन्ये । सर्व एव दावाग्निमग्नान्पर्वतान्सस्मरुरित्यर्थः । कैः । ज्वालायोगाद्दीप्तैरङ्गैः ॥

नीत्वा तापं त्रिजगदसकृद्दुःसहैर्मण्डलाग्रै-
रस्तं यान्तः पयसि जलधेस्ते त्रयस्तत्र शूराः ।
विश्वस्मिन्नप्यहह महसा बोधितानल्पपद्मं
प्रादुश्चक्रुर्निरुपधि हठव्यञ्जिताशं प्रकाशम् ॥ ३७ ॥

दुःसहैर्मण्डलाग्रैः खड्गैर्बिम्बाग्रैश्च त्रिजगत्त्रिलोकीं तापं दुःखमातपं च नीत्वा समुद्रजलेऽस्तं गच्छन्तस्ते त्रयः शूरा वीरा आदित्याश्च विश्वस्मिन्नपि प्रकाशं बाधाभावमालोकं च प्रादुश्चक्रुः प्रकटयामासुः । महसा तेजसा बोधितानल्पा पद्मा लक्ष्मीर्नलिनानि च यत्र । तथा निरुपधि उपाधिवर्जितं कृत्वा व्यञ्जिता आशा आस्था दिशश्च यत्र एवं कृत्वा । अस्तं गच्छन्तश्चादित्याः प्रकाशं व्यञ्जयन्तीत्याश्चर्यम् ॥

देवः सोऽथ त्रिभुवनगुरुर्वैकृतं घोरघोरं
तत्संजह्रे त्रिजगदगदंकारचारित्रमुद्रः ।
सन्तो नैसर्गिकमधुरिमोपोढवार्तामुहूर्तं
नन्वाहार्यां खलनिकृतये विक्रियामाद्रियन्ते ॥ ३८ ॥

त्रिजगतोऽगदंकारचरित्रा मुद्रा यस्य स त्रिभुवनगुरुर्देवो हरस्तद्घोरतरं वैकृतं संजह्रे । नैतदाश्चर्यम् । नैसर्गिकेण सहजेन मधुरिम्णा उपोढा वार्ता येषां ते । सहजमधुरा इत्यर्थः । सन्तः खलानां निकारार्थमाहार्यां कृत्रिमां विक्रियामभिनयन्ति । सन्तो दुर्जनबाधार्थं कृत्रिमं विकारमभिनीय तस्यां सिद्धायां माधुर्यलक्षणं स्वभावमेव प्रपद्यन्त इत्यर्थः ॥

गीर्वाणानां तदनु पृतना सा प्रहर्षान्तरङ्गै-
रङ्गैरुद्यद्विपुलपुलकोपस्क्रियामावहन्ती ।
मध्येकृत्य त्रिनयनमभिव्यक्तभक्तिप्रसक्ति
द्यामास्कन्द्य स्वसदनधिया भूय एव प्रतस्थे ॥ ३९ ॥

प्रहर्षस्यान्तरङ्गैरानन्दवद्भिरङ्गैरुद्यता विपुलेन पुलकेनोपस्क्रियां शोभां बिभ्रती सा देवसेना अभिव्यक्ता भक्तिप्रसक्तिर्यत्र एवं कृत्वा हरं मध्ये कृत्वा दिवसमावृत्य स्वसदनेषु धिया भूय एव प्रतस्थे। कर्तव्यनिष्पत्त्या सानन्दा देवसेना स्वगृहान्प्रति प्रस्थितेत्यर्थः॥

नृत्यन्निर्मुद्ररुद्राशुगशिखिनिशितज्वालजालावलेह-
क्षुभ्यद्दुर्वारदृप्तत्रिपुरपरिचयेनेव संक्रान्ततान्तिम्।
सर्वे निर्वापयन्तो निजनिजकरिणामुन्मिषद्दाननीरैः
प्रत्यावृत्तां द्युलक्ष्मीं पिदधुरनवधि व्योममुद्रां सुरेन्द्राः॥ ४०॥

सर्वे सुरेन्द्रा व्योममुद्रामाभोगं पिदधुश्छादितवन्तः। अनवधि अवधिरहितं कृत्वा स्वहस्तिनामुल्लसन्मदजलैर्नाकलक्ष्मीं शीतलीकुर्वन्तः। प्रत्यावृत्तां प्रत्यागताम्। अत्र हेतूत्प्रेक्षा—नृत्यन्निर्मुद्रो निःसंकोचो हरबाणाग्निस्तस्य निशितं यज्ज्वालाजालं तस्यावलेहो निगरणं तेन क्षुभ्यतां दुर्वाराणां दृप्तानां त्रिपुराणां परिचयेन संक्रान्ता तान्तिर्ग्लानिर्यस्याः। तान्तस्य च जलैर्निर्वापणम्। सुरगजान्दृष्ट्वा देवलक्ष्मीः समाश्वसदित्यर्थः॥

सुरपरिवृढो रूढप्रीति क्रमेण तथा दधौ
वदनमुदयद्रागोत्फुल्लन्नवाब्जमुखद्युति।
सुचिरविरहौत्सुक्याधिक्याविलम्बितचुम्बन-
व्यवसितनिजस्त्रीबिम्बोष्ठप्रभाभिरिवाञ्चितम्॥ ४१॥

इन्द्रो हर्षवशेन मुखं सरागं फुल्लपद्माभं दधावित्यर्थः। रूढप्रीति मुखस्य वा विशेषणम्। अत्रोत्प्रेक्षा—सुचिरविरहेण यदौत्सुक्याधिक्यं रागोत्कर्षस्तेन हेतुना अविलम्बितं द्रुतं चुम्बने व्यवसिता उद्यता या निजा स्त्री शची तस्या बिम्बौष्ठदीप्तिभिरिव शोभितम्॥

धातुर्विष्टरपङ्कजे पुनरपि प्रक्रान्तगन्धोद्धतौ
निःष्पन्दे मदविप्रुषां च वदनादुद्याति विघ्नद्विषः।
भृङ्गाणां सुरकाननान्तरलतावैतालिकानामभू-
त्तत्सौरभ्यरसान्तरं तुलयतां दोलाधिरूढं मनः॥ ४२॥

ब्रह्मण आसनपद्मे पुनरपि जातसौरभ्यबहुले, गणपतेर्मुखान्मदकणिकानां प्रवाहे निर्याति सति नन्दनवनलतास्तुतिपाठकानां भ्रमराणां मनः संशयितमभूत्। तेषां ब्रह्मासनपद्मे मदजलकणानां सौरभ्यरसान्तरं तुलयताम्। नन्दनव्रततिभोगिनोऽपि भ्रमरा ब्रह्मपद्मे गणेन्द्रमदसौगन्ध्यान्तरे संदिग्धा इत्यर्थः॥

तां सेनाममृतान्धसामुपगतामासूत्र्य लोकत्रय-
प्रोतप्रीति बृहत्प्रतीति दितिजव्यापन्मयीं प्रक्रियाम्।

शैलः केलिनिकेतनं भगवतो देवस्य खट्वाङ्गिनो
मन्येऽनर्गलमालिलिङ्ग मणिमद्रप्रांशुभिः प्रांशुभिः ॥ ४३ ॥

लोकत्रयप्रोता प्रीतिर्यत्र तथा बृहती प्रतीतिः प्रसिद्धिर्यत्र एवं कृत्वा दैत्यदाहप्रकृतिप्रतिष्ठां प्रक्रियां तन्त्रं संपाद्योपगतामम्रृतान्धसां देवानां तां सेनां हरस्य क्रीडागृहं शैलः कैलासो रत्नतटदीप्तिभिरालिलिङ्ग एवं जाने । साहसं कृत्वा निवृत्तस्यालिङ्गनं युक्तम् । रश्मयो बाहुस्थानीयाः । स्त्रीत्वाद्वाद्वालिङ्गनौचित्यप्रतीतिः ॥

निःसंख्यामर्त्यमङ्खस्तुतिवचनरसास्वादनासादनोद्य-
द्रोमाञ्चाध्यासिताङ्गः प्रभुरथ स सदः स्वं सहेलं पुनानः ।
दूरन्यञ्चत्किरीटाञ्चलमणिमकरीघृष्टरत्नाङ्घ्रिपीठा-
न्श्रीकण्ठः प्रत्यमुञ्चत्प्रणयरसजुषा चक्षुषा नाकिलोकान् ॥ ४४ ॥

प्रणयरसजुषा स्नेहधारिणा चक्षुषा दृष्ट्या श्रीकण्ठः प्रभुर्नाकिलोकान्प्रत्यमुञ्चत्प्रतिमुक्तवान् । निःसंख्यानां बहूनाममर्त्यमङ्खानां देववन्दिनां यानि स्तुतिवचनानि तेषु रसस्तस्यास्वादनासादनेनोद्यन्यो रोमाञ्चस्तेनाध्यासितान्याश्रितान्यङ्गानि यस्य । तथा स्वं सदः शोभयन् । दूरं न्यञ्चन्तो नम्रीभवन्तो ये किरीटाञ्चलास्तेषु मणिमकर्यो रत्नमया मकराकारा रचनाविशेषास्ताभिर्घृष्टमङ्घ्रिपीठं यैस्तान् । प्रतिमोचनावसरे नमतो देवान्प्रणयार्द्रया दृष्ट्या प्रभुः प्रतिमुक्तवानित्यर्थः । अथ च प्रक्रान्तग्रन्थसमाप्तौ मङ्ख इति स्वनाम गृह्णन्स्वस्तुतिवचनैः प्रभो रोमाञ्चवर्णनेन स्वसांमुख्यप्रकाशनं कृतवानिति भद्रम् ॥

इति श्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये त्रिपुरदाहवर्णनं नाम चतुर्विंशः सर्गः ।

---

पञ्चविंशः सर्गः ।

इति स श्रवणोत्तंसं मांसलं भक्तिविभ्रमैः ।
जगन्नाथस्य जग्रन्थ मङ्खकः सूक्तिलीलया ॥ १ ॥

जगन्नाथस्य महेश्वरस्य भक्तिर्दृढा भावना रचना च । तद्विभ्रमैर्बहुलं कर्णभूषणं सूक्तिलीलया स मङ्खको बबन्ध । त्रिपुरदाहवर्णनलक्षणसूक्तिं भगवतः कर्णभूषणमकरोत् । श्रावितवानित्यर्थः ॥

तिग्मानलदृशः खण्डपरशोः प्रणयग्रहात् ।
तस्य सूक्तिलता व्यक्तं बत साफल्यमग्रहीत् ॥ २ ॥

तिग्मस्तीव्रोऽनलोऽग्निर्दृशि यस्य तस्य खण्डपरशोर्भगवतः प्रार्थनाहेवाकात्तस्य मङ्खकस्य सूक्तिलता कृतार्थत्वमग्रहीत् । बतेत्याश्चर्यद्योतकम् । दीप्तोऽग्निर्दृशि यस्य तथा हस्ते च खण्डपरशुस्तस्य प्रणयाल्लताया दाहच्छेदौ मा भूतां प्रत्युत सफलत्वमित्याश्चर्यम् ॥

स्वयं मौलीन्दुपीयूषपूरैः सिक्तेव शंभुना।
सरसत्वं च दार्ढ्यं च वाक्तस्याव्यग्रमग्रहीत् ॥ ३ ॥

तस्य वागनाकुलं सरसत्वं शृङ्गारादिरसयुक्तत्वं चर्वणीयत्वं च, दार्ढ्यमक्षयत्वमविनश्वरत्वं चाग्रहीत्। स्वयं मुकुटचन्द्रामृतपूरसिक्तेवेत्युत्प्रेक्षणम् ॥

प्रबन्धेन जगद्बन्धुमुपश्लोक्य पिनाकिनम्।
आक्रान्तानन्तसंतोष इति सोऽन्तरचिन्तयत् ॥ ४ ॥

प्रबन्धेन भगवन्तमुपश्लोक्य स्तुत्वा प्राप्तप्रविततप्रमोदमित्यन्तः सोऽचिन्तयत् ॥

अहो धन्योऽस्मि यस्येयं स्वच्छन्दापि सरस्वती।
विना श्रीकण्ठमन्यत्र नाचरच्चाटुकारिताम् ॥ ५ ॥

अहो अस्मि धन्यः। यस्य सरस्वती श्रीकण्ठं विनान्यत्र चाटुकारितां नाचरत्। श्रीकण्ठस्यैव स्तुतिमकार्षीदित्यर्थः। अन्यस्तुतिकरणे हेतुमाह—स्वच्छन्दापि। उद्दामवाचो हि कवयः। सरस्वती नाम नदी च श्रीकण्ठाख्यजनपदविशेषमेव सेवते। सरस्वतीनदीपक्षे स्वच्छन्दा स्वेच्छया स्थानान्तरेषु सापह्नवप्रकाशेत्यर्थः ॥

महत्कष्टमहो हित्वा यच्छर्वं सर्वतः श्रुतिम्।
गर्वानवधिवाधिर्यो नरेण स्तूयते नरः ॥ ६ ॥

ईश्वरादन्यस्य स्तुतिकृतः शोचनीया इति व्यतिरेकोक्त्या स्वस्येश्वरस्तुत्या धन्यत्वमुपबृंहयति—एतन्महत्कष्टं सर्वतः श्रुतिं हरं त्यक्त्वा बधिरो मनुष्येण स्तूयते ॥

मानुष्यजन्म वैदुष्यं विवेकः काव्यचातुरी।
श्रीकण्ठे चाटुकारित्वमहो पुण्यपरम्परा ॥ ७ ॥

मानुष्यं जन्म, तथा विवेकः, तथा काव्येषु चातुर्यम्, तथा भगवति स्तुतिकारित्वमित्यहो पुण्यश्रेणिः ॥

धिक्तान्कृतस्तुतिर्येषां भारत्यधिसरस्वति।
स्वं दूषयति मत्तेव नृपचाटुकपांसुभिः ॥ ८ ॥

सरस्वत्यां कृतमज्जना येषां वाणी राजस्तुतिरजोभिरात्मानं निन्द्यं करोति तान्धिक्। सरस्वती नदी च। अत एव मत्तेवेत्युपमोत्प्रेक्षा वा ॥

दृष्टिः सारस्वती भूरिरजोभिरिह पार्थिवैः।
वशंवदीकृता सत्यं कवेः कालुष्यमश्नुते ॥ ९ ॥

सारस्वती दृष्टिर्ज्ञानं कालुष्यं प्राप्नोति। अत्र हेतुः—बहुलरजोगुणैः पार्थिवै राजभिरायत्तीकृता। पार्थिवैः पृथिवीसंबन्धिभी रजोभिर्भूरि बहुलमाक्रान्ता दृष्टिर्नेत्रं कालुष्यं प्रसादाभावं प्राप्नोतीति ध्वनिः ॥

किं वान्यद्गुणनद्धापि बद्धापि रसवर्त्मनि ।
रहिता कर्णधारेण सूक्तिर्नौरिव सीदति ॥ १० ॥

अन्यत्किं वा । वदाम इति शेषः । गुणैर्माधुर्यादिभी रज्जुभिश्च नद्धा तथा रसः शृङ्गारादिर्जलं च तन्मार्गे बद्धापि सती सूक्तिर्नौरिवावसीदति । तत्र हेतुः—कर्णधारेण श्रोत्रा नाविकेन च रहिता ॥

चामीकरस्य सौरभ्यमम्लानिर्मालतीस्रजाम् ।
श्रोतुर्निर्मत्सरत्वं च निर्माणागोचरं विधेः ॥ ११ ॥

सुवर्णस्य सौगन्ध्यम्, तथा मालतीमालानामसंकोचः, तथा श्रोतुः काव्यं शृण्वतो निर्मत्सरत्वं गुणद्वेषाभावश्च विधेः स्रष्टुर्निर्माणमार्गस्यागोचराः । श्रोता काव्यदोषदूषित इत्यर्थः ॥

यत्किमप्यस्ति मूर्खाणाममात्सर्यं तु सूक्तिषु ।
तत्कोपयोगि सौन्दर्यं षण्ढस्येव पुरंध्रिषु ॥ १२ ॥

यः पुनः काव्यविषये मूर्खाणां मत्सराभावः किंचिदस्ति स कुत्रोपयुज्यते । मूर्खाणां विवेकाभावादिति भावः । यथा क्लीबस्य सौन्दर्यं पुरंध्रिषु क्वोपयुज्यते ॥

विमत्सरश्च विद्वांश्च श्रोता चेद्घटते गिराम् ।
स्यन्दते तर्हि वाग्वल्ली रसं पर्वणि पर्वणि ॥ १३ ॥

मत्सररहितस्तथा विद्वान्विवेकी च पुरुषः काव्यस्य श्रोता यदि घटते तर्हि वागेव तापहरत्वाद्वल्ली प्रतिपर्वस्थानं रसं स्रवति । वल्ली च सुरसं स्रवति ॥

सन्तश्च तादृशाः सन्ति गणिताः सूक्तिभेषजम् ।
भूषणं यैः स्ववैदुष्यात्सौजन्येन वितन्यते ॥ १४ ॥

यैः सद्भिः सूक्तेः काव्यस्य भेषजं दोषनिवारणं सौजन्येन हेतुना स्ववैदुष्याद्वितन्यते । अत एव भूषणं सतां काव्यस्य वा । तादृशाः सन्तो गणिताः सन्ति । सूक्तिभेषजमिति सतां वारोपः ॥

तदेवं विद्वांसः काव्ये दोषमारोपयन्ति, सन्तस्तु सन्तमपि दोषं समर्थयन्त इति प्रतिपद्य सविभवं सज्जनशिरोमणित्वमग्रजस्य प्रतिपादयितुमाह—

मदग्रजन्मनः श्रीमल्लङ्ककस्य सभागृहम् ।
तेऽध्यासते च विस्रब्धाः सारसा इव मानसम् ॥ १५ ॥

यथा विश्वस्ता राजहंसा मानसं सरोभेदमाश्रयन्ति तथा ते सन्तो मदीयज्येष्ठभ्रातुः श्रीमल्लङ्ककस्य सभागृहम् ॥

ततः साफल्यदीक्षायै स्वपरिश्रमविप्रुषाम् ।
तदेवास्य प्रबन्धस्य नेष्यामि निकषाश्मताम् ॥ १६ ॥

अस्य प्रबन्धस्य सुवर्णस्थानीयस्य तदेव सभागृहं परीक्षोपलत्वं नेष्यामि । त एव सन्तो मत्काव्यं परीक्षन्तामित्यर्थः ॥

पण्डितैर्मण्डलीबन्धाद्बिभ्रद्भिरसमं रसम् ।
दब्धालवालवलयं वाग्देवीसुरवीरुधः ॥ १७ ॥
इति संचिन्त्य संतोषदन्तुरेण स चेतसा ।
तदथाविशदास्थानं कृतार्थस्याग्रजन्मनः ॥ १८ ॥ (युग्मम्)

असमं रसं बिभ्रद्भिः पण्डितैर्मण्डल्या बन्धाद्रचनाहेतोः सरस्वतीकल्पलताया दब्धः संपादित आलवालवलयो यत्र तत् । लतायाश्च जलसहितमालवालं भवति । काव्यपरीक्षकलाभादानन्दपूर्णेन चेतसा इति चिन्तयित्वा ततः श्रीलङ्ककसभास्थानं मङ्खकविरविशत् ॥

श्रीवाहकरटिक्षुण्णवर्णकम्बलरुङ्मुषि ।
कुथे निवेशितपदं धुरीवाखिलमन्त्रिणाम् ॥ १९ ॥
ततस्तत्र शिखारत्नमप्रत्नामात्यसंहतेः ।
अनयन्नयनातिथ्यं पथ्यं स नयवर्त्मनि ॥ २० ॥ (युग्मम्)

यथा सकलमन्त्रिणां धुरि तथा श्रियः संबन्धी वाहो वाहनं यः करटी हस्ती तेन क्षुण्णो धृतो यो वर्णकम्बलस्तस्य रुचं मुष्णति कुथे वर्णकम्बले विन्यस्तपदं तथा अप्रत्ना नूतना येऽमात्यास्तेषां संहतेर्मौलिमणिं तथा नयमार्गे पथ्यं ज्यायांसं तत्र सभागृहे स नयनयोरातिथ्यं प्रणयित्वमनयत् ॥

विनयेन नमन्नग्रे शपथैरर्थितोऽसकृत् ।
ज्यायसोऽर्धासने तस्य स कथंचिदुपाविशत् ॥ २१ ॥

श्रीलङ्ककेन पुनः पुनः शपथैरर्धासनोपवेशनार्थमर्थितः स मङ्खकविः समस्तेन विनयेन तदर्धासने कथंचिदुपाविशत् ॥

नित्यं नृत्यद्वचोदेवीमञ्जीरोच्चरवैरिव ।
घटते शास्त्रचिन्तासु यस्य निद्रादरिद्रता ॥ २२ ॥
महाभूतानि पञ्चापि विरञ्चेन विमुञ्चता ।
योऽवैमि वाङ्मयैरेव निर्ममे परमाणुभिः ॥ २३ ॥
क्व नु कानि कियत्कालमहो तेपे तपांसि यः ।
वैदुष्ये लग्नकान्यन्ययोगव्यावृत्तिसाक्षिणि ॥ २४ ॥

पुनानमन्तिकं तस्य प्रथमं ब्रह्मवादिनाम् ।
विद्वत्संक्रन्दनं तत्र स नन्दनमवन्दत ॥ २५ ॥ (चक्कलकम्)

नित्यं नृत्यन्त्या वाग्देव्याः संबन्धिनो मञ्जीरस्य पटुभी रवैरिव हेतुभिर्यस्य शास्त्रविमर्शेषु सत्सु वैनिद्र्यं जायते । रवैरिति हेतूत्प्रेक्षा । तथाहं जाने स यत्र भूतसर्गे पञ्चापि पृथिव्यादीनि महाभूतानि विमुञ्चता । अपाञ्चभौतिकं सर्गं कुर्वतेत्यर्थः । विधिना यो वाङ्मयैरेव परमाणुभिर्निर्मितः । शास्त्रमयपरमाणुनिर्माणमध्ये साधनमुपन्यस्यति—क्वेति । क्व नु कुत्रस्वित्कानिस्वित्कियत्कालंस्विद्यस्तपांसि तेपे । कीदृशानि । वैदुष्ये पाण्डित्ये लग्नकानि प्रतिभूभूतानि । कीदृशे । अन्ययोगव्यावृत्तिसाक्षिणि । अन्यस्य नन्दनपण्डितादपरस्य योगव्यावृत्तिरेतादृशेनैव पाण्डित्येन योगस्य व्यावृत्तिर्व्यवच्छेदस्तत्साक्षिणि । सैव साक्षी यस्येति वा । प्रतिभूसाक्षिणोर्द्वयोरपि संनिधाने सत्ययत्नेन वस्तु घटते । तस्य श्रीलङ्ककस्य समीपं पवित्रयन्तं ब्रह्मवादिनां प्रधानं पण्डितेन्द्रं नन्दनं स तत्र दृष्टवान् ॥

व्याख्यासु यस्य वदनं रदनांशुभिरीक्ष्यते ।
आकर्षदिव वाग्देव्या धौतक्षौमपटाञ्चलम् ॥ २६ ॥
अर्पयन्कमपि स्पन्दं धाम्नः सारस्वतस्य भूः ।
य एव सर्वशास्त्राणां साकारमिव जीवितम् ॥ २७ ॥
विवृतीर्यो लिखत्यात्तलेखन्येकाङ्गुलीतलः ।
ग्रन्थेभ्योऽर्थस्य विश्रान्त्यै सूत्रिकामर्पयन्निव ॥ २८ ॥
यत्कृतिष्ववधानेन मूर्धा कस्य न वीप्सया ।
सारस्वतरसावर्तवलनेनेव चेष्टते ॥ २९ ॥
तं श्रीरुय्यकमालोक्य स प्रियं गुरुमग्रहीत् ।
सौहार्दप्रश्रयरसस्रोतःसंभेदमज्जनम् ॥ ३० ॥ (कुलकम्)

जनेन यस्य मुखं सरस्वत्याः श्वेतपट्टवस्त्रान्तमाकर्षदिवालक्ष्यते । कैः । शास्त्रव्याख्यासु सतीषु दन्तांशुभिः । सरस्वती तन्मुखे कृतसंनिधानेत्यर्थः । यत्पटप्रान्तं चाकृष्यते स तत्रैवावतिष्ठते । सारस्वतस्य धाम्नो तेजसो भूः स्थानम् । तथा अत एव तस्यैव धाम्नः कमपि लोकोत्तरं स्पन्दं शिष्यमुखे संचारमर्पयन्य एव रुय्यकः सर्वशास्त्राणां मूर्तं जीवितमिव भवति । जीवितं च स्पन्दमर्पयति, तेजसश्च स्थानं भवति । तथा आत्ता गृहीता लेखनी लेखनकाण्डं येन तादृगङ्गुलीतलं यस्य शास्त्राणां विवृतीर्विवरणानि लिखति । करोतीत्यर्थः । अत उत्प्रेक्ष्यते—ग्रन्थेभ्यः शास्त्रेभ्योऽर्थस्य वाच्यस्य धनस्य

---

१. राजानकरुय्यककृतमलंकारसर्वस्वं सहृदयलीला चेति ग्रन्थद्वयं कश्मीरेषु प्रसिद्धम्. अलंकारसर्वस्वकर्ता राजानकरुचकः, न तु रुय्यकः, इत्यपि केचित्.

च विश्रान्त्यर्थं सूत्रिका वस्त्रदशालेशं ददद्वि । तथा यस्य कृतिषु विमर्शेन कस्य न शिरश्चेष्टते विवलते । अत्रोत्प्रेक्षा—सारस्वतो यो रसो जलं च तच्चर्वणवलनेनेवेति । आवर्तस्य जलभ्रमस्य च वलनेन वस्तु विवल्यते, तं श्रीरुय्यकं दृष्ट्वा मङ्खकविः सौहार्दरसस्य प्रश्रयरसस्य च स्रोतसोः संभेदे मज्जनमग्रहीत्। अत्रैव हेतुद्वयम्—गुरुं प्रियमिति ॥

यस्य व्यनक्ति काषायग्रहमारक्तया रुचा ।
नित्योपन्याससंक्रान्तवेदान्तार्थ इवाधरः ॥ ३१ ॥

नीत्वा सफलतां वल्लीरिष्टसिद्धिं विवृण्वता ।
श्रुतीनां पथि शिष्येषु येन कल्पद्रुमायितम् ॥ ३२ ॥

निस्तुषीकृतवैदुष्यं स्मयमात्सर्यसंहृतेः ।
धृतप्रणतिपारम्यं रम्यदेवं तमैक्षत ॥ ३३ ॥ (तिलकम्)

यस्याधरः कषायं रक्तवस्त्रग्रहणमिव प्रकटयति । कया। आरक्तया रुचा । नित्यं संन्यासेन प्रतिपादनेन संक्रान्तः संचरितो वेदान्तार्थो यस्य । वेदान्तवादिनो हि काषायग्रहणमुचितम् । येन शिष्यविषये कल्पद्रुमायितं कल्पवृक्षवदाचरितमिति भावे क्तः । कुत्र । श्रुतीनां वेदान्तानां पथि । तत्र हेतुः—वल्लीः कठवल्लीलक्षणान्वेदान्तविशेषान्सफलतां कृतार्थतां नीत्वा, इष्टसिद्धिं वेदान्तार्थप्रतिपादकशास्त्रविशेषं विवृण्वता विवरणेन प्रकाशयता । कल्पद्रुमाणां वल्लीसफलत्वादिकरणमुचितम् । स्मयमात्सर्ययोः संहरणान्निर्दोषीकृतपाण्डित्यं तथा धृतं प्रणतौ पारम्यं प्रसङ्गो येन तं रम्यदेवं तत्रापश्यत् ॥

वाग्देवतालिनीलीलाधुतपक्षतिचातुरीम् ।
वदनाम्बुरुहे यस्य भाषाः षडधिशेरते ॥ ३४ ॥

खलानां यत्प्रबन्धेषु दृढव्युत्पत्तिवर्मसु ।
प्रोद्यच्चोद्यमया दूरे कुण्ठिता इव पत्रिणः ॥ ३५ ॥

कतिचिल्लोष्टदेवस्य तस्येति मुखतोऽशृणोत् ।
श्रीलङ्ककं प्रति प्रोतचारुचाटुरसा गिरः ॥ ३६ ॥ (तिलकम्)

यस्य मुखपद्मे संस्कृताद्याः षड् भाषा वाग्देवतैवालिनी तया लीलया धुतायाः पक्षतेश्चातुरीमाश्रयन्ति । यदुक्तम्—'संस्कृतं प्राकृतं चैव शूरसेनी तदुद्भवा । ततोऽपि मागधी प्राग्वत्पैशाची देशजेति यत् ॥' यथा पद्मे भ्रमरीपक्षतेश्चातुरी तथा तन्मुखे भाषाणामित्यर्थः । दृढा व्युत्पत्तिः सैव वर्म कवचो येषां तेषु तत्प्रबन्धेषु खलसंबन्धिनः

---

१. 'प्रकृत्यैवातिवक्रेण गुणदैर्घ्यं वितन्वता । मया शरासनेनेव बाणो दूरं निरस्यते ॥' अयं श्लोकः सूक्तिमुक्तावलौ लोष्टदेवनाम्ना समुद्धृतः.

प्रोद्यचोद्यप्रकृतयः शराः कुण्ठिता इव भवन्ति । तस्य लोष्टदेवस्य मुखादिति वक्ष्यमाणाः श्रीलङ्कं प्रति प्रोतश्चारुश्चाटुरसो यासां ता गिरः श्लोकानशृणोत् ॥

गोभिः शुभ्ररसैकसूतिभिरनुस्यूतं विभो लङ्कक
ज्यायःशुद्धिसखिद्विजोच्छ्वसदनिर्वेदप्रथापावनम् ।
सत्यायार्पयति स्म दर्शितवते निःसंश्रयत्वं कलौ
वाग्देवीसहिताय तावकमुखं मन्येऽग्रहारं विधिः ॥ ३७ ॥

हे लङ्कक विभो, विधिस्तावकमुखमग्रहारमर्पयति स्मेति मन्ये । कस्मै । सत्याय । दाने हेतुमुपन्यस्यति—कलिकाले निराश्रयत्वं दर्शितवते । कीदृशम् । शुभ्रस्य निर्मलस्य रसस्य शृङ्गारादेरेका सूतिर्याभ्यस्ताभिर्गोभिर्वाग्भिरनुस्यूतम् । तथा ज्यायस्याः शुद्धेर्नैर्मल्यस्य सखायो ये द्विजा विप्रास्तेषामुच्छ्वसन्ती या अनिर्वेदप्रथा दुःखाभावकारणं तया पावनम् । वाग्देवीसहिताय । अन्यश्च दुग्धदाभिर्गोभिः सहितं निराश्रयाय कस्मैचिदग्रहारं ददाति । यद्वा द्विजा दन्ताः । अनिर्वेदा वेदसहिताः ॥

तीक्ष्णा पृथुलोहमयी गुरुतरगुणनिकरसंग्रहव्यग्रा ।
द्रढयति धर्मपटच्चरमचिरादिह लङ्ककस्य मतिः ॥ ३८ ॥

यस्य मतिर्धर्म एव पटच्चरं जीर्णवासस्तं द्रढयति दृढं करोति । यतस्तीक्ष्णा । तथा पृथुलो य ऊहस्तत्प्रकृतिः । गुरुतराणां गुणनिकराणामौदार्यादिगुणगणानां संग्रहे व्यग्रा । तीक्ष्णत्वादिविशेषणसाम्यात्सूचीव तीक्ष्णा । तथा पृथु यल्लोहं तन्मयी गुणानां सूत्राणां संग्रहे व्यग्रा जीर्णवस्त्रं द्रढयति ॥

मूर्तिर्यस्य सभानुताद्भुतलिपेः पुष्णाति गाढामृत-
प्रादुर्भावविसृत्वरीं परिणतिं पङ्केरुहद्रोहिणः ।
तस्य त्वन्मुखशीतगोः प्रणयतोऽलंकार[1] वाग्देवता
गल्वर्कोपलपुत्रिका गुरुपरिस्यन्दं रसं स्यन्दते ॥ ३९ ॥

सभासु नुता स्तुता अद्भुता लिपिर्यस्य तथा पङ्केरुहेभ्यः पापेभ्यो द्रुह्यति तच्छीलस्तथाविधस्य यस्य मूर्तिः ऋतप्रादुर्भावे सत्यप्रकाशने विसृत्वरीं परिणतिं रसं पुष्णाति तस्य त्वन्मुखचन्द्रस्य प्रणयतः सरस्वती चन्द्रकान्तपुत्रिका महाप्रवाहं रसं प्रसूते । सह भानुतया सूर्यभावेन वर्तते या सा । अत एवाद्भुता लिपिर्यस्य चन्द्रस्य तथा पद्मद्रोहिणो मूर्तिर्गाढेऽमृते पीयूषे विसृत्वरीं परिणतिं पुष्णाति तस्य प्रणयाचन्द्रकान्तपुत्रिका रसं सूते । मुखपक्षे पङ्केरुहेभ्यः पद्मेभ्यो द्रुह्यति । कान्त्याधिकीभवतीति वा ॥

---

१. अलंकार इति लङ्ककस्यैव नामान्तरम्. राजतरङ्गिण्यामलंकार इति नाम वर्तते. 'अलंकाराभिधो बाह्यराज्यस्थानाधिकारभाक् । अधृष्यो मानुषैर्युद्धैर्विरुद्धान्बहुधावधीत् ॥' (८।२६५८) इत्यादि राजतरङ्गिण्यामलंकारनाम्ना व्यवहारः.

यः सामन्तशिखामणेऽत्रभवतालंकार नित्यं सता-
मानीतोऽनवकाशतां हृदि हताशेषाद्भुतापद्भियि ।
तेषां श्रोत्रविलिह्यमानगहनत्वत्सूक्तिचर्वोत्सवे
राशीभूत इवाधिशीर्षमधुना कम्पः स संपद्यते ॥ ४० ॥

हे सामन्तानां मौलिरत्न, सतां हृदयकम्पस्त्वयावकाशरहितत्वं नीतः । अत्र हेतुः— हृदयेऽस्तविपद्भये । सकम्पस्तेषां साधूनां शिरसि राशीभूत इव संपन्नः । श्रोत्रपीयमान-त्वदीयकाव्यरसोत्सवे ॥

सामन्तभद्रनयमपि भजसे पदमनुसरन्नसामान्यम् ।
विश्वमपापोऽहमिति श्रीलङ्कक तदपि बोधयसि ॥ ४१ ॥

असामान्यं विशिष्टं पदम् । सामन्तेषु मण्डलेश्वरेषु भद्राः प्रधानानि तेषां नयं त्वं भजसे । यद्यप्यसामान्यमसदृशं पदमनुसरन् । तदपि तथाप्यहमपापः पापरहित इति विश्वं बोधयसि । असामान्यं जातिरहितं पदमनुसरन्यः सामन्तभद्रं बुद्धसंबन्धिनं नयं भजते सोऽपगतान्यावच्छेदमिति कथं बोधयतीति विरोधाभासः ॥

यापूर्वा कविगर्वहृत्पदगतिर्यस्या विपर्येति नो
स्पष्टं या परपुष्टसौष्ठवहरं वाक्यक्रमं पुष्यति ।
सा श्रीलङ्कक मानमार्गमजहत्यप्यात्तकण्ठा हठा-
द्विद्वत्ता तव चित्रमुज्झितरजाः सूते यशःसंततिम् ॥ ४२ ॥

यस्या विद्वत्तायाः पदगतिः सुप्तिङन्तादिरचना न विपर्येति । यतोऽपूर्वात एव कवीनां गर्वं हरन्ती । तथा परेषां पण्डितानां पुष्टं सौष्ठवं हरन्तं वाक्यक्रमं या पुष्यति सा तव विद्वत्ता मानमादरं दधाना गृहीतकण्ठा । सादरमधीतेत्यर्थः । यतस्त्यक्तरजोदोषा यशः-प्रसरणं सूते इति समाधिः । विरोधस्तु के जले वीनां पक्षिणां हंसानां मदं हरन्ती यस्या नायिकायाः पदगतिः पादन्यासो न विपर्येति । तथा परपुष्टानां कोकिलानां सौ-ष्ठवहरं वाक्यक्रमं या पुष्यति सा मानिन्यप्यालिङ्गन्ती विगतार्तवापि सा नायिका सं-ततिं प्रसूते । यद्वा विद्वत्तापक्षे मानं प्रत्यक्षादि ॥

मार्गे पदस्य पथि वाक्यकथाप्रथानां
मानस्य वर्त्मनि च कन्दलिताभिषेकः ।
राज्ञेव मन्त्रिवर लङ्कक सूक्तिदेव्या
सर्वाधिपत्यपदवीमधिरोपितोऽसि ॥ ४३ ॥

पदस्य सुप्तिङन्तादेर्मार्गे तथा वाक्यानां तर्काद्यलंकारप्रथानां पथि तथा मानस्य प्रत्य-

क्षादेर्मार्गे विहिताभिषेको भवान्यथा राज्ञा सकलाधिपत्यमधिरोपितस्तथा सरस्वत्या चाधिरोपितः । राजपक्षे मान आदेशः । पदमधिकारः । वाक्यमालापः ॥

श्रीमल्लङ्कक यद्दिशङ्कमुरगाधीशस्य हालाहल-
ज्वालाडम्बरडामराद्वदनतस्तात्पर्यतो निर्ययौ ।
वाग्देवीकरकुम्भनिर्यदमृतोद्रिक्तेन सिक्ते महा-
भाष्यं काव्यरसेन तत्तव चिरं वक्त्रेऽद्य विश्राम्यति ॥ ४४ ॥

विषज्वालादुरीक्ष्याच्छेषस्य मुखाद्यन्निर्ययौ तन्महाभाष्यं सरस्वतीहस्तस्थकलशगलदमृतार्द्रेण काव्यरसेन सिक्ते तव मुखे विश्रान्तिमेति विषदिग्धशेषमुखान्महाभाष्यं सरस्वतीसुधासिक्तकाव्यसिक्ते तव मुखे सुखं लभते । त्वया महाभाष्यं सुबोधं कृतमित्यर्थः ॥

स्वान्ताक्रान्तसरस्वतीगृहबृहद्राजीवनालोन्नत-
श्लिष्यत्कण्टकशिक्षयेव शतशः पुष्णाति या तीक्ष्णताम् ।
तस्यां भिन्नसमग्रशास्त्रगहनग्रन्थ्युद्गतौ त्वद्धियि
श्रीमल्लङ्कक किं कलिः किल पदं स्वप्नेऽपि दातुं क्षमः ॥४५॥

या त्वन्मतिस्तीक्ष्णतां विचारकौशलं पुष्णाति । अत्रोत्प्रेक्षा—स्वान्तेनाक्रान्ता या सरस्वती तस्या गृहं यद्राजीवं तन्नाले उल्लसन्त उदग्रा ये कण्टकास्तेभ्यः शिक्षया उपदेशेन शतशस्तस्यां त्वन्मतौ तीक्ष्णत्ववशाद्भिन्नाः समस्तशास्त्राणां ग्रन्थ्युद्गतयः संशयस्थानानि यया एवंभूतायां पदं दातुं कलिः स्वप्नेऽपि न समर्थः । यच्च तीक्ष्णं तत्र पदं दातुं न शक्यते ॥

बाणोपमः प्रबन्धो लङ्कक तव पत्रलब्धदूरगतिः ।
विध्यति कस्य न हृदयं विविधसमज्यानिवेशेन ॥ ४६ ॥

बाणः कविस्तत्कृतः प्रबन्ध उपचाराद्बाणः, तत्समस्तव प्रबन्धो दूरं लब्धा पत्रेषु ग्रन्थाधारेषु गतिर्येनैवंविधो विविधासु समज्यासु सभासु निवेशेन प्रतिष्ठया कस्य न हृदयं विध्यति रसज्ञं करोति । बाणः शरश्च दूरं लब्धा पत्रैः पक्षैर्गतिर्गमनं येन स विचित्रा समा या ज्या तस्यां निवेशेन कस्य न हृदयं भिनत्ति ॥

आरूढाः शुभमेधसां परिचयात्तं पावकोपक्रमं
श्रीमल्लङ्कक पाकमाकलयितुं व्यग्रा वचोवर्त्मनि ।
स्निह्यत्पात्रसहस्रपूरणभरादुन्मीलयन्तो मुदं
भावत्काः प्रगुणा गुणा बहुरसाभिज्ञं जगत्कुर्वते ॥ ४७ ॥

भावत्कास्त्वत्संबन्धिनः प्रगुणा निःसंख्या गुणाः पाण्डित्यादयो जगद्बहूनां रसानां शृङ्गारदीनामभिज्ञं कुर्वते । कीदृशाः । शुभा मेधा धारणबुद्धिर्येषां तेषां परिचयात्तं प्र-

सिद्धं पावकोपक्रमं पवित्रीकरणहेतुं क्रियारम्भमारूढाः । वचोवर्त्मनि काव्ये पाकं विस्रष्टुं व्यग्राः । स्निह्यन्ति यानि पात्राणि योजनास्तेषां सहस्रपूरणभराद्धर्षं जनयन्तः । गुणाः सूदाश्च जगद्रसानां मधुरादीनामभिज्ञं कुर्वते । ते चैधसां समिधां परिचयात्पावकोपक्रमं ज्वलनारम्भमारोपयन्तः । तथा पक्कतां संपादयितुं व्यग्राः । स्निह्यतां पात्राणां भाजनानां सहस्रस्य पूरणाद्धर्षं कुर्वन्तः ।। इत्येते लोष्टकश्लोकाः ।।

आक्रान्ता यस्य वक्रिम्णा दीर्घदीर्घगुणा गिरः ।
वाग्देवीकरवल्लक्या इव पुष्णन्ति माधुरीम् ।। ४८ ।।

द्विजराजेन भजता प्रभाकररुचिग्रहम् ।
पावकेन श्रिता येन धामत्रयमयी स्थितिः ।। ४९ ।।

तमदर्शदथ श्रोत्रपथसख्यस्पृशा दृशा ।
अदभ्रगुणसंदर्भं श्रीगर्भं हर्षनिर्भरः ।। ५० ।। (तिलकम्)

वक्रिम्णा वक्रभावेन प्रसिद्धप्रस्थानातिरिक्तमात्रेण तथातिदीर्घगुणा यस्य वाचो माधुरीं मधुरत्वं पुष्णन्ति । अत्रोत्प्रेक्ष्यते—सरस्वतीहस्तस्थवीणा या इव । सापि हि मधुरा । येन द्विजराजेन प्रधानब्राह्मणेन प्रभाकराचार्यग्रन्थाभिलाषं कुर्वता पवित्रीकरणहेतुना धामत्रयमयी चन्द्रसूर्याग्नीनां स्थितिर्येन श्रिता । अदभ्रा बहवो गुणसंदर्भा यस्य तं श्रीगर्भं मङ्खकविर्हर्षपूर्णः श्रुतिमार्गपरिचयस्पृशा दृशा समपश्यत् । अदर्शदिति च दृशो लङि गुणः ।।

चतुर्दशापि यस्यान्तर्द्विजराजश्रितोन्नतेः ।
कृष्णस्य भुवनानीव विद्यास्थानानि शेरते ।। ५१ ।।

श्लिष्यत्कवित्वपाण्डित्यमयसंदंशवर्त्मना ।
बाल्य एवोद्धृता येन मोहकर्दमतो मतिः ।। ५२ ।।

क्रमादजनि सौन्दर्यरसस्मेरमुखः सखा ।
श्रीगर्भिर्मण्डनस्तस्य पारणाय स चक्षुषोः ।। ५३ ।। (तिलकम्)

चतुर्दश विद्यास्थानानि 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ।।' यस्यान्तर्हृदये शेरते । द्विजराजेभ्यो ब्राह्मणपुंगवेभ्यः सकाशाच्छ्रिता उन्नतिर्येन । द्विजराजेन गरुडेन च श्रितोन्नतेः कृष्णस्य चोदरे यथा चतुर्दश भुवनानि शेरते सुखं वसन्ति । श्लिष्यन्ती ये कवित्वपाण्डित्ये तन्मयो यः संदंशः शस्त्राकर्षणयन्त्रं तन्मार्गायेन बाल्य एव मोहपङ्कान्मतिरुद्धृता । संदंशेन च मग्नमुद्ध्रियते । श्रीगर्भस्यापत्यं मण्डनस्तन्नेत्रतर्पणार्थं क्रमाज्जातः । सौन्दर्यरसेन स्मेरमुखः ।।

ततो न्यधित निःशेषवैदुषीकेलिसद्मनि ।
श्रीकण्ठे विहितोत्कण्ठे दृशं तदनुजन्मनि ॥ ९४ ॥

समस्तवैदुषीकेलिगृहे सोत्कण्ठे मण्डनानुजे श्रीकण्ठे दृशं न्यस्तवान् ॥

कृतश्रुतिसुधेत्यादि युग्मम्—

कृतश्रुतिसुधासेकाः सोद्रेका विविधैर्नयैः ।
रूढिं यद्वचसि च्छेकाः स्वच्छे कामपि बिभ्रति ॥ ९५ ॥
स सन्मार्गचरो गर्गमानर्च स्थविरं चिरम् ।
सत्कवीनां तमग्रण्यं द्रोणं चापभृतामिव ॥ ९६ ॥

नयैर्भङ्गिभिः करणभूतैः कृतकर्णामृतसेका यतः सोद्रेकाश्छेका अनुप्रासभेदा यत्काव्ये रूढिं धारयन्ति तं गर्गं द्रोणाचार्यमिव [चापभृतां] सत्कवीनां प्रधानं स पूजितवान् ॥

प्रदीपरुचीत्यादि तिलकम्—

प्रदीपरुचिसंचारचारु योऽध्यास्य मन्दिरम् ।
झगित्येव स्वयं विष्णोस्तत्त्वं परमैक्षत ॥ ९७ ॥
अनिरुद्धाच्युतबलश्लाघ्यदर्पकलाञ्चिताः ।
एकायनस्य यस्यासंश्चातुरात्म्याञ्चिता गिरः ॥ ९८ ॥
सुधासधर्मिभिर्हृद्यैरिति लङ्ककचाटुभिः ।
अभ्यर्णं कर्णयोस्तस्य स श्रीदेवधरोऽधिनोत् ॥ ९९ ॥

प्रदीपो मन्दिरशास्त्रविवरणं तद्रुचिसंचारेण चारु सुबोधं मन्दिराख्यं शास्त्रमाश्रित्य यो द्रुतमेव विष्णुसंबन्धि तत्तत्त्वं स्वयं दृष्टवान् । अनिरुद्धमच्युतमस्तं यद्बलं तेन श्लाघ्यो यो दर्पस्तत्कलयाञ्चिता व्याप्ता यस्यैकायनस्य एको विष्णुरयनं गतिर्यस्य गिरश्चातुरात्म्येन चतुरस्वभावतयाञ्चिताः पूजिता [गिर] आसन् । अनिरुद्धाच्युतहलधरप्रद्युम्नैर्लाञ्छिताश्च । अमृतमधुरैर्हृद्यैः श्रीलङ्ककस्तुतिवचनैः स श्रीदेवधरो मङ्खकविश्रवणसमीपमप्रीणयत् ॥

त्रिभिः काण्डैराद्यः कविरमुमविध्यत्तदनु च
क्षतो बाणेनायं तदपि विदधे चापलकलाम् ।
अलंकार त्वत्कैः प्रतिपदनिबद्धैर्ध्वनिलवै-
रथेदानीमन्तःकरणहरिणः शाम्यति मम ॥ १०० ॥

आद्यः कविर्वाल्मीकिरमुं चित्तमृगं त्रिभिः काण्डैः परिच्छेदविशेषैरविध्यत् । बाणेन

---

१. राजतरङ्गिण्यां प्रसिद्धो गर्गोऽप्यस्मिन्नेव समय आसीत्, कदाचिदयमेव स्यात्.

कविना तदनन्तरं चेतोमृगो विद्धः। रञ्जित इत्यर्थः। तदपि तथापि चपलतामेव चित्तमकरोत्। प्रतिपदं निबद्धैर्भावत्कैर्ध्वनिलवैः करणैर्हेतुभिर्मदीयचेतोमृगः संप्रति शाम्यति। वाल्मीकिबाणकाव्याभ्यामधिकगुणं भवदीयं काव्यमित्यर्थः। हरिणश्च काण्डैः शरविशेषैर्बाणेन शरेण च विद्धोऽपि चापलं करोति। ध्वनिलवैर्गीतांशैस्तु शाम्यति चपलत्वं त्यजति। हरिणा हि गीतरसिका भवन्ति॥

एकं श्रीजयसिंहपार्थिवपतिं काश्मीरमीनध्वजं
तस्योपासितसंधिविग्रहमलंकारं द्वितीयं स्तुमः।
भूभारः प्रथमेन पन्नगपतेः क्ष्मां रक्षता वारितो
नीतोऽन्येन कृतार्थतां प्रवचनैर्भाष्योपदेशश्रमः॥ ६१॥

काश्मीराणां कश्मीरभूमेर्मीनध्वजं कामम्। चेतोहरमित्यर्थः। तमेकं श्रीजयसिंहदेवं स्तुमः। तस्य श्रीजयसिंहदेवस्य संपादितसंधिविग्रहमलंकारं द्वितीयं स्तुमः। तयोराद्येन श्रीजयसिंहदेवेन शेषस्य भूभारो निवारितः। द्वितीयेनालंकारेण प्रवचनैर्व्याख्याभिस्तस्य यो भाष्योपदेशेन श्रमः स कृतार्थतां नीतः। इति द्वयोः स्तुतौ हेतुद्वयम्॥ इति भागवताचार्यदेवधरश्लोकद्वयम्॥

बहुश इत्यादि तिलकम्—

बहुशः श्रवणे यस्य रुचिरुत्कर्षमीयुषी।
नाम्नि पुष्यति याथार्थ्यमुद्यत्पदशतश्रियः॥ ६२॥
यस्य पाणिनिबद्धेन वररुच्यञ्चितश्रिया।
व्यज्यते कङ्कणेनेव लक्षणेनादरिद्रता॥ ६३॥
वयसो मध्यमत्वेऽपि गुणैरधिकवार्द्धकम्।
नागं साहित्यविद्यायाः सौविदल्लं तमैक्षत॥ ६४॥

बहुशो बहुप्रकारं श्रवणे शास्त्राकर्णनविषय उत्कर्षमाधिक्यमीयुषी प्राप्तवती रुचिरभिलाषो यस्य नागधरस्य नाम्नि नागरूपे याथार्थ्यं सार्थकतां पुष्णाति प्रकटयति। नागा हि बहुमूर्धत्वाद्बहुशः शृण्वन्ति। तथोद्यन्ती पदशतैः श्रीः शोभा यस्य। नागानां च पदानि चरणा बहवो भवन्ति। पाणिनिनाचार्येण बद्धेन तथा वररुचिनाचार्येणाञ्चिता श्रीर्यस्य तेन लक्षणेन शब्दशास्त्रेणादरिद्रता व्यज्यते। यथा पाणौ हस्ते निबद्धेन तथा वरा या रुचिः शोभा तयाञ्चितश्रिया कङ्कणेन कटकेनादरिद्रता व्यज्यते। मध्यमवयस्त्वेऽपि सति गुणैरधिकवृद्धं साहित्यविद्यायाः सौविदल्लं कञ्चुकिनं रक्षकं नागं स दृष्टवान्॥

दृढोऽपीत्यादि युगलकम्—

दृढोऽपि तर्ककार्कश्ये प्रगल्भः कविकर्मणि।
यः श्रीतुतातितस्येव पुनर्जन्मान्तरग्रहः॥ ६५॥

तं श्रीत्रैलोक्यमालोक्य गण्यं सत्कर्मिणां धुरि ।
ययौ मुहुरधिज्यस्य कार्मुकस्य सधर्मताम् ॥ ६६ ॥

तर्काणां कार्कश्ये दृढपरिचयोऽपि कविकर्मणि शृङ्गारादिरसकोमले काव्ये प्रगल्भो यः श्रीतुतातितस्य पुनर्जन्मान्तरग्रह इव भवति । तुतातितः कुमारिलः । स हि तार्किकः कविश्चासीत् । महतां सम्यङ्नामग्रहणमयुक्तमिति तुतातितशब्दः प्रयुक्तः । विवरणावसरे युक्तः । अन्यथा विवरणत्वाभावप्रसङ्गात्(?) । सत्कर्मिणां सदाचाराणां धुरि गण्यं तं श्रीत्रैलोक्यं दृष्ट्वाधिज्यस्य धनुषः सधर्मतां सादृश्यं ययौ । प्रणामं चकारेत्यर्थः । 'षट्कर्मिणाम्' इति पाठः ॥

सर्वमानातिरिक्तेन विवृतापूर्वजन्मना ।
योऽधिकार्यस्थितिर्भाति नियोगेनेव चेतसा ॥ ६७ ॥
सूक्तिभूरिगुणानर्घमश्लाघत स वीप्सया ।
दामोदरं तदासीददादरप्रह्वकंधरः ॥ ६८ ॥ (युग्मम्)

सर्वेभ्यो मानेनाहंकारेणातिरिक्तं तथा विवृतमपूर्वं गुणवत्त्वाल्लोकोत्तरं जन्म येन तेन चेतसाधिकार्यस्थितिर्मर्यादा यस्य स भाति । सर्वेभ्यो मानेभ्यः प्रत्यक्षादिभ्योऽतिरिक्तेन । तथा विवृतं प्रकाशितं पूर्वशास्त्रानुष्ठानजनितस्य फलस्य जन्म येन तेन नियोगेन प्रवर्तककर्तव्यतारूपेण शास्त्रार्थेनाधिकार्येषु नियोज्येषु विषयभूतेषु स्थितिर्यस्य तम् । तथा सूक्तिभूरिगुणैरनर्घं दामोदरं बहुशः स्तुतवान् । तस्मिन्समये आसीदता आदरेण नतग्रीवः ॥

यः संततं निसर्गेण विनयानतकंधरः ।
व्यनक्त्यात्तबृहच्छास्त्रभारन्यञ्चिततामिव ॥ ६९ ॥
पादोपसंग्रहव्यग्रविवलत्पाणिपल्लवः ।
तं षष्ठं विबुधप्रष्ठं स सोत्कण्ठमवैक्षत ॥ ७० ॥ (युग्मम्)

स्वाभाविकविनयेनैव नतशिराः सन्यो गृहीतगुरुशास्त्रभारेणेव नम्रतां बिभर्ति । पादोपसंग्रहे व्यग्रो लोलः स तं पण्डितानां प्रष्ठमग्रगामिनं षष्ठं पण्डितमुत्कण्ठया दृष्टवान् । आत्मविषयमुपाध्यायत्वं पादोपसंग्रहे हेतुः ॥

व्यज्यत इत्यादि युग्मम्—

व्यज्यते येन निर्मृष्टनिःशेषकलिपांसुना ।
भट्टप्रभाकरनयद्वयस्रोतोनदीष्णता ॥ ७१ ॥
सुवृत्तं क्रमलब्धोर्ध्वपदं परिचितं दृशोः ।
तं च वागीश्वरीकेलिकन्दुकं जिन्दुकं व्यधात् ॥ ७२ ॥

१. 'एतन्नरेन्द्रवृषभ क्षपया व्रजन्त्या' इत्यादि जेन्दुकश्लोकः सुभाषितावलौ वर्तते.

भट्टस्याचार्यस्य तथा प्रभाकरस्याचार्यस्य यन्नयद्वयं तदेव स्रोतसी तत्र नदीष्णता कुशलता येन व्यज्यते। अत एव निर्मृष्टाः शोधिता निःशेषाः कलिपांसवो येन। अथ च नदीस्नायिनश्च पांसुनिर्मार्जनमुचितम्। तथा सुवृत्तं शोभनाचारम्। तथा क्रमेण लब्धमूर्ध्वपदमुच्चपदं येन। तथा सरस्वतीकेलिकन्दुकाख्यक्रीडनकं जिन्दुकनामानं दृष्टिगोचरं चकार। कन्दुकस्य च सुष्ठु वृत्तता वर्तुलत्वं क्रमलब्धोर्ध्वपदता च भवंति॥

पथा चरतीति तिलकम्—

पथा चरति वक्रेण वाग्यस्य चतुरैः पदैः।
सरस्वत्यै विनिर्मातुमुद्यतेव प्रदक्षिणम्॥ ७३॥
प्रक्रमैर्हठवक्रिम्णो मुरारिमनुधावतः।
श्रीराजशेखरगिरो नीवी यस्योक्तिसंपदाम्॥ ७४॥
श्रीमद्राजपुरीसंधिविग्रहस्य नियोगिनम्।
अथानर्च वचोभिस्तं जह्लणं विनयाञ्चितैः॥ ७५॥

यस्य वाक्सरस्वती चतुरैः पदैः सुप्तिङन्तैः शब्दैः करणभूतैर्वक्रेण प्रसिद्धप्रस्थानातिरिक्तेन पथा चरति। अतः संभाव्यते—सरस्वत्यै प्रदक्षिणं कर्तुं प्रवृत्तेव। प्रदक्षिणे वक्रः पन्थाः सर्वैश्चरणन्यासैर्भवति। ................. राजशेखरोक्तयः पन्थाः। राजशेखरोक्तिसमा यदुक्तय इत्यर्थः। राजपुरीसंधिविग्रहाधिकारिणं जह्लणं स विनयोक्तिभिः पूजितवान्॥

यो रञ्जयतीत्यादि युग्मम्—

यो रञ्जयति सत्पूगरससंचारणोज्ज्वलैः।
न कस्य स्वप्रबन्धोक्तिवर्णैः पर्णैरिवाननम्॥ ७६॥
पुनानमाभिजन्येन कृत्यं पाण्डित्यपद्धतेः।
निसर्गोत्तमसंदिग्धं श्रीगोविन्दमविन्दत॥ ७७॥

सतां पूगस्य वर्गस्य रससंचारणेनोज्ज्वलैः प्रबन्धोक्तिवर्णैः कस्य न यो मुखं रञ्जयति। यथा पर्णैर्नागलतादलैः सन्तः शोभना ये पूगाः क्रमुकफलानि तेषां रससंचार-

---

१. राजपुरी कश्मीरदेशसंलग्नैव 'राजवेरी' 'रजौरी' इत्यादिनामभिः प्रसिद्धा वर्तते. तत्र तस्मिन्काले सोमपालमहीपतिरासीत्, यस्यायं जह्लणः संधिविग्रहनियोगी. 'राजपुर्यामाकुलत्वं नीतायामाससाद तत्। तद्भर्तुः सोमपालस्य दूरस्थस्यान्तिकं चिरात्॥' (८। १४६७) इति राजतरङ्गिणी. जह्लणकृतं सोमपालविलासकाव्यमलंकारानुसारिणीनामकटीकासमेतं कश्मीरदेशप्रसिद्धमस्ति. सूक्तिमुक्तावलीसंग्रहकर्ता आरोहकभगदत्तजह्लणस्तु भिन्नः.

णेनोज्ज्वलैः। आभिजन्येन पाण्डित्यं पवित्रयन्तं विनयेन श्रियां भूषयन्तं तं गोविन्दं स वन्दितवान्॥

श्रीमानलक इत्यादि तिलकम्—

श्रीमानलकदत्तो यमनल्पं काव्यशिल्पिषु।
स्वपरश्रमसर्वस्वन्याससभ्यममन्यत॥ ७८॥
तथोपचस्करे येन निजवाङ्मयदर्पणः।
विह्लणप्रौढिसंक्रान्तौ यथा योग्यत्वमग्रहीत्॥ ७९॥
तत्तद्बहुकथाकेलिपरिश्रमनिरङ्कुशम्।
तं प्रश्रयप्रयत्नेन कल्याणं सममीमनत्॥ ८०॥

काव्यशिल्पिषु कविष्वनल्पो ज्यायांस्तथा श्रीमान्सांधिविग्रहकोऽलकदत्तो ब्राह्मणाग्रणीर्यं कल्याणं स्वपरिश्रमः काव्यं तदेव सर्वस्वं तस्य न्यासे निक्षेपे योग्यं ज्ञातवान्। येन स्ववाङ्मयादर्शस्तथोपचस्करे नैर्मल्यं प्रापितो यथा विह्लणकवेर्या प्रौढिः पदार्थे वाक्यरचना वाक्ये च पदार्थाभिधानं तत्संक्रान्तौ योग्यत्वमग्रहीत्। निर्मले च दर्पणे वस्तु संक्रामति। ताश्च ता या बह्वः कथा महाभारतादयस्तत्परिश्रमेण निरङ्कुशं तं कल्याणं स संमानितवान्॥

यावाविष्कुरुत इत्यादि युग्मम्—

यावाविष्कुरुतो वक्त्रमुरुचन्दनपुण्ड्रकम्।
मुद्रितं सूक्तिदेव्येव कोषं काव्यकलाश्रियः॥ ८१॥
भुट्टश्रीवत्सनामानौ सूरी सब्रह्मचारिणौ।
वाक्यैर्जितामृतस्वादैः सादरं तावभाषत॥ ८२॥

यौ भुट्टश्रीवत्सौ सूरी पण्डितौ मुखं चन्दनतिलकाङ्कितं बभ्रतुः। अतः संभाव्यते—काव्यलक्ष्म्याः कोषं सन्तं सरस्वत्येव मुद्रितम्। कोषो हि मुद्रासहितो भवति। तौ समानं ब्रह्म चरन्तौ सहाध्यायिनौ सुधामधुरैर्वचोभिर्भाषितवान्॥

तीक्ष्णेत्यादि युग्मम्—

तीक्ष्णसारस्वतज्योतिरनुस्यूतरसात्मना।
श्रुतिभ्यां लिह्यते सद्भिर्यस्योक्तिः पाकमीयुषी॥ ८३॥
तं स तर्कमहाम्भोधिकुम्भसंभवमार्चिचत्।
श्यानन्दं स्निग्धदृङ्न्यासदीर्घेन्दीवरदामभिः॥ ८४॥

तीक्ष्णं सारस्वतं ज्योतिर्ज्ञानं तेनानुस्यूतः साधितो यो रसः शृङ्गारादिस्तद्रूपेण पाकं

लभमाना यस्योक्तिः श्रवणाभ्यां सज्जनैर्लिह्यते । वह्निना साधितस्य रसस्य च मधुरादेर्लेहनमुचितम् । तर्कसमुद्रेऽगस्त्यं तर्कसमुद्रं पिबन्तं श्रीआनन्दं स स्नेहदृष्टिनीलोत्पलस्रग्भिः पूजितवान् ॥

उज्झिते पथि वैदर्भे कठोरपदकण्टकैः ।
निसर्गलालिता यस्य स्वैरं चरति भारती ॥ ८५ ॥
अतूतुषन्निस्तुषया भूषितं कविविद्यया ।
तं पद्मराजमव्याजव्याहारविनियु(नयो)क्तिभिः ॥ ८६ ॥ (युगलकम्)

कठोरपदान्येव कण्टकास्तैरुज्झिते कोमलपदसहिते । वैदर्भ्यां गुणमयत्वात् । एवंविधे पथि स्वभावसुकुमारा यस्य वाणी चरति । कण्टकरहिते च मार्गे सुकुमारा नायिका स्वैरं चरति । तं पद्मराजं निर्दोषया कविविद्यया भूषितं स मङ्खको निर्व्याजव्याहारेण तथा विनियुक्तिभिरतूतुषत् ॥

भाति केशकटप्रेण यस्त्रयीधूमबभ्रुणा ।
उपासनार्द्रया नित्यममुक्त इव संध्यया ॥ ८७ ॥
अगर्हबार्हतमतन्यायोपन्यासदेशिकम् ।
श्रीगुन्नमुन्नमत्प्रीति ततस्तं प्रत्यपद्यत ॥ ८८ ॥ (युगलकम्)

त्रयी आहिताग्नित्वादग्नित्रयी तद्धूमेन बभ्रुणा केशकटप्रेण केशातिशयेन यो भाति । अतः संभाव्यते—उपासनेनार्द्रया संध्यया अमुक्त इव । विषयविषयिभूताभ्यां धूमबभ्रुकेशकटप्रसंध्याभ्यां साचारत्वमस्य द्योतितम् । बृहती प्रभाकरशास्त्रं तत्संबन्धि अगर्ह्यं यन्मतं तत्प्रायस्योपन्यासे देशिकमुपदेष्टारं तं श्रीगुन्नं स मङ्खको गाढं प्रेम कृत्वा प्रत्यभाषत॥

धिन्वन्पवित्रचारित्रो विश्वामित्र इव त्रयीम् ।
पाठबोधावनुष्ठानसौष्ठवेन पुनाति यः ॥ ८९ ॥
वक्त्रटङ्को निसर्गेण व्यञ्जन्सदनुरक्तताम् ।
न जहात्यसुरो यस्य सामराजिस्थितिग्रहम् ॥ ९० ॥
स्वतन्त्रः शास्त्रवीथीषु प्रथमः सोमपीथिनाम् ।
लक्ष्मीदेवस्तमाशीर्भिः स निर्भरमवीवृधत् ॥ ९१ ॥ (तिलकम्)

यो विश्वामित्र इव त्रयीमग्नित्रयीं धिन्वंस्तर्पयन् अत एव पवित्रचारित्रः तस्यास्त्रय्याः पाठं तदर्थावबोधं च त्रय्युक्तधर्मस्यानुष्ठानेन सौष्ठवेन यः पुनाति सफलीकरोति । निसर्गेण सत्स्वनुरक्ततां व्यञ्जन्प्रकाशयन् अविद्यमाना सुरा आसवो यस्य स वक्त्रटङ्को वदनाभोगः सामभी राजते तच्छीलं स्थितिग्रहमवस्थानं न त्यजति । अथ च स वक्त्रटङ्कोऽसुरोऽसुर इव दनुरक्ततां दनौ दानवमातरि रक्ततां व्यञ्जन् सामरा सदेवा या

आजिः सङ्ग्रामस्तत्स्थितिग्रहं न त्यजति । स लक्ष्मीदेवः शास्त्रमार्गेषु स्वतन्त्रः तथा सोमं ये पिबन्ति तेषामाद्यस्तमाशीर्वादैरवर्धयत् ॥

व्याख्याभिख्यासु भाष्यस्य यो यागोपक्रमेषु च ।
इष्टीर्विवृणुते धुर्यो बुधानामिव यज्वनाम् ॥ ९२ ॥
आतन्वन्विनयाकूतं दूरनम्रेण मौलिना ।
ततो जनकराजेन तेन संतुष्य तुष्टुवे ॥ ९३ ॥ (युगलकम्)

भाष्यसंबन्धिनीषु व्याख्याभिख्यासु व्याख्याशोभासु । बुधानां पण्डितानां [मुख्यः] इष्टीर्भाष्यकारवचनानि विवृणुते । यथा यागोपक्रमेषु यज्वनामिष्टीर्यागविशेषान्विवृणुते । तेन जनकराजेन स दूरं नम्रेण शिरसा विनयाकूतं विस्तारयन्संस्तुतः ॥

व्यनक्ति पृथु सामर्थ्यमाख्याया एव योऽक्षरैः ।
जयेऽभिनवगुप्तस्य प्रकटः प्रथमो गुरुः ॥ ९४ ॥
तं तत्रागमतन्त्रेषु सूचितानङ्कुशश्रमम् ।
ततः संकेतसदनं प्रागल्भ्यस्याख्यभाषत ॥ ९५ ॥ (युगलकम्)

आख्यायाः प्रकट इत्येवंरूपायाः संबन्धिभिरक्षरैरेव हेतुभिरभिनवगुप्तस्य जये सामर्थ्यं यो व्यनक्ति । अभिनवगुप्तः काश्मीराचार्यवर्यः । स ह्यभिनवो नूतनो गुप्तः, अयं तु प्रकटः प्रथमश्च । अतो नामाक्षरैरेवाभिनवगुप्तजयो येन कृतः । आगमशास्त्रेषु कृतबह्वभ्यासं तथा प्रागल्भ्यस्यैकाश्रयं स संकथितवान् ॥

येन जाड्यैकपीडाभिः पुष्णतः कम्पसंपदम् ।
विवृतानन्ततापस्य विहितं लङ्घनं कलेः ॥ ९६ ॥
अशेषभिषगग्रण्यं शरण्यं शास्त्रपद्धतेः ।
ववन्देऽथ तमानन्दं सुतं शंभुमहाकवेः ॥ ९७ ॥ (युगलकम्)

जाड्यं शुभकर्मोद्यमनिरोधस्तत्पीडाभिः कम्पातिशयं कुर्वतः, तथा प्रकाशितबहुदुःखस्य कलियुगस्योल्लङ्घनं येन कृतं तमानन्दवर्धनं शंभुनाम्नो महाकवेः पुत्रं सकलवैद्यचूडामणिं तथा शास्त्रसरणिशरण्यं स ववन्दे । वैद्यश्च जडत्वेन कम्पं कुर्वतस्तथा शरीरं तपतश्च ज्वरस्य लङ्घनमुपवासादिकं करोति ॥

नागरप्रकृतिश्चारुबलात्मा विधृताभयः ।
यः प्रीणात्यातुरानङ्गैर्भेषजैकमयैरिव ॥ ९८ ॥

---

१. अन्योक्तिमुक्तालता-राजेन्द्रकर्णपूरादिकर्ता शंभुमहाकविः प्रसिद्ध एव.

ततस्तदनुजन्मानमगदंकारपुंगवम् ।
सुहलं गाढया प्रीत्या तं पुनः पुनरैक्षत ॥ ९९ ॥

नगरीभवा नागरी सा प्रकृतिर्यस्य । एतेन वैदग्ध्यसौजन्यचातुर्यप्रकाशनं कृतम् । चारुबल आत्मा यस्य । तथा विधृतमभयं भयाभावो येन । एवंविधो योऽङ्गैरातुरान्प्रीणाति । अतः संभाव्यते—औषधैकप्रकृतिभिरिव । नागरं शुण्ठी, बला, अभया हरीतकी । अगदंकारपुंगवं भिषक्प्रधानं तदनुजं सुहलमतिप्रीत्या मुहुर्मुहुर्दृष्टवान् ॥

पाणिनीयातपत्रेण पवित्रं यस्य तन्मुखम् ।
सङ्गं स्वप्नेऽप्यवाप्नोति नापशब्दरजःकणैः ॥ १०० ॥
स्वस्येश्वरस्य यो व्यञ्जन्मण्डले मन्त्रसंस्क्रियाम् ।
धत्ते सदागमप्रीतिं दैशिकानां धुरि स्थितम् ॥ १०१ ॥
अन्यः स सुहलस्तेन ततोऽवन्द्यत पण्डितः ।
दूतो गोविन्दचन्द्रस्य कान्यकुब्जस्य भूभुजः ॥ १०२ ॥ (तिलकम्)

पाणिनीयं पाणिनिप्रणीतं व्याकरणं तदेवातपत्रं तेन करणभूतेन यस्य तन्मुखमपशब्दैरेव रेणुकणैः सङ्गं स्वप्नेऽपि न प्राप्नोति । अत एव पवित्रम् । छत्रे सति रजःसङ्गो न भवति । स्वस्येश्वरस्य गोविन्दचन्द्रस्य मण्डले राष्ट्रे कान्यकुब्जदेशे मन्त्रैः संस्क्रियां व्यञ्जयन् यः सतां साधूनामागमेन प्रीतिर्यस्यां स्थितौ तां दैशिकानां देशान्तरीयाणां धुरि स्थितिं धत्ते । अथ च स्वस्येश्वरस्य भगवतो महेश्वरस्य मण्डले यागादौ मन्त्रसंस्क्रियां प्रणवादिसंस्कारं व्यनक्ति । कान्यकुब्जमण्डलेन्द्रस्य गोविन्दचन्द्रस्य राज्ञो दूतः स सुहलो नाम अन्यो लोकोत्तरः पण्डितः । अथवान्यः पूर्वोक्तसुहलात् । स सुहलस्तेन वन्दितः ॥

तस्येति स ततः प्रीतिं प्रणयाद्दैशिकोऽदिशत् ।
व्याप्टतौ काव्यकेलीनामसमस्य समस्यया ॥ १०३ ॥

काव्यकेलीनां व्यापारेष्वविद्यमानसदृशस्य तस्य मङ्खकस्य प्रणयात्प्रीतः स दैशिकः समस्यया वक्ष्यमाणया प्रीतिमदिशत् ॥

एषा समस्या यथा—

एतद्बभ्रुकचानुकारिकिरणं राजद्रुहोऽह्नः शिर-
श्छेदाभं वियतः प्रतीचि निपतत्यब्धौ रवेर्मण्डलम् । (इति समस्या)

राज्ञे चन्द्राय स्वामिने च द्रुह्यतोऽह्नो दिनस्य शिरश्छेदाभं छिन्नशिरःसदृशं तथा

---

१. अयं कान्यकुब्जमहीपतिर्गोविन्दचन्द्रः खिस्ताब्दद्वादशशतकस्य पूर्वार्धे आसीदिति 'इण्डियन् आण्टिक्केरी'मुद्रितदानपत्रेभ्यो ज्ञायते.

बभ्रुकेशाननुकुर्वन्ति तच्छीलाः किरणा यस्य तद्रवेर्मण्डलं वियत आकाशात्पश्चिमसमुद्रे निपतति । राजद्रुहः शिरश्छेद उचितः ॥

अपूपुरत्पुरस्तेषां द्रुतमित्थं स तां सताम् ।
आरात्रिकमिव भ्रूभिर्वलन्तीभिर्विवृण्वताम् ॥ १०४ ॥

सतां पण्डितानामग्रे स मङ्खकस्तां समस्यां सद्योऽपूरयत् । अतः संभाव्यते—चमत्कारवशाद्वलन्तीभिर्भ्रूभिरारात्रिकमिव कुर्वताम् ॥

एषापि द्युरमा प्रियानुगमनं प्रोद्दामकाष्ठोत्थिते
संध्याग्नौ विरचय्य तारकमिषाज्जातास्थिशेषस्थितिः ॥ १०५ ॥

(इति समस्यापूरणम्)

एषापि द्युरमा आकाशलक्ष्मीः प्रोद्दामे तथा काष्ठासु दिक्षूत्थिते संध्या एवाग्निस्तस्मिन्प्रियस्य दिनस्यानुसरणं कृत्वा तारकव्याजादस्थिशेषस्थितिर्जाता । राजद्रुहः पत्नी प्रियस्य पत्युरिन्धनोत्थितेऽग्नावनुसरणं कृत्वास्थिशेषा जायते । एतत्पूरणार्धम् ॥

अविस्मृतस्वजननीजनक्षीररसा अपि ।
बटवो निर्न्यिरे येन सूक्तिदेवीरसज्ञताम् ॥ १०६ ॥

जोगराजमुपाध्यायं ध्यायन्तं शुभमञ्जसा ।
अथ भक्त्या तमानर्च तत्तच्चर्चाभिरर्चितम् ॥ १०७ ॥ (युगलकम्)

न विस्मृतो जननीजनस्य क्षीररसस्तस्यास्वादो येषां ते बटवो बाला येन सरस्वतीरसज्ञतां नीताः । सरस्वती मातृस्थानीया । बाला हि परस्याः स्त्रियः क्षीरं न पिबन्ति । अतो विरोधच्छाया । तं जोगराजमुपाध्यायं शुभं चिन्तयन्तं तत्तच्चर्चाभिर्बहुकथाभिः पूजितमञ्जसा स्पष्टेन मार्गेण पूजितवान् ॥

क्व न यः साधुवादेषु नृत्यद्भिर्दशनांशुभिः ।
विद्वज्जनेन साम्राज्ये सभ्यानामभ्यषिच्यत ॥ १०८ ॥

वचोभिर्नुनुदे दन्तद्युतिश्रीखण्डपाण्डुभिः ।
वादिनां वाददर्पोष्मा येन शूर्पारकाध्वसु ॥ १०९ ॥

यं श्रीमदपरादित्य इति दूत्यप्रसिद्धये ।
प्रजिघाय घनश्लाघः काश्मीरान्कुङ्कु(न्कोङ्क)णेश्वरः ॥ ११० ॥

---

१. अपरादित्यकृता कारिता वा याज्ञवल्क्यस्मृतिटीका 'अपरार्क'नाम्ना प्रसिद्धा सुलभैव. मिताक्षराख्यतट्टीकाकारो विज्ञानेश्वरस्त्वपरादित्यात्किंचिदेव प्राचीनः. स च विक्रमाङ्कदेवचरितकाव्ये बिह्लणकविना वर्णितस्य कल्याणनगराधिपतेर्विक्रमस्य सभाया-

तेन श्रीतेजकण्ठेन सोत्कण्ठमनुबध्नता ।
इति सोऽधिकवैशद्यनिरवद्यमगद्यत ॥ १११ ॥ (चक्कलकम्)

क न साधुवादेषु साधुवादावसरे स्फुरद्भिर्दन्तरश्मिभिर्हेतुभिर्विद्वज्जनेन यस्तेजकण्ठः सभ्यानां साम्राज्ये सर्वाधिपत्येऽभिषिक्तः । येन वादिनां वादिदर्पणोष्मा नुनुदे वारितः । केषु । शूर्पारकाध्वसु कुङ्कणप्रदेशेषु । दन्तद्युतिरेव श्रीखण्डस्तेन पाण्डुभिर्वचोभिः । श्रीखण्डेन च तापो ह्रियते । श्रीमदपरादित्यनामा कुङ्कुणेश्वरो यं दूतत्वार्थं काश्मीरान्विसृष्टवान्, तेन श्रीतेजकण्ठेन सोत्कण्ठं प्रार्थयमानेनाधिकं वैशद्यं यत्र तथा निरवद्यं च कृत्वा स मङ्खकः संभाषितः ।

निष्कल्मषं तवैकस्य श्रीमङ्ख कविताद्भुतम् ।
स्पृष्टोक्तिर्यस्य नास्तुत्यस्तुतिकीर्तनपाप्मभिः ॥ ११२ ॥

एकस्य तव कविता काव्यमद्भुतमाश्चर्यम् । यद्वा कविताद्भुतमित्येकपदम् । निष्कल्मषं निर्दोषम् । यस्य ते उक्तिरस्तुत्यस्तुतिकीर्तनपाप्मभिर्न स्पृष्टा । अस्तुत्या राजानस्तेषां स्तुतेः कीर्तनेन पाप्मानः पापानि तैः । महाकविनापि भवता यद्राजस्तुतिर्न कृता तत्राश्चर्यम् ॥

शिक्षन्ते भिक्षितुं सर्वे त्वयैकेन न शिक्षितम् ।
भिक्षाकतां निराकर्तुमशेषविदुषामपि ॥ ११३ ॥

सर्वे भिक्षितुं राजस्तुत्यादिना भिक्षापालनार्थं शिक्षन्ते । त्वया पुनरेकेन समस्तपण्डितानां भिक्षाकत्वं निवारयितुं शिक्षितम् । त्वत्काव्यं श्रीकण्ठचरितलक्षणं दृष्ट्वान्येऽपि कवयः श्रीकण्ठस्तुत्यैव वाणीं पुनन्तीत्यर्थः ॥

संभेदः श्रीसरस्वत्योः केवलं न विपन्मयम् ।
त्वं मोहमयमप्याशु मलं कस्य न लुम्पसि ॥ ११४ ॥

त्वं कस्य न, अपि तु सर्वस्य विपद्रूपं मलं केवलं न नाशयसि, मोहमयमपि मलं सर्वेषां नाशयसि । अत्र हेतुमाह—लक्ष्मीसरस्वत्योः संभेदः संगमः । 'संभेदः सिन्धुसंगमः'। तस्य च मलविलोपनमुचितम् । पापभीतस्य च संस्कारधारणमुचितम् ॥

सा वैदुषी फलं यस्या न परोपकृतेः परम् ।
शिक्षन्ते जीवनोपायमन्ये वाङ्मयशिल्पिनः ॥ ११५ ॥

---

मासीत्. तस्माद्बिह्लणविज्ञानेश्वरौ ख्रिस्ताब्दैकादशशतकोत्तरार्धसमुद्भूतौ, अपरादित्यस्तु द्वादशशतकपूर्वार्धसमुद्भूत इति ज्ञेयम्. किं तु याज्ञवल्क्यस्मृतिटीकाकर्तायमेवापरादित्य इति संदिग्धम्. टीकाकर्तापरादित्यो विद्याधरवंशोत्पन्नजीमूतवाहनकुलोद्भव इति तट्टीकातो ज्ञायते.

यस्याः परोपकारादन्यत्फलं नास्ति सा वैदुषी भवति। अन्ये ये परोपकारं न कुर्वन्ति ते शास्त्रकर्मकरा जीवितोपायं शिक्षन्ते ॥

नृपचाटुकपाप्मभ्यस्तदित्थं तव यद्यपि ।
सरस्वती बिभेत्येव दधती शुद्धिसंस्क्रियाम् ॥ ११६ ॥
तथापि मां गुणनिधे भज क्ष्मापचटूक्तिभिः ।
पञ्चषाभिः पठित्वा याः सभासूद्रिक्ततामियात् ॥ ११७ ॥

राजस्तुतिपापेभ्यस्तव सरस्वत्येवं यद्यपि भीता अत एव शुद्धिसंस्कारं दधती। तथापि हे गुणनिधे, पञ्च वा षड्वा पञ्चषाः ताभी राजस्तुतिकथाभिर्मामनुगृहाण । याः पठित्वाहं सभासूद्रेकं प्राप्नुयाम् ॥

असावध्यवसायोऽस्मदनुग्रहधिया च ते ।
न दुष्येत्प्रार्थिताः सन्तः किं न दद्युर्हि याचते ॥ ११८ ॥

अस्मास्वनुग्रहधिया हेतुभूतया तेऽयमध्यवसायो राजस्तुतिलक्षणो न दुष्येत् । अर्थान्तरन्यासः—कृतयाच्ञाः सज्जनाः प्रार्थयमानाय किं नादेयं दद्युः ॥

श्रोत्रशुक्तिपुटेनेति पीत्वा तद्वाक्यविप्रुषः ।
इमामुदगिरत्सोऽथ सूक्तिमुक्ताफलस्रजम् ॥ ११९ ॥

श्रुतिशष्कुलीमार्गेण तद्वचनबिन्दून्पीत्वा सूक्तान्येव मुक्ताफलानि तेषां मालां स उदवमत् । शुक्तिमार्गेण च जलकणान्पीत्वा समुद्रो मुक्ताफलान्युद्वमतीति मङ्खकविना स्वस्य समुद्रवद्गाम्भीर्यं प्रकाशितम् ॥

यद्वक्रेण पथा प्रयासि सततं यद्वासि विद्वन्मन-
श्चौरी यच्च करोषि पूर्वसुकविप्रौढिप्रथोत्पुंसनम् ।
तस्माद्धाराति सद्भिरत्र भवती तीक्ष्णेति संभाविता
तूर्णं पार्श्वममुष्य पार्थिवमुनेरभ्येहि शुद्ध्यर्थिनी ॥ १२० ॥

वक्रेण प्रसिद्धप्रस्थानातिरेकेण पथा यत्प्रयासि, नित्यं पण्डितचित्तावर्जका यच्चासि, यच्च पूर्वेषां सुकवीनां प्रौढा या प्रथा तस्या उत्पुंसनं बाधनं करोषि, ततः सद्भिस्तीक्ष्णा कुशाग्रीया संभाविता त्वम् । अतः शुद्ध्यर्थिनी त्वमस्य राजर्षेः समीपमभिगच्छ। यो हि वक्रेण परवञ्चकेन पथा नित्यं प्रयाति नित्यं च चौरः पटच्चरः परबाधनं करोति स हिंस्रः संभावितः शुद्ध्यर्थी शुद्धिकरसमीपं याति । पार्थिवमुनेरिति शुद्ध्यनुगुणम् ॥

त्वत्खड्गेन जगत्त्रयैकगुरुणा राजन्गणो विद्विषां
सङ्ग्रामेषु पलायनोपनिषदां सिद्धान्तमध्यापितः ।

उन्मुक्तासमसर्वशास्त्रसरणिः संत्यक्तपत्त्रक्रम-
श्चित्रं चिन्तयितुं विविक्तविपिनासङ्गं समाश्लिष्यति ॥ १२१ ॥

जगत्रये एकेन गुरुणा गौरववता त्वत्खड्गेन पलायनोपनिषदामदर्शनरहस्यानां निश्चयं शत्रुवर्गोऽध्यापितः । अत उन्मुक्ता त्यक्ता असमा सर्वा समस्तशास्त्री शस्त्रसंबन्धिनी सरणिर्येन तथा संत्यक्तः पत्त्रक्रमो वाहनक्रमो येन स तव वैरिवर्गो विजनवनासङ्गं चिन्तयितुं समाश्लिष्यति । यश्च गुरुणा उपनिषदां मोक्षोपायशास्त्राणां सिद्धान्तमध्यापितः स संत्यक्तसमग्रकुमार्गः तथा संत्यक्तः पत्त्रक्रमो ग्रन्थाधारक्रमो येन स विजनं चिन्तयितुं गच्छतीति चित्रम् ॥

व्यथोद्रेकादेका घनरुदितशोणे नृपदृशौ
वहन्ते वैराग्यादिव विधृतकाषायवसने ।
अरण्यान्यामन्यास्त्वदरिवनिता यान्ति विपदं
लतानां संसर्गादिव नवजटावल्कलभृतः ॥ १२२ ॥

अतिभयाद्घनं रुदितमश्रु तेन रक्ते । अतः संभाव्यते—वैराग्याद्धृतं काषायं कषायरक्तं वसनं याभ्यां ते दृशावेकाः काश्चिद्वैरिरामा वहन्ते । अन्याः काश्चित्त्वद्वैरिरामा अरण्यान्यां महत्यरण्ये विपदं यान्ति । कीदृश्यः । जटाः संयताः कचास्तथा वल्कलं भूर्जादिकृतं वस्त्रं बिभ्रत्यः । अतः संभाव्यते—लतानां परिचयादिव । लता हि जटामूलानि, वल्कलं त्वचं च बिभ्रति ॥

वैधव्योपहताः प्रतापतपनप्लुष्यद्वपुष्कान्तयः
कान्ताराध्वसु लब्धसाध्वसभुवः प्रत्यर्थिवामभ्रुवः ।
राजन्निर्भरवाष्पवारिविवलन्नेत्रालवालावली-
संदोहैस्तव वर्धयन्ति विशदस्पन्दां यशःकन्दलीम् ॥ १२३ ॥

वैधव्येन [पति]मारणेनोपहताः, प्रताप एव तपनः सूर्यस्तेन प्लुष्यन्ती वपुष्कान्तिर्यासां ताः, कान्ताराध्वसु दुर्गममार्गेष्वपि, तथा लब्धं यत्साध्वसं तस्य भुवो भूमयः, प्रत्यर्थिनां वैरिणां वामभ्रुवस्तव निर्मलोल्लासां कीर्तिलतां वर्धयन्ति । कैः । निर्भरेण बाष्पवारिणा हेतुना विवलन्ति यानि नेत्राणि तान्येवालवालावल्यस्तत्समूहैः । आदित्यतापिताश्च भुवो ग्रीष्महताः सेकाधारैर्लतां वर्धयन्ति ॥

प्रियान्प्रति मरौ लग्नाः कुर्वते त्वदरिस्त्रियः ।
सास्रधाराः कराश्लिष्टकुचाः पिण्डोदकक्रियाम् ॥ १२४ ॥

मरुभुवि सबाष्पप्रवाहा हस्तरुद्धस्तनाः । हृत्कम्पातिशयवशादिति भावः । त्वद्रिपु-

रामाः प्रियान्प्रति युद्धहतान्भर्तृनुद्दिश्य पिण्डोदकक्रियां कुर्वत इत्युत्प्रेक्षा । कुचाः पिण्डस्थानीयाः, अश्रूदकस्थानीयम् ॥

भिन्नभ्रूवलनाकुले तरलिते वक्त्रोडुपे सान्द्रया
निःश्वासक्रमवात्यया किमपरं भर्तर्यरित्रे हते ।
राजेन्द्र त्वदरातिचन्द्रवदनालोकस्य शोकाचलो-
द्भिन्नास्वश्रुतरङ्गिणीषु कुरुते दृङ्मज्जनोन्मज्जने ॥ १२५ ॥

अरिभ्यस्त्रायते अरींस्त्रायत इति वा इत्यरित्रे तथाविधे भर्तरि हते अतः सान्द्रया निःश्वासा एव क्रमवात्या तया करणभूतया छिन्नं भ्रूणां वलनं तेनाकुले मुखप्रवहणे तरलिते सति त्वदरिरामागणस्य दृष्टिः शोकशैलोद्भिन्नासु बाष्पनदीषु मज्जनोन्मज्जने कुरुते । वात्यया छिन्नवलने चोडुपे भग्ने अरित्रे केनिपातने हते प्रवहणगामी नद्यां निमज्जति चोन्मज्जति च ॥

त्वद्यात्रासमवेतदुर्धरगतेः सैन्यस्य संमर्दतो
द्राक्पिष्टेऽपि शिरोगणे गुणयुगं जज्ञे फणाभृत्पतेः ।
प्रापद्भूपरमाणुभिस्तरलितैः कालुष्यमक्ष्णां न य-
द्दृद्भङ्गस्य च कारणं यदशृणोन्नो पत्तिकोलाहलम् ॥ १२६ ॥

त्वदीययात्रासु समवेतस्य संघटितस्य अत एव दुर्धरगतेर्दुर्वहधावनस्य सैन्यस्य मर्देनेन फणगणे क्लेशितेऽपि शेषस्योपकारद्वयं जातम् । सैन्यमर्देनाधः पतितै रजोभिरुचितमपि दृष्टिकालुष्यं शेषो यन्न प्रापत्, तथा हृद्भङ्गहेतुं पदातिसिंहनादं च यन्नाश्रृणोत् ततः ॥ एते श्रीतेजकण्ठाभ्यर्थनया कृताः श्लोकाः ॥

ततो यथार्थनामानं द्विजं वागीश्वराभिधम् ।
अस्तोष्ट पठितश्लोकमिति श्रीलङ्ककं प्रति ॥ १२७ ॥

अथ श्रीलङ्ककमुद्दिश्येति कृतश्लोकं वागीश्वराख्यं महाकवित्वेन सत्यार्थसंज्ञं संस्तुतवान् ॥

त्वयि प्रसन्ने मम किं गुणेन त्वय्यप्रसन्ने मम किं गुणेन ।
रक्ते विरक्ते च वरेऽङ्गनानां मिथ्यैव नेपथ्यविशेषभङ्गिः ॥ १२८ ॥

यदि मयि त्वं प्रसन्नः गुणाः किमर्थाः । गुणैः साध्यस्य प्रसादनस्य स्वयं सिद्धत्वात् । अथ त्वमप्रसन्नः गुणाः किमर्थाः । गुणसाध्यस्य प्रसादस्याभावात् । एतद्दृष्टान्तेन स्पष्टीकरोति—भर्तरि रक्ते किमर्थो वेषः, विरक्ते वा किमर्थो वेषः ॥ इति श्रीभट्टवागीश्वरस्य श्लोकः ॥

नेत्रे कवित्वपाण्डित्यमये दधदचार्मणे ।
योऽक्लेशादखिलं वर्त्म सारस्वतमवैक्षत ॥ १२९ ॥

चरतः पथि शास्त्राणां यस्यासच्चर्मचक्षुषः।
देव्याः करावलम्बेन न जातु स्खलितं पदैः॥ १३०॥
सकृदाकर्णनघ्रातसमस्तग्रन्थसंसृतेः।
इति तस्य पटोः पट्वीं गिरं चिरमचर्चयत्॥ १३१॥ (तिलकम्)

अचार्मणे दिव्ये काव्यपाण्डित्यमये नेत्रे दधानो यः सुखेन समस्तं सरस्वतीसंबन्धिनं मार्गं दृष्टवान्। शास्त्रमार्गे संचरतोऽसच्चर्मचक्षुषोऽप्रशस्तदृशोऽल्पदृष्टेर्यस्य सरस्वतीहस्तावलम्बेन पदैः सुप्तिङन्तादिभिर्न स्खलितम्। अविद्यमानदृष्टेरन्धस्य च हस्तावलम्बेन पदानि न स्खलन्ति। ग्रन्था एवानन्तत्वात्संसृतिः संसारः सकृदाकर्णनेनैकवारं श्रवणेनाघ्राताधीता समग्रा ग्रन्थसंसृतिर्येन तस्य पटुपण्डितस्योक्तिं स चर्चितवान्॥

तज्ज्ञसूरिकृतप्रीति चारुमन्दारपुष्पवत्।
कदा भवन्महाकाव्यं व्योमेवेक्षे ध्रुवस्थिति॥ १३२॥

तज्ज्ञाश्च ते सूरयस्तेषां कृता प्रीतिर्येन। मन्दारपुष्पवत्सुन्दरम्। अविनश्वरप्रकृति। तत्प्रसिद्धत्वात्काव्यं कदा पश्यामि। व्योमेव बुधबृहस्पतिभ्यां कृतप्रीति। चारवो मन्दारपुष्पवन्तः शनिभौमार्केन्दवो यत्र। ध्रुवस्य नक्षत्र[विशेष]स्य स्थितिर्यत्र॥ इति पण्डितपटुश्लोकः॥

ज्यायसो वीक्ष्य विद्वद्भिर्हर्षदामिति पर्षदम्।
स तदा सुचिरं दध्रे दृशं कर्णान्तचुम्बिनीम्॥ १३३॥

श्रीलङ्ककस्य सभामेवं दृष्ट्वा स दृशं विकसितां तदावहत्॥

विद्वद्वादविधिस्तस्य षट्तर्कीरसजन्मभूः।
कर्णयोः षड्रसाहारसिद्ध्यै चिरमकल्पत॥ १३४॥

षट्तर्कीरसस्य जन्मभूः पण्डितगोष्ठी [वादविधिः] तस्य कर्णयोर्मधुरादिषड्रसकल्पिताहारसदृशः संपन्नः॥

त्रुट्यद्भिराननपथावसथोक्तिदेवी-
हस्ताग्रपुस्तकमुखादिव बन्धसूत्रैः।
दन्तांशुभिः प्रसृमरैः पिहिताधरौष्ठः
श्रीरुय्यकस्तमथ स स्वगुरुर्बभाषे॥ १३५॥

मुखनिवासिसरस्वतीहस्तस्थितपुस्तकाग्रात्त्रुटद्भिरिव स्फुरद्भिर्दन्तरश्मिभिरछादितौष्ठः श्रीरुय्यकः स्वगुरुस्तमथोक्तवान्॥

आराधिता भगवती भवतैव सत्यं
प्राग्जन्मसुव्रतशतोर्मिभिरुक्तिदेवी।

यत्नं विनाप्यधिवसन्कविकर्म गर्भं
सारस्वतत्वमिव योऽलमभिव्यनक्ति ॥ १३६ ॥

बहुषु पूर्वजन्मसु व्रतशतप्रबन्धैर्हेतुभिर्भवतैव सरस्वती सेवितेति सत्यम् । अभ्यासं विनैव कविकर्म प्राप्नुवन् यो भवान् गर्भं सारस्वतत्वमिव प्रकाशयति ॥

यत्काव्यरत्नमुपधातुमिवोपनीय
शक्त्या निसर्गविवृतोद्गमयार्पितं ते ।
तच्छाततां गमितवानसि वर्धमान-
व्युत्पत्तिशाणफलकार्पणनैपुणेन ॥ १३७ ॥

निसर्गेण विवृतोद्गमया स्फुरन्त्या शक्त्या नीत्वा ते तुभ्यं यत्काव्यरत्नं दत्तं तच्छाततामच्छत्वं प्रापितवान् । वर्धमाना व्युत्पत्तिः सैव शाणफलकं तस्मिन्नर्पणे नैपुणं तेन ॥

तत्सौष्ठवव्यसनि काव्यकलाशरीरं
नो जात्ववद्यमयमामयमभ्युपैति ।
शक्त्यादयो दधति साम्यगतिं त्रयोऽपि
ते यत्र धातव इवाविकृतप्रतिष्ठाः ॥ १३८ ॥

सौष्ठवे दार्ढ्ये अशैथिल्ये व्यसनि काव्यकलाशरीरं शब्दार्थसंदर्भो दोषरूपं रोगं न जातु प्राप्नोति । यत्र शक्तिव्युत्पत्त्यभ्यासास्त्रयोऽपि निर्विकाराः समाः । यत्र शरीरे चाविकृतास्त्रयो दोषा वाय्वादयः समास्तच्छरीरं रोगं न प्राप्नोति ॥

धन्यस्त्वं विनिवेशितैर्बहुतिथैरर्थैः स्थितिं बिभ्रती
न क्वापि स्ववपुः प्रसारितवती पण्यत्वसंसिद्धये ।
सालंकारपदाधिकध्वनिजुषा मूर्त्या नरीनर्त्यसौ
शंभोर्येन पुरोऽर्पिता भगवतो वाग्देवतानर्तकी ॥ १३९ ॥

बहुतिथैर्वाच्यलक्ष्यव्यङ्ग्यादिभिरर्थैर्धनैश्च स्थितिं दधाना तथा पवित्रत्वार्थं सर्वत्र स्वरूपं निह्नुवाना । या सालंकारैः सोपमोत्प्रेक्षादिभिः सविभूषणैश्च पदैः सुप्तिङन्तादिभिः पदयोश्चरणयोश्च योऽधिको ध्वनिस्तं बिभ्रता रूपेणात्यर्थं नृत्यति सा सरस्वतीनर्तकी येन हरमुद्दिश्य प्रतिपादिता स त्वं धन्यः ॥

यच्छ्रीमङ्खक मुख्यतां गतवता व्युत्पत्तिविच्छित्तिभिः
श्रीश्रीकण्ठचरित्रमित्यभिधया काव्यं व्यधायि त्वया ।
एतस्मिन्सदसि प्रसिद्धविविधोपासीनविद्वद्वरे
तत्संदर्शय तस्य रोहतुतरां साफल्यतः कल्पता ॥ १४० ॥

व्युत्पत्तिभङ्गिभिः प्राधान्यं प्राप्तवता श्रीकण्ठचरिताख्यं काव्यं यत्त्वया कृतं तदस्यां सभायां सावधानपण्डितायां संदर्शय । तस्य काव्यस्य सफलत्वेन स्तुतिरुत्पद्यताम् ॥

आरूढां परिपाकवर्त्मनि धुरं तत्तद्रसस्यन्दिनीं
निःशेषोऽपि सभाजनोऽयमधिकं श्रद्धानुबन्धातिथिः ।
वीप्सामूर्धविधूननाकुलतरोत्तंसोत्पलाग्रच्छदै-
रुन्मीलद्रसनैरिव श्रुतिपुटैस्त्वद्वाचमाचामतु ॥ १४१ ॥

परिपक्वां सरसां च त्वद्वाचं सश्रद्धः सभ्यवर्गः श्रवणैश्चर्वयतु । चमत्कारवशात्पुनः पुनः शिरःकम्पचपलकर्णाभरणोत्पलपत्रैः । अतः संभाव्यते—स्फुरज्जिह्वैरिव । चर्वयतां हि रसना स्फुरति ॥

श्रुत्वा वाक्यमुदारमाशयविदस्तत्तस्य सम्यग्गुरोः
किंचिन्न्याञ्चितकंधरेण शिरसा स व्यञ्जितप्रश्रयः ।
वाग्देवीकरिणीविसृत्वरमदस्रोतःकणस्पर्धता-
मारूढैरिव गूढमक्षरशतैर्व्यस्तारयत्पुस्तकम् ॥ १४२ ॥

भावज्ञस्य श्रीरुय्यकस्योदारं तद्वचनं श्रुत्वा किंचिन्नम्रेण शिरसा प्रकाशितविनयः स मङ्खकः सरस्वतीहस्तिनीमदजलकणसमैर्वर्णैः सहितं पुस्तकं विस्तारितवान् ॥

तद्विस्तार्य च पुस्तकं परिचितं कीर्णैर्वचोदेवता-
भूषामेचकमौक्तिकैरिव हठाक्षिप्तेक्षणैरक्षरैः ।
व्याहारेण हृदन्तरालविहरद्विद्यावधूनूपुर-
ध्वानभ्रान्तिकृता ततस्तदपठत्स्वं काव्यमव्याकुलः ॥ १४३ ॥

सरस्वतीभूषणभूतसितेतरमुक्ताफलैरिव रभसाकृष्टदृष्टिभिरक्षरैः सहितं पुस्तकं विस्तार्यानाकुलमना मनोमध्यक्रीडत्सरस्वतीपुरंध्रिनूपुरशब्दभ्रान्तिकृतोक्त्या श्रीकण्ठचरितं स पठितवान् ॥

तत्काव्ये धृतदिव्यवर्त्मनि विशत्यन्तः ससंतोषता-
मश्रान्ताहितमूर्धधूननविधिव्याप्तैरभिव्यञ्जनात् ।
तेषां तत्र कपोलमूलपुलकव्याजाद्ववाम श्रुति-
स्तत्तत्पीतचरान्यकाव्यनिवहव्यक्ताक्षरालीमिव ॥ १४४ ॥

धृता लौकिकसरणौ तदीयकाव्ये श्रुतेर्मध्यं प्रविशति सति शिरःकम्पेन चमत्कारं प्रकाशयतां सभ्यानां पुलकव्याजेन श्रवणं पूर्वपीतान्यमहाकाव्याक्षरपङ्क्तिमिवावमत् ॥

वाग्देवीपदधूलिविप्रुष इव व्यक्ताक्षरश्रेणय-
स्तास्तत्काव्यवशंवदाः प्रतिपदं कौतूहलं तेनिरे ।
याः सद्यः श्रुतिरन्ध्रवर्त्मनि भृतावाप्तप्रवेशा दृशो-
रानन्दानुगुणान्कणानजनयंस्तेषां सतामश्रुणः ॥ १४५ ॥

सरस्वतीसूक्तिकणा इव व्यक्तवर्णास्तत्काव्यपुस्तकान्तरपङ्क्तय आश्चर्यं चक्रुः । याः कर्णमार्गप्रविष्टा दृष्टेर्हर्षाश्रुकणानुदपादयन् ॥

उद्यद्वैद्युतदीप्तिसोदरसरत्सारस्वतज्योतिषा
पूतस्तद्वचसां रसः श्रुतिपुटैः संसत्सदामापपे ।
तेषामुन्मिषितालसालसगतौ दृक्शुक्तिपङ्क्तौ शनै-
रानन्दाश्रुपृषन्मयी तु जघटे मुक्ताफलानां ततिः ॥ १४६ ॥

विद्युत्समसारस्वततेजसा निर्दोषस्तत्काव्यरसः श्रवणपुटैः श्रुतिमुखैः पीतः, तेषां सभासदामुन्मिषन्त्यां दृष्टिशुक्तिपङ्क्तौ हर्षाश्रुप्रकृतिर्मुक्ताफलपङ्क्तिर्घटिता ॥

सद्वृत्ताश्च सुसूक्ष्मदर्शनकलायोग्याश्च तत्सूक्तय-
स्ताः सिद्धार्थतयैव कस्य न मनो निन्युर्घनस्नेहताम् ।
आसीना वलमानमूर्धनि तदा तस्मिन्वचोदेवता
सच्चक्रे व्यतनिष्ट या बहुमुखश्च्योतद्रसस्रोतसः ॥ १४७ ॥

सन्ति वृत्तानि वसन्ततिलकादीनि यासु, सन्तो वृत्ताश्च । सुसूक्ष्मा या दर्शनकला ज्ञानकला च तत्र योग्याः । तीक्ष्णमतिगम्या इत्यर्थः । दर्शने शैवादौ च योग्याः । तत्सूक्तयः सिद्धाभिधेयतयान्यूनातिरिक्ततया सर्षपत्वेन च । सर्वेषां मनो घनप्रीतितां [घनतैलत्वं] च निन्युः । चमत्कारेण कम्पमानशिरसि साधुवर्गे च निविष्टा सरस्वती याः स्रवद्रसप्रवाहा व्यतनोत् । चक्रे निवेश्य च सिद्धार्थान्स्रवद्रसान्करोति ॥

स प्रक्रान्तविचारसूरिदशनज्योत्स्नात्तभस्माप्लुतिः
स्वव्याख्येयधुरां महेश्वरकथाबन्धुः प्रबन्धोऽन्वभूत् ।
सत्कल्लोलविलोलतां त्रिजगतीशंस्यस्य यस्याग्रही-
दग्रे वक्रकलातिथेर्बुधजनानन्दाश्रुमन्दाकिनी ॥ १४८ ॥

विचारयतां सूरीणां दन्तभासा आत्तभस्मस्नानस्त्रिपुरारिचरितान्तरङ्गः प्रबन्धः

काव्यं स्वव्याख्येयस्य महेश्वरस्य साम्यं प्रापत् । त्रिजगत्स्तुत्यस्य तथा वक्रोक्त्या परिचितस्य यस्याग्रे बुधजनहर्षाश्रुगङ्गा तरङ्गितत्वमग्रहीत् । ईश्वरश्चन्द्रगङ्गे धारयति ॥

सारस्वतस्य महसः प्रथमा शिखेव
सा मङ्खकस्य ववृते धुरि सूक्तिरेका ।
दग्धुं मनः खलजनस्य कपोलराग-
भङ्ग्या व्यधत्त वचनेष्विव या स्वमोजः ॥ १४९ ॥

सरस्वतीतेजोभिनवा ज्वालेव सा मङ्खकस्य सूक्तिः । या दुर्जनानां चित्तं दग्धुमिव मत्सरोत्थितगण्डारुणत्वव्याजान्निजं तेज इव व्यधात् ॥

इत्यादिभिः प्रकरणैर्बुधसाधुवादा-
नादाय चेतसि दधत्परितोषमुद्राम् ।
तत्काव्यपुस्तकमथार्पयति स्म तस्मै
पूजाक्षणे त्रिजगतीगुरवे हराय ॥ १५० ॥

पण्डितकृतं यशः श्रुत्वा परितुष्य स पूजावसरे परमेश्वराय काव्यं न्यवेदयत् ॥

इक्षुक्षीरसधर्मनिर्मलरसस्रोतःसमुल्लासना-
दातन्वान इवाधिकाधिकमहास्नानक्रियाप्रक्रियाम् ।
तेनाग्रे निहितश्चराचरगुरोर्वक्रीभवन्मूर्तिभिः
शब्दैरङ्कुरितप्रणाम इव स प्रौढिप्रबन्धोऽधिनोत् ॥ १५१ ॥

इक्षुमधुरस्य क्षीरनिर्मलस्य रसस्रोतसः स्फुरणान्महास्नानमिव ददत्स प्रबन्धो वक्रीभवद्रूपैः शब्दैर्हेतुभिः कृतप्रणाम इव महेश्वरस्याग्रे निहितोऽप्रीणयत् । अन्योऽपि शर्कराक्षीराभ्यां भगवतो महास्नानं ददत्प्रणमंश्च प्रीणयति ॥

पितुर्बिभ्राणस्य स्मररिपुपुरीपौरपदवीं
नियोगेन स्वप्ने पदमुपगतेन श्रवणयोः ।
प्रबन्धं संधायेत्यधिकविबुधश्लाघ्यनिरघ-
क्रमं मङ्खः सौख्यं किमपि हृदये कन्दलयति ॥ १५२ ॥

महेश्वरलोकस्थस्य पितुराज्ञया स्वप्ने श्रुतया विबुधस्तुतं तच्छ्रीकण्ठचरितं काव्यं भगवते निवेद्य स मङ्खको मनसि कमप्यानन्दं प्रकाशयति ॥

काले कलौ विकसिते किल जोनराजस्तत्काव्यराजविवृतेर्भजते पुरारिम् ।
ब्रह्मादि चाटु पटु नास्य हि रञ्जनाय का मादृशस्तु गतिरीश्वरसेवनेऽन्या ॥
सन्तो नयन्ति गुणतां खलु दोषजातं जातेति चापलकलासु मम प्रवृत्तिः ।
वारां पतिस्त्यजति चेत्स्वकृतां व्यवस्थां कीर्तिः स्थितिं श्रयति कस्य जगत्प्रसिद्धा ॥
श्रीकण्ठकाव्यविवृतिं विरचय्य जोनराजः सतो नमति यत्नमतिप्रतिष्ठः (?) ।
हेलास्तु वस्तदपि यत्नमकार्षमस्यां दीपो बिलान्ध्यहरणात्तरणेः समः किम् ॥

इति श्रीपण्डितलोलतनयपण्डितनोनराजतनयराजानकश्रीजोनराजकृतया टीकया समेतः श्रीराजानकविश्ववर्तसूनोर्महाकविराजराजानकश्रीमङ्खकस्य कृतौ श्रीकण्ठचरिते महाकाव्ये पञ्चविंशः सर्गः ।

---

समाप्तोऽयं ग्रन्थः ।

---

# काव्यमाला।

## श्रीमदानन्दरायमखिप्रणीतं
## जीवानन्दनम्।

प्रथमोऽङ्कः।

लक्ष्मीकैरवबन्धुकल्पकतरूँल्लब्ध्वाथ लब्धेप्सिते
भूयो मथ्नति देवदानवगणे दुग्धाब्धिमृद्धश्रमे।
तस्यानन्दथुना समं समुदयन्कुम्भं सुधापूरितं
बिभ्राणः स्वकरे करोतु भवतां भद्राणि धन्वन्तरिः॥ १॥

अपि च।

प्राग्जन्मीयतपःफलं तनुभृतां प्राप्येत मानुष्यकं
तच्च प्राप्तवता किमन्यदुचितं प्राप्तुं त्रिवर्गं विना।
तत्प्राप्तेरपि साधनं प्रथमतो देहो रुजावर्जित-
स्तेनारोग्यमभीप्सितं दिशतु वो देवः पशूनां पतिः॥ २॥

(नान्द्यन्ते)

**सूत्रधारः**—मारिष, इतस्तावत्।

(प्रविश्य)

**पारिपार्श्वकः**—भाव, एषोऽस्मि।

**सूत्रधारः**—

रीतिः सुखपदन्यासा शारदीया विजृम्भते।
पूर्णचन्द्रोदयश्चायं निहन्ति ध्वान्तमामयम्॥ ३॥

अपि च।

क्रममाणेषु दिगन्ते जलधरजालेषु शङ्खधवलेषु।
शान्तिमुपयाति सहसा कालुष्यदशा भृशं पयसाम्॥ ४॥

**पारिपार्श्वकः**—अतः किमाचरितव्यम् ।

**सूत्रधारः**—शृणु तावत् । अत्र तञ्जापुरे पौरजानपदा देशान्तरादागताश्च बृहदीश्वररथोत्सवदिदृक्षया संवीभूताः ।

सरसकवितानाम्नो हेम्नः कषोपलतां गता
विहरणभुवः षड्दर्शन्या विवेकधनाकराः ।
विदधति तपोलभ्याः सभ्या इमे मम कौतुकं
तदिह हृदयं नास्थ्येनैतानुपासितुमीहते ॥ ५ ॥

**पारिपार्श्वकः**—(सशिरःकम्पम् ।) कं पुनः प्रबन्धमवलम्ब्य ।

**सूत्रधारः**—नन्वस्ति मम वशे सहृदयजनहृदयचन्दनं जीवानन्दनं नाम नवीनं नाटकमिति ।

**पारिपार्श्वकः**—कस्तस्य प्रबन्धस्य कविः ।

**सूत्रधारः**—विद्वत्कविकल्पतरुरानन्दरायमखी । य एष इह

गुरुदेवद्विजभक्तो नैमित्तिकनित्यकाम्यकर्मपरः ।
दीनजनाधीनदयो विहरति समरे च विक्रमार्क इव ॥ ६ ॥
यः स्नातोऽजनि दिव्यसिन्धुसलिले यः स्वात्मविद्याश्रितो
येनाकारि सहस्रदक्षिणमखो यः सद्भिराश्रीयते ।
सोऽयं त्र्यम्बकराययज्वतिलको विद्वत्कवीनां प्रभो-
र्यत्तातस्य नृसिंहरायमखिनस्तुल्यप्रभावोऽनुजः ॥ ७ ॥

**पारिपार्श्वकः**—(सबहुमानम् ।) आः, ज्ञायत एवायम् । किं त्वस्य सर्वलोकविदिता अप्येते गुणाः प्रबन्धनिर्वाहधूर्वहत्वमवबोधयितुं नेशते । यतः ।

आराध्नोति यदेष भक्तिभरितो देवान्द्विजातीन्गुरू-
न्यच्च श्रद्दधदातनोति समये नित्यादिकर्मत्रिकम् ।
यद्दीनेषु दयां करोति समरे शौर्यं यदालम्बते
तत्सर्वं नरसिंहयज्वसुततालाभस्य लीलायितम् ॥ ८ ॥

इदं तु श्रोतव्यम् ।

आनन्दरायमखिनो वाल्मीकेरिव योगिनः ।
इतरापेक्षणात्सारः स्वतः सारस्वतोदयः ॥ ९ ॥

**सूत्रधारः**—(विहस्य ।) मारिष, त्वं न जानासि यत एवं ब्रवीषि । शृणु तावत् ।

आबाल्यादपि पोषितोऽजनि मया प्रेम्णा तथा लालित-
स्तेनासौ सरसामुपैतु कवितामानन्दरायाध्वरी ।
इत्येकक्षितिपालवंशजलधेर्देव्या गिरां जातया
श्रीशाहावनिनायकाकृतिभृता नूनं प्रसादः कृतः ॥ १० ॥

अत एव

कवीनां पूर्वेषां कथमपि च चित्तैरवहितै-
र्गृहीता या नासीत्सरसकवितासारपदवी ।
असौ तामाक्रामन्हरति नरसिंहाध्वरिकुल-
प्रदीपः सूरीणां श्रवणयुगजाड्यान्धतमसम् ॥ ११ ॥

**पारिपार्श्वकः**—श्रीशाहराज इति नाम दधत्याः सरस्वत्याः कियानानन्दरायमखिनि दयाविशेषः । यतः ।

पुष्यत्कौतुकपद्मसंभृतकरद्वन्द्वाङ्गुलीवेल्लन-
द्राङ्क्ष्पीडितचन्द्रमण्डलगलत्पीयूषधारासखैः ।
वाग्गुम्फैर्वलवैरिधारितशचीधम्मिल्लमल्लीसर-
स्फारामोदमदापहैश्च कवयत्यानन्दरायाध्वरी ॥ १२ ॥

युक्तमुक्तं च भावेन 'शाहभूपतिरूपेण गिरां देवी जाता' इति । कथमन्यथानन्यसाधारणमस्य प्रागल्भ्यम् । तदिदानीमिदमुत्प्रेक्ष्यते—

भर्तुं लालयितुं भुवि प्रथयितुं विद्वज्जनानाश्रिता-
न्श्रीशाहक्षितिपात्मना क्षितिगतां मत्वा गिरां देवताम् ।
आसिञ्चन्नसकृत्कमण्डलुजलैरङ्गानि पर्याकुलो
धाता वाहनहंसपक्षपवनैस्तापं किलापोहति ॥ १३ ॥

**सूत्रधारः**—तन्नियोजय भूमिपरिग्रहायासद्वर्ग्यं शैलूषगणम् ।

**पारिपार्श्वकः**—बाढम् । किं तु सन्ति कथानायकस्य जीवस्य परिजना विज्ञानशर्मप्रभृतयः प्रतिनायकस्य च यक्ष्मणः परिजनाः पाण्डुश्वासकासज्वरगुल्मातिसारप्रभृतयः । तेषां यद्यपि भूमिकाग्रहणपटवो नटबटवः

पुण्डरीककेयूरकमयूरकसारङ्गकतरङ्गकप्रभृतयः संनह्यन्ति । तथापि प्रयोगस्य बहुत्वेन दुरवगाहतया कथमभीप्सितार्थसिद्धिर्भविष्यतीति विचारेण व्याकृष्यत इव मे हृदयम् ।

**सूत्रधारः**—यत्किंचिदेतत् । महतामेषां सामाजिकानामनुग्रह एवास्माकमभीप्सितमर्थं समग्रयिष्यति । यतः ।

जाड्यं भिनत्ति जनयत्यधिकं पटुत्वं
सार्वज्ञमावहति संमदमातनोति ।
विद्वेषिवर्गविजयाय धृतिं विधत्ते
किं किं करोति न महज्जनं जनस्य ॥ १४ ॥

**पारिपार्श्वकः**—एवं च मन्ये त्वया सह स्पर्धमानोऽपि विकटनामा नटवटुरभिनयविद्यायां महदनुग्रहात्त्वयैव विजेष्यत इति ।

**सूत्रधारः**—विकटो नाम नटवटुर्मया सह स्पर्धत इत्यतत्त्वविदो वचनम् । शृणु तावत् ।

अभिनयविद्याविषये दुरहंकाराकुलीकृतो विकटः ।
स नटवटुर्मां वाञ्छन्त्यभिभवितुं जीवमिव यक्ष्मा ॥ १५ ॥

(नेपथ्ये)

अरे रे शैलूषापसद, 'अभिभवितुं जीवमिव यक्ष्मा' इति किमसंभावितमर्थं दृष्टान्तयसि ।

मयि जीवति जीवस्य स्वामिनो मन्त्रिणि प्रिये ।
दुर्बलो यक्ष्महतकः कथं वाभिबुभूषति ॥ १६ ॥

**सूत्रधारः**—(आकर्ण्य ।) मारिष, जीवराजमन्त्रिणो विज्ञानशर्मणो भूमिकामादाय मम कनीयान्कलहंसो रङ्गभुवमवतरति । तदावामप्यनन्तरकरणीयाय सज्जीभवावः ।

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

---

(ततः प्रविशति जीवमन्त्री विज्ञानशर्मा ।)

**विज्ञानशर्मा**—('अरेरे शैलूषापसद–' इत्यादि पठित्वा विचिन्त्य ।) सर्वथा राजसमीपं गत्वा तदनुज्ञया यक्ष्मणः प्रवृत्तिमुपलब्धुं चारान्प्रेषयिष्यामि । अथवा 'तत्प्रवृत्त्युपलम्भाय प्रेषय धारणाम्' इति मयोक्तो राजा तथा कुर्यात् । (श्रुतिमभिनीय ।)

दिक्षूदञ्चति ताम्रचूडरसितं यद्ध्रस्वदीर्घप्लुत-
प्रायोवर्णनिभं ब्रवीति तदिदं व्युष्टा निशाभूदिति ।
स्त्रीणां निर्गमनं विहत्य पतिभिर्ब्रूते विनैवाक्षरैः
क्रीडावेश्मकपाटिकाविघटनक्रेंकारपारम्परी ॥ १७ ॥

तदिदानीं देव्या प्रसन्नया बुद्ध्या सह राजा प्रतिबुध्य निवसेत् । तदुपसर्पामि । (इति पुरो दृष्टिक्षेपमभिनयन् ।)

चञ्चत्खेटकृपाणकञ्चुकशिरस्त्राकल्पदृप्यद्भटा
सादिव्यञ्जितवक्रमण्डलगतित्वङ्गत्तुरङ्गव्रजा ।
गण्डद्वन्द्वगलन्मदाम्बुमुखरीभूतद्विरेफद्विपा
दृष्टयोर्मे कुतुकाय राजभवनद्वारोपकण्ठस्थली ॥ १८ ॥

अपि च ।

प्रौढामात्यनिरुक्तमन्त्रपदवीविस्रम्भसंचारिणो
राज्ञो दुःसहतेजसो निशमने यद्वद्धृतिं द्वेषिणः ।
प्रासादप्रतिहारवेदिषु तथा स्नेहाङ्कपात्रस्थिताः
प्रत्यूषोपगमे प्रदीपमुकुलाः कान्तिं त्यजन्त्यञ्जसा ॥ १९ ॥

(पुरो विलोक्य ।) का पुनरियं तपश्चरणजनितप्रभुत्वगौरवेव मामभिवर्तते ।

गाढोन्नद्धजटाकलापकपिलश्रीधूतबालातपा
बिभ्राणा भसितानुलेपधवलच्छायां तनुं पावनीम् ।
भिक्षापात्रमयूरपिच्छचयभृत्पाणिद्वया मेऽधुना
काषायाम्बरधारिणी कलयति स्वान्ते धृतिं तापसी ॥ २० ॥

(निपुणं निरूप्य ।)

अस्यामक्षिभ्रुवं नासा रदपङ्क्ती रदच्छदः ।
चुबुकं मन्दहासश्च धारणायामिवेक्ष्यते ॥ २१ ॥

(ततः प्रविशति तापसीवेषा धारणा ।)

**धारणा**—अहं खु पच्चत्थिराआभिसेणणसंणाहं कस्स वि पुरिसस्स मुहादो सुदवन्तेण रण्णा 'इमं उत्तन्तं पुरं पविसिअ जाणीहि' त्ति पेसिदह्मि । मए वि तावसीवेसाए तह जाणिअ रण्णो समीवे समागमीअदि । (अग्रतो दत्तदृष्टिः स्वगतम् ।) एसो विण्णाणसम्मा अमच्चो आअच्छदि । होदु । वेसेण पदारेमि णम् । जज्जवि सव्वस्सिं वि कज्जे इमस्स अणुमदिं विणा राआ ण पवट्टइ तह वि जं मह संसओ वट्टइ ता एअकस्स पआसो ण भवे । (इति परिक्रामति ।) (क)

**मन्त्री**—(दृष्ट्वा स्वगतम् ।) इयं तापसी राजप्रहिता प्रच्छन्ना किं धारणा भवेत् । भवतु । पृच्छामि । (प्रकाशम् ।) अये तापसि, का त्वम् । कुत आगच्छसि ।

**धारणा**—(स्वगतम् ।) इमस्स पडिवअणं भासन्तरेण भणेमि । अण्णहा कहं वि जाणिस्सदि इअं सेति । (प्रकाशम् ।) अहं खलु गार्गी यक्ष्मणो राज्ञो वयस्या देव्या गृहिण्याः स्नेहसर्वस्वभाजनं तदन्तःपुरादेवागच्छामि । (ख)

**मन्त्री**—(स्वगतम् ।) भवेदेवेयं धारणा तापसीवेषेण रिपुप्रवृत्तिमुपलभ्यागतवती । अयं स्वनामानुगुणमभिज्ञो वा न वेति मां परीक्षितुं संस्कृत-

---

(क) अहं खलु प्रत्यर्थिराजाभिषेणनसंनाहं कस्यापि पुरुषस्य मुखाच्छ्रुतवता राज्ञा 'इमं वृत्तान्तं पुरं प्रविश्य जानीहि' इति प्रेषितास्मि । मयापि तापसीवेषया तथा ज्ञात्वा राज्ञः समीपे समागम्यते । एष विज्ञानशर्मा अमात्य आगच्छति । भवतु । वेषेण प्रतारयाम्येनम् । यद्यपि सर्वस्मिन्नपि कार्येऽस्यानुमतिं विना राजा न प्रवर्तते तथापि यन्मम संशयो वर्तते तदेककस्य प्रकाशो न भवेत् ।

(ख) अस्य प्रतिवचनं भाषान्तरेण भणामि । अन्यथा कथमपि ज्ञास्यति इयं सेति ।

भाषया वेषानुगुणमपलपते प्रतिपक्षकुले च पक्षपातमात्मनः सूचयति । भवतु । अहमप्यजानन्निवानुनयन्पृच्छाम्येनाम् । (प्रकाशम्।) अये तापसि,

निखिलं जगतश्चरितं विज्ञातं ते समाधिनैव भवेत्।
तन्मे महाप्रभावा भाग्येनासादिता भवती ॥ २२ ॥

**धारणा**—(स्वगतम्।) मं तावसिं एव्व जाणिअ मह मुहादो पच्चत्थिराअप्पउत्तिं सुणिदुं अणुणअप्पआरो एसो । होदु । अहं वि अजाणन्तीव पुच्छामि । (प्रकाशम्।) कस्त्वम् । क्व गच्छसि । सूनृतेन ते वचनेन साधुर्भवानिति पृच्छामि । (क)

**मन्त्री**—(स्वगतम्।) इयमात्मानं गोपयति । अहमपि तथैवोत्तरयामि । (प्रकाशम्।) कार्यविशेषेऽधिकृतं जानीहि येनैवमधिकृतस्तन्निकटे गच्छामि ।

**धारणा**—(स्वगतम्।) एसा विपक्खजणपक्खवादिणित्ति गोपणप्पआरो एसो । (प्रकाशम्।) केनाधिकृतोऽसि । (ख)

**मन्त्री**—भगवति, त्वमेव जानासि । यतः प्रणिधानेन योगिनः सकलमपि प्रत्यक्षयन्ति ।

**धारणा**—(स्वगतम्।) कहं एदं आपडिदम् । होदु । जोइणो विअ आसिअं करिअ अमच्चं वञ्चेमि । (इति ध्यानारूढा तिष्ठति।) (ग)

**मन्त्री**—(स्वगतम्।) एषा खलु

कृत्वा स्वस्तिकमासनं करयुगं विन्यस्य जानुद्वये
नासाग्रार्पिततारका नतमृजूकृत्यावलग्नं दृढम्।
निःश्वासोच्छ्वसितोपरोधघटितस्तैमित्यपीनस्तनी
चित्ते मे कृतसंयमेव कुरुते धूर्ता महत्कौतुकम् ॥ २३ ॥

(प्रकाशम्।) परिनिष्ठितं योगाभासनं भवत्याः ।

---

(क) मां तापसीमेव ज्ञात्वा मम मुखात्प्रत्यर्थिराजप्रवृत्तिं श्रोतुमनुनयप्रकार एषः । भवतु । अहमप्यजानतीव पृच्छामि ।

(ख) एषा विपक्षजनपक्षपतिनीति गोपनप्रकार एषः ।

(ग) कथमेतदापतितम् । भवतु । योगिन इवासिकां कृत्वा अमात्यं वञ्चयामि ।

**धारणा**—(ध्यानाद्विरम्य सस्मितम् ।) जीवस्य राज्ञो मन्त्री विज्ञानशर्मा भवान् ।

**मन्त्री**—महाप्रभावा योगसिद्धिमती भवती । तथाहि ।

बुद्ध्या महत्या कृतसाहचर्या देवे निजे दर्शितभूरिभक्तिः ।
परप्रवृत्तिं विदती महिम्ना साधारणा त्वं त्वहिते हिते च ॥ २४ ॥

**धारणा**—(स्वगतम् ।) किं जाणिदं म्हि अमच्चेण जहत्थणामधेएण जं तावसीवण्णणव्वाजेण अहं जेव्व वण्णिदा । होदु । एव्वं भणामि । (प्रकाशम् ।) महान्खलु योगप्रभावः । (क)

**मन्त्री**—भगवति, तव न किंचित्प्राणिनामन्तर्गतमविदितमस्ति । अतस्त्वां प्रार्थये । कथमस्माकं राजनि यक्ष्मा मन्यते । योगिन्यास्तव दुःखितेषु कथमेषां दुःखविमुक्तिः स्यादिति चित्तपरिकर्मविशेषः करुणा भवत्येव । योगाङ्गेषु यमेषु वाङ्मनसयोर्यथार्थत्वरूपः सत्यं नाम द्वितीयो यमोऽपि तथा । अत इदं निर्विशङ्कं प्रार्थनापूर्वं पृष्टासि ।

**धारणा**—(स्वगतम् ।) जक्खराजपक्खवादविसेसे वि जोइणीए पुच्छिदस्स जहत्थुत्तरं अभणिअ असक्कं ठादुं त्ति मण्णइ अमच्चो । (प्रकाशम् ।) किमन्यत् । पुरान्निष्क्रमयितव्योऽयमिति मन्यते । (ख)

**मन्त्री**—कथमेतदेतस्य संघटते सामादिषु चतुर्षूपायेष्वेकैकस्यापि प्रयोगेण सुसाधो हि रिपुमनोरथभङ्गः ।

**धारणा**—नन्विमं दुष्करं पश्यामि ।

यक्ष्मणि विभौ प्रयोगं घटयन्ति न सामभेददानानि ।
दण्डः प्रभवेन्नु कथं प्रबलतरे रिपुजने स्वस्मात् ॥ २५ ॥

**मन्त्री**—यथार्थमाह भवती । किं त्विदं पक्षपातवचनम् । केनेममस्मत्प्रबलतरं मन्यसे ।

---

(क) किं ज्ञातास्म्यमात्येन यथार्थनामधेयेन यत्तापसीवर्णनव्याजेनाहमेव वर्णिता । भवतु । एवं भणामि ।

(ख) यक्ष्मराजपक्षपातविशेषेऽपि योगिन्या पृष्टस्य यथार्थोत्तरमभणित्वा न शक्यं स्थातुमिति मन्यतेऽमात्यः ।

**धारणा**—(स्वगतम् ।) एसो अत्तकेरअस्स पहुणो अमच्चो । ता पहुजअ-विषअणीए मन्तविचारसिद्धीए परपक्खबलट्ठिदिं एदस्स जेव्व कहइस्सम् ।(क) (प्रकाशम् ।) सर्वरोगराजो यक्ष्मा निष्प्रतीकार इति सर्वजनविदितमेतत् । शृणु तावत् । परीवारा एतस्य रोगविशेषा भीमरूपा बहवः । तथाहि ।

ज्वरपाण्डुप्रमेहार्शः शूलगुल्मभगंदराः ।
कासश्वासावतीसारसंनिपाताश्मरीव्रणाः ॥ २६ ॥

किं च ।

रोगा मूर्ध्नि शतं चतुर्नवतिरेवाक्ष्णोस्तथा नासिकां
प्रत्याष्टादश कर्णयोरपि तथा वक्त्रे चतुःसप्ततिः ।
पञ्चैवं हृदि किं च सन्ति बहवः सर्वेऽप्यमी दुस्तराः
प्राप्तौ कल्ककषायलेह्यवटकप्रायौषधानामपि ॥ २७ ॥

तस्माद्दुर्जयो युष्माभिः ।

**मन्त्री**—(स्वगतम् ।) इयं किल भीत्या निसर्गकातरा प्रबलपरबलप्रवेशहृदया मदीयप्रभावमजानती स्वबुद्ध्यनुरूपं किमपि प्रलपति । भवतु । किमनया वृथा संवादकदर्थनया । प्रस्तुतकार्यसाधनार्थमिमां तावदन्तरयामि । (प्रकाशं सोपहासम् ।)

आलोक्य शात्रवबलं बहुधारणे त्वं
भीतासि संप्रति रसं प्रतिपन्नधैर्या ।
जीवस्य जीवितसमे मयि सत्यमात्ये
भूयात्कथं बत विरोधिशिरोधिरोहः ॥ २८ ॥

**धारणा**—(विहस्य ।) कधं ज़ाणिदह्मि अमच्चेण । ता कहेमि विस्सद्धं जहत्थं सुणादु अमच्चो । अहं खु देईए बुद्धीए सहअरी रण्णा जीवेण तावसीवेसं करिअ रत्तिम्मि पुरं पविसिअ जक्खराअस्स विआरणीओ व-

---

(क) एष आत्मीयस्य प्रभोरमात्यः । तत्प्रभुजनविषयिण्या मन्त्रविचारसिद्धेः परपक्षबलस्थितिमेतस्यैव कथयिष्यामि ।

वसाओ त्ति पेसिदह्मि । तह ज्जेव विचारिअ अज्जं पदारेदुं पच्छण्णे व ठिदह्मि । (क)

**मन्त्री**—युज्यत एतत् । अतो राजसमीपमेव गच्छावः ।

**धारणा**—तुमं जेव्व गदुअ इमं वुत्तन्तं भणाहि । रण्णो णिवेदणादो वि तुह पुरदो कज्जणिवेदणं अब्भहिदम् । अहं उण दुज्जणसंसग्गकिदं कलुसं पक्खालेदुं महाणदिं ण्हादुं गच्छेमि । (ख) (इति निष्क्रान्ता ।)

**मन्त्री**—(सविचारम् ।) यद्यपि कुटिलप्रकृतयः स्वामिनि निबद्धदृढभक्तयो दुर्जया एव परसैनिकास्तथापि किमसाध्यं बुद्धिविभवस्य । यतः ।

दुर्जाते सुमहत्यपि क्षितिपतेः शालीनतां संत्यज-
न्शात्रूञ्जेतुमथेप्सितं घटयितुं शक्नोत्युपायेन यः ।
प्रायो मन्त्रिपदं महोन्नतमतिः प्राप्तुं स एवार्हति
स्वोत्सेकी न तु पण्डितो भुवि जनो वाचा वदन्पौरुषम् ॥ २९ ॥

अत इदानीम् ।

संचिन्तयामि कंचन संप्रति समयोचितं जयोपायम् ।
येनास्माकं श्रेयो भविता सहसा पराजयो द्विषताम् ॥ ३० ॥

(इति ध्यानं नाटयन् ।) आः, चिन्तितोऽयमबाधितोपायः । तथाहि ।

प्रथन्ते यास्तिस्रः प्रबलजडतीक्ष्णाः प्रकृतयो
वशीकारे तासां जगति सदुपायाः परममी ।
क्रमात्स्नेहास्ते ते कुशलमतिभिः सद्भिरुदिता-
स्तथा तीक्ष्णोपाया नियतमुपचाराश्च मधुराः ॥ ३१ ॥

---

(क) कथं ज्ञातास्म्यमात्येन । तत्कथयामि विश्रब्धं यथार्थं शृणोत्वमात्यः । अहं खलु देव्या बुद्धेः सहचरी राज्ञा जीवेन तापसीवेषं कृत्वा रात्रौ पुरं प्रविश्य यक्ष्मराजस्य विचारणीयो व्यवसाय इति प्रेषितास्मि । तथैव विचार्यार्यं प्रतारयितुं प्रच्छन्नेव स्थितास्मि ।

(ख) त्वमेव गत्वा इमं वृत्तान्तं भण । राज्ञो निवेदनादपि तव पुरतः कार्यनिवेदनमभ्यर्हितम् । अहं पुनर्दुर्जनसंसर्गकृतं कलुषं प्रक्षालयितुं महानदीं स्नातुं गच्छामि ।

तस्मात्प्रबलजडतीक्ष्णप्रकृतीनां वातपित्तकफानां मध्ये प्रबलो यो वातः स तु बहुविधस्नेहविशेषप्रयोगेण वशीकार्यः । तदनुगतस्य पित्तस्य मधुरोपचारेणैव सुकरो वशीकारः । उभयविरुद्धो जडो यः कफस्तत्रेतरोपायस्याप्रसरात्तीक्ष्णप्रयोगेणैव स वशमानेतव्यः । एवं च तत्तत्समुचितैरुपायैः सर्वामयनिदानेषु वातादिषु स्वाधीनेषु तज्जनितानामितरेषामुन्मेष एव दूरतोऽपास्तः । किं च ।

सर्वस्मिन्विषये निरङ्कुशतया यद्बुर्निरोधं मनः
प्रायो वायुरिव प्रकृष्टबलवत्सर्वात्मना चञ्चलम् ।
तत्कामादिभिरुद्धतैरुपहतं संप्रेरितैर्यक्ष्मणा
तत्सौहार्दमुपेत्य यद्यपि पुनर्नः प्रातिकूल्यं चरेत् ॥ ३२ ॥

अतस्तदपि महाधिकारेण वशीकृत्य महति व्यापारे विनियोज्य तैरपि दुर्भेदं करिष्यामि । यद्यपि मद्विरोधिचेष्टोऽज्ञानशर्मा मदसंनिधाने राज्ञ उपजापेन कार्यभेदमेव जनयेत् तथापि जाग्रतिः फलकर्मैव (?) ।

सर्वानर्थनिदाने यक्ष्मणि तस्मिन्समूलमेव मया ।
उन्मूलिते ततो नः कर्तव्यं नावशिष्यते किंचित् ॥ ३३ ॥

तथाकर्तुमेव तावद्राजनिकटमेव गच्छामि । (इति कतिचित्पदानि गत्वा पुरो विलोक्य ।) इदं तद्राजभवनम् । यावत्प्रविशामि । कः कोऽत्र भोः ।

(प्रविश्य ।)

**प्रतीहारः**—मन्त्रिन्, किमाज्ञापयसि ।

**मन्त्री**—प्राण दौवारिक, संप्राप्तं मां राज्ञे निवेदय ।

**प्राणः**—तथा । (इत्यन्तःपुरं प्रविष्टः ।)

**मन्त्री**—(परितो विलोक्य ।) इह खलु

संमृज्य शोधिनीभिश्चत्वरवेदीतलेषु रम्येषु ।
रचयन्ति रङ्गवल्लीरन्तःपुरचारिका एताः ॥ ३४ ॥

गृह्णन्वेत्रलतां वसत्यवसरापेक्षो जरत्कञ्चुकी
राजा मामवलोकयेदिति समं वत्सेन गौस्तिष्ठति ।

वादित्रध्वनिमण्डलीकृतगरुद्बर्ही नटत्यङ्गणे
देव त्वं विजयीभवेति गुणयन्नास्ते शुकः पञ्जरे ॥ ३५ ॥

(प्रविश्य ।)

**दौवारिकः**—(मन्त्रिणं प्रति ।) स्वामिन्, भवन्तं द्रष्टुं बुद्ध्या सह देव्या भद्रासनमधिवसति राजा ।

**मन्त्री**—

अतिपरिचयेऽपि राज्ञो बिभेमि सहसोपगन्तुमभ्यर्णम् ।
येनाग्नेरिव तेजः स्फुरदस्याराान्निवर्तयति ॥ ३६ ॥

(विचिन्त्य ।) परपक्षं प्रति प्रतिविचारणाय प्रेषितां धारणां प्रतीक्षमाण इव लक्ष्यते । भवतु तदेतदहं वक्ष्यामि ।

(ततः प्रविशति बुद्ध्या देव्या सह राजा जीवः ।)

**मन्त्री**—(उपसृत्य ।) विजयतां महाराजः ।

**राजा**—इतो निषीदतु भवान् । (इति मन्त्रिणे आसनं निर्दिशति ।)

**मन्त्री**—(आसने उपविश्य स्वगतम् ।) एष खलु

गण्डूषोदकशोधितेऽपि वदने ताम्बूलरक्ताधरः
स्नानापोहितचन्दनेऽपि वपुषि प्रोद्दामतत्सौरभः ।
निर्णिक्ते सिचये धृतेऽपि कनकाकल्पेन पीताम्बरः
सोऽयं सत्यपि न प्रमाद्यति सदाचारादतिप्राभवे ॥ ३७ ॥

(प्रकाशम् ।) महाराजेन प्रहिताया धारणाया मुखात्तत्रत्यः सर्ववृत्तान्तो विदित एव । सा पुनर्दुर्जनसंसर्गदोषपरिहाराय नदीं स्नातुं गता । तया च मयि संक्रमितस्तत्रत्यवृत्तान्तः ।

**राजा**—(सोत्कण्ठम् ।) कथमिव ।

**देवी**—अहं वि अवहिदह्मि । (क)

**मन्त्री**—(स्वगतम् ।) इयं हि देवी

किमपि नियमिताग्रैः कुन्तलैः स्निग्धनीलैः
परिलसदपराङ्गा धारयन्ती दुकूलम् ।

---

(क) अहमप्यवहितास्मि ।

धवलमुपरि भर्तुश्चामरं धूयमानं
विरमयति करेण व्यक्तमाकर्णनाय ॥ ३८ ॥

(प्रकाशम् ।) श्रोतव्यमिदं धारणावचनम् । यक्ष्महतकः पुरान्निष्क्रामणमेवा-साकमिच्छतीति ।

**राजा**—किमत्र प्रतिविधातव्यम् ।

**देवी**—(सोद्वेगम् ।) दाणिं किं कुम्भो । (क)

**मन्त्री**—देवि, मा भैषीः । प्रतिविधानप्रकारोऽपि धारणया विदितः ।

**राजा**—कथमिव ।

**मन्त्री**—(कर्णे) एवमेवम् ।

**राजा**—कथमिदं धारणया निर्धारितम् ।

**मन्त्री**—रसगन्धकप्रयोगमन्तरेण सपरिवारोऽहमजय इति यक्ष्मराजस्य हृदयं विश्वसनीयया तापसीवेषया धारणया गृहीतम् ।

**देवी**—(साश्वासम् ।) जइ एव्वं ता कहं अह्मेहिं रसगन्धआ संपा-दणिज्जेत्ति । (ख)

**राजा**—

शंभोर्वीर्यं रसो नाम शर्वाण्या नाम गन्धकः ।
ताभ्यामेव प्रसन्नाभ्यां तौ ग्राह्याविति मे मतिः ॥ ३९ ॥

**देवी**—केण उण उवाएण ताणं पसादो संपादणिज्जो । (ग)

**मन्त्री**—उपासनयैव ।

**राजा**—युक्तमुक्तं भवता । श्रूयते हि पुरा मृकण्डुरुमापतिमुपास्य पुत्रं लेभे । तत्पुत्रोऽपि तदुपासनया मृत्युमुखान्मुक्तो दीर्घमायुरलभतेति ।

**मन्त्री**—सम्यगवगतं महाराजेन । यतः खल्वेष

पादाघातत्रुटितयमुनाभ्रान्तबाह्वन्तरोद्य-
द्रक्तस्रोतः समुपशमिताशेषशोकाश्रयाशम् ।

---

(क) इदानीं किं कुर्मः ।

(ख) यद्येवं तत्कथमस्माकं रसगन्धकौ संपादनीयौ इति ।

(ग) केन पुनरुपायेन तयोः प्रसादः संपादनीयः ।

मार्कण्डेयं व्यतनुत यदा सर्वभूतैस्तदादि-
स्तुत्यं मृत्युंजय इति यशः स्फारमीशः प्रपेदे ॥ ४० ॥

**राजा**—पुरा खलु देवदानवैरमृतार्थिभिर्महोरगयोक्त्रपरिवेष्टितविकृष्यमाणमन्दरमन्थानदण्डैर्मथ्यमाने दुग्धसागरे गरलमुद्भटमुत्थितमसहमानेषु भुवनेषु विनष्टप्रायेषु पलायनाभिमुखे चतुर्मुखे विगलितौजसि बिडौजसि भगवानेवैष विषमश्नन् जगदनुचकम्पे । तथाहि ।

मेघाक्रान्तदिगन्तदर्शरजनीमूर्छत्तमोमेचकं
तापद्रावितदेवदानवनरं यः कालकूटं गरम् ।
जग्ध्वा जम्बिव बालकस्त्रिभुवनत्राणं ततानाञ्जसा
तस्य द्राघ्महिमा न वाङ्मनसयोः पन्थानमारोहति ॥ ४१ ॥

**मन्त्री**—किमुच्यते महिमेति । श्रूयतां तावत् । त्रिपुरविजयप्रसक्तावसक्त इव स्वयं तदर्थं कतिचित्साधनानि संपाद्य तान्यपि वितथीकृत्य स भगवान्निजमेव महिमानमभिव्यक्तवान् । तथाहि ।

सूर्याचन्द्रमसौ रथाङ्गयुगलं सूतो विधाता स्वयं
रथ्याश्वा निगमाश्च यस्य रथमारूढेन भूमीमयम् ।
मेरुं धन्वविषक्तवासुकिगुणं कृत्वा शरं चाच्युतं
तिस्रस्तेन पुरः स्मितेन तु परं दग्धाः सुरद्वेषिणाम् ॥ ४२ ॥

**राजा**—एवमपरिमितान्याश्चर्यचरितानि देवस्य ।

**देवी**—किं अच्चरिअं । महेसरस्स जह जह जारिसो उपासनं करेदि तह तह तारिसं सो तं तं फलं पावेदि । (क)

**मन्त्री**—एवमेतत् ।

**राजा**—एवमनिर्धारणीयनानास्वरूपा भगवतीपरमेतत् । परंतु भगवतो दयारूपैवेयम् । अत एव लोकरक्षणार्था प्रवृत्तिरेतस्याः । श्रूयतां तावत् ।

---

(क) किमाश्चर्यम् । महेश्वरस्य यथा यथा यादृश उपासनं करोति तथा तथा तादृशं स तं तं फलं प्राप्नोति ।

भक्तिप्रह्वमहेन्द्रमुख्यमखभुक्प्रारब्धभूरिस्तव-
प्रादुर्भावितनिर्भरप्रमदया कारुण्यभाजा यया ।
निद्राभङ्गमवापितेन हरिणा दीप्तौजसा घातया-
मासाते मधुकैटभावतिबलौ सा केन वा वर्ण्यते ॥ ४३ ॥

**मन्त्री**—राजन्, तथ्यमेवाह भवान् । अस्याः किल भक्तवात्सल्यमनन्यतुल्यं पश्यामि ।

दूरोद्धूतविषाणकोटिघटनाचूर्णीकृताम्भोधरं
प्रेङ्खत्पादचतुष्टयीखुरपुटप्रक्षुण्णपृथ्वीतलम् ।
कल्पान्ताभ्रकठोरकण्ठनिनदत्रस्तत्रिलोकीजनं
विक्रान्तं महिषासुरं युधि पुरा चिच्छेद शूलेन या ॥ ४४ ॥

**देवी**—सा खु परमेसरी बहुविहदेवआसत्तिरूआवअवा पअण्डपरक्कमखण्डिअचण्डमुण्डधुम्मलोअणरत्तबीजप्पहुदिदाणवमण्डला सुणीअदि चण्डिआणामधेएत्ति । (क)

**राजा**—तदपि ज्ञायते । यथा खलु ।

शस्त्रच्छिन्नसुरारिसैन्यपिशितग्रासग्रहप्रीतिम-
त्कङ्कक्रोष्टरि संगरे सुरवधूमुक्तप्रसूने स्थितम् ।
देव्या शुम्भनिशुम्भदानववधप्रक्लिन्नचित्तस्तुव-
द्रुद्रेन्द्राग्निकृतान्तनैर्ऋतजलाधीशानिलश्रीदया ॥ ४५ ॥

**मन्त्री**—राजन्, एवं भक्तवत्सलयोरनादिदंपत्योरुपासनया संपादनीया सिद्धिः । किं च ।

सामर्थ्यसिद्ध्यै रसगन्धकानां संयोजनार्थं सकलौषधीश्च ।
संपादयामोऽथ तदाश्रितस्य सर्वौषधीशस्य विधोः प्रसादात् ॥४६॥

**देवी**—कदमं उण देसं पविसिअ उवासणिज्जा एदे । (ख)

---

(क) सा खलु परमेश्वरी बहुविधदेवताशक्तिरूपावयवा प्रचण्डपराक्रमखण्डितचण्डमुण्डधूम्रलोचनरक्तबीजप्रभृतिदानवमण्डला श्रूयते चण्डिकानामधेयेति ।

(ख) कतमं पुनर्देशं प्रविश्योपासनीयावेतौ ।

**मन्त्री**—पुण्डरीकपुरं प्रविश्य ।

**देवी**—कहं तत्थ पवेसो । (क)

**मन्त्री**—देवि,

शक्यं तत्खलु पुण्डरीकनगरं गन्तुं मनोद्वारत-
स्तत्रास्ते शिवभक्तिरित्यनुपमा कापि प्रमोदास्पदम् ।
दृष्ट्वा तां प्रथमं तथा परिचयस्तस्या विधेयस्त्वया
चत्वारोऽपि भवन्ति ते करतलं प्राप्ताः पुमर्था यथा ॥ ४७ ॥

**राजा**—(सोत्कण्ठम् ।)

तामद्वैतां स्वरूपेण भक्तिं हृदयरञ्जिनीम् ।
स्वीकृत्याहं भविष्यामि प्राप्ताखिलमनोरथः ॥ ४८ ॥

**देवी**—(सासूयमिव स्वगतम् ।) कहं सव्वपुरुसत्थप्पसवित्तिआ सेत्ति सुणिअ सुदघणाघणगज्जिदो मोरो व्विअ उक्कण्ठिदो अज्जउत्तो । होदु । ता मए वि सह गन्तव्वम् । (प्रकाशम् ।) अज्जउत्त, अहं वि आगमिस्सम् । (ख)

**राजा**—(स्वगतम् ।) कथमनयाप्यागन्तव्यम् । (विचिन्त्य ।) भवतु । (प्रकाशम् ।) अयि भद्रे, भक्तिपराधीनं साम्बमुपास्यावामभिलषितमर्थं साधयावः । (मन्त्रिणं प्रति ।)

राज्यं त्वयि समारोप्य योग्ये सर्वाङ्गसंहितम् ।
देव्या सह शिवं साम्बमुपास्तुं यामि तत्पुरम् ॥ ४९ ॥

**मन्त्री**—यथा रोचते देवस्य ।

(इति निष्क्रान्ताः सर्वे ।)

इति प्रथमोऽङ्कः ।

---

(क) कथं तत्र प्रवेशः ।

(ख) कथं सर्वपुरुषार्थप्रसवित्रिका सेति श्रुत्वा श्रुतघनाघनगर्जितो मयूर इवोत्कण्ठित आर्यपुत्रः । भवतु । तन्मयापि सह गन्तव्यम् । आर्यपुत्र, अहमप्यागमिष्यामि ।

द्वितीयोऽङ्कः ।

(ततः प्रविशति चेटः कासः ।)

**कासः**—अहं खलु स्वमन्त्रिहतकोपदिष्टं किमपि रहस्यं शृण्वञ्जीवो नाम प्रतिराजा स्वस्मिन्किमपि चेष्टितुमन्तर्मुखस्तिष्ठतीति चारमुखादवगतवता संभ्रान्तेन महाराजेन यक्ष्मणा किमयं वृत्तान्तः श्रुतस्त्वया न वेति युवराजं पाण्डुं पृष्ट्वागच्छेति प्रेषितोऽस्मि । अतस्त्वरन्वितो युवराजसमीपं गच्छामि । अहो महाराजस्य युवराजे महती प्रीतिः । यतः ।

यद्यज्ज्ञातं स्वयं तत्तद्युवराजोऽपि वेत्ति चेत् ।
तदा राज्याधिकारेऽस्य शक्तिः स्यादिति मन्यते ॥ १ ॥

(पार्श्वतो विलोक्य ।) कथमियं छर्दिः । यैषा

प्रवालमृदुलाधरप्रकरचारुबिम्बप्रभा-
　हृताहृतविलोचनाञ्जनविशेषदृश्यानना ।
मयूरपदकस्फुरत्कठिनतुङ्गपीनस्तनी
　तरङ्गयति कौतुकं तरुणिमश्रिया चेतसि ॥ २ ॥

(स्मरणमभिनीय ।)

श्लथजलधरजालश्लिष्टशीतांशुबिम्बा-
　नभिनवमुकुराविर्भूतमुक्ताकदम्बान् ।
दरतरलितचक्रद्वन्द्वखेलन्मृणाला-
　न्विवशहृदयमस्या विभ्रमानन्वभूवम् ॥ ३ ॥

(सभयम् ।) तदियं मामवलोकयति चेदिदानीं विभ्रममूल्यमनुपयुज्य मां निरुन्धीत ततो गमनविघ्नः स्यात् । (इत्युत्तरीयपटेन मस्तकमवगुण्ठयन्नन्यतो गच्छति ।)

(प्रविश्य)

**छर्दिः**—अए सठ, रत्तिम्मि मुत्ताफलं परिपणीकदुअ पुरुसाइदं मए कारविअ दाणिं मं पेक्खिअ ओगुण्ठिदसीसो बद्धकटी कुदो पलाएसि । (क)
(इति कासं हस्ते गृह्णाति ।)

---

(क) अये शठ, रतौ मुक्ताफलं परिपणीकृत्य पुरुषायितं मया कारयित्वा इदानीं मां प्रेक्ष्यावगुण्ठितशीर्षो बद्धकटिः कुतः पलायसे ।

**कासः**—मुञ्च मुञ्च । (इति हस्तं धुनोति ।)

**छर्दिः**—(दृढं हस्तमवलम्ब्य ।) हदास, मह पडिण्णादं दाऊण गच्छेहि । (क)

**कासः**—हञ्जे, यावदागत्य दास्यामि ।

**छर्दिः**—कुदो आगमिअ । (ख)

**कासः**—धिङ्मूर्खे, नायमवसरः । पश्चात्कथयिष्यामि ।

**छर्दिः**—जइ दाणिं ण कहेसि अहं वि ण मुञ्चेमि । (ग)

**कासः**—तर्हि गृहाण मुक्ताफलस्य प्रतिनिधिमिमामूर्मिकाम् । (इत्यङ्गुलीयकं विमुच्य प्रयच्छति ।)

**छर्दिः**—इदं होदु । कुदो आगमिअ त्ति कहेहि । (घ)

**कासः**—किं मम वधमिच्छसि । यतः ।

कार्यं राज्ञां मन्त्रिभिर्मन्त्रितं यत्सर्वेषां तत्सर्वथा गोपनीयम् ।
येऽभिव्यञ्जन्त्येतदुद्यत्प्रमादाः शीर्षच्छेद्यांस्तन्वते तान्नरेन्द्राः ॥ ४ ॥

**छर्दिः**—जह तह होदु । एदं दाव कहेहि । (ङ)

**कासः**—(स्वगतम् ।) अहो दास्याः स्नेहपरिपाकः । यः परमनर्थाय संपद्यते । तथा हि ।

स्त्रियः स्वार्थपराः प्रायः परदुःखं न जानते ।
अप्रष्टव्यं यदप्राक्षीद्गृहिणी कैकयाधिपम् ॥ ५ ॥

(प्रकाशम् ।) राजकौलीनमेतदिति न कथयामि । मुञ्च । (इति त्वरयति ।)

**छर्दिः**—मा भयाहि तुमं । जं मञ्जूसा क्खु अहं राजकज्जाणं । अदो ण पआसेमि । (च)

---

(क) हताश, मम प्रतिज्ञातं दत्त्वा गच्छ ।

(ख) कुत आगत्य ।

(ग) यदीदानीं न कथयसि अहमपि न मुञ्चामि ।

(घ) इदं भवतु । कुत आगत्येति कथय ।

(ङ) यथा तथा भवतु । इदं तावत्कथय ।

(च) मा बिभेहि त्वम् । यन्मञ्जूषा खल्वहं राजकार्याणाम् । अतो न प्रकाशयामि ।

**कासः**—(विहस्य।) छर्दिका किल त्वं प्रकृत्या। तत्कुतो न प्रकाशयसि।

**छर्दिः**—(विहस्य।) भसणसीलस्स कुक्कुरस्स विअ तुह जाआ अहम्। होदु। एदं कहेहि पत्थुदम्। (क)

**कासः**—(स्वगतम्।) इयं राजकार्यकथननिर्बन्धान्न मुञ्चति माम्। का गतिः। (प्रकाशम्।) हञ्जे, कथयामि। शृणु तावत्।

**छर्दिः**—ओहिदम्हि। (ख)

**कासः**—मया कटकप्रवेशः कर्तव्यो युवराजस्य पाण्डोर्दर्शनाय।

**छर्दिः**—ता किं विचारीअदि। अम्हकेरभडक्कन्ते सुगमो सत्तुणो पुरे मग्गो तुज्झ। सान्दणक्खत्ते णहे इन्दुणो व्विअ। (ग)

**कासः**—त्वं पुरोपरोधमात्रं जानासि। तत एवं ब्रवीमि।

**छर्दिः**—किं अण्णं वि तत्थ कडए पउत्तं जं मए ण जाणीअदि। (घ)

**कासः**—श्रूयताम्।

अस्मत्सैन्यैर्निरोधं कृतमगणयता स्वे पुरे सूपदिष्टं
जीवोऽमात्येन योगं स किल निशमयन्प्रापदन्तर्मुखत्वम्।
इत्यस्माकं निशम्य प्रभुरतिविशदं चारवक्रात्कुमारं
गत्वा पृच्छ त्वयेदं विदितमथ न वेत्याकुलः प्राहिणोन्माम्॥ ६॥

**छर्दिः**—जुवराएण पण्डुणा विदिदं ण वेत्ति णत्थि संदेहो। जेण एदं एव्व सुणिअ सअलसामन्तचक्केण सह सिद्धसेणिओ रहस्सागारे णिद्दाभङ्गकसाइदलोअणो चिन्तापज्जाउलो जुवराओ चिट्ठदि। तुए वि तत्थ

---

(क) भषणशीलस्य कुक्कुरस्येव तव जायाहम्। भवतु। एतत्कथय प्रस्तुतम्।

(ख) अवहितास्मि।

(ग) तत्किं विचार्यते। अस्मदीयभटाक्रान्ते सुगमः शत्रोः पुरे मार्गस्तव। सान्द्रनक्षत्रे नभसि इन्दोरिव।

(घ) किमन्यदपि तत्र कटके प्रवृत्तं यन्मया न ज्ञायते।

गच्छीअदु । णाह, पञ्च वि तुह वअस्सा सासा सेवातप्परा तह ज्जेव्व वट्टन्दि । (क)

**कासः**—कथमिदं ज्ञातं त्वया ।

**छर्दिः**—तुह पुव्वगिहिणीए कण्ठकण्डूए परिदेवणमुहेण देइए विसूचीए संणिहाणे सव्वं राअकज्जं णिवेदिदम् । तहिं संणिहिदथम्भन्तरिदाए मए सुदम् । (ख)

**कासः**—कुतः कीदृशं च परिदेवनं तस्याः ।

**छर्दिः**—जं तुए मं कामअन्तेण पुव्वगिहिणीए ताए पणअभङ्गो किदो तेण कादव्वं परिदेवणं क्खु ताए । तह खु कण्ठकण्डू देवीए कहिदवदी जं किल भट्टिणि, एदं मह दुज्जादं पण्डुगिहिणीए णिवेदिदुं गदम्हि । सा उण कालन्तरे एदं होदुत्ति जह तह मह अस्सुप्पमज्जणं किदवदी । तं जह—(ग) (स्मरणमभिनीय सभयम्, संस्कृतमाश्रित्य ।)

अस्यात्याहितकर्मणो व्यपगमे कासेन भर्त्रा समं
　　संधास्येत्यवतीं (?) तु तत्प्रियसखान्संप्रेपयन्ती रहः ।

---

(क) युवराजेन पाण्डुना विदितं न वेति नास्ति संदेहः । येनैतदेव श्रुत्वा सकलसामन्तचक्रेण सह सिद्धसैनिको रहस्यागारे निद्राभङ्गकषायितलोचनश्चिन्तापर्याकुलो युवराजस्तिष्ठति । त्वयापि तत्र गम्यताम् । नाथ, पञ्चापि तव वयस्याः श्वासाः सेवातत्परास्तत्रैव वर्तन्ते ।

(ख) तव पूर्वगृहिण्याः कण्ठकण्डूल्याः परिदेवनमुखेन देव्या विषूचिकायाः संनिधाने सर्वं राजकार्यं निवेदितम् । तत्र संनिहितस्तम्भान्तरितया मया श्रुतम् ।

(ग) यत्त्वया मां कामयमानेन पूर्वगृहिण्यास्तस्याः प्रणयभङ्गः कृतस्तेन कर्तव्यं परिदेवनं खलु तया । तथा खलु कण्ठकण्डूर्देव्यै कथितवती यत्किल भट्टिनि, एतन्मम दुर्जातं पाण्डुगृहिण्यै निवेदितुं गतास्मि । सा पुनः कालान्तरे एतद्भवत्विति यथा तथा ममाश्रुप्रमार्जनं कृतवती । तद्यथा ।

इत्थं श्वासविलासिनीरुपगताः पञ्चापि हिक्काः सुखी-
　　कृत्य द्रागुपसान्त्व्य पाण्डुदयिता मां प्राहिणोत्कामला ॥ ७ ॥

तत्थ वि मन्दभाइणी अहं हदमणोरहा जादेत्ति । (क)

**कासः**—(विचिन्त्य ।) मा विभेहि । ज्ञातस्तव भावः । त्वयि प्रणयस्य भङ्गे कण्ठकण्डूा यत्नः क्रियत इति गच्छामि तत्रैव तानपि वशीकुर्याम् । तेऽपि मद्धुच्यैव पुष्टाः कथं मह्यं द्रुह्येयुः ।

**छर्दिः**—गच्छेहि कज्जसिद्धीए अहं वि देईए सकासं गमिस्सम् ।

(इति निष्क्रान्तौ ।)

प्रवेशकः ।

---

(ततः प्रविशति रहस्यागारस्थः सुप्तोत्थितः सचिन्तः पाण्डुः ।)

**पाण्डुः**—कः कोऽत्र भोः ।

(प्रविश्य)

**दौवारिकः**—विजयतां देवः ।

(पाण्डुर्निद्रालसो जृम्भते ।)

**दौवारिकः**—(आत्मगतम् ।) एष किल

आरक्तसंकुचदपाङ्गमुदग्रदंष्ट्रं
　　व्यादाय वक्त्रमुरुपाटलदीर्घजिह्वम् ।
उच्चैर्भुजौ वलयितौ ग्रथिताङ्गुलीकौ
　　कुर्वन्सशब्दमिह जृम्भणमातनोति ॥ ८ ॥

अपि च ।

जृम्भावसरे दारुणमाननबिम्बं सजिह्वमेतस्य ।
निपतितदीर्घकपाटं पातालद्वारमिव हि पश्यामि ॥ ९ ॥

(प्रकाशम् ।) देवस्य कीदृशो मयि नियोगः ।

**पाण्डुः**—गलगण्ड, सेनापतीनाहूय मम निकटं प्रवेशय ।

(गलगण्डो निष्क्रम्य त्रयोदशप्रकारान्संनिपातान्प्रवेशयति । सर्वे प्रविश्य प्राञ्जलयस्तिष्ठन्ति ।)

---

(क) तत्रापि मन्दभागिन्यहं हतमनोरथा जाता ।

तत्र एकः—सविचार इव दृश्यते युवराजः । तत्क्षणं जोषमास्यताम् । यदेषः

खट्वामङ्गविवर्तनेन लुलितक्षौमास्तरामावस-
न्वीटीं भृत्यकरार्पितामगमयन्वक्त्रं गृहीतामपि ।
उत्तानस्तिमिते दृशावपि चिरादुच्चैर्वितानेऽर्पय-
न्नत्यर्थं श्वसितोद्गमैर्विवृणुते चिन्तां निजान्तर्गताम् ॥ १० ॥

किं च पूर्वमपि ।

न स्नाति वारिषु चिरं त्वरितं दुकूलं
वस्ते विलम्बसहनो न कदापि भुङ्क्ते ।
भूषागणं वहति किं च विपर्ययेण
राजा युवैष हृदि कार्यविचारकृष्टः ॥ ११ ॥

**गलगण्डः**—(दण्डेन भूमिमाघट्टयन् ।) देव, सेनापतयः प्राप्ताः ।

**पाण्डुः**—(विलोक्य ।) भो भोः संनिपाताः, प्रतिराजस्य जीवस्य सकाशादस्मदीयराजस्य यक्ष्मणोऽधुना पराभवः संभावयिष्यत इति श्रूयते । स यथा न भवेत्तथा सैन्यैः सह संनद्धव्यं भवद्भिः ।

**संनिपाताः**—

अस्मादृशेषु बलशालिषु सैनिकेषु
राजन्नलं प्रभुपराभवचिन्तया ते ।
स्यात्किं वसन्तदिवसेषु विसृत्वरेषु
पद्माकरस्य तुहिनाभिभवप्रसक्तिः ॥ १२ ॥

कति कत्यस्मदीयाः सैनिकाः । तत्रैकैकस्य पराक्रमवतो युद्धाय न पर्याप्तमखिलं शत्रुसैन्यम् । किं पुनः सर्वेषाम् । श्रूयन्तां तावदस्मदीयाः ।

अष्टौ कुष्ठा दश च बलिनः प्लीहगुल्मास्तथाष्टौ
षट् चोन्मादा वसति दशकं पञ्चकं च व्रणानाम् ।
अर्शोभेदाः षडतिधृतयो[1] विंशतिश्च प्रमेहाः
किं चाश्मर्यो दश दश पुनः सन्ति सप्तातिसाराः ॥ १३ ॥

---

1. अतिधृतय एकोनविंशतिः.

(गलगण्डं प्रति ।) स्वामिनः कुमारस्य संनिधिं प्रापय सर्वानपि सैनिकान् ।

**गलगण्डः**—तथा । (इति निष्क्रम्य सर्वैः सह प्रविशति ।)

(सर्वे पाण्डुं प्रणम्य प्राञ्जलयस्तिष्ठन्ति ।)

**पाण्डुः**—एवं प्रवृत्ते राजकार्ये किं भवन्तो मन्यन्ते ।

तत्रादौ **कुष्ठाः**—

कार्या न चेतसि कुमार कदापि चिन्ता
　स्थास्यन्ति के वद पुरः प्रतिगर्जतां नः ।
शत्रोः प्रविश्य पुरमीक्षितुमप्ययोग्यं
　कुर्मो वयं तनुभृतामतिकुत्सनीयम् ॥ १४ ॥

**उन्मादाः**—सर्वे सैनिकास्तिष्ठन्तु । ज्ञायतामस्माकमभिप्रायः ।

कोपाध्मातककुत्स्थपुंगवकरव्याकृष्टगर्जद्धनु-
　र्ज्यानिर्गत्वरमार्गणानलशिखादीने नदीने[1] भृशम् ।
पाठीनान्कमठैः समं विलुठतः सर्वेऽनुकुर्वन्तु ते
　शार्दूला इव शम्बरान्[2]सरभसं यानद्य गृह्णीमहे ॥ १५ ॥

**व्रणाः**—स्वामिन्कुमार, प्रथमं पुरमेव बाधितव्यम् । तद्बाधया शिथिलीभविष्यत्यन्तर्मुखतापि जीवस्य । अत इदानीम्

प्रचण्डमदपाण्डवप्रहितकाण्डवर्गत्रुट-
　त्तरक्षुकरिकेसरिप्रियकशल्यशार्दूलकम् ।
अरण्यमिव खाण्डवं वनमरण्यतीतं द्रुम-
　व्रजं दहनहेतयः पुरमरेर्दहामो वयम् ॥ १६ ॥

**सर्वेऽपि अर्शोभेदाः**—स्वामिन्, यदुक्तं व्रणैस्तदस्मभ्यमपि रोचते । तेन वयं च निरुद्धमूलद्वाराः ।

गृह्णीयाम व्यथयितुमरेस्तत्पुरं येन सर्वे
　व्याघ्राकृष्टा इव हि पशवः प्राणिनोऽस्मद्गृहीताः ।

---

१. समुद्रे. २. मृगभेदान्.

स्थातुं गन्तुं शयितुमशितुं यातुमाभाषितुं वा
नापेक्षन्ते मनसि दधतो दुःखमात्रानुभूतिम् ॥ १७ ॥

**प्रमेहाः**—स्वामिन्, अस्मासु विधेयेषु पुरोवर्तिषु किमर्थमन्येषां प्रस्तुतकार्यं प्रति प्रेषणम् । तत्क्रियतामस्मदुक्तिश्रवणादरः ।

**पाण्डुः**—वक्तव्यानि वो विवक्षितानि ।

**प्रमेहाः**—

संप्रस्रावात्परिणतिमसृङ्मांसमेदोस्थिमज्ज्ञां
व्यातन्वन्तो वयमनुदिनं तत्पुरं शोषयामः ।
क्वान्तर्वक्रो भवतु विधुरीभूय जीवः क्व मन्त्री
तत्साहाय्यं कलयतु भवांस्तद्विषादं जहातु ॥ १८ ॥

**अश्मर्यः**—सर्वे सैनिकाः स्वस्वबलानुरूपं गर्जन्ति । स्वामिन्, न वयं गर्जनपराः । किं तु भूतार्थवादिन्यः ।

वर्धिष्यते न यावत्स हितः सर्वैर्भटैर्निजैर्वैरी ।
तावन्निग्रहणीयः श्रेयस्कामेन पुरुषेण ॥ १९ ॥

तथा हि ।

वेलालङ्घिप्रसर्पत्तटविटपिसमुत्पाटनाटोपमूर्छ-
त्कल्लोलाक्रान्तपृथ्वीवलयजनलयोल्लेखसंत्रस्तलेखः ।
अम्भोधिर्मा जनीति प्रतिकलमुदयद्वारिभूरीभविष्य-
च्चूषत्यह्नाय वह्निर्विघटितवडवावक्त्ररन्ध्रादुदञ्चन् ॥ २० ॥

**पाण्डुः**—युक्तमुक्तं भवद्भिः ।

**अतीसाराः**—स्वामिनः कृपयैव भुजप्रतापं दर्शयन्तो वयं विजेष्यामह इति किमत्र चित्रम् । अतः किमपि ब्रूमः । विदांकरोतु स्वामी ।

नेत्रे मज्जयितुं मुखं ग्लपयितुं जत्रुद्वयं व्यञ्जितुं
पार्श्वस्थानां गणनीयतां गमयितुं सत्त्वं भृशं लुण्ठितुम् ।
ससत्त्वेऽपि निजे स्थिते घटयितुं पञ्चत्वमेवाङ्गिनां
शक्तान्नः प्रहिणोषि यत्र तरसा तत्साधयामो वयम् ॥ २१ ॥

**पाण्डुः**—(सबहुमानम् ।)

अतिसारा इति स्पष्टं विष्टपत्रयविश्रुतम् ।
युष्मन्नामैव युष्माकं ब्रूतेऽतिशयितं बलम् ॥ २२ ॥

**गुल्मप्लीहानः**—श्रूयतां स्वामिना ।

अस्मासु प्रविशत्सु शात्रवपुरं पीडाकरेषु द्रुतं
कार्याकार्यविवेक एव न भवेदल्पोऽपि तस्मिन्क्षणे ।
आस्तामेतदिदं वचो निशमय क्षन्तुं व्यथामक्षमो
विज्ञानेन च मन्त्रिणा सह पुराज्जीवः पलायिष्यते ॥ २३ ॥

**पाण्डुः**—अस्मत्सैनिकोपरुद्धे पुरे पिपीलिकापि न प्रसरीसरीति, कुतः पुनरियं तस्य पलायनशङ्का । परंतु सर्वैरिदमाकर्णनीयम् । नीतिशास्त्रानुसारिणि मन्त्रिणि तदनुरक्ते विक्रमाभिमानरक्षणैकपरे द्विजदेवपोषणैकतानमानसे राजनि तस्मिन्निपुणं किमपि प्रतिविधानमनुसंधेयम् । अतः प्रागेवातर्क्यं किंचिदत्याहितहेतुस्तदीयान्तर्मुखतेति ।

**कुष्ठेष्वेकः**—(स्वगतम् ।) प्रागस्माभिः प्रेषितः शत्रुशिबिरं प्रविष्टः कर्णमूलोऽद्यापि नागतः किं तैर्गृहीतः स्यात् ।

(ततः प्रविशत्यध्वश्रान्तः कर्णमूलः ।)

**कर्णमूलः**—(दृष्ट्वा ।) एतत्खलु

तत्तत्कार्यनिवेदनार्थमिलितान्योन्यानभिज्ञस्पश-[1]
प्राप्तव्यावसरप्रतीक्षणकृतद्वाःपार्श्ववेद्यासिकम् ।
अन्तर्मन्दिरनिःसरज्जनवचोविज्ञाप्यमानप्रभु-
व्यापारश्रवणेप्सुबाह्यमनुजं पश्यामि पाण्डोर्गृहम् ॥ २४ ॥

(द्वाःस्थं प्रति ।) गलगण्ड, कथय कर्णमूलं संप्राप्तं माम् ।

(गलगण्डः प्रविश्य निष्क्रम्य कर्णमूलेन सहान्तः प्रविशति ।)

**कर्णमूलः**—(आत्मानं दृष्ट्वा स्वगतम् ।)

श्रमाम्भःसंसिक्तालिकललितपुण्ड्राङ्कवदनो
द्रवच्चर्मोपानद्दृढपिहितपार्श्वाञ्चलपटः ।

---

१. स्पशश्चरः.

समुद्यन्निःश्वासप्रसरपरिशुष्काधरपुटो
विलङ्घ्याहं दीर्घां सरणिमगमं पाण्डुसविधम् ॥ २५ ॥

(पाण्डुं दृष्ट्वा।) कुमार, विजयी भव।

पाण्डुः—भद्र, किम्। किंचिदुपलब्धं तत्र भवता प्रविष्टेन।

कर्णमूलः—किं सफलो न भविष्यति कुमारनियोगो विशेषोपलम्भेन।

पाण्डुः—कथय।

कर्णमूलः—श्रूयताम्। उपरुद्धमस्मत्सैनिकैः पुरम्।

पाण्डुः—किमेतत्परिज्ञानाय प्रेषितोऽसि। विदितं खल्विदं सर्वेषाम्।

कर्णमूलः—(सर्वतो विलोक्य।) एतदेव प्रस्तोतुमयमवसरः।

पाण्डुः—विस्रब्धं कथय। किं न जानासि अस्मच्छरीराण्येव कीलैते।

कर्णमूलः—देव, भवदाज्ञया प्रविष्टोऽस्मि पुण्डरीकपुरम्। तत्राद्राक्षं च सन्निरीक्षणैकपरे ईक्षणे। निगमार्थश्रवणप्रसिते श्रवसी। शिवनिर्माल्यगन्धसंतर्पितं घ्राणम्। विघसामृतास्वादनैकतानां रसनाम्। त्रेताभस्मावगुण्ठितां त्वचम्। धर्मार्थसंग्रहीतारौ करौ। तदर्थं कृतसंचरणौ चरणौ। चिरंतनसरस्वतीचिकुरपरिमलामोदसदनं वदनं च। तद्दर्शनेन क्वचिदपि स्थलमलभमानः स्थातुमपि नाशक्नुवम्, किं पुनर्देवस्याज्ञां परिपालयितुम्।

कुष्ठः—(विहस्य।) अनासारवर्षणमजागलस्तनसमवस्थं तव गमनागमनं च।

संनिपातः—कुष्ठ, सावशेषमिव तव वचनम्।

कुष्ठः—स्वामिपोषितस्वकलेवरनिरर्थकता च।

कर्णमूलः—जाग्रति मच्छिरसि महाराजपादपङ्कजरेणौ कथमेतद्भविष्यति।

पाण्डुः—ततस्ततः।

कर्णमूलः—ततश्च।

तस्मिन्पुरे स्थानमहं विवेक्तुं चरन्समन्तात्क्वचिदप्यपश्यम्।
त्रिष्वाशयेषु स्थितिमत्स्वशङ्कं संचारितं केन च पङ्गुयुग्मम् ॥ २६ ॥

**पाण्डुः**—(स्वगतम् ।) वायुसंचार्यमाणं कफपित्तयोर्युगं तद्भवेत् । (प्रकाशम् ।) ततस्ततः ।

**कर्णमूलः**—तस्मादन्तःपुरचारिणः पङ्गुयुग्मात्तत्संचारयतः पुरुषाच्च प्रवृत्तिरुपलब्धुं शक्येति तच्च तं चोपासर्पमहम् । स च तच्च मयि दृष्टमात्रे

भद्र गच्छ परिसर्प मा कुतो देशतस्त्वमसि नन्विहागतः ।
कस्य वा वद परिग्रहो भवानित्यपृच्छदथ सोऽपि तच्च माम् ॥ २७ ॥

भो भो भद्रमुखाः परिग्रहतया कस्यापि नाहं स्थितो
रात्रिं नेतुमिहागतोऽस्मि नियतं सायाह्नि भिक्षामटन् ।
स्थानं मे यदि शक्यतेऽपगतये प्रान्त(?)स्तदादीयता-
मित्युक्ते तु मया तदन्तरुदभूदन्योन्यमालोचना ॥ २८ ॥

अनन्तरं च कार्यान्तरव्यापृते च राजनि नूतनपुरुषपरिमार्गणपरे च नागरिके, भिक्षो, रात्रौ नावसरस्त्वादृशामत्र शयितुमित्युक्तवत्सु तेषु, क्व कार्ये राजा व्याप्रियते कुत एवं भिक्षुकाणामप्युपरोध इति पृष्टवानस्मि ।

**पाण्डुः**—ततस्ततः ।

**कर्णमूलः**—तेऽपि मां भद्रेत्यामन्त्र्य समकथयन् ।

पुण्डरीकपुरे मन्त्रिप्रेरितः परमेश्वरम् ।
आराद्धुं गतवान्राजा मनोद्वारेण तिष्ठति ॥ २९ ॥

किं च ।

शत्रुनिरुद्धे च पुरे परिसर्पाशङ्कया नगरगुप्त्यै ।
नागरिकशिक्षणमिति प्रावोचन्मां तदानीं ते ॥ ३० ॥

अत्रान्तरे विजृम्भमाणं यामिककलकलमश्रृणवम् । श्रुत्वा च कथंचिल्लब्धावकाशः स्वामिकार्यगौरवादागतोऽस्मि ।

**पाण्डुः**—(आकाशे लक्ष्यं बद्ध्वा सोपहासम् ।) रे रे मन्त्रिहतक, अस्मज्जयार्थं सहजवैरिणं रसं साधयितुं किल तव प्रयत्नः । तर्हि पश्य ।

साधितोऽपि स किं कुर्याद्रसः पथ्यक्रमं विना ।
जिह्वाचापलमुद्भाव्य स एव ध्वंसयिष्यते ॥ ३१ ॥

किं च । भक्त्या त घटयित्वा चतुरोऽपि पुमर्थांस्तस्य साधयितुं किलायमपरो यत्नस्तत्रापि प्रतिविधास्यते ।

**कर्णमूलः**—(सप्रश्रयम् ।) देव, युगविगमसमयसमसमुदितमार्तण्डमण्डलस्येवाखण्डितप्रतापस्य तवापि कियान्स रसः शोषण इव तस्य (?) तव किं महिमातिशयः । तथाहि ।

दृष्ट्वा वैरिचमूसमूहमवशादुद्वेलमुज्जृम्भित-
क्रोधात्संगररङ्गसीमनि भवत्यद्धा निबद्धादरे ।
जीवः कः क्व च तस्य मन्त्रिहतको विज्ञानशर्मा पुन-
र्दृश्येरन्क तृणाग्नितुल्यमहसस्तस्याल्पसारा रसाः ॥ ३२ ॥

**पाण्डुः**—आः, अस्त्वेतत् । भद्र, कथय कीदृशी प्रकृतीनां प्रवृत्तिः ।

के स्वामिनि दृढभक्ता के प्रबलाः के च दुर्बला नगरे ।
अरिमित्रोदासीनाः के पुनरङ्ग त्वया दृष्टाः ॥ ३३ ॥

**कर्णमूलः**—कथयामि देव, श्रूयताम् ।

तत्र प्रकृतयस्तिस्रो वातपित्तकफात्मकाः ।
तत्र यः प्रबलो वातः स तु स्नेहैर्वशीकृतः ॥ ३४ ॥

किं च ।

तदनुगतं यत्पित्तं मधुरमयैस्तद्विजेयमुपचारैः ।
पङ्गुर्यस्तत्र कफस्तीक्ष्णोपायैर्वशं स चानीतः ॥ ३५ ॥

**पाण्डुः**—अथ कीदृशो मनसो वृत्तान्तः ।

**कर्णमूलः**—

उद्दामबुद्धिविभवेन मनस्तु तत्र
विज्ञानशर्मसचिवेन वशीकृतं सत् ।
कार्ये महत्यधिकृतं हितकारिराज्ञः
सर्वात्मनाप्यनुसरत्यधुना तमेव ॥ ३६ ॥

**पाण्डुः**—अथ विज्ञानशर्मस्पार्धिनो ज्ञानशर्ममन्त्रिणः कीदृशः प्रकारः ।

कर्णमूलः—

विज्ञानमन्त्रिमन्त्रैर्विविधैरसकृद्विधूतनिजशक्तिः ।
स ज्ञानशर्ममन्त्री तिष्ठति केवलमसौ स्वरूपेण ॥ ३७ ॥

एवंविधविविधविचित्रचरित्रविस्मापितसकललोकस्य स्वामिहितकरणैकतानस्य मन्त्रिणः पारे खलु वाङ्मनसोश्चरिताद्भुतानि । तथाहि ।

तत्तद्दुर्घटराजकार्यघटनाव्यापारपारीणया
शक्त्या दुष्प्रसहस्य तस्य वचनैर्नानोपपत्त्यन्वितैः ।
निर्द्वन्द्वोऽपि स निर्गुणोऽपि च निराकारोऽपि निर्लेपनो-
ऽप्याः कष्टं प्रतिपक्षतामुपगतो जीवो विचेष्टेत नः ॥ ३८ ॥

तस्मादेवंस्थिते प्रकृतिमण्डले दुर्भेद्ये च शत्रुपक्षे महदत्याहितमापतिष्यति । (इति भयं नाटयति ।)

पाण्डुः—(विचिन्त्य ।) मा बिभिहि । तत्रापि काचिदस्त्यबाधिता नीतिः ।

कर्णमूलः—कीदृशी ।

पाण्डुः—श्रूयताम् ।

यच्चञ्चलं प्रकृत्या विषयेषु मनो निसर्गदुर्दान्तम् ।
तत्कामादिभिरेतैर्भेदयितुं शक्यते शनकैः ॥ ३९ ॥

तस्मिन्सर्वविषयाधिष्ठाने मनसि स्वाधीने सुकर एव कार्यशेषः । किंच याः किलाद्यास्तत्र तिस्रः प्रकृतयस्तासु यस्तीक्ष्णोपायैः संयमितवृद्धिः श्लेष्मा तस्योपचयं केनाप्युपायेन विधाय तेनैव तावपि क्षोभयितुं शक्येते ।

विज्ञानोऽयं यद्यपि स्वामिभक्तस्तत्राप्यस्यासंनिधाने विविक्तें ।
भेदो राज्ञस्तस्य तैस्तैरुपायैः शक्यः कर्तुं ज्ञानशर्मोपजापैः ॥ ४० ॥

एवं राजमन्त्रिणोर्विरोधेन विश्लिष्टे प्रकृतिमण्डलेऽचिरादेव हस्तगता महाराजस्य यक्ष्मणो जयलक्ष्मीः ।

कर्णमूलः—(सहर्षम् ।) साधु चिन्तिता मन्त्रिवर्येण राजतन्त्रनीतिः ।

पाण्डुः—भद्र, नाद्यापि महाराजनिकटगतोऽत्रायाति कासः ।

(प्रविश्य)

गलगण्डः—देव, महाराजपादमूलात्कासः प्राप्तः ।

पाण्डुः—त्वरितं प्रवेशय ।

(ततः प्रविशति गलगण्डेनानुगम्यमानः कासः ।)

(कासो जानुभ्यां प्रणम्य किंचिदुपसर्पति ।)

**पाण्डुः**—भद्र, कीदृशो मयि राजनियोगः ।

**कासः**—(करपिहितमुखः । कर्णे ।) एवमेवम् ।

**पाण्डुः**—भद्र, तदर्थमेवेयं बद्धपरिकरता । तिष्ठ त्वमत्रैव । राजानमिममुदन्तमन्यमुखेन प्रापयिष्ये ।

(नेपथ्ये यामप्रहारध्वनिः ।)

**पाण्डुः**—(श्रुत्वा सैनिकान्प्रति ।) तदहमिदानीं कार्यशेषं निर्वर्त्य प्रकृतकार्यार्थे संनह्यामि । भवन्तोऽपि तावत्

बिभ्राणास्तान्युपमितमहाभोगिभिर्बाहुदण्डै-
यैषां येषां दधति निजतां यानि यान्यायुधानि ।
स्वस्वस्थानेष्ववहितमनोवृत्तयस्त्यक्तशङ्काः
सर्वे तिष्ठन्त्वरिपुरमभिव्याप्य सैन्याः प्रवीराः ॥ ४१ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति द्वितीयोऽङ्कः ।

---

## तृतीयोऽङ्कः ।

(ततः प्रविशति पश्चाद्बद्धं पुरुषं किंकरेण विकर्षन् विचारो नागरिकः ।)

**नागरिकः**—अङ्ग गद, कस्त्वमसि ।

**पुरुषः**—(स्वगतम् ।) किमहं ज्ञातोऽस्म्यनेन गद इति ।

**नागरिकः**—किं विचारयसि । यदि सत्यं गदोऽसि ततो मोक्ष्यसे ।

**पुरुषः**—(स्वगतम् ।) नाहमनेन ज्ञातः ।

बिभ्राणो मुखबाहुवक्षसि कृतं पुण्ड्रत्रयं भस्मना
हस्तोपात्तविशुद्धताम्रकलशो रुद्राक्षमाली गले ।
धृत्वा वैदिकवेषमाविशमिह स्वस्वामिना प्रेरितो
हृद्रोगोऽहमरेरवेक्षितुमना जीवस्य राज्ञः स्थितिम् ॥ १ ॥

अनन्तरमनेन नागरिकेण संयमितः । भवतु । एवं ब्रवीमि । (प्रकाशम् ।) आर्य, मुञ्च माम् । विप्रश्निकतामुपजीव्येदं जठरहतकं पुष्णामि ।

**नागरिकः**—अस्त्वेतत् । कुतो रात्रिसंचारः ।

**पुरुषः**—यस्यकस्यचिद्यत्किंचिद्भाविफलमुक्त्वा पारितोषिकं गृह्णामीति ।

**नागरिकः**—किं दिवसस्ते तत्कर्मणो न पर्याप्तः ।

**पुरुषः**—बाढम् । श्रूयताम् ।

यामो यात्यविलम्बितं दिनमुखे स्नानादिभिः कर्मभिः
पश्चाद्भिक्षितुमारभे प्रतिदिनं धान्यानि वा तण्डुलान् ।
तैरन्नाद्युपपाद्य धूर्जटिमुखान्देवान्निवेद्यातिथी-
न्संतर्प्याश्नत एव याति दिवसः शेषः कुतः संचरः ॥ २ ॥

**किंकरः**—अये, युक्तमिदम् । इह तु यामादूर्ध्वं रुध्यते नगरसंचारः ।

**पुरुषः**—यदीदानीं यामादूर्ध्वं कालस्तर्हि न संचरामि स्वप्स्यामि ।

**किंकरः**—कुत्र निद्रास्थानम् ।

**पुरुषः**—धर्मशालायाम् ।

**नागरिकः**—किमिदं राजमन्दिरं तव धर्मशाला । अत्र हि

नोंकारः प्लुवते न गीतिरटति स्वाहेति न श्रूयते
न न्यायव्यवहारतारवचसः संघीभवन्ति द्विजाः ।
नात्युच्चैः पृषदाज्यहोमसुरभिर्धूम्या जरीजृम्भते
भक्ताः पञ्चजनाः स्वपन्ति परितो न स्त्री कुमारो न च ॥ ३ ॥

**पुरुषः**—अस्त्विदं राजमन्दिरं तथापि सुप्रवेशमस्मादृशामिति श्रु-तमस्ति ।

**नागरिकः**—सुप्रवेशमिति कस्मात्त्वया श्रुतम् ।

**पुरुषः**—आर्यमिश्रेभ्य एव ।

**नागरिकः**—हन्त, किमस्माभिरिदं कथितम् ।

**पुरुषः**—नहि नहि । अन्यजनैः ।

**नागरिकः**—कैस्ते कथितम् । यदिदं परिचितजनस्यापि राजशासन-मन्तरेण दुष्प्रवेशम्, किं पुनरपरिचितस्य ते ।

**किंकरः**—विसंस्थुलेवास्य वचनव्यक्तिः गृहीत इव चोरस्तरलतारक-विलोचनः पश्यन्नयं वक्तुं न शक्तः प्रत्युत्तरं ततश्चर इव लक्ष्यते ।

**नागरिकः**—तर्हि शिक्षयतु भवानिमम् ।

**किंकरः**—अरे, कथय तथ्यम् । मृषावादिनस्तव वैदिकता राजशासनस्य न प्रतिरोधिनी । (इति कशामुद्यच्छति ।)

**पुरुषः**—मा ताडय । तथ्यं वदामि ।

**नागरिकः**—यदि तथ्यं वदसि तदा विज्ञानमन्त्रिणं दर्शयित्वा संभावयिष्यामि ।

**किंकरः**—प्रतीहार्या धारणया सह प्रासादमधिरूढो मन्त्री । तत्संनिधौ त्वमपि नेष्यसे ।

**पुरुषः**—(स्वगतम् ।) तथा चेन्मम दुर्लभमेव जीवितम् । (प्रकाशं भीतिमभिनीय ।) अभयं मे दीयतां यदि तथ्यमेव श्रोतव्यम् । (इति प्रणमति ।)

**नागरिकः**—दत्तभयोऽसि । कथयात्मानम् ।

**पुरुषः**—(उत्थाय प्राञ्जलिः ।) हृद्रोगोऽस्मि । विसृज मां दयया ।

**नागरिकः**—चार एवायं वैदिकवेषमवलम्ब्यागतो दत्ताभयश्च ।

**किंकरः**—तर्हि किं कर्तव्यम् ।

**नागरिकः**—'सर्वमिदं राजकार्यं त्वया कस्मैचिदपि न कथनीयम्' इति शपथं गृहीत्वा पुराद्बहिर्विसृज्यताम् । अथवा किमनेन वराकेण कथनीयम् । दत्ताभयोऽयमिति मन्त्रिणे निवेद्य कथंचिन्मोचयितव्यः ।

**किंकरः**—तथा करोमि । (इति निष्क्रान्तः ।)

(नेपथ्ये कुक्कुटध्वनिः ।)

**नागरिकः**—(आकर्ण्य ।) कथं रजनीविरामः ।

(पुनर्नैपथ्ये)

**वैतालिकः**—

पत्यावस्तं व्रजति विगलच्चञ्चरीकाञ्जनाश्रु-
त्रासान्मीलद्दलदृशमितो रागमर्कक्रमेण ।
द्रागालिङ्गेदपि कुमुदिनीमित्यपन्यायशङ्की
कूकूशब्दं विसृजति जवात्कुक्कुटः पूर्वमेव ॥ ४ ॥

**द्वितीयो वैतालिकः—**

राग मुखेन दरदर्शिततारकेण
मां व्यञ्जतीमपि समेत्य करेण गाढम् ।
आलिङ्ग्यते कुमुदिनीति रुषापराद्रिं
यातां निशां द्रुतमनुव्रजतीव चन्द्रः ॥ ५ ॥

अपि च ।

प्रातर्जातमिति द्रुतं प्रशिथिलं बद्ध्वा दुकूलं दृढं
धम्मिल्लं च्युतमाल्यमप्युपवनान्निर्गत्वरीरित्वरीः ।
आकृष्टांशुकपल्लवे कठिनयोरालिङ्ग्य वक्षोजयो-
राघ्रायाननपङ्कजे च कथमप्युज्झन्त्यहो कामिनः ॥ ६ ॥

**नागरिकः—**तदधुना राजकार्ये चावहितस्तिष्ठामि । (इति निष्क्रान्तः ।)

शुद्धविष्कम्भकः ।

---

(ततः प्रविशति प्रासादाधिरूढः प्रतीहार्या धारणया दर्शितमार्गो मन्त्री ।)

**मन्त्री—**संप्रति हि

सोपानानि हिरण्मयानि परितः प्रत्युप्तरत्नान्यहं
पादाभ्यां समतीत्य किंकरगणालम्बी स्वयं पाणिना ।
भित्तिष्वालिखितैर्वृतं खगमृगस्त्रीपुंसवृक्षाचलै-
रारुक्षं निटिलाक्षशैलधवलं प्रासादमभ्रंलिहम् ॥ ७ ॥

(विचिन्त्य स्वगतम् ।) अहो दुरन्तता राजधर्माणाम् ।

आत्मानं परिरक्ष्य दुष्करतपोवृद्धद्विजाराधनै-
र्दानीयेषु च भक्तिपूर्वमसकृद्दानप्रदानैरपि ।
दण्डं दण्डयितव्यमात्रविषयं कृत्वा धरित्रीतले
राज्ञा धर्मपथे मतिं क्रमयता संरक्षितव्याः प्रजाः ॥ ८ ॥

किं बहुना ।

स्वश्रेयसार्थे यततेऽनिशं यो राज्ञा किलानेन पृथग्विमर्शः ।
स्वस्मिन्नमात्येषु सुहृत्सु राष्ट्रे दुर्गेषु कोषेषु बलेषु कार्यः ॥ ९ ॥

निर्ज्ञातसर्वतन्त्रेषु विगूढामोघमन्त्रेषु मन्त्रिषु विन्यस्तसमस्तकार्यभरस्य तु राज्ञो निश्चिन्ततैव । परंतु तेषां व्याकृष्यन्ते दुरन्तया चिन्तया हृदयानि ।

सामन्ताविनमेयुरित्युपचयः कोषस्य सिद्ध्येदिति
स्थानेषु द्विषतां स्थितीरपि चराः पश्येयुराप्ता इति ।
स्यादायोपगमो यथेति विभवैस्तुष्टाः प्रवीरा भटा
वर्तेरन्निति मा मलिम्लुचगणाद्भूरुद्विजेतेति च ॥ १० ॥

अहमपि राज्ञा विन्यस्तसमस्तकार्यभारतया यत्सत्यं व्याकुल एव । तथा हि ।

कार्येषूक्तेषु राज्ञा कतिचिदपि मया साधितान्येव पूर्वं
साधिष्यन्ते परस्तात्कतिचन कतिचिच्चापि साध्यन्त एव ।
किंचानुक्तेषु सद्यः किमपि किल कुशाग्रीययात्मीयबुद्ध्या
पर्यालोच्यैव तत्तत्समयसमुचितं कर्तुमुत्कण्ठितोऽस्मि ॥ ११ ॥

अत एव सर्वत्र तत्रतत्र व्यापृते मया पुरगुप्त्यै मत्सदृश एव कोऽपि विनियुक्तो विचारनामा नागरिकः । तत्प्रकृतकार्ये व्यापृतव्यम् । कः कोऽत्र भोः ।

(प्रविश्य ।)

**दौवारिकः**—विजयतां देवः ।

**मन्त्री**—भद्र, मद्वचनेनानुशासनीयाः पौरा नगरालंकाराय ।

आलिम्पन्तां सुधाभिः पुरसदनगता भित्तयो भृत्यवर्गै
रम्भास्तम्भाः क्रियन्तां कपिशफलभृतः पार्श्वयोर्द्वारभूमेः ।
बध्यन्तां तोरणानि श्रितनवमणिभिर्दामभिः सन्तु रथ्याः
संमृष्टाश्चाम्बुसिक्ताः प्रतिगृहमुपरि ग्रथ्यतां केतनाली ॥ १२ ॥

यतः संप्रत्येव सिद्धप्रतिज्ञो राजा समागमिष्यति ।

**दौवारिकः**—यदाज्ञापयत्यार्यः । (इति निष्क्रान्तः ।)

**मन्त्री**—(सदृष्टिक्षेपं परिवृत्त्यावलोक्य च ।) अहो रिपूणां पुरावस्कन्दनप्रकारः । तथा हि । पाण्डुना प्रेरिता रोगाः,

मूर्धानं व्याप्तुकामाः शतमथ नवतिर्लोचने चाधिचत्वा
　　नासामष्टादशास्यं खलु चतुरधिका सप्ततिर्हृच्च पञ्च ।
वक्षोजौ पञ्च शूलैः सह समगणनैः कुक्षिमष्टौ च गुल्माः
　　स्वार्हस्थानान्युपेतं त्रिगुणगणनया पञ्चकं च व्रणानाम् ॥ १३ ॥

अथ च स्वयमेव मन्त्रिभूतस्य युवराजस्य पाण्डोः पुरोपरोधवैचित्री वाचामतिवर्तते पन्थानम् । (सामर्षं सावहित्थं चाकाशे ।) साधु मन्त्रिधुरीण, साधु । अनया गुप्तप्रयोगप्रकारगौरवया धिषणया शौर्येण च दैत्यगुरुं वृषपर्वाणं चाधिशेषे । (सोपहासम् ।) मयि— (इत्यर्धोक्ते विरमति ।)

**धारणा**—(सस्मितम् ।) अमच्चस्स वाक्यसेसेण तक्कीअदि धीरोदत्तत्तणम् । (क)

**अमात्यः**—अस्खलितासाधारणकार्यावधारणधौरेयस्खलितानि तव मनीषितानि भवन्ति । (इति पुरो विलोक्य ।) अहो नगरालंकारचातुरी पौराणाम् ।

　　कीर्णान्यम्बुपृषन्ति किंकरगणैरभ्यन्तरे ताडिता-
　　　　न्यातोद्यानि निकेतकेकिनटनप्रारम्भमूलानि च ।
　　बद्धा मन्दिरमार्गसीमसु हसन्नाथापनीतांशुक-
　　　　व्यक्तोरोजसलज्जसिद्धयुवतिव्याकृष्टचेलध्वजाः ॥ १४ ॥

अपि च ।

　　मन्ये रम्भाः पुरमृगदृशामूरुसौभाग्यचौर्या-
　　　　द्बद्धा भृत्यैः प्रतिगृहमपि द्वारपार्श्वद्वयेषु ।
　　अम्भोदुर्गात्कथमपि हृता यन्त्रितोच्चैर्विताने
　　　　तासां वक्त्राम्बुजपरिमलग्राहिणी पद्ममाला ॥ १५ ॥

किं च । सुधालेपधवलीकृतसौधवसतयः पौरयुवतयः शारदाभ्रगतपरमाद्भुततडिल्लताविभ्रममुद्भावयन्ति । किं च, चञ्चरीकगणश्चित्रलिखितसहकारमञ्जरीकलितोत्कलिकया संचरमाणोऽपि कदर्यमवनीपतिमुपगतो वनीपकलोक इव निष्फल एव निवर्तते । कतिचन निकेतनानि च नूतनालि-

---

(क) अमात्यस्य वाक्यशेषेण तर्क्यते धीरोदात्तत्वम् ।

खितेनाहिनकुलेनाश्वमहिषेण गोव्याघ्रेण च भित्तिषु निर्वैरसत्त्वान्यनुकुर्वन्ति चत्वराणि तपोधनाश्रमपदस्य । (अन्यतोऽवलोक्य सहासम् ।)

दृष्ट्वाकृष्टकचामुदस्तचिबुकां पत्या कराभ्यां बला-
त्कामप्येणदृशं करौ विधुवतीमास्वाद्यमानाधराम् ।
आलेख्ये पुरशिल्पिना विरचितां भित्तौ बहिर्मन्दिरा-
न्नार्यः सस्मितनम्रवक्त्रकमलाः कर्षन्ति यूनां मनः ॥ १६ ॥

नन्विदानीमत्र नगरालंकारदर्शिनो राज्ञः समागमं प्रतीक्षमाणाः पौरास्तस्य परमुपचाराय संनह्यन्ति । तथा हि ।

स्थाप्यन्ते गृहवासवेदिषु घटाः संवेष्टितास्तन्तुभिः
प्रत्यग्राम्रदलप्रसाधितमुखा विप्रैः पयःपूरिताः ।
कन्याभिर्घृतसिक्तवर्तिनिकरैर्नीराजनाभाजनैः
साध्यन्ते सममेव लाजसुमनश्चित्राणि पात्राणि च ॥ १७ ॥

(विचिन्त्य ।) कथमसौ राजा लिप्सितं फलं लब्ध्वा समायास्यति । कथमस्य साम्बशिवप्रसादमन्तरेण लिप्सितफललाभः । कथं वा कठोराणि तपांसि विनानेन सुलभः शिवप्रसादः । कथमनेन स्वकालविकस्वरशिरीषदलकोमलशरीरेण सुकरा कठोरा तपश्चर्या । न चैतस्य तादृशतपश्चरणादृतेऽखिलपुरुषार्थसाधनं भगवतश्चन्द्रकलावतंसस्य निरन्तरध्यानं संभाव्यते । नलिनीदलान्तरालतरलोदबिन्दुसमस्पन्दा दुर्निरोधा हि चित्तवृत्तयः । तदिदानीं मदीयमन्तःकरणं दुरन्तचिन्तोदधौ निमज्य पुनरुन्मज्जति । अथवा कस्य किमसंभावितमनुकूलतामुपगते दैवे । (दक्षिणभुजस्पन्दमभिनीय ।) कथमस्थाने मम विचारः । सर्वं सुघटितं भविष्यति ।

(नेपथ्ये)

**वैतालिकः**—

वातं प्रावृषिकं निरुध्य सहसा गात्रप्रकम्पप्रदं
संफुल्लानि विधाय चारुकमलान्यासाद्य हंसागमम् ।
दिष्ट्या लब्धवता प्रसादमधिकं वापीजलाधारयोः
सद्यः शारदवासरेण धवलो मेघोऽम्बरं प्रापितः ॥ १८ ॥

**मन्त्री**—(श्रुत्वा सहर्षम् ।) समद्युत(?)प्राणनिरोधेन निर्धूतसकलतपोविघ्नेन विशुद्धाद्वैतज्ञानसाधनेन समाराधितयोर्धूर्जटिधरराजकन्ययोः प्रसादेन राज्ञा रसो हस्तगतः कृत इत्यनेन वैतालिकवचनेन सूच्यते ।

(पुनर्नेपथ्ये ।)

दिङ्मण्डलस्य विमलीकरणे प्रवीणा-
न्निर्विघ्नमुत्सृजति नीरजबन्धुरंशून् ।
पङ्कश्च पान्थपदयोगममृष्यमाणः
संशोषमेत्य शकलीभवति क्षणेन ॥ १९ ॥

**मन्त्रीः**—(श्रुत्वा ।) एतेनापि वचसा निरोगीकरणसमर्थान्रसान्प्रयोक्तुं राज्ञस्तस्य च यक्ष्महतकस्य विनशितुं प्राप्तः कालोऽयमिति च सूच्यते । (सबहुमानम् ।) साधु रे वैतालिक, साधु । यदधुना गूढाभिप्रायेण भवता बोधितव्यं बोधितम् । तदेव वृत्तं सप्रकारमवगमयितुं राजानं प्रत्युद्गमनेन बहुमन्तुं च तत्रैव गच्छामि । (इत्युत्थाय आकाशे ।) अरे यक्ष्महतक, भवदीयमतःपरं पश्यामि शौण्डीर्यम् । (पुरो विलोक्य ।) कथमागत एव देवः । यतो देवी पुरोमार्गप्रदर्शिनी पुरो दृश्यते । यैषा

धम्मिल्ले घनसंनिभे सिततडिद्वल्ल्येव मल्लीस्रजा
वक्रेन्दो रुचिरेण नाभितिलकव्याजात्कलङ्केन च ।
हारेण स्तनकोकयोरपि बिसस्वच्छेन चायामिना
पादाम्भोरुहयोश्च हंसकयुगेनाराविणा राजते ॥ २० ॥

अयमपि महाराजस्तस्या अनुपदमागच्छति । संप्रति हि एतस्य

विचारविगमादिदं विलसति प्रसन्नं मुखं
गृहीतसुषमं हिमव्यपगमादिवाम्भोरुहम् ।
विषाणिन इव प्रतिद्विरददर्शनामर्षिणो
गतिश्च किल मेदिनीं नमयतीव धीरोद्धता ॥ २१ ॥

(ततः प्रविशति जीवो बुद्धिश्च ।)

**जीवः**—अहो श्रुतिस्मृतिविहितानां कर्मणां प्रभावः । यानि मया समयेषु समनुष्ठितानि मदीयमन्तःकरणमशोधयन् । शोधिते च तस्मिन्भ-

गवद्भक्तिर्नाम कापि कल्पलता प्रथममङ्कुरिता पश्चादुपचितपरिचया च सा मम हृदयानुरञ्जनी क्रमेण भगवन्तौ परमेश्वरौ साक्षाद्दर्शितवती । अनितरसाधारणया च तया प्रसन्नौ भगवन्तौ संप्रत्यभिलषितान्रसगन्धकादीन्प्रसादीकृत्यार्पितवन्तौ । अग्रेऽपि तस्या एव महिम्ना सकलमप्यभिलषितं पुमर्थं लप्स्यामहे ।

**बुद्धिः**—अज्जउत्त, किं एदे रसगन्धआ अण्णणिव्वेक्खा सअं जेव्व विवक्खक्खवणं णिव्वहन्दि । (क)

**राजा**—देवि, दिव्यौषधीभिः शोधिताः सन्तो विविधरसायनद्वारा उक्तसामर्थ्या ह्येते ।

**देवी**—ता एव्वं संविहाणसमत्थेण केण वि होदव्वम् । (ख)

**राजा**—विज्ञानशर्मैवात्र निर्वोढा । यतः ।

ऋषिरेव विजानाति द्रव्यसंयोगजं गुणम् ।
विज्ञानशर्मणः कोऽन्यः सर्वज्ञाननिधिर्ऋषिः ॥ २२ ॥

किं च ।

महेशतेजःसंभूतो रसः कारुणिकाग्रणीः ।
यः स्वानिष्टमुरीकृत्य परपीडां व्यपोहति ॥ २३ ॥

तदुक्तम्—

'मूर्छित्वा हरति रुजं बन्धनमनुभूय मुक्तिदो भवति ।
अमरीकरोति हि मृतः कोऽन्यः करुणाकरः सूतात् ॥ २४ ॥'

'सुरगुरुगोद्विजहंसापायकलापोद्भवं किलासाध्यम् ।
श्वित्रं महदपि शमयति कोऽन्यस्तस्मात्पवित्रतरः ॥ २५ ॥'

गन्धकस्यापि माहात्म्यमुक्तम्—

'ये गुणाः पारदे प्रोक्तास्ते गुणाः सन्ति गन्धके ।

---

(क) आर्यपुत्र, किमेते रसगन्धका अन्यनिरपेक्षाः स्वयमेव विपक्षक्षपणं निर्वहन्ति ।

(ख) तदेवं संविधानसमर्थेन केनापि भवितव्यम् ।

शुद्धो गन्धो हरेद्रोगान्कुष्ठमृत्युजरादिकान् ।
अग्निकारी महानुष्णो वीर्यवृद्धिं करोति च ॥ २६ ॥'

किं च प्रतिदिनं निषेव्यमाणैरेतैः प्रियरतीनां युवतीनामनभिमतानां पुंसां जरामुपरुध्य तासामभिमते यौवने तेषां स्थापनं भवति ।

**देवी**—(सलज्जं सदृष्टिक्षेपं च ।) संपत्तो एसो विण्णाणणामहेओ अमच्चो । ता णम्मालावस्स ण एसो समओ । (क)

**राजा**—(विलोक्य ।) अये, मन्त्रिबृहस्पतिः संप्राप्तः । (सानुशयम् ।)

कर्तव्यो विधिरित्थमित्थमिति मामुक्त्वा जिगीषुर्द्विषं
स्वस्यैवोपरि राज्यतन्त्रमखिलं द्रष्टव्यमासज्य च ।
अद्येदं क्रियते करिष्यत इदं पश्चादकारि त्विदं
प्रागेवेति दुरन्तया कृशतनुं पश्याम्यमुं चिन्तया ॥ २७ ॥

एतदनुज्ञयैव निर्विचारमानसेन मया कृतं भगवदाराधनम् ।

**मन्त्री**—(उपसृत्य ।) स्वस्ति सफलमनोरथाभ्यां स्वामिभ्याम् ।

**जीवः**—भवत्साहाय्यमेवात्र हेतुः ।

**बुद्धिः**—एवमप्पमत्तेण चित्तवावारेण सहायत्तणं कुणन्तो दीहाऊ होइ । (ख)

**राजा**—अत्र निषीदतु भवान् ।

**मन्त्री**—(उपविश्य ।) निर्विघ्नेन कार्यसिद्धिर्जातेति मनोरथानामुपरि वर्तामहे ।

**राजा**—तदेव वक्तुकामोऽस्मि ।

**मन्त्री**—अवहितोऽस्मि ।

**राजा**—त्वदुक्तमार्गेण प्रथमं पद्मासनं बद्ध्वा तथैवोपविष्टोऽहम् ।

शुद्धान्तःकरणेन संततपरिध्यातार्ककोटिप्रभ-
प्रालेयद्युतिकोटिशीतलशिवारूढाङ्कगङ्गाधरः ।

---

(क) संप्राप्त एष विज्ञाननामधेयोऽमात्यः । तन्नर्मालापस्य नैष समयः ।

(ख) एवमप्यमात्येन चित्तव्यापारेण सहायत्वं कुर्वन्दीर्घायुर्भव ।

सानन्दाश्रुकणो दृशोः सपुलको गात्रेषु सप्रश्रय-
स्तुत्युक्तिर्वदने कृताञ्जलिपुटो मूर्धन्यभूवं चिरम् ॥ २८ ॥

तदनु मयि प्रसादाभिमुखः प्रज्वलदग्निशिखाकलापकपिलजटामण्डला-टवीविलुठज्जाह्नवीचरवालहंसायमानचन्द्रलेखः कण्ठगतकालकूटद्युतियमुनो-भयपार्श्वनिःसरन्निर्झरायमाणरुद्राक्षमालिकः परिहितशार्दूलचर्मसंदर्शनभीत-मिव मृगमेकं संरक्षितुं करे बिभ्राणः करान्तरे च प्रणतजनदुरदृष्टशिलाभ-ञ्जनं टङ्कं च कंचन भगवान्काञ्चनगिरिधन्वा गिरिकन्यासमेतो मामेतद-वोचत—

ध्यानेन ते प्रसन्नोऽस्मि वृणीष्व वरमर्पये ।
इत्युक्तवन्तं तं देवमयाचे रसगन्धकान् ॥ २९ ॥

ततस्तेन दीयमानान्रसगन्धकानग्रहीषम् । पुनश्च प्रणम्य सप्रश्रयमया-चिषम् । देवदेव,

फलिन्यः फलहीना याः पुष्पिण्यो या अपुष्पिकाः ।
गुरुप्रसूतास्ता मुञ्चन्त्वंहसो न इति श्रुतिः ॥ ३० ॥
यस्मै ददासि तं रुग्भ्यः सर्वाभ्यः पारयामहे ।
इति सोमेनौषधयः संवदन्तीति च श्रुतिः ॥ ३१ ॥

अतः सर्वास्ताः सिद्धौषधयः सोमायत्ताः स च भगवतः शिरोभूषणम-त्रैव संनिहितः । अतः ।

शोधयितुं रसगन्धान्कर्तुं च रसौषधानि विविधानि ।
दिव्यौषधीश्च सर्वा दापय मौलिस्थितेन चन्द्रेण ॥ ३२ ॥

ततश्च भगवदाज्ञया तेन सोमेन सर्वास्ता मह्यं दत्ताः । (इति मन्त्रिह-स्तेऽर्पयति ।)

**मन्त्री**—(सहर्षं गृहीत्वा दृष्ट्वा च ।) सप्तकञ्चुकादिदोषनिराकरणेन शुद्धा-नेतानोषधीभिः सह शत्रुजयाय प्रयोक्ष्यामहे ।

**देवी**—कित्तिआ ते सत्तुजणा किंणामहेआ अ कस्सिं समए पुरोपरोहं किदवन्तो । (क)

---

(क) कियन्तस्ते शत्रुजनाः किंनामधेयाश्च कस्मिन्समये पुरोपरोधं कृतवन्तः।

**मन्त्री**—श्रूयतां तावत् ।

पुण्डरीकपुरं राज्ञि प्रविष्टे रन्ध्रलाभतः ।
स्वराजानुज्ञया पाण्डुररुधत्सैनिकैः पुरम् ॥ ३३ ॥

यक्ष्महतकस्यास्मच्छत्रोर्बहवः सैनिकाः ।

ग्रहण्यश्मर्यतीसारशूलार्शःपाण्डुकामलाः ।
विषूचिकाकुष्ठगुल्मसंनिपातज्वरादयः ॥ ३४ ॥

**देवी**—अमच्च, एत्तिअं पुरोपरोहसंरम्भं कुणन्तेण सहसैणिएण तेण जक्खहदएण अम्हाणं किं अच्चाहिदं कादव्वम् । (क)

**मन्त्री**—देवि, पुरान्निष्क्रमयितव्या वयमित्येव तस्य हताशस्य दुराशाभिनिवेशः ।

**देवी**—अहो अणत्तणीणत्तणं जक्खहदअस्स । जो अम्हेसु पुरादो णिक्कन्तेसु सअं कहिं ठाइस्संति अप्पणो वि णासं ण गणेदि । (ख)

**मन्त्री**—सत्यमुक्तं देव्या ।

महापातकसंभूतेस्तस्य पापस्य यक्ष्मणः ।
वैरायितमिदं चित्रं स्वविनाशमपीच्छतः ॥ ३५ ॥

यदुक्तमभियुक्तैः—

'अपथ्यसेविनश्चौरा राजदाररता अपि ।
जानन्त एव स्वानर्थमिच्छन्त्यारब्धकर्मतः ॥ ३६ ॥' इति ।

ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे
ह्येवं या समभाणि भर्तृहरिणा काष्ठा परा पापिनाम् ।
तामेतामतिशेत एष सपरीवारस्य नाशं निज-
स्योत्पश्यन्नपि निष्क्रमाय यतते यो नः पुरात्पातकी ॥ ३७ ॥

---

(क) अमात्य, एतावन्तं पुरोपरोधसंरम्भं कुर्वाणेन सहसैनिकेन तेन यक्ष्महतकेनास्माकं किमत्याहितं कर्तव्यम् ।

(ख) अहो अनात्मनीनत्वं यक्ष्महतकस्य । योऽस्मासु पुरान्निष्क्रान्तेषु स्वयं कुत्र स्थास्यामीत्यात्मनोऽपि नाशं न गणयति ।

अस्त्यत्र लौकिकोऽप्याभाणकः—'स्वनाशाच्छेदेन शत्रोरमङ्गलमापादयत्यनात्मनीनो मूर्खः' इति ।

**देवी**—ता कहिं दाणिं एत्तिआणं रोगाणं णिग्गहो सुअरो । (क)

**मन्त्री**—देवि, मा भैषीः । निखिलरोगनिसर्गवैरिणि रसे स्वाधीने कः शत्रुजये संदेहः ।

**राजा**—तर्हि कुतो विलम्ब्यते ।

**मन्त्री**—अहं पुनरधुना रसमोषधीभिः सह संयोजयितुं गच्छामि । देवेनापि विश्रम्यताम् ।

(इति निष्क्रान्ताः सर्वे ।)

इति तृतीयोऽङ्कः ।

---

चतुर्थोऽङ्कः ।

(ततः प्रविशति विदूषकः ।)

**विदूषकः**—उत्तं खु दोआरिएण पाणेण रण्णो रसगन्धअवरप्पदाणं सुणिअ वलिअं रोसवसंगदेण जक्खहदएण पण्डुणा सह किंवि मन्तूण सपरिवारस्स अम्हाणं रण्णो उवरि वइक्कमं किंवि कादुं उज्जोओ करीअदित्ति सुदवन्देण विण्णाणणामहेएण मन्तिणा कज्जगदिं आवेदिअमाणो अन्तेउरवेदिअन्तरे चिट्ठदित्ति । ता राअसमीपं गमिस्सम् । (इति परिक्रम्योदरं करतलेन परामृष्य ।) अहो, मुहुत्तादो पुव्वं खादिदं मातुलुङ्गफलप्पमाणाणं मोदआणं सदं वि जिण्णं जादम् । जं तस्सिं समए धण्णकुम्भीपीणुत्तुङ्गो मह पिचण्डो ठिदो । दाणिं उण तिण्णकिदो कटो विअ तणूहोदि । (विमृश्य ।) णं मज्झण्णो वट्टदि । तह हि ।

पत्तगदं घरहरिणो तिह्णाए पिवइ सीअलं सलिलम् ।
गन्धेण कुणइ सुहिदं घाणं विदमिस्ससक्करापूवो ॥ १ ॥

अहो पमादो । राअसमीवं गमिस्सं ति महाणससमीवं गदो ह्मि । अदो एव्व तह वत्तुलतणुअरगोधूमापूवसंहितसरावेहिं माहिसदहिमण्डमिस्सिदमासविरइअभक्खविसेसणिविडिअभाअणेहिं परितत्तम्वरिसभज्जिदचणअचअपूरिअपिण्डएहिं फाणिअसंकलिअजवधाणासमुल्लसिदविसालामत्तेहिं दुद्धदहिसक्करासलिलभाविदविविहपिथुअरासिसंपुण्णविसङ्कडचसअविसेसेहिं मल्लिअमुउलपुञ्जधवलसालितण्डुलन्नसमुच्चअविराजिदतम्ममअभण्डगणब्भन्तरट्ठाविदसुवण्णसवण्णसूपणिहाणपिठरेहिं कित्तपरिवक्कवन्ताककारइल्लपडोल-

---

(क) तत्कथमिदानीमेतावतां रोगाणां निग्रहः सुकरः ।

कोसातईणिप्पावराअमासकदलीपणसकुब्भण्डप्पमुहसलाटुखण्डमयशाकप-ण्डमण्डिदबहुविधभाअणविसेसेहिं अ परिसोहमाणस्स महाणसस्स विसमरो गन्धो । घुमघुमाअदि मे णासाविलम् । सिलसिलाअदि तालुरसणामूले सुणिग्गत्तरं लालाजलम् । पज्जलदिव्व हणूमन्तवालग्गलग्गग्गिसिहागहिद-घरपरम्परं लङ्काउरं विअ बुभुक्खाउरं मे उदरम् । (किंचित्पुरतो विलोक्य ।) इह खु महाणसदुवारदेसे अवणदपुव्वकाओ विलोईअदि चुल्लिपावअपज्जल-णत्थफुक्कारपवणविकिण्णभसितलेशपुञ्जधूसरमुखो णिडिलदीसन्तविरलसेद-म्बुकणिओ करङ्गुलीलग्गहिङ्गुपरिमलसंतप्पिदसमीवगदजणघाणेन्दिओ ईस-संकमिदेङ्गाललञ्छिदपरिधाणपडो दक्खिणकरग्गहीददव्वीसिहरतणुतरदी-सन्तविलोलिअसाअपाअबप्फो अण्णकरलम्बितेन्धणसअलो भद्दमुहो णाम पौरोगवो । ता एणं एव्व पुच्छामि । अए भद्दमुह, तुए पक्केसु भक्खवि-सेसेसु किं वि किं वि मह हत्थे दादव्वं जं भक्खिअ एदं सुट्ठु एदं णेत्ति विआरिअ कहेमि जं सुट्ठु तं परिवेसिअ रण्णो हत्थादो पारितोसिअं गे-ह्णदु भवम् । (सामर्षम् ।) कहं एसो दासीएपुत्तो 'जइ तुह बुभुक्खा तदो रण्णो समीपं गदुअ भोअणं दादव्वं ति पुच्छ । अहं उदरंभरिणो तुह किं वि ण दाइस्सं' ति भणिअ महाणसब्भन्तरं गदो । होदु । राअसमीपं गमिस्सम् । (इति परिक्रम्यावलोक्य च ।) कहं एत्थ राअसमीवे विअणे अल-गद्देण गिल्लिअ विलं पवेसिदो मण्डूओ विअ किं वि अणक्खरं पलवन्तो अमच्चो वेधवेओ (?) चिट्ठइ । ता समअं पडिवालइस्सम् । (इति तिष्ठति ।) (क)

---

(क) उक्तं खलु दौवारिकेण प्राणेन राज्ञो रसगन्धवरप्रदानं श्रुत्वा ब-लवद्रोषवशंगतेन यक्ष्महतकेन पाण्डुना सह किमपि मन्त्रयित्वा सपरिवार-स्यास्माकं राज्ञ उपरि व्यतिक्रमं किमपि कर्तुमुद्योगः क्रियत इति श्रुतवता विज्ञाननामधेयेन मन्त्रिणा कार्यगतिमावेद्यमानोऽन्तःपुरवेदिकान्तरे ति-ष्ठतीति । तद्राजसमीपं गमिष्यामि । अहो, मुहूर्तात्पूर्वं खादितं मातुलुङ्गफल-प्रमाणानां मोदकानां शतमपि जीर्णं जातम् । यत्तस्मिन्समये धान्यकुम्भी-पीनोत्तुङ्गं मम पिचण्डं स्थितम् । इदानीं पुनस्तृणकृतः कट इव तनूभवति । ननु मध्याह्नो वर्तते । तथाहि ।

(ततः प्रविशति राजा मन्त्री च ।)

**राजा**—(कर्णं दत्त्वा ।) कार्यपर्यालोचनयातिक्रान्तोऽप्यर्धदिवसो न ज्ञातः । यत इदानीम्

पात्रगतं गृहहरिणस्तृष्णया पिबति शीतलं सलिलम् ।
गन्धेन करोति सुखितं घ्राणं घृतमिश्रशर्करापूपः ॥

अहो प्रमादः । राजसमीपं गमिष्यामीति महानससमीपं गतोऽस्मि । अत एव तथा वर्तुलतनुतरगोधूमापूपसंहितशरावैः माहिषदधिमण्डमिश्रितमाषविरचितभक्ष्यविशेषनिबिडितभाजनैः परितप्ताम्बरीषभर्जितचणकचयपूरितपिण्डकैः फाणितसंकलितयवधानासमुल्लसितविशालामत्रैः दुग्धदधिशर्करासलिलभावितविविधपृथुकराशिसंपूर्णविषङ्कटचषकविशेषैः मल्लिकामुकुलपुञ्जधवलशालितण्डुलान्नसमुच्चयविराजितताम्रमयभाण्डगणाभ्यन्तरस्थापितसुवर्णसवर्णसूपनिधानपिठरैः कृत्तपरिपक्ववृन्ताककारवेल्लपटोलकोशातकीनिष्पावराजमाषकदलीपनसकूष्माण्डप्रमुखशलाटुखण्डमयशाकषण्डमण्डितबहुविधभाजनविशेषैश्च परिशोभमानस्य महानसस्य विसृमरो गन्धः । घुमघुमायते मे नासाबिलम् । सिलसिलायते तालुरसनामूले सुनिर्गत्वरं लालाजलम् । प्रज्वलतीव हनूमद्वालाग्रलग्नाग्निशिखागृहीतगृहपरम्परं लङ्कापुरमिव बुभुक्षातुरं मे उदरम् । इह खलु महानसद्वारदेशेऽवनतपूर्वकायो विलोक्यते चुल्लीपावकप्रज्वलनार्थफूत्कारपवनाविकीर्णभसितलेशपुञ्जधूसरमुखो निटिलदृश्यमानविरलस्वेदाम्बुकणिकः कराङ्गुलिलग्नहिङ्गुपरिमलसंतर्पितसमीपगतजनघ्राणेन्द्रियः ईषत्संक्रमितेङ्गालल्लाञ्छितपरिधानपटो दक्षिणकरगृहीतदर्वीशिखरतनुतरदृश्यमानविलोलितशाकपाकबाष्पः अन्यकरलम्बितेन्धनशकलो भद्रमुखो नाम पौरोगवः । तदेनमेव पृच्छामि । अये भद्रमुख, त्वया पक्वेषु भक्ष्यविशेषेषु किमपि किमपि मम हस्ते दातव्यं यद्भक्षयित्वा इदं सुष्ठु इदं नेति विचार्य कथयामि यत्सुष्ठु तत्परिवेष्य राज्ञो हस्तात् पारितोषिकं गृह्णातु भवान् । कथमेष दास्याःपुत्रः 'यदि तव बुभुक्षा तदा राज्ञः समीपं गत्वा भोजनं दातव्यमिति पृच्छ । अहमुदरंभरेस्तव किमपि न दास्यामि' इति भणित्वा महानसाभ्यन्तरं गतः । भवतु । राजसमीपं गमिष्यामि । कथमत्र राजसमीपे विजने अलगर्देन गृहीत्वा

प्रासादोदरपुञ्जितप्रतिरवप्राग्भारदीर्घीकृतं
सद्यः पञ्जरगर्भ एव चकितानुद्भ्रामयन्तं शुकान् ।
कार्यव्याप्रियमाणमानवमुखं कर्षन्तमात्मोन्मुखं
मध्याह्नागमसूचनाय पटहो धत्ते ध्वनिं ताडितः ॥ २ ॥

संप्रति हि घोरातपसंतापमसहमानाः प्राणिनः प्रायेण प्रच्छायशीतलं प्रदेशमावासाय प्रार्थयन्ते । तथा हि ।

आसीदन्ति विशालशैलशिखरभ्रश्यन्नदीनिर्झरां
शुक्लापाङ्गकुलानि सूर्यकिरणैः शून्यामरण्यावनीम् ।
आवर्तस्फुटपुण्डरीकमुकुलप्रेङ्खोलनोद्गन्धिना
तृप्यन्तो मरुता स्वपन्ति च नदीतीरे विलेषूरगाः ॥ ३ ॥

**मन्त्री**—अहो यौवनश्रियं पुष्णात्येष दिवसः । यतः ।

छायाशीतलमध्वनि द्रुमतलं चण्डातपोपप्लुताः
शौरिं दानवपीडिता इव सुराः पान्था भजन्ति द्रुतम् ।
दुष्कीर्तिं क्षितिपा इव प्रकृतिभिर्लोभावधूतार्थिनो
गाहन्ते च करेणुभिः सह नदीमारण्यका वारणाः ॥ ४ ॥

अपि चेदानीम्

घर्माम्भःकणलुप्यमानमकरीपत्राङ्कुरालंक्रियं
भूयिष्ठोद्गतफूत्क्रियानिलगलन्मासृण्यबिम्बाधरम् ।
ताम्यल्लोचनतारकालसगतिव्याख्यातनिद्रागमं
प्रच्छाये पथि रोचते स्थितवते पान्थाय कान्तामुखम् ॥ ५ ॥

**राजा**—(स्वगतम् ।) नन्वस्मिन्नवसरे

स्नातव्यं जपितव्यं वसितव्यं नमसितव्यमत्तव्यम् ।
अ..........मनुकूलं दैवतमत्र क्रमेण मया ॥ ६ ॥

(प्रकाशम् ।) किमतःपरमाचरितव्यम् ।

---

बिलं प्रवेशितो मण्डूक इव किमप्यनक्षरं प्रलपन्नमात्यो..........तिष्ठति । तत्समयं प्रतिपालयिष्यामि ।

**मन्त्री**—मध्याह्न इति बुभुक्षिताः परिजनाः । ततः स्नानार्थमुत्तिष्ठतु महाराजः ।

(राजा उत्तिष्ठति मन्त्री च ।)

**विदूषकः**—(श्रुत्वा ।) एवंवादिणो मन्तिणो होदु पुण्णलोओ । (उपसृत्य ।) जेदु जेदु महाराओ । (क)

**राजा**—वयस्य, कथमागतोऽसि ।

**विदूषकः**—(मन्त्रिणं प्रति ।) अवि कुसलं अमच्चस्स । (ख)

**मन्त्री**—कथमभ्यवहारसमय इति प्राप्तोऽसि ।

**विदूषकः**—दाणिं जेव्व णिअघरे भोअणं कदुअ आअदेण अज्जेण वि किं ण विण्णादं मज्झह्नो वट्टदित्ति । (ग)

**मन्त्री**—विज्ञातमेव । श्रूयतामिदानीम् ।

यूना सस्पृहदृश्यमानकबरीभारोरुपीनस्तनी
पान्थेनाध्वनि शालिगोपवनिता शून्ये स्फुरद्यौवना ।
आसन्नां⋯⋯वारणवुसापत्रापनीतातपा-
मारामक्षितिमापगातटगतां साकूतमालोकते ॥ ७ ॥

**विदूषकः**—(समुखभङ्गम् ।) अण्णस्स पुरिसस्स अण्णाए इत्थिआए संपक्कसूअणं णाम अणुइदं किं ति वण्णीअदु अज्जेण । जइ मज्झह्नो वण्णणीओ त्ति आग्गहो तदो माणवाणं संभाविदं पाणभोअणं वण्णीअदु । जेण सुदमेत्तेण वि मह संतोसो होदि । (घ)

---

(क) एवंवादिनो मन्त्रिणो भवतु पुण्यलोकः । जयतु जयतु महाराजः ।

(ख) आपि कुशलममात्यस्य ।

(ग) इदानीमेव निजगृहे भोजनं कृत्वा आगतेनार्येणापि किं न विज्ञातं मध्याह्नो वर्तत इति ।

(घ) अन्यस्य पुरुषस्यान्यया स्त्रिया संपर्कसूचनं नामानुचितं किमिति वर्ण्यते आर्येण । यदि मध्याह्नो वर्णनीय इत्याग्रहस्तदा मानवानां संभावितं पानभोजनं वर्णयतु । येन श्रुतमात्रेणापि मम संतोषो भवति ।

**मन्त्री**—(विहस्य ।) भोजनेन तत्प्रकारस्य तत्साधनस्य च श्रवणे कुतूहली भवान् ।

(प्रविश्य)

**दौवारिकः**—महाराअ, उवाअणहत्था सामन्तभूवाला संपत्ता मए वि तिदीअकच्छं पवेसिदा महाराओ पेक्खिदव्वोत्ति चिट्ठन्ति । (क)

(राजा मन्त्री च तद्दर्शनप्रदानाय निर्गमनं नाटयतः ।)

**विदूषकः**—(आत्मगतम् ।) अए दासीएपुत्तेहिं सामन्तराएहिं मम ऊसाहभङ्गो किदो । (ख)

(इति तदनुसरणं नाटयति ।)

**मन्त्री**—एते स्वामिनं प्रणमन्ति ।

**राजा**—(आकाशे ।) अपि कुशलिनो यूयम् ।

**मन्त्री**—एते 'स्वामिनः कुशलप्रश्नेन कृतार्थाः स्मः' इति वदन्ति ।

**विदूषकः**—(स्वगतम् ।) वुभुक्खिदस्स मह अकुसलं ति ण जाणादि वअस्सो । (ग)

**मन्त्री**—

कश्चित्स्वर्णौघमेको मणिगणमपरो भूषणव्रातमन्यः
क्षौमस्तोमं परोऽश्वाव्रथकुलमितरो बालमातङ्गसंघम् ।
सामन्तक्षोणिपालेष्वहमहमिकयोपाहरद्दृष्टिपातै-
र्देवस्यानुग्रहीतुं सकरुणमुचितं सर्वमित्यर्थयेऽहम् ॥ ८ ॥

अपि च ।

हंसाश्चित्रगताः शुकाः स्फुटगिरो लावा मिथोऽमर्षिणः
श्येनाः शीघ्रजवाः शिखण्डिन उपारोहत्कलापोच्चयाः ।
आनीतास्तपनीयपञ्जरगता भूपैरमीभिर्मुदा
किं चावेक्षितविक्रमाश्च मृगयाकालेषु कौलेयकाः ॥ ९ ॥

---

(क) महाराज, उपायनहस्ताः सामन्तभूपालाः संप्राप्ता मयापि तृतीयकक्षां प्रवेशिता महाराजः प्रेक्षितव्य इति तिष्ठन्ति ।

(ख) अये, दास्याःपुत्रैः सामन्तराजैर्ममोत्साहभङ्गः कृतः ।

(ग) बुभुक्षितस्य ममाकुशलमिति न जानाति वयस्यः ।

**राजा**—मन्त्रिन्,

दत्तानि भूपतिभिरेभिरुपायनानि
तेषां वशे कुरु मयाधिकृता नरा ये ।
एतान्सभाजयितुमर्पय तत्तदर्हा-
न्युष्णीषकञ्चुकदुकूलविभूषणानि ॥ १० ॥

**मन्त्री**—यथाज्ञापयति देवः ।

**विदूषकः**—णं वअस्स, मए वि विजई होइत्ति वाआमेत्तेण तुह उवाअणं दिण्णं तदो बुभुक्खिदं मं किं त्ति ण संभावेसि । (क)

**मन्त्री**—राजन्, श्रोतव्यः कार्यशेषः ।

**विदूषकः**—हुं, चिट्ठदु दासीए वच्छो कज्जसेसो । वअस्स, किं मह पडिवअणम् । (ख)

**राजा**—मन्त्रिन्, ब्राह्मणस्य प्रथमं भोजनं निर्वर्तयेति अन्तःपुरं गत्वा देवीं वद । अतः प्रागेव संभाव्यात्र सामन्तभूपान्स्वस्थानं प्रेषय । वयस्य, त्वमपि मन्त्रिणा सह गच्छ ।

**विदूषकः**—दीहाओ होइ । (ग)

**मन्त्री**—विजयी भवतु देवः । (इति विदूषकेन सह निष्क्रान्तः ।)

**राजा**—कः कोऽत्र भोः ।

(प्रविश्य)

**दौवारिकः**—आणवेदु महाराओ । (घ)

**राजा**—मज्जनगृहमार्गमादेशय ।

**दौवारिकः**—इदो इदो भवं । (ङ) (परिक्रम्यावलोक्य च संस्कृतमाश्रित्य ।)

---

(क) ननु वयस्य, मयापि विजयी भवेति वाचामात्रेण तवोपायनं दत्तं तद्बुभुक्षितं मां किमिति न संभावयसि ।

(ख) हुं, तिष्ठतु दास्या वत्सः कार्यशेषः । वयस्य, किं मम प्रतिवचनम् ।

(ग) दीर्घायुर्भव ।

(घ) आज्ञापयतु महाराजः ।

(ङ) इत इतो भवान् ।

स्नातुं ते परिचारिकाः स्तनभरश्रान्ताः शनैः सांप्रतं
　　क्काथोष्णानि जलानि मज्जनगृहे कुम्भीषु संगृह्णते ।
आयान्तीव तृषा जलार्थनमिषादासां विलासाद्गतिं
　　हंसाः केशभरश्रियं च शिखिनः स्नेहादिमा याचितुम् ॥ ११ ॥

अत्र च हिरण्मयस्य गृहस्थूणस्य पार्श्वभागे
अभ्यङ्गाय सुवर्णपात्रनिहितं तैलं चलत्सौरभं
　　विस्तीर्णस्फुटकर्णिकारकुसुमे येनाभिभाव्यं मधु ।
न्यस्तं चन्दनदारुनिर्मितमिदं कूर्मासनं चासितुं
　　यत्पृष्ठे पृथिवीव च त्रिगुणिता कौशेयशाटी स्थिता ॥ १२ ॥

अपि च नवाम्बुदश्यामलायां विपुलायतायामिन्द्रनीलमणिनिर्मितायां हर्म्यभित्तौ प्रतिफलितवपुश्चेटीजनस्तडिल्लताविन्यासमवलम्बते । अत्रैव
कञ्चुल्या दृढसंयतस्तनभरा हारं गले कुर्वती
　　पश्चाल्लम्बितमम्बरं च जघने काञ्च्या दृढं बध्नती ।
स्वेदाम्भःकणमञ्जरीं च भजती चेलाञ्चलेनानने
　　चेटीष्वेकतमेयमत्र यतते कर्तुं तवाभ्यञ्जनम् ॥ १३ ॥

**राजा**—दौवारिक, मन्त्री विदूषकश्च कृतोचितव्यापारो न वेति विचार्यताम् । अहमप्यत्र स्नात्वा कृतशिवार्चनो भोजनाय यतिष्ये ।

**दौवारिकः**—तह । (क) (इति निष्क्रान्तः ।)

**राजा**—(स्मृतिमभिनीय ।) अये महानुभावा शिवभक्तिः, यस्याः प्रसादाद्भगवन्तं साम्बं साक्षात्कृत्य तदीयकरुणाकटाक्षामृतनिःष्यन्दकन्दलिताखिलपुमर्थोऽपि सन्संप्रति प्राकृतानर्थनिवर्तकान्रसगन्धकानासाद्य तावतैव कृतकृत्यंमन्यो मूढोऽहं विस्मृतवानस्मि तां भगवतीं शिवभक्तिम् । अहो धिक् प्रमादम् । नूनं सा भगवती मां कृतघ्नं मन्येत । (निःश्वस्य ।)

　　　　दृङ्मात्रदर्शितनिजप्रथितप्रभावा
　　　　　　प्रह्लादभूमसुरभूरुहमूलभूता ।

---

(क) तथा ।

जन्मान्तरीयतपसां परिपाकतः सा
प्राप्तापि दैवहतकेन मया विमुक्ता ॥ १४ ॥
तामेव हा सितसुधामधुराननेन्दुं
भक्तिं तथा निरुपमामसकृद्विचिन्त्य ।
स्नातुं च भोक्तुमशितुं शयितुं विहर्तुं
शक्नोमि नाहमधुना परितप्यमानः ॥ १५ ॥
हृदयानन्दविधात्रीं भक्तिं तामन्तरा न मे सौख्यम् ।
आसारेण विना किं घर्मम्लानस्य शालिनस्तृप्तिः ॥ १६ ॥

तत्कथमहं प्राकृतमिमं व्यासङ्गं परित्यज्य तामेव परमानन्दलीलामनुभूय कृतार्थो भूयासम् । (इति सचिन्तस्तिष्ठति ।)

(ततः प्रविशति स्मृतिः ।)

**स्मृतिः**—अम्मो, भअवदीए शिवभत्तीए विओएण बलिअं उक्कण्ठिदो राआ संपदं ण्हाणभोअणव्वावारं वि णाणुमण्णेदि । ता तुरिअं गदुअ भअवदीए इमं वुत्तन्तं णिवेदिअ ताए णं संयोजइदुं यतिस्सं ति पुण्डरीअपुरं गदुअ तत्थ सद्धाए सेविज्जन्तीं भअवदिं दिट्ठूण सद्धामुहेण तह संविधाणं कदुअ आअदह्मि । ता राअसमीवं गदुअ एदं णिवेदेमि । (इति परिक्रम्योपसृत्य ।) जेदु जेदु देवो । (क)

**राजा**—(दृष्ट्वा ।) अये, कथमियं स्मृतिः । सखि, दिष्ट्या चिरादागतासि ।

**स्मृतिः**—देव, भअवदिं शिवभत्तिं उद्दिसिअ तुह एआरिसीं बलिअं उक्कण्ठं दिट्ठूण—(ख) (संस्कृतमाश्रित्य ।)

---

(क) अम्मो, भगवत्याः शिवभक्तेर्वियोगेन बलवदुत्कण्ठितो राजा सांप्रतं स्नानभोजनव्यापारमपि नानुमन्यते । तत्त्वरितं गत्वा भगवत्या इदं वृत्तान्तं निवेद्य तयैनं संयोजयितुं यतिष्ये इति पुण्डरीकपुरं गत्वा तत्र श्रद्धया सेव्यमानां भगवतीं दृष्ट्वा श्रद्धामुखेन तथा संविधानं कृत्वा आगतास्मि । तद्राजसमीपं गत्वा इदं निवेदयामि । जयतु जयतु देवः ।

(ख) देव, भगवतीं शिवभक्तिमुद्दिश्य तवैतादृशीं बलवदुत्कण्ठां दृष्ट्वा—

यातं देव मया जवेन महता तत्पुण्डरीकं पुरं
श्रद्धायै विनिवेदितं च भवदीयौत्कण्ठ्यमेतादृशम् ।
तां त्वद्विस्मृतिकोपितामिव मुहुः संप्रार्थ्य भक्तिं तयै-
वागत्यानुजिघृक्ष्यसे न तु यथा श्रद्धा समाधात्तथा ॥ १७ ॥

**राजा**—(सहर्षम् ।) कथमेतावदनुगृहीतः । अहो प्रसादातिशयो मयि भगवत्याः । कथय सखि, किमत्रैवागमनानुग्रहं करिष्यति भगवती ।

**स्मृतिः**—अध इं । (क)

(ततः प्रविशति श्रद्धया सह भक्तिः ।)

**भक्तिः**—सखि श्रद्धे, सहजनिःसङ्गनिर्मलस्वभावोऽपि देवो जीवस्तथा सर्वपुमर्थप्रसवित्रीमपि मां विस्मृत्य बुद्धिपारवश्यमापन्नो विरसविषयाभिमुख एव संवृत्तः ।

**श्रद्धा**—अम्ब, देईए गुणमईए दुरच्चआए माआए कुडिलाए एसो अणादिसिद्धो सहावो जं विवेइणं वि पुरिसं मोहिअ विरसविसअप्पवणं करेइ । तह अ कदिदं अहिजुत्तेहिं । (ख) (संस्कृतमाश्रित्य ।)

जरठापि काचिदसती संदर्भ्य गुणान्परस्य पुरुषस्य ।
सङ्गं विनैव हसितैः सर्वस्वं हरति हन्त किं ब्रूमः ॥ १८ ॥

**भक्तिः**—भवतु । अतस्तस्मिन्मम दृढः प्रेमातिशयः ।

सत्यज्ञाननिधिः सदैव सहजानन्दस्वभावोऽप्ययं
देवो बुद्धिवशं गतः पुरमिदं त्रातुं व्यवस्यत्यहो ।
अस्त्वेतद्व्यपयुक्तमात्मकलने तस्मान्निरस्तामयं
निश्चिन्तं पुनरीशतत्परममुं कुर्यामभीष्टाप्तये ॥ १९ ॥

---

(क) अथ किम् ।

(ख) अम्ब, देव्या गुणमय्या दुरत्ययाया मायायाः कुटिलाया एषोऽनादिसिद्धः स्वभावो यद्विवेकिनमपि पुरुषं मोहयित्वा विरसविषयप्रवणं करोति । तथा च कथितमभियुक्तैः ।

**श्रद्धा**—जुज्जइ एदं णिरुपधिणिरवधिकरुणाए भअवदीए । ता एहि तं जेव्व अणुग्गहीदुम् । (क)

**राजा**—अहो अमृतासारमयः कोऽप्यालापः कर्णविवरमाप्याययति । सखि, किमागतवती भगवती ।

**स्मृतिः**—को संदेहो । (ख)

**राजा**—(पुरोऽवलोक्य ।) अहो ।

निरुपाधिकनिःसीमकरुणामृतवारिधिः ।
दिष्ट्या दृष्टा भगवती पुमर्थघटनापटुः ॥ २० ॥

(उत्थाय सरभसं प्रत्युद्गच्छति । श्रद्धाभक्ती परिक्रम्योपसर्पतः । राजा साष्टाङ्गं प्रणमति ।)

**भक्तिः**—सकलाभीष्टभाजनं भूयाः ।

**श्रद्धा**—जेदु जेदु देवो । (ग)

**राजा**—(उत्थाय ।) देवि निरुपधिकरुणानिधे, अपराधिनमपि मामेवमनुगृहीतवत्यसीति सकलमनोरथानामुपरि वर्तामहे ।

अवने हि निरागसां जनानां भजतां जाग्रति दैवतान्तराणि ।
अवनाद्विहितागसोऽपि मेऽस्तु प्रथितं ते निरुपाधिवत्सलत्वम् ॥ २१ ॥

उक्तं चात्राभियुक्तैः ।

प्रवहन्ती तु दया तव परिहृतनीचोच्चवस्तुवैषम्या ।
पततु मयि स्फुटमधुना पङ्गोरुपरीव गगनगङ्गोर्मिः ॥ २२ ॥

**भक्तिः**—देव, भवान्मामनुस्मृत्य बलवदुत्कण्ठितः प्रकृतकार्यविमुखः संवृत्त इति श्रुत्वा तत्रभवन्तं सान्त्वयितुमागतास्मि । संप्रति विज्ञानमन्त्रिमतानुसारेणैव प्रकृतशत्रुविजयाय व्याप्रियस्व । तदनन्तरम्

निर्जितनिखिलविपक्षं नीरुजमुरुसुस्थमपगतातङ्कम् ।
अहमागत्य विधास्ये परमानन्दाब्धिमाप्तकामं त्वाम् ॥ २३ ॥

---

(क) युज्यत एतन्निरुपधिनिरवधिकरुणाया भगवत्याः । तदेहि तमेवानुग्रहीतुम् ।

(ख) कः संदेहः ।

(ग) जयतु जयतु देवः ।

**राजा**—(सप्रश्रयम् ।) परमनुगृहीतोऽस्मि । इदं तु प्रार्थये ।

या प्रीतिरविवेकानामिति न्यायात्सदा मम ।
हृदयान्मापसर्प त्वं प्रसीद करुणानिधे ॥ २४ ॥

**भक्तिः**—तथा भवतु । (स्मृतिं प्रति ।) अयि वत्से, एतत्त्वदायत्तम् ।

**स्मृतिः**—भअवदि, अवहिदह्मि । (क)

**भक्तिः**—तथा भवतु । (इति निष्क्रान्ता ।)

**राजा**—(सोत्कण्ठम् ।) कथं गतवती भगवती । (स्मृतिं प्रति ।) सखि, सर्वदा हृदि संनिहिता भव ।

**स्मृतिः**—तह । (ख) (इति निष्क्रान्ता ।)

(प्रविश्य)

**दौवारिकः**—देव, एसो अमच्चो भुत्तवन्तेण विदूसएण अणुगदो आअच्छदि । (ग)

(ततः प्रविशति मन्त्री विदूषकश्च ।)

**मन्त्री**—भोः, साधु भुक्तं भवता ।

**विदूषकः**—देवीए बुद्धीए साहुपडिवेसणं किदं जहमणोरहं उदरं पूरिअम् । (घ) (सहर्षं संस्कृतमाश्रित्य ।)

भूमौ साधु वितत्य गारुडमणिश्यामं कदल्या दलं
शाल्यन्नं घृतपक्कफाणितमथापूपैः सहात्रार्पितम् ।
धन्या एव हि सूपपायसमधुक्षीराज्यदध्यन्वितं
नानाशाकयुतं फलैश्च मधुरैरेवं सदा भुञ्जते ॥ २५ ॥

**मन्त्री**—भुक्तवतोऽप्येवमिहादरश्चेत्किमुत बुभुक्षितस्य । (राजानमुपसृत्य ।) विजयतां देवः । देवानुज्ञया सर्वेऽपि सामन्ता यथार्हं संभाविताः । अयमपि वटुराकण्ठमभीप्सिताभ्यवहार्येण भोजितो देव्या । तद्देवेनापि स्नानपूजनभोजनादिविधिर्निर्वर्त्यताम् ।

---

(क) भगवति, अवहितास्मि ।

(ख) तथा ।

(ग) देव, एषोऽमात्यो भुक्तवता विदूषकेणानुगत आगच्छति ।

(घ) देव्या बुद्ध्या साधुपरिवेषणं कृतं यथामनोरथमुदरं पूरितम् ।

**राजा**—तर्ह्यत्रैवावस्थीयतां भवता । अहमपि प्रकृतमाह्निकं निर्वर्त्यागच्छामि । (इति दौवारिकेण सह निष्क्रान्तः ।)

(नेपथ्ये ।)

अभ्यक्तः स्नापिताङ्गः शुचिवसनधरो जप्यमन्त्राञ्जपित्वा
देवानभ्यर्च्य भक्त्या घुमघुमितवपुश्चन्दनैश्चन्द्रमिश्रैः ।
रज्यत्ताम्बूलपूर्णाननसरसिरुहो रम्यमारामभागं
साकं देव्यैष राजा प्रविशति सुलभो यत्र दोलाविहारः ॥ २६ ॥

**मन्त्री**—(आकर्ण्य ।) यत्र महाराजस्तिष्ठति तत्रैव गच्छामः । (इति विदूषकेण सह परिक्रामति ।)

(ततः प्रविशति देव्या सह राजा ।)

**राजा**—देवि, पश्य पश्य रामणीयकमारामस्य ।
क्रीडच्चिक्रीडदन्तक्षतविवरगलन्नालिकेराम्बुधारा-
संपूर्णावालपुष्प्यत्फलडुहुकदलीदाडिमीमातुलुङ्गा ।
संपुष्प्यत्पूगपाली परिमलमिलितोत्फुल्लमालत्युदञ्च-
त्सौरभ्योच्छ्रायलभ्यश्रमशमपथिका सेयमारामसीमा ॥ २७ ॥

**देवी**—मलअपवणचलिदतरुलदापुप्फगन्धा दिसासु विसप्पन्ति । इदो तदो परिब्भमन्तो भमरा कलं कूजन्दि । (क)

**राजा**—युक्तमाह भवती ।
कुरबककलिका विलोकमाने तरुणपिके मृदु गायति द्विरेफे ।
नटति किल मुहुः कृतोपदेशा मलयमहीध्रभवेन मारुतेन ॥ २८ ॥
देवि, सर्वतश्चारय चारुसरोरुहदलस्मयमुषी चक्षुषी ।
कंदर्पागममन्त्रपाठमुखरे पुंस्कोकिले कानन-
श्रीपाणिग्रहमङ्गले सति मधोर्देवस्य दीप्तौजसः ।
वह्नौ पाटलकान्तिपल्लवमये स्मेरप्रसूनोत्करः
प्रक्षिप्तस्य मतिं न किं वितनुते लाजव्रजस्याधुना ॥ २९ ॥

---

(क) मलयपवनचलिततरुलतापुष्पगन्धा दिशासु विसर्पन्ति । इतस्ततः परिभ्रमन्तो भ्रमराः कलं कूजन्ति ।

मन्दारबकुलचम्पककुरवकसहकारमञ्जरीलोलः ।
अलिनिकरः केलिश्लथवनलक्ष्मीकेशपाश इव लसति ॥ ३० ॥

**देवी**—पेक्खदु भवं । (क)

किअमाले टिट्टिभओ रसालरुक्खम्मि कोइलो वसइ ।
णीवविडवे सिहण्डी जम्बूसिहरे सुओ एक्को ॥ ३१ ॥

**विदूषकः**—(उपसृत्य ।) जेदु वअस्सो । देवि, सोत्थि भोदीए । (ख)

**मन्त्री**—देव, विजयी भव । देवि, जयतु भवती ।

**राजा**—अत्र निषीदतु वयस्यः । इहास्यताममात्येन ।

**मन्त्री**—(उपविश्य उद्यानभूमिमभितो विलोक्य ।) आश्चर्यमाश्चर्यम् ।

इहोद्याने तादृक्पशुपतिदयासादितमहा-
महिम्नस्ते सेवारसपरवशाः सर्वत इमे ।
यथास्वं पुष्प्यन्तो युगपदृतवः संनिदधते
प्रसङ्गादत्राहं कतिचन वदाम्यार्तवगुणान् ॥ ३२ ॥

**राजा**—अवहिताः शृणुमस्तावत् । (पुरो विलोक्य ।) मन्त्रिन्, पश्य पश्य ।

स्फुटकुटजमन्दहासा कदम्बमुकुलाभिरामरोमाञ्चा ।
नीलाम्बुदकुचविगलद्घनपुष्पा विहरतीव वनलक्ष्मीः ॥ ३३ ॥

**मन्त्री**—राजन्, तर्हि वर्षा एताः । पित्तसंचयोऽत्र भवति । एवं हि ऋतुचर्या भिषजो भाषन्ते ।

**राजा**—कथमिव ।

**मन्त्री**—

शंसन्ति भाद्रपदमाश्वयुजं च वर्षा-
स्तास्वौषधिप्रचुरता सुदृशोऽल्पवीर्याः ।

---

(क) पश्यतु भवान् ।

कृतमाले टिट्टिभको रसालवृक्षे कोकिलो वसति ।
नीपविटपे शिखण्डी जम्बूशिखरे शुक एकः ॥

(ख) जयतु वयस्यः । देवि, स्वस्ति भवत्यै ।

वीर्यं प्रसन्नमसुमत्सु च शीतवाता-
विष्टेषु तत्र शिखिनोदयते विदाहः ॥ ३४ ॥

स एव पित्तसंचयमापादयति।

**राजा**—शरदि कथम्।

**मन्त्री**—

मासौ शरत्कार्तिकमार्गशीर्षौ तत्राभ्रकार्श्ये सति पङ्कशोषः।
विलापितः पित्तचयोऽर्कभासा सपैत्तिकं व्याधिकुलं प्रसूते ॥ ३५ ॥

**राजा**—हेमन्ते कीदृशो रोगः।

**मन्त्री**—श्रूयताम्।

हेमन्तः पौषमाघाविह भवति बलं वीर्यमप्यौषधीनां
स्निग्धाश्चापः प्रसन्ना भृशगरिमभृतो याः पिबन्त्यङ्गभाजः।
मन्दांशुत्वाच्च भानोः सहिममरुदुपस्तम्भिताङ्गेषु देहि-
ष्वेषु स्नेहाद्विदग्धाद्भवति हिमभराच्छ्लेष्मणः संचयश्च ॥ ३६ ॥

**राजा**—कदा पुनरयं श्लैष्मिकान्व्याधीञ्जनयति।

**मन्त्री**—फाल्गुनचैत्रमासरूपे वसन्ते यतोऽर्करश्मिप्रविलापितः श्लेष्मसंचयोऽस्मिन्नृतौ भवति। एवं च

निःसारा रौक्ष्यभाजो दधति च लघुतामोषधीनां समूहाः
सर्वे ते ग्रीष्मसंज्ञां भजति किल ऋतौ ज्येष्ठवैशाखरूपे।
तस्मिन्सूर्यप्रतापग्लपिततनुभृतां लाघवाच्चापि रौक्ष्या-
ज्जन्तूनां पीयमानं जनयति सलिलं संचयं मारुतस्य ॥ ३७ ॥

स संचयः प्रावृषि शीतवातवर्षेरितो वातिकरोगकारी।
क्लिन्नाङ्गभाजां पयसैव नित्यं प्रकोपहेतुस्त्रयसंचयस्य ॥ ३८ ॥

**राजा**—कौ मासौ प्रावृट्।

**मन्त्री**—आषाढश्रावणौ तथा भिषग्भिरुच्यते।

**राजा**—कदा पुनरेषामुपशमः।

**मन्त्री**—सोऽप्येतेषां ज्ञातव्य एव स्वामिना । तद्यथा—

हेमन्ते किल पैत्तिकामयशमो ग्रीष्मे कफोद्यद्रुजः
शान्तिर्वातिकरोगशान्तिरुदयेद्वर्षात्यये केवलम् ।
एवं षड्तुषु स्वभावजतया व्याख्यायि तुभ्यं मया
पित्तश्लेष्मनभस्वतां सह चयेनापि प्रकोपः शमः ॥ ३९ ॥

अपि च ।

रजनीमुखार्धरात्रप्रत्यूषा नक्तमहह पूर्वाह्णः ।
मध्याह्नोऽप्यपराह्णो वर्षाद्याः षट् प्रकीर्तिता ऋतवः ॥ ४० ॥

एष्वपि पित्तश्लेष्मवातानां संचयप्रकोपशमाः प्राग्वदेव ज्ञातव्याः ।

**राजा**—अस्त्वेतत् । दौवारिक, आन्तःपुरिकं जनं प्रवेशय ।

**विदूषकः**—किं उक्कण्ठिदो भवं दोलाविहारस्स । (क)

**राजा**—स्मारितं भवता । तथैव क्रियते । मन्त्रिविन्यस्तसमस्तकार्यभरस्य मम विहारादृते कोऽन्यो व्यापारः ।

**मन्त्री**—देव्या सह दोलामधिरोहतु महाराजः । दौवारिक, पद्ममुखीं चन्द्रमुखीं च चेटीमानय ।

**दौवारिकः**—तथा । (इति निष्क्रम्य चेटीभ्यां सह प्रविशति ।)

(राजा देवी च दोलाधिरोहणं नाटयतः ।)

**मन्त्री**—(चेट्यौ प्रति ।) गायन्त्यौ दोलयतं भवत्यौ ।

**प्रथमा**—

जअइ महुतुन्दिरगुणो सुरहिसरो महुरकम्मुओ वीरो ।
जस्स खु वि जअपताआ सामारुणवामदक्खिणावअवा ॥ ४१ ॥(ख)

**विदूषकः**—(सकोपम् ।) आः दासीए पुत्ति, वालिसा क्खु तुमं । जह अत्थवोधो ण होदि तह पढिदम् । (ग)

---

(क) किमुत्कण्ठितो भवान्दोलाविहाराय ।

(ख) जयति मधुतुन्दिलगुणः सुरभिशरो मधुरकार्मुको वीरः ।
यस्य खल्वपि जयपताका श्यामारुणवामदक्षिणावयवा ॥

(ग) आः दास्याः पुत्रि, बालिशा खलु त्वम् । यथार्थबोधो न भवति तथा पाठितम् ।

**राजा**—वयस्य, जयति भ्रमरगुणः पुष्पबाण इक्षुचापो मन्मथः यस्यार्धनारीश्वररूपा विजयपताकेति पद्यार्थः ।

**विदूषकः**—(सशिरःकम्पम् ।) जुज्जइ । (क)

**द्वितीया**—

कैरवणिद्दाभङ्गे चओरतिह्णाणिवारणे अ पडु ।
सो को वि जअउ देवो पेक्खन्तणिडालपुरुसमौलिमणी ॥४२॥(ख)

**विदूषकः**—एदस्स पज्जस्स अत्थो वण्णीअदि । (ग)

**राजा**—कथमिव ।

**विदूषकः**—कैरवविआसआरी चकोरतित्तिआरी भअवं तस्स तिणेत्तस्स सिहामणी चन्दो जअइ त्ति । (घ)

**मन्त्री**—सम्यगुक्तः पद्यार्थो भवता ।

**विदूषकः**—(सगर्वम् ।) पुव्वपज्जस्स वि मह अत्थबोधो जादो जेव्व । वअस्सेण अत्थो वण्णीअदि ण वेति तुह्णि ठिदम् । (ङ)

**मन्त्री**—(विहस्य ।) कः संदेहः ।

**विदूषकः**—अमच्च, किं उवहससि मं । एदं सुणादु भवं । घरणीए विअ मह घरणीए अनक्खराए वाआए वि मह अत्थबोधो होइ । (च)

(सर्वे हसन्ति ।)

---

(क) युज्यते ।

(ख) कैरवनिद्राभङ्गे चकोरतृष्णानिवारणे च पटुः ।
स कोऽपि जयति देवः पश्यन्निटालपुरुषमौलिमणिः ॥

(ग) एतस्य पद्यस्यार्थो वर्ण्यते ।

(घ) कैरवविकासकारी चकोरतृप्तिकारी भगवान् तस्य त्रिनेत्रस्य शिखामणिश्चन्द्रो जयतीति ।

(ङ) पूर्वपद्यस्यापि ममार्थबोधो जात एव । वयस्येनार्थो वर्ण्यते न वेति तूष्णीं स्थितम् ।

(च) अमात्य, किमुपहससि माम् । एतच्छृणोतु भवान् । धरण्या इव मम गृहिण्या अनक्षराया वाचाया अपि ममार्थबोधो भवति ।

(नेपथ्ये)

**वैतालिकः—**

गन्धेन स्फुटकैरवाकरभुवा विष्वग्विकर्षन्नली-
न्स्वच्छन्दं दिवसावसानपिशुनो मन्दानिलः स्यन्दते ।
भावी नौ विरहाधिरित्यविदितेऽप्यन्तः शुचा स्थीयते
कोकेन प्रियया सहैकनलिनीनालाधिरूढेन च ॥ ४३ ॥

**द्वितीयः—**

मोक्तुं तापमिव प्रतीचिजलधौ मज्जत्ययं भानुमा-
न्रागः कोऽपि विजृम्भते घनपथे चित्ते वधूनामपि ।
आर्द्रांगाः कुपितामुपासिसिषते कान्तां विलासी जनो
भक्त्या कर्मठभूमिदेवपरिषत्संध्यां च सायंतनीम् ॥ ४४ ॥

**मन्त्री**—अहमपि संध्योपासनार्थं गच्छामि ।

**विदूषकः**—अहं पि । (क)

**राजा**—अहमप्यन्तःपुरमेव गच्छामि ।

(इति निष्क्रान्ताः सर्वे ।)

इति चतुर्थोऽङ्कः ।

---

पञ्चमोऽङ्कः ।

(ततः प्रविशति धावन्मत्सरः ।)

**मत्सरः**—(विचिन्त्य ।)

जीवे साधयितुं रसं पशुपतेर्ध्यानस्य सिद्धौ स्थिते
तद्विघ्नाचरणाय षट् प्रणिहिताः कामादयः पाण्डुना ।
ते गत्वापि वयं परैरभिभवं प्राप्ता यथा पूर्वजाः
पञ्चापि व्यगलन्नहं च चकितः षष्ठः पलाय्यागतः ॥ १ ॥

इतःपरं किं करोमि मन्दभाग्यः ।

किं पाण्डोर्निकटं व्रजामि धृतिमानेवं कृते भ्रातृभि-
स्तस्याग्रे कथमस्तकार्यनिकरः संदर्शयिष्ये मुखम् ।

---

(क) अहमपि ।

राजानं यदि वानुवर्तितुमये किं राजतन्त्रेऽमुना
पृष्टे चोत्तरयामि हन्त शरणं कं वा करिष्येऽधुना ॥ २ ॥

तत्सर्वथा नास्ति दैवानुकूल्यम् । (विचिन्त्य ।) भवतु । वनमेव गत्वा तपश्चरणेनात्मानं कृतार्थयामि । यतः ।

अश्रान्तप्रवहत्तुषारतटिनीशीतालुशातोदरी-
संघायासगृहीतशोषितसमित्संवर्धिताग्नित्रयाः ।
प्रालेयाचलकाननोटजगता विप्रास्तृतीयाश्रमे
स्थित्वापुः कति वाञ्छितानि तपसामाश्चर्यया चर्यया ॥ ३ ॥

(पुरो विलोक्य ।)

समन्तादालोके सवितुरुपगच्छत्युपशमं
गुरोर्दिष्ट्या लब्धे महत इव सेवापरिचये ।
तमः सर्वामुर्वीं स्थगयति खलानामिव मतिं
तदस्यामत्यर्थं न भवति विवेकः सदसतोः ॥ ४ ॥

तथापि पश्यतो मम द्वावपि पुरुषौ गृह्येते । (कतिचित्पदानि गत्वा निपुणं निरूप्य ।) हन्त, सकिंकरः कुष्ठोऽयमागच्छति । स्वजनेनाप्यनेनाहमिदानीं संभाषणाय जिह्रेमि । तदस्य दर्शनं परिहरणीयम् । मार्गोऽपि न दृश्यते निलीय गन्तुम् । भवत्वत्रैव स्थाणुतामवलम्ब्य तिष्ठामि । गते चैतस्मिंस्त्वरितपदं व्रजेयम् । (इति तथा स्थितः ।)

(ततः प्रविशति किंकरेणानुगम्यमानः कुष्ठः ।)

**कुष्ठः**—(सदृष्टिक्षेपम् ।) किमिदं दृश्यते पश्य ।

**किंकरः**—(सान्द्रे तमसि न्यञ्चितपूर्वकायः पश्यन् ।)

पश्यामि न करचरणं न चात्र पश्यामि चलनमपि किंचित् ।
वैशिष्ट्यमूर्ध्वतायाः पश्यामि स्थाणुरयमतो भवति ॥ ५ ॥

**कुष्ठः**—भद्र, वदन्ति खल्वेवं नीतिशास्त्रविदः ।

आक्रान्ते रिपुभिः पुरेऽन्नसलिलादीनामभावाद्बहि-
स्तान्यानेतुमशब्दकल्पितपदन्यासास्तमस्यागताः ।

संप्राप्ते सति संनिधिं परिजने द्राग्विभ्रतः स्थाणुतां
लीनत्वं दधतोऽथवाधिसरणि स्वं साधयन्तीप्सितम् ॥ ६ ॥

अतः सम्यङ्निरूपय ।

(किंकरो गत्वा मत्सरं हस्ते गृह्णाति ।)

**मत्सरः**—(स्वगतम् ।) मम खलु माशब्दकीयमवस्था संप्राप्ता । यद्यहं शब्दं कुर्यां ततः स्वरेण मां जानीयुरतोऽविकटं प्रविष्टेन मलिम्लुचेन गृहीत उरभ्र इव तूष्णीमासिष्ये । (इति हस्तं विधुनोति ।)

**किंकरः**—चोर, दृढं गृहीतोऽसि । वृथा ते हस्तधूननम् । (कुष्ठं प्रति ।) आवुक, पुरुषः पुरुषः । गृहीत एष दृढं मया ।

**कुष्ठः**—सफलो मे तर्कः । दृढबद्धमेनमत्रैवानय ।

**किंकरः**—एहि रे चोर, एहि । रक्तकरवीरमालामामुच्य कण्ठे त्वां संभावयामि । अहो तव तपःप्रभावः । गङ्गाचन्द्रादिपरिकरं विना शूली भविष्यसि ।

**मत्सरः**—(स्वगतम् ।)

दग्धो मनोरथो मे बत चिन्तितमन्यदापतितम् ।

(हर्षमभिनीय ।)

मोक्ष्याम्यथवा शोकाद्देहवियोगेन भाविना दैवात् ॥ ७ ॥

(किंकरो बलान्मत्सरमाकृष्य कुष्ठनिकटं गमयति ।)

**कुष्ठः**—भद्र, दीपिकासमीपमानय क एष इति पश्यामि । साधारणश्चेन्मोक्ष्याम एनम् ।

**किंकरः**—आर्य, ज्ञातचर इव दृश्यते । (इति दीपिकासमीपमानयति ।)

**कुष्ठः**—(निरूप्य ।) अहो रूपमिदं मत्सरस्येव लक्ष्यते, वेषस्तु कापालिकस्य । तथाहि ।

भस्मानुलेपधवलीकृतसर्वगात्रः
श्वेतां वहञ्छिरसि नारकपालमालाम् ।
एकेन शूलमितरेण दधत्कपालं
हस्तेन तिष्ठति पुरो मृगचर्मवासाः ॥ ८ ॥

भवतु । एनं संबोधयामि । सखे, कीदृशीयमवस्था ते संप्राप्ता ।

मत्सरः—(आत्मगतम्।) हन्त, ज्ञातोऽस्म्यनेन मन्दभाग्यः। ज्ञातस्याधुना ममात्मापलापोऽनुचितः। (प्रकाशम्।) तस्यैवेयं दशा दैवहतकस्य।

कुष्ठः—(किंकरं प्रति।) भद्र, सखायं मे मत्सरः। तन्मुञ्चैनम्। (किंकरस्तथा करोति।)

कुष्ठः—सखे मत्सर, कथं गृहीता भवता कापालिकतापिशाचिका।

मत्सरः—सखे, सत्यमाह भवान् कापालिकतापिशाचीति। या खलु मामाकृष्य मरणसुखाद्दुरवस्थामिमां प्रापितवती।

कुष्ठः—

सुखं मरणमप्येवंविधं तव भविष्यति।
संगतिः स्वजनेनापि कथं तद्दुर्दशा परम्॥ ९॥

(मत्सरस्तूष्णीमधोमुखस्तिष्ठति।)

कुष्ठः—सखे,

न वदसि किमुत्तरं मे कथय कथयितुं क्षमं यदि तवेदम्।
श्रुत्वा विचारयिष्ये त्रपया चालं भिया चालम्॥ १०॥

मत्सरः—सखे, मम किमुपरोधेन। किमन्यद्वनगमनादृते कर्तव्यम्।

कुष्ठः—

कापालिकताद्य कुतः कुतस्तरां ते वने गमनम्।

मत्सरः—

सख्युपरोधेऽरिक्ते सर्वं संभाव्यतेऽभिमानजुषाम्॥ ११॥

कुष्ठः—किं शत्रुषूपजापार्थं प्रवृत्ताः सखायस्ते निरुद्धाः।

मत्सरः—अथ किम्।

कुष्ठः—कथय कीदृशो वृत्तान्तः।

मत्सरः—(स्वगतम्।)

कथयामि किं रहस्यं पर्यालोचितममात्यवर्येण।
उपजापस्य कथं वा जातामाकाशचित्रतामरिषु॥ १२॥
अथवा तपसितुमिच्छन्सख्युः कुष्ठस्य गोपयामि यदि।
तद्द्रोहस्य न किं स्यादास्थानाय स्वहस्तदानमिदम्॥ १३॥

अतः सर्वमस्मै निवेदयामि । यदयमपि तस्य पाण्डोर्विश्वासस्थानमेवेति । (प्रकाशम्।) सखे, तवाप्यकथनीयं नाम किमस्ति श्रूयताम् ।

विज्ञानप्रहितेन राजहतकेनासन्निसर्गद्विषो
यावत्साधयितुं रसं कथमपि ध्यानस्य सिद्ध्या क्रमात् ।
स्वच्छन्देन च पुण्डरीकनगरीं गत्वा मनोद्वारतः
साम्बस्यैव महेश्वरस्य दृढया भक्त्या प्रसादात्स्थितम् ॥ १४ ॥

तदिदमाकर्ण्य मन्त्रिणा पाण्डुना एतस्य विघ्नाचरणं मनसः पारतन्त्र्यं विना नोपपद्यत इति तदर्थं कामादयः षडेव प्रभवन्तीति त एव वयं प्रेषिताः । अस्माभिश्च तत्र सखिस्नेहवशादङ्गीकृतं मनसः पारतन्त्र्यकरणम् ।

कुष्ठः—ततस्ततः ।

मत्सरः—ततश्च तेष्वहमेको मन्दभाग्य इमां दुरवस्थामनुभवामि ।

कुष्ठः—अथ कामस्य कावस्था ।

मत्सरः—सखे, किं कथयामि मन्त्रिहतकस्य दुर्बुद्धिविलसितम् ।

श्रुत्वा पित्तकफात्मपङ्गुयुगलस्पष्टोपजापं तथा
हृद्रोगस्य विमोचनं च सचिवः स्वात्किंकराद्विस्मितः ।

(आकाशे लक्ष्यं बद्ध्वा।)

पाण्डो साधु भवान्यदेव परमेशाराधने साधनं
चेतःस्थैर्यवदुद्यतस्तदरिणा तद्भेत्तुमित्यब्रवीत् ॥ १५ ॥

इतःपरमपि स बुद्धिमान्पाण्डुर्मम रसौषधसेनासंधानव्यापृततां तां राज्ञ एकाकितां मनसश्चञ्चलतां निरूप्य प्रबलांस्तद्भेदिनः कामादीन्प्रेषयिष्यतीति मत्वा किंकरमुखेनैव स्वनागरिकाय विचाराय नगरपर्यटनमपहाय तत्रैव कामादिभेदने सावधानेन स्थेयमिति विज्ञानमन्त्रिणा समादिष्टम् ।

कुष्ठः—ततो विचारेण किं कृतम् ।

मत्सरः—तेन च तत्सदृशबुद्धिना कामः कामपि योगकलामुत्पाद्योपजापेन ध्यानविषयतामापादितः ।

कुष्ठः—हा कामस्यापि परिणतिः । अथ क्रोधस्य को वृत्तान्तः ।

**मत्सरः**—

कमपि प्रदर्श्य दोषं विचारहतकेन सोऽपि च क्रोधः।
अस्मास्वेव प्रत्युत झटिति परावृत्तिमेव नीतोऽभूत्॥ १६॥

**कुष्ठः**—हा क्रोध, त्वमपि सखीनेवाभिद्रोग्धुं प्रवृत्तः। अथ लोभः कथम्।

**मत्सरः**—यादृशः कामः।

**कुष्ठः**—

साधु लोभ सखे साधु सम्यग्व्यवसितं त्वया।
यादृशीं प्रापितोऽवस्थां कामस्त्वमपि तादृशीम्॥ १७॥

अथ दम्भः क्व।

**मत्सरः**—

उपजप्तोऽपि बहुधा तैरस्माकं स केवलम्।
सौहार्दमुपरुन्धानः शस्त्रघातहतोऽजनि॥ १८॥

**कुष्ठः**—धन्योऽसि दम्भ, धन्योऽसि। यतः सख्युरनृणतां गतोऽसि। अथ कथय किमध्यवसितं मदेन।

**मत्सरः**—मदस्तु निगृह्य कारागारे स्थापितः।

**कुष्ठः**—ततः।

**मत्सरः**—निर्गते च पुण्डरीकनगराद्राजनि नर्मकर्मण्येनमुपयोक्ष्यामह इति।

**कुष्ठः**—मत्सर, एवंस्थिते शत्रुमण्डलादेक एव त्वं कथं निर्गतोऽसि।

**मत्सरः**—शृणु तावत्। नहि मम स्वेच्छया ततो निर्गमो जातः। यतो रससिद्ध्यनन्तरं संनद्धे च सैन्ये इममेव मत्सरमत्रत्यवृत्तान्तहारिणं करिष्याम इति निगृह्य स्थापितोऽस्मि।

**कुष्ठः**—तर्हि सखे, तवागमनमिदानीं तत्र रससिद्धिं सेनासंनाहं च सूचयति।

**मत्सरः**—एवमेतत्। समनन्तरमेव

राज्ञः संनिधिमृच्छ भद्र कथय त्वं पाण्डुमाविष्कुरु
स्वामिप्रीतिमुपेहि मन्त्रकलनाकौशल्यमप्यश्लथम्।

मा ग्लासीरिति मास्तु भीतिरिति मामुक्त्वा चमूनायका-
न्नामग्राहमपि प्रदर्श्य नगरान्निःसारितोऽहं शनैः ॥ १९ ॥

**कुष्ठः**—

प्रज्ञोन्मदः स सचिवस्तदनर्थो भविष्यति ।
गत्वा निवेद्यतां राज्ञे मन्त्रिणेऽहं निवेदये ॥ २० ॥

**मत्सरः**—

तप्स्यमानस्तपः सख्युरविकीर्त्यमिदं तव ।

**कुष्ठः**—

फलिष्यति तपः किं ते न चेत्सख्यमजीगणः ॥ २१ ॥

ग्लानिर्मनसस्तपसे प्रवर्तयति शक्तिमन्तमपि पुरुषम् ।
अग्लानिस्तस्य यदि क्रमाहतस्यापि साधयति कार्यम् ॥ २२ ॥

तस्मादग्लानिरेव क्रियताम् ।

**मत्सरः**—का गतिः । (इति कुष्ठेन किंकरेण च सह निष्क्रान्तः ।)

शुद्धविष्कम्भकः ।

---

(ततः प्रविशति पाण्डुः कुष्ठश्च ।)

**पाण्डुः**—(सामर्षम् ।)

अग्राह्यमल्पमतिभिः सचिवस्य तस्य
वैयात्यमूर्जितमहो किमिति ब्रवीमि ।
यः प्रेषयन्किमपि तादृशवाचिकं द्रा-
गुन्मस्तकं निजमसूचयदूष्मलत्वम् ॥ २३ ॥

जीवसमाधिभङ्गाय प्रेषितेषु कामादिष्वपि तथाभूतेषु भक्तिमूला खल्वेतस्याभिमतसिद्धिरिति तद्विघाताय प्रेषितो व्याक्षेपो नाम गूढचारः । स गतोऽपि तत्सख्या श्रद्धयापहतो व्यर्थयत्नोऽभूत् । किमतः प्रतिविधातव्यम् ।

**कुष्ठः**—मम त्वेवं प्रतिभाति ।

मन्त्रिणामूष्मलत्वं हि पश्यद्भिः प्रतिमन्त्रिभिः ।
शौर्येण प्रतिकर्तव्यं तथा चेदुचितं भवेत् ॥ २४ ॥

**पाण्डुः**—मैवं वादीः । परस्य मन्त्रशक्तिः स्वस्य मन्त्रशक्त्यैव प्रतिह-

न्तव्या । यथा खलु शास्त्रविद आचक्षते । यो यादृशेन साधनेन प्रहरति स तादृशसाधनेनैव प्रतिहन्तव्य इति । अतो मन्त्रकृतं संविधानमुपायान्तराभावे शौर्येण प्रतिक्रियतामित्यन्तिममिदमौपयिकम् । अहमिदानीं तदुचितं प्रतीकारमालोचयामि ।

**कुष्ठः**—आलोचयतु भवान् ।

आकर्णयिष्यति यदा वृत्तान्तमिदं स मत्सरमुखेन ।
दीपितरोषो हृदये देवोऽपि समागमिष्यति तदैव ॥ २९ ॥

तस्य पुरस्तादस्मदायत्तमुपायं सफलीकरिष्यामः ।

**पाण्डुः**—अस्त्वेवम् । भवानवहितस्तिष्ठतु ।

**कुष्ठः**—तथा । (इति निष्क्रान्तः ।)

**पाण्डुः**—कः कोऽत्र भोः ।

(प्रविश्य ।)

**गलगण्डः**—आज्ञापय करणीयम् ।

**पाण्डुः**—भद्र, अपथ्यतां प्रवेशय ।

**गलगण्डः**—(निष्क्रम्य पुनस्तया सह प्रविश्य ।) आर्य, कटकसीमनि देवः प्राप्त इति वल्लभपालो विज्ञापयति ।

**पाण्डुः**—(अपथ्यतां प्रति । अपवार्य ।) अये, त्वं कञ्चिन्महति राजकार्ये नियोजयितव्यासि ।

**अपथ्यता**—अवहिदह्मि । (क)

**पाण्डुः**—जीवं प्रविश्य तमपथ्येष्वाहारविहारादिषु नियोजय ।

**अपथ्यता**—तह । (इति निष्क्रान्ता ।)

**पाण्डुः**—(पुरोऽवलोक्य ।) अये, देवः प्राप्तः । गलगण्ड, गच्छाग्रतः ।

(ततः प्रविशति राजयक्ष्मा मत्सरश्च ।)

**पाण्डुः**—(प्रणम्य ।) राजन्, कथमेतत् ।

तन्वन्पुनः पुनरपि भ्रुकुटिं ललाटे
निःसीमनिःश्वसितमुच्चलिताधरोष्ठम् ।

---

(क) अवहितास्मि ।

देवस्य शंसति मुखाम्बुजमन्तरङ्गे
रूढां रुषा रिपुजने सहसैव चिन्ताम् ॥ २६ ॥

**राजा**—पाण्डो, विजने प्रासादे समुपविश्य सर्वं बोधयिष्यामि ।

**पाण्डुः**—गलगण्ड, प्रासादमार्गमादेशय ।

**गलगण्डः**—इत इतो देवः ।

**पाण्डुः**—(विलोक्य ।) राजन्, आरुह्यतामयम् ।

श्रीकण्ठक्षितिधरशृङ्गभङ्गदायी प्रासादः शिखरविराजिहेमकुम्भः ।
सोपानैः स्फटिकमयैः सुखेन गम्यो रम्योऽयं भवति कलस्वनैः कपोतैः॥२७॥

(सर्वे प्रासादारोहणं नाटयित्वोपविशन्ति ।)

**राजा**—पाण्डो, किं न त्वया श्रुतो मत्सरात्परवृत्तान्तः ।

**पाण्डुः**—श्रुतं कुष्ठमुखात्पुरवृत्तं तं विशेषतः श्रोतुमिच्छामि ।

**राजा**—पाण्डो, श्रूयतां मत्सरमुखात् । ततः समुचितं प्रतीकारं विधास्यसि । मत्सर, कथय ।

**मत्सरः**—

संनद्धैः पुररक्षणे परिगतं प्राणादिभिः पञ्चभि-
स्तत्तद्देशगतैश्च यत्ननिचयैस्तद्दुष्प्रवेशं पुरम् ।
रन्ध्रान्वेषितया कथं कथमपि प्राप्ताः स देवाज्ञया
यत्रान्तर्मुखतामुपेत्य नियतं जीवस्तपोऽतप्यत ॥ २८ ॥

**राजा**—के ते प्राणादयः कतिविधाः कुत्र गताः किंनामधेयाश्च । कानि च तानि यत्नानि कीदृशानीति सप्रकारमावेदय ।

**मत्सरः**—

हृदयसततावासः प्राणो महाबलविक्रमः
सकलमपि तद्यस्यायत्तं पुरं सपरिच्छदम् ।
कलितनिलयोऽपानो मूलस्थले हितकृद्विभो-
र्वसति च समानाख्यो गुल्फे बली घनशूलभृत् ॥ २९ ॥

किं च ।

कण्ठोपकण्ठे निवसन्नुदानः करोत्यकुण्ठां किल राजभक्तिम् ।
व्यानस्तु सर्वत्रचरः पुरेऽस्मिन्करोति जीवे सकलानुभूतिम् ॥ ३० ॥

शल्यानि यानि किल देहभृतां शरीरं
नानाङ्गकेषु महतीं प्रथयन्ति बाधाम् ।
तेषां समुद्धरणकर्मणि साधनानि
यन्त्राणि कानिचन संघटितानि तत्र ॥ ३१ ॥

यानि किल

अर्शोभगंदरमुखस्य रुजां गणस्य
क्षाराग्निशस्त्रपरियोजनमङ्गरक्षाम् ।
बस्त्यादिकर्मघटकादि च कार्यजातं
कुर्वन्त्यपायरहितानि च तत्र तत्र ॥ ३२ ॥

अपि च ।

यद्धर्यक्षसदृक्षरूक्षवदनं तत्सिंहवक्त्राभिधं
यच्चर्क्षस्य मुखाभभीषणमुखं भल्लूकवक्त्रं हि तत् ।
तत्कङ्काननामकं प्रतिभयं यत्कङ्कतुल्याननं
यन्त्रं काकमुखं तदेव यदपि ध्वाङ्क्षातितीक्ष्णाननम् ॥ ३३ ॥

विस्तीर्णानि नवद्वयाङ्गुलपरीणाहानि कण्ठे परं
संनद्धानि च कीलकैः सुघटितैर्मूलेऽङ्कुशाभानि च ।
पर्यन्तेषु पुनर्मसूरसदृशाकाराणि तिष्ठन्त्यहो
तत्र स्वस्तिकनामकानि कतिचिद्यन्त्राणि घोराणि च ॥ ३४ ॥

तान्येव सुदृढान्यस्थिलग्नशल्यापकर्षणम् ।
कुर्वन्ति स्वस्तिकाख्यानि यन्त्राणि हि शरीरिणाम् ॥ ३५ ॥

अपि च ।

एकान्येकमुखान्यपि नाडीयन्त्राणि सूक्ष्मसुषिराणि ।
स्रोतोगतशल्यानां दर्शनचूषणविधौ समर्थानि ॥ ३६ ॥

एवमादिभिर्बहुविधैर्यन्त्रनिवहैरन्यैरपि परिगुप्ततया दुर्गममपि पुरं कथंचन प्रविश्य मनसः पारतन्त्र्यकरणाय वयं यावदितस्ततः संचरितुं प्रवृत्तास्तावदेव विज्ञानविधेयेन विचारनाम्ना नागरिकहतकेन परिज्ञाताः ।

पाण्डुः—ततस्ततः ।

**मत्सरः**—ततः कामादिषु तत्र तादृशीं दुरवस्थां प्रपन्नेष्वहमेक एव हतभाग्यतया वैरिवशं गतस्तत्कृतमवमानजातमशरणतया सहमानस्तदीयभटैरितस्ततो विकृष्यमाणस्तदुदितवाचिकमपि निशमयंश्चारवधलिमुखैस्तैरेव कृपया विमुक्तः प्रज्वलदवमानाग्निसंतप्यमानः स्वजनमुखावलोकने कृतलज्जतया क्वचन विजनकाननसीमनि कठोरतपश्चर्यया विनिपातिततनुर्भर्तुरानृण्यं भजेयमिति पुरान्निःसरन्नन्तरा सकिंकरेण कुष्ठेन देवपादमूलं प्रापित इत्येतदवसानं प्रवृत्तेः श्रुत्वा देवः प्रमाणम् ।

**राजा**—कुमार, श्रुतं खलु निरवशेषमस्य मुखात् । किमत्र प्रतिविधेयम् ।

**पाण्डुः**—(विचिन्त्य ।) देव, किमन्यत् ।

सन्तु यन्त्राण्यनेकानि सन्तु वा सैनिकाः परे ।
त्वत्कोपाग्नौ पतङ्गत्वं भजेरन्निति मे मतिः ॥ ३७ ॥

**राजा**—पाण्डो, सत्यमेव किं कालविलम्बेन । सर्वथा प्रविश्यान्तःकोशागारम्

शस्त्रेण सर्वमपि खण्डश एव कृत्वा
गृध्रव्रजाय निखिलं बलिमर्पयामि ।
येनौदनो दिविषदां विकलीकृतोऽभू-
त्किं तस्य मे भयममी कितवा विदध्युः ॥ ३८ ॥

अपि च ।

अमृतनिधिरयं यः सोऽपि मत्पीडितः स-
न्न विसृजति मदीयेनाधिनाद्यापि कार्श्यम् ।
निजविकटजटालीकाननस्थापितस्य
प्रभवति स महेशोऽप्यस्य किं पूरणाय ॥ ३९ ॥

हन्त हन्त ।

स ददाति नाम गिरिशो रसमेतेषामुपासनपराणाम् ।
लब्धेनैतेनास्मानेते नाम प्रशमयन्ति ॥ ४० ॥

(विहस्य ।) अहो विचारचातुरी विज्ञानहतकस्य ।

(आकाशे ।)

अरे विज्ञानहतक,

आश्रित्य यं सततमुत्पतसि स्मयेन
निर्वापयामि तमहं सहसैव जीवम् ।
पश्चाद्विनङ्क्ष्यति भवानपि चाश्रयस्य
नाशान्न सिध्यति किमाश्रयिणोऽपि नाशः ॥ ४१ ॥

**राजा**—कः कोऽत्र भोः, शस्त्रम् । (इत्युत्थातुमिच्छति ।)

**पाण्डुः**—ननु संनिहितमेव शस्त्रम् । तथापि किंचिद्विज्ञापयामि । अस्त्येवायमन्तिमः प्रकारः । अपि तु

त्रिषूपायेषु सत्स्वन्त्यो न युक्त इति तान्त्रिकाः ।
उपायमिममेवातो मनो मे प्रयुयुक्षते ॥ ४२ ॥

**राजा**—कोऽयमुपायः ।

**पाण्डुः**—(कर्णे ।) एवमेवम् ।

**राजा**—भवतु तथा । अस्त्येवैतदनन्तरकर्तव्यम् ।

**पाण्डुः**—देव, मार्गश्रम इव दृश्यते सिद्धं च सर्वं शयनादि ।

**राजा**—त्वमपि स्वकार्येऽवहितस्तिष्ठ । अहमपि भुक्त्वा निद्रास्थानं गच्छामि ।

(इति निष्क्रान्ताः सर्वे ।)

इति पञ्चमोऽङ्कः ।

---

## षष्ठोऽङ्कः ।

(ततः प्रविशति कर्मणा सह कालः ।)

**कालः**—वत्स कर्मन्, जीवस्य राज्ञः पुरबाधनार्थं यक्ष्मराजमन्त्रिणा पाण्डुना प्रयुक्तान्रोगरूपान्भटान्प्रतियुधा जेतुं विज्ञानमन्त्रिणा नियुक्तं सरसतत्प्रतिभटजातं किं करोतीति जिज्ञासते मे हृदयम् ।

**कर्म**—भगवन्, सर्वानुस्यूतस्य तव किं नामाविदितमस्ति ।

**कालः**—भवानपि तादृश एव । महान्खलु तव प्रभावः । तथाहि ।

त्वामज्ञातमनुग्रहाय जगतां देवी विधत्ते श्रुति-
लोकः साधयतीप्सितं भवदनुष्ठानादिहामुत्र च ।
किं चायं समनुष्ठितेन भवता चित्तस्य शुद्धिं गत-
स्तत्त्वं वेदितुमात्मनः प्रभवति त्रय्यन्तसंदर्शितम् ॥ १ ॥

अपि च ।

त्वं नित्यनैमित्तिककाम्यभेदात्स्थित्वा त्रिधानेकफलानि दत्से ।
इन्द्रत्वमिन्द्रस्य विधेर्विधित्वं हरेर्हरित्वं च फलं त्वदीयम् ॥ २ ॥

कर्म—आर्य, अवाङ्मनसगोचरस्तव महिमा ।

सुमतिभिरनुमेयस्त्वं सहस्रांशुगत्या
(सविनयम् ।)　भवति भवदधीनं मद्विधानं जनानाम् ।

भगवन्, किमन्यद्ब्रवीमि ।

परिणमयसि पुंसां दातुमर्थात्मना मां
त्वयि कृतिमति षोढा विक्रियन्ते च भावाः ॥ ३ ॥

किं च ।

त्रैधं जनः शंसति वर्तमानं भूतं भविष्यन्तमहं पुनस्त्वाम् ।
ऐकध्यमापन्नमखण्डरूपमाधारमेषो जगतामवैमि ॥ ४ ॥
निमेषकाष्ठे च कलाक्षणौ च मुहूर्तरात्रिंदिवपक्षमासान् ।
भवत्तनूभृत्त्वयने तथाब्दं युगं च मन्वन्तरमप्यवैमि ॥ ५ ॥

कालः—तदिदानीं पाण्डुविज्ञानमन्त्रिभ्यां युद्धाय नियुक्तानां भटानां विक्रमविलासानवलोक्य चक्षुषी कृतार्थयिष्यावः । पाण्डुना खलु जीवराजे प्रयुक्तो भविष्यतो रोगस्य पुरो भावी बुभुक्षाजनको भस्मकरोगस्तद्गृहीतो राजेति जानामि ।

आवां यथा न विद्युः सर्वेऽपि दिविस्थितावुच्चैः ।
उभयेषामपि युद्धं पश्यावः संलपावश्च ॥ ६ ॥

किं च, ज्ञानशर्मणोपजापितोऽपि राजा भूयो विज्ञानशर्मणा प्रत्यावृत्य पर्यवस्थापितः ।

**कर्म**—भगवन्, कीदृशो ज्ञानशर्मणोपजापः ।

**कालः**—वत्स, श्रूयताम् ।

तत्तत्कार्यविशेषसाधनविधावुक्त्वेतिकर्तव्यतां
जीवस्यास्य विभोः स्वकीयपृतनासंनाहमालोकितुम् ।
निष्क्रान्ते सचिवे कदाचन भजत्येकाकितां राजनि
श्रुत्वा तत्समयं तदन्तिकभुवं स ज्ञानशर्मा ययौ ॥ ७ ॥

अनन्तरमायान्तमवलोक्य दूरादेव

अथ सुचिरवियोगात्संदिहानः सखित्वे
किमपि विवशचेता निर्भरैर्हर्षभारैः ।
कथमपि समुदश्रुर्बाष्पसंरुद्धकण्ठो
वचनमिदमवोचन्मत्तहंसस्वरेण ॥ ८ ॥

चेतः शीतलतामुपैति नयने विस्तारिणी कौतुका-
न्निर्मर्यादमुपैत्यमानिव तनौ कोऽप्यन्तरानन्दथुः ।
बाहू मां परिरम्भणे त्वरयतस्त्वां वीक्ष्य कस्त्वं सखे
पुण्यैः पूर्वकृतैश्चिरान्मम दृशोः पन्थानमारोहसि ॥ ९ ॥

**कर्म**—ततस्ततः ।

**कालः**—ततोऽसौ जीवस्य वचनमिदमाकर्ण्य ज्ञानशर्माकथयत् ।

सोऽहं जीव विभो चिरन्तनसखस्ते ज्ञानशर्मा तथा
प्राणेष्वन्यतमो मुहुस्तव हिताकाङ्क्षी च सर्वात्मना ।
विज्ञानस्य कुमन्त्रितैः परवति त्वय्यव्यवस्थस्थितौ
शान्तस्त्वन्नगराद्विरक्तहृदयः प्रास्थामनास्थावशात् ॥ १० ॥

संप्रति हि ।

दुःसामाजिकबोधनैः कुपदवीसंचारमासेदुष-
स्तेनापज्जलधौ निराश्रयतया राज्ञो वृथा मज्जतः ।
ब्रूते यो न हितं वचोऽप्रियमपि स्वेष्टं निगृह्याग्रहा-
त्स्वामिभ्यः स तु बुद्धिमत्पशुरिति प्राप्नोति मन्त्री प्रथाम् ॥ ११ ॥

अतः किल

विज्ञानशर्महतकस्य वृथा कुमन्त्रै-
घोरामिमां सुमहतीं गतमापदं त्वाम् ।
आकर्ण्य देव हितवागुपदेशहेतो-
रद्यान्तिकं तव गतोऽस्म्यनृणो बुभूषुः ॥ १२ ॥

**कर्म**—ततस्ततः ।

**कालः**—ततश्च राजा सरलप्रकृतितया 'सखे ज्ञानशर्मन्, चिरेण दृष्टोऽसि । त्वत्तोऽपि मे श्रेयःसंपादकः कोऽन्योऽस्ति । तत्कथय प्रस्तुतोचितं हितम्' इति तमन्वयुङ्क्त ।

**कर्म**—ततस्ततः ।

**कालः**—ततो ज्ञानशर्मा राजानमुपह्वरे स्वैरमित्थं बोधयामास ।

शश्वन्नश्वरमेव विश्वविदितं पापप्ररोहस्थलं
मेदोमज्जवसास्थिमांसरुधिरत्वग्रोमकूपं वपुः ।
एतस्मिन्मलमूत्रभाण्डकुहरे हेये मनीषावतां
दुःखे न्यायविदो विमोहमिह के तन्वन्ति नन्वन्तिमे ॥ १३ ॥

जगत्प्रोतं यस्मिन्विविध इव सूत्रे मणिगणः
समस्तं यद्भासा तदपि च विभाति स्फुटमिदम् ।
अखण्डानन्दं यन्निरवधिकसच्चित्सुखमयं
निराकारं यत्तत्त्वमसि परमं ब्रह्म न पुमान् ॥ १४ ॥

तत्तादृशः सुखघनस्य निरञ्जनस्य
सर्वात्मनापि ननु हेयतरे पुरेऽस्मिन् ।
विज्ञानशर्मवचनैर्विपरीतवृत्ते-
र्मन्ये न युक्त इव ते ममताभिमानः ॥ १५ ॥

इत्यादिभिर्बहुविधैरुपपत्तिपूर्वै-
रेतैर्वचोभिरथ तेन रहः प्रयुक्तैः ।
कोपे बले रिपुवधे च बभूव सद्यो
जीवो विरक्तहृदयो विगताभिमानः ॥ १६ ॥

**कर्म**—भगवन्, इत्थं ज्ञानशर्मणोपजप्तस्यापि जीवस्य राज्ञः कथमधुना रिपुवधे प्रवृत्तिः ।

**कालः**—श्रूयताम् । इत्थं ज्ञानशर्मा राज्ञो रहस्युपजापं कुर्वन्सेनासंनिवेशादागतस्य विज्ञानशर्मणो वचनमाकर्ण्य न नः परमिह स्थातव्यमिति राजानमामन्त्र्य जगाम ।

**कर्म**—ततस्ततः ।

**कालः**—ततश्च निष्क्रान्ते ज्ञानशर्मणि प्रविश्य विज्ञानशर्मा राजानमालोक्य अये, किमयमपूर्व इव राजा पुरादिषु परित्यक्ताभिमान इव दृश्यते । तद्बहुधा ज्ञानशर्मणोपजापितः स्यात् । भवतु । सर्वमिदं स्वयमेव व्यक्तीभविष्यति । (इति राजसमीपं गतः ।)

**कर्म**—ततस्ततः ।

**कालः**—राजा च तमालोक्य सावहित्थस्तमनुसरन्निव सादरमपृच्छत् । 'मन्त्रिन्, कथय कीदृशः पुरवृत्तान्तः परवृत्तान्तश्च' इति ।

**कर्म**—ततस्ततः ।

**कालः**—

इति राज्ञा समाज्ञप्तो नयज्ञो मन्त्रिशेखरः ।
प्रत्युत्तरं तदादत्त प्रज्ञावज्ञातवाक्पतिः ॥ १७ ॥

स्वायत्तं पुरमेव नः समजनि स्वामिन्भवच्छासना-
त्तत्तद्देशनिविष्टपत्रनिचयव्यापारसंरक्षितम् ।
निर्दग्धा भवतः प्रतापमहसा नूनं पतङ्गा इव
प्रत्यर्थिप्रकरा भवेयुरधुना नामावशेषाः क्षणात् ॥ १८ ॥

**कर्म**—ततस्ततः ।

**कालः**—इत्याकर्ण्य राजा ज्ञानशर्मवचोऽनुसरन्नुभयोर्मतयोरपि दोलायमानमानस इतिकर्तव्यतामव्यवस्यन्नित्थमाक्षेपमुखेन व्याजहार ।

निसर्गतो ये रिपवो हि रोगा वातादिभिस्तज्जनकैः समन्तात् ।
अधिष्ठितेऽस्मिन्कुटिलैः प्रवृत्त्या स्वायत्तता हन्त कथं पुरे नः ॥ १९ ॥

किं च ।

> संरक्ष्यते निजवशंवदसेवकेन
> यः पाण्डुना विमतखण्डनपण्डितेन ।
> सोऽयं प्रतापपरिदग्धपुरो विसर्प-
> ज्ञेयः कथं कथय संप्रति राजयक्ष्मा ॥ २० ॥

**कर्म**—ततस्ततः ।

**कालः**—इति राज्ञो वचनमाकर्ण्य समञ्जसयुक्तिकं वचोऽब्रवीत् । राजन्, श्रूयताम् ।

> वातादिजा यद्यपि सर्वरोगास्तथापि तानेव विनाशयन्ति ।
> यथारणेर्वह्निरुदर्चिरुद्यन्दहत्ययत्नादरणिं तमेव ॥ २१ ॥
> अपन्थानं त्विति न्यायादात्मद्रोहिषु तेष्वमी ।
> आत्मजेष्वपि न स्नेहमातन्वन्त्यधुना प्रभो ॥ २२ ॥

अतस्तदधिष्ठितमपि पुरं स्वाधीनमेवेति निश्चिनु । किं च ।

> स्वायत्ते नगरे तस्मिन्स्वामिपादप्रसादतः ।
> जयश्रियं हस्तगतां जानातु भगवान्क्षणात् ॥ २३ ॥

**कर्म**—ततस्ततः ।

**कालः**—इत्थं मन्त्रिवरवचननिशमनेन किंचिदिव निर्वृतचेतसा राज्ञा मन्त्रिन्, 'इयतापि कालेन पुरस्य स्वायत्तत्वे किमनेन फलं पश्यसि' इति पृष्टो मन्त्री कथयामास—

> पुरस्य दार्ढ्ये योगस्य सिद्धिः सर्वार्थसाधिनी ।
> अखण्डानन्दसिद्धिश्च फलं तेनैव जायते ॥ २४ ॥

**कर्म**—ततस्ततः ।

**कालः**—इत्याकर्ण्य क्षुद्राभिमानेन न भवतीष्टसिद्धिः । प्रत्युत हानिरेव फलम् । अतः स्वयमेव त्यक्तेष्वेतेषु सिद्धैवात्मनो दृढयोगसिद्धिरखण्डानन्दता च । कुत एतावान्यत्न इति वदति राजनि पुनरपीत्थं समाहितवान्मन्त्री—

प्रारब्धरहितस्यैवं भवेदेव न संशयः ।
प्रारब्धपरतन्त्रं त्वां ते मुञ्चन्ति कथं पुनः ॥ २५ ॥

किं च ।

श्लथाभिमाने पुरि हन्त देवे क्षोभो भवेत्त्वत्प्रकृतिष्वकस्मात् ।
ततोऽवकाशं प्रतिलक्ष्य सर्वे प्रत्यर्थिनस्ते प्रबला भवेयुः ॥ २६ ॥

किं च ।

यक्ष्मणि जाग्रति तस्मिन्पाण्डुज्वरसंनिपातपरिवारे ।
देवस्य कथं भविता स्थितिरिह यत्नादपि स्वरूपेण ॥ २७ ॥

इममर्थमप्रतिहतया प्रतिभया स्वयमेव विचारयतु देवः ।

**कर्म**—ततस्ततः ।

**कालः**—तत इत्यात्मनीनानि वचनान्याकर्णयन्कुतूहलाकुलितहृदयः समरयत्नकृतत्वरः मुहुर्मुहुस्तमित्थं प्रशंसन्नवोचत्—

त्वयि दत्तभरस्य मेऽधुना किं बहुनानेन विचारणश्रमेण ।
भवते ननु रोचते यथा वा यतितव्यं हि तथैव निर्विशङ्कम् ॥ २८ ॥

**कर्म**—ततस्ततः ।

**कालः**—ततश्च किल यदेवं देवस्य मनसो व्याकुलीभावः स सर्वोऽपि शत्रूपजाप इति मन्तव्यम् । अतो विज्ञापयामि । तिष्ठतु दार्ढ्यं मद्वचसि इति राजानं पर्यवस्थाप्य स्वकार्य एव व्याप्रियते ।

**कर्म**—भगवन्, ज्ञानविज्ञानयोरेकरूपयोरिव सतोः कुत इयान्विरोधः ।

**कालः**—वत्स,

मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।
तयोर्विरोध इत्येतत्किमाश्चर्यकरं तव ॥ २९ ॥

**कर्म**—भवतु नाम तयोर्विरोधः । तदेवान्तरमुपलभ्य क्रियतां च द्विषद्भिरुपजापः । ज्ञानशर्मणा तु स्वामिहितैषिणा विपक्षानुकूलं पुराभिमानशैथिल्यं कथमुपदिष्टम् ।

**कालः**—नहि विपक्षानुकूलमिति न च तदीयोपजाप इति वा प्रवृत्तिरेतस्य । किं तु वस्तु तत्त्वमुपदेष्टव्यमित्येव तस्य स्वभावः ।

ज्ञानमद्वैतसन्मात्रं विपक्षस्तत्र को वद ।
स्वरूपस्थितिरेतस्य सारिता पारमार्थिकी ॥ ३० ॥

मूढवद्देहतादात्म्यं राजा न प्रतिपद्यताम् ।
बाधितं तद्दग्धपटन्यायेनास्त्विति तस्य धीः ॥ ३१ ॥

तदुक्तमभियुक्तैः—

'बाधितं दृश्यतामक्षैस्तेन बाधो न शक्यते ।
जीवन्नाखुर्न मार्जारं हन्ति हन्यात्कथं मृतः ॥ ३२ ॥

किं च ।

मायया बहुरूपत्वे सत्यद्वैतं न नश्यति ।
मायिकानां हि रूपाणां द्वितीयत्वमसंभवि ॥ ३३ ॥

**कर्म**—भगवन्, युज्यत एतत् ।

**कालः**—एवं च ज्ञानशर्मणोपजप्तोऽपि विज्ञानशर्ममन्त्रिमन्त्रवशात्प्रोत्साहितो राजा यदाचरिष्यति तदालोकयिष्यावहे । (भुवमवलोक्य ।) कथं विदूषकेण सहायमागच्छति राजा तत्रैव गच्छावः ।

(इति परिक्रामतः ।)

(ततः प्रविशति राजा विदूषकश्च ।)

**राजा**—

संख्यापेततया रसानपि भृशं षट्सेवमानस्य मे
तेष्वेवातिबुभुक्षुता प्रतिमुहुर्हाहा सखे जायते ।
एवं व्यापृतिरैच्छिकी मम यतो भुञ्जेऽन्नराशीनहं
पीयन्ते च रसालमाक्षिकदधिक्षीराज्यकुल्या मया ॥ ३४ ॥

अन्नान्येव निरन्तरं विवृणुतां सर्वाणि सस्यानि भू-
र्वारि प्रावृषि कोऽपि वर्षतु दधिक्षीरात्मकं वारिदः ।
सर्वोऽयं लवणाम्बुराशिरपि चेद्दुग्धाम्बुधिर्जायतां
भुञ्जानस्य तथापि हन्त पिबतो न क्षुत्पिपासाशमः ॥ ३५ ॥

तदतिशयेन संपादनीयो मम पानभोजनविधिरिदानीम् ।

**विदूषकः**—(सहर्षम् ।) अज्ज एव्व एदं करणिज्जं । जेण अहं वि एदस्सि कज्जे तुअ सहाअत्तणे दक्खो होमि । जम्मेण तु विण्णाणेण भवं मिदभोअणे सव्वदा सिक्खीअदि तेण विण्णत्तो वि तुमं तस्स वअणं मा करेहि । (क)

**राजा**—साधु सखे, साधु । सम्यगुपदिष्टम् । तथा करिष्ये ।

**कालः**—वत्स, श्रुतं भवता ।

**कर्म**—श्रुतमेव । एष पाण्डुना प्रहितामपथ्यताजननीं स्वस्य बहु बुभुक्षां न जानाति विदूषकोऽप्यजानन्नेवं भाषते ।

**राजा**—कः कोऽत्र भोः ।

**विदूषकः**—सिक्खिदो वि मए किं तुमं पडिऊलकारिणो अमच्चस्स आआरणत्थं दोआरिअं आमन्तेसि । (ख)

**राजा**—वयस्य, मा बिभिहि । तव मतमेवानुसरामि ।

**विदूषकः**—जइ एव्वं थिरपडिण्णो होहि । एदस्स अविह्मरणत्थं वसणन्ते मए बद्धो गण्ठी । अहं जेव्व तं आणेमि । (ग) (इति निष्क्रम्यामात्यन सह प्रविशति ।)

**अमात्यः**—सति दौवारिके राज्ञा किमर्थं त्वं प्रहितः ।

**विदूषकः**—एत्थ कज्जे अहं जेव्व दोवारिओ । (घ)

**अमात्यः**—कीदृशे कार्ये ।

---

(क) अद्यैवैतत्करणीयम् । येनाहमप्येतस्मिन्कार्ये तव सहायत्वे दक्षो भवामि । जाल्मेन तु विज्ञानेन भवान्मितभोजने सर्वदा शिक्ष्यते तेन विज्ञप्तोऽपि त्वं तस्य वचनं मा कुरु ।

(ख) शिक्षितोऽपि मया किं त्वं प्रतिकूलकारिणोऽमात्यस्याकारणार्थं दौवारिकमामन्त्रयासि ।

(ग) यद्येवं स्थिरप्रतिज्ञो भव । एतस्याविस्मरणार्थं वसनान्ते मया बद्धो ग्रन्थिः । अहमेव तमानयामि ।

(घ) अत्र कार्येऽहमेव दौवारिकः ।

**कालः**—कर्मन्, मन्त्रिणापि न विज्ञाता औपाधिकी राज्ञो बुभुक्षा ।

**कर्म**—बाढम् ।

**विदूषकः**—अमच्च, रण्णो दाणिं बहुभक्खणणामहेऐ उवट्ठिदे कज्जे । (क)

**मन्त्री**—कीदृशी बहुभक्षणता ।

**विदूषकः**—किमण्णं । बुभुक्खिदो वग्घो विअ सव्वपकिदीणं अह्माणं जीवणं भक्खिदुकामो राआ मा खु णं णिवारेहि जं पलअकालकुविदो रुद्दो विअ चिट्ठदि । (ख)

**मन्त्री**—(विहस्य । स्वगतम् ।) राज्ञः पानभोजनसंपादने स्वस्यापि तद्भवि-ष्यतीत्येतस्य हृदयम् । (प्रकाशम् ।) गच्छाग्रतः । अहमप्यागमिष्यामि । (आकाशे दत्तदृष्टिः ।) किं न्वेतत्स्यात् ।

कार्यान्ववेक्षणविधौ सदसि स्थितेन
येन क्षमाजनि चिरं सहितुं बुभुक्षा ।
भुक्त्वा च यस्य कियदप्यशनं नितान्तं
तृप्तिर्भवेत्स कथमीदृशबुद्धिमेति ॥ ३६ ॥

**कालः**—अहं खलु प्राणिनामव्यवस्थितामवस्थां करोमि ।

**कर्मः**—बाढम् । अलमिदम् । अन्यदप्यचिन्तनीयं बुद्धिविलसित-मिति जानामि । यत्किल

दृष्ट्वा दक्षकृतापराधजनितक्रोधोज्झिताङ्गीं सतीं
यः शान्तस्तपसि स्थितः स गिरिशः स्वं प्रत्युपात्तायुधम् ।
कोपोद्घाटितनैटिलेक्षणपुटप्रोद्दामधूमज्वल-
ज्ज्वालाजालविजृम्भणेन सहसा भस्मीचकार स्मरम् ॥ ३७ ॥

**कालः**—(विहस्य ।) शृणु तावत् ।

---

(क) अमात्य, राज्ञ इदानीं बहुभक्षणनामधेये उपस्थिते कार्ये ।

(ख) किमन्यत् । बुभुक्षितो व्याघ्र इव सर्वप्रकृतीनामस्माकं जीवनं भक्षि-तुकामो राजा मा खल्वेनं निवारय यत्प्रलयकालकुपितो रुद्र इव तिष्ठति ।

मारुतं यः पिबन्नेव महर्षिस्तपसि स्थितः।
तमहं कुम्भजन्मानं तोयराशिमपाययम् ॥ ३८ ॥

**मन्त्री**—अतिबुभुक्षया राज्ञः किमप्याशङ्कते मे हृदयम्। यथाहुर्नीतिज्ञाः—'अतिबुभुक्षा राज्ञो राज्यच्युतिसूचिका' इति। (राजानं निरूप्य।)

शुष्यन्त्या धृतशोषणे रसनया शश्वल्लिहन्सृक्किणी
किंचिन्मग्नविलोचनः श्रमजलक्लिद्यत्कपोलालिकः।
आरूढभ्रुकुटीभयंकरमुखो निःश्वासदूनाधरो
दृष्ट्यां कूणितया विलोकयति मामायान्तमेवान्तिके ॥ ३९ ॥

(उपसृत्य।) जयतु जयतु देवः।

**राजा**—उपविश्यताम्। (इत्यासनं निर्दिशति।)

**विदूषकः**—वअस्स, मए गहिदत्थो किदो अमच्चो। (क)

**राजा**—अमात्य, सज्जीक्रियतामनेनोक्तं सर्वमपि।

**मन्त्री**—

किमियमपूर्वा बुद्धिर्देवस्य विजृम्भते ससंरम्भम्।
ननु कुर्वे यदिदानीमनेन दुर्मेधसा कथितम् ॥ ४० ॥

**विदूषकः**—दाणिं वअस्स, तुमं जेव्व मह सरणं, जं कुविदो अमच्चो।(ख)

**राजा**—अलं चापलेन।

**मन्त्री**—तिष्ठ तूष्णीम्। जानामि ते दौष्ट्यम्।

(विदूषको लज्जितस्तिष्ठति।)

**मन्त्री**—(स्वगतं विचिन्त्य।)

स्यादेतत्किं नात्र पश्यामि हेतुं राज्ञो न क्षुद्राज्यविभ्रंशचिह्नम्।
अस्य श्रेयः सिद्धये बद्धकक्षः किं नाहं स्यां किं न मे स्वामिभक्तिः॥४१॥

परं त्वेवं निश्चिनोमि द्विषद्राजमन्त्रिणा पाण्डुना कृतमिदं वैकृतमिति।

---

(क) वयस्य, मया गृहीतार्थः कृतोऽमात्यः।

(ख) इदानीं वयस्य, त्वमेव मम शरणम्। यत्कुपितोऽमात्यः।

भवतु । अस्य चित्तं बहुभक्षणायत्तमन्यत्र व्याक्षिपामि । स एवास्य प्रतीकारः । (प्रकाशम् ।) प्रासादस्योपरि चलतु देवः । तत्रैव संपाद्यते महती तृप्तिः ।

**राजा**—बाढम् ।

(सर्वे प्रासादाधिरोहणं नाटयन्ति ।)

**विदूषकः**—(सर्वतो विलोक्य ।) भो वअस्स, किं एदं भासिणीपाआरे अपुव्वं किं वि दीसइ । (क)

**राजा**—अमात्य, किमिदम् ।

**कर्म**—भगवन्काल, सन्ति खलु शरीरे भासिनीप्रभृतयः सप्तत्वचः तत्र त्वग्रूपप्रथमप्राकारे सिध्मकपञ्चककण्टका नाम त्रयो रोगाः पाण्डुना प्रहिता दृश्यन्ते । तान्विदूषको राजा च न वेत्ति, अतः पृच्छति ।

**कालः**—सत्यमेवेदम् ।

**मन्त्री**—राजन्, सिध्मकपञ्चककण्टकाः ।

**विदूषकः**—(सभयम् ।) वअस्स, एदाणं एदे भटा पहारं कुणन्ति तदो ते वि अह्माणं उवरि पडिस्सन्ति । ता अस्सदो सिग्घं पलाअणं करेह्म । (ख)

**मन्त्री**—विदूषक, मा भैषीः ।

गुञ्जाफलाग्निलेपः प्रतियोद्धा सिध्मपञ्चयोः समरे ।
एष हरिद्राक्षारः कण्टकहतये मया प्रहितः ॥ ४२ ॥

**राजा**—सुष्ठु कृतममात्येन ।

**कालः**—गुञ्जाफलाग्निलेपहरिद्राक्षारानौषधिविशेषान्प्रहरतो दृष्ट्वा विदूषको ब्रवीति ।

**कर्म**—एवमेतत् ।

**विदूषकः**—अज्ज, को एसो । (ग)

---

(क) भो वयस्य, किमेतद्भासिनीप्राकारेऽपूर्वं किमपि दृश्यते ।

(ख) वयस्य, एतेषामेते भटाः प्रहारं कुर्वन्ति तदा तेऽप्यस्माकमुपरि पतिष्यन्ति । तदस्माच्छीघ्रं पलायनं कुर्मः ।

(ग) आर्य, क एषः ।

**मन्त्री**—व्यङ्गनामा रोगः।

अभिमुखमवेक्षमाणः शशरुधिरालिप्ततनुरिमं हन्तुम्।
तिष्ठति मुखमावृण्वन्मञ्जिष्ठाप्रमुखसाधनो लेपः॥ ४३॥

**विदूषकः**—किं एदं मल्लाणं आओहणं विअ जं रत्तप्पवाहो दीसइ। (क)

**मन्त्री**—

वैधेय शस्त्रधाराक्षुण्णं प्रवहति पुरो न रक्तं यत्।
तव मूढतां धिगेष प्राकारो लोहिनी नाम॥ ४४॥

**कालः**—त्वग्रूप एष द्वितीयः।

**कर्म**—तथैव।

**विदूषकः**—अहो पमादो। सुवेदाए उपरि सव्वत्थ गअकण्णा वित्थिण्णा। (ख)

**कालः**—कर्मन्, श्वेतनाम्नि तृतीयत्वक्प्राकारे चर्मदलं नाम रोगं पृच्छति विदूषकः।

**राजा**—क एते संवर्तन्ते श्वेतायाम्।

**मन्त्री**—

देव योधेन तत्रापि नियुक्तेन मया पुरा।
आम्रपेश्यभिधानेन लेपेनाक्रम्य भूयते॥ ४५॥

**विदूषकः**—वअस्स, पेक्ख एत्थ का वि दुद्धतरङ्गिणी विअ वहइ। ता अञ्जलीहिं गेह्निअ पिव। (ग)

**मन्त्री**—धिगौदर्य, सर्वत्राभ्यवहारभ्रान्तिः। भ्रान्त,

नेयं दुग्धतरङ्गिणी प्रवहति श्वित्रोऽयमिन्दुप्रभः
प्राकारं किल तुर्यतामुपगतं ताम्राख्यमाक्रामति।

---

(क) किमेतन्मल्लानामायोधनमिव यद्रक्तप्रवाहो दृश्यते।

(ख) अहो प्रमादः। श्वेताया उपरि सर्वत्र गजकर्णा विस्तीर्णाः।

(ग) वयस्य, पश्यात्र कापि दुग्धतरङ्गिणीव वहति। तदञ्जलिभिर्गृहीत्वा पिब।

संरम्भो भवतो वृथा स्मरयसि त्वं किं तृपं विस्तृतां
पातुं शक्यत एष किं तव ततो मौढ्यं त्वयाविष्कृतम् ॥४६ ॥

(इति सभ्रूक्षेपं तर्जयते ।)

**राजा**—क एनमभिसरति ।

**मन्त्री**—एष मया नियुक्तो महातालेश्वरः ।

**कालः**—कर्मन्, औषधविशेषोऽयम् ।

**विदूषकः**—अध वेदिणीलोहिदाणं उवरि के वि उल्लुठअन्तो विअ दीसन्ति । (क)

**मन्त्री**—सर्वेऽपि कुष्ठा गलगण्डादयश्च नृत्यन्ति ।

**कर्म**—भगवन्, वेदिनीलोहिते पञ्चमीषष्ठ्यौ त्वचौ । तत्र कुष्ठादेरुत्पत्तिः ।

**कालः**—अस्त्येतत् ।

**विदूषकः**—एत्थ उण थूलाणाम्मि सत्तमे पाआरे को वि लोहआरभत्थिआ विअ पूरिज्जमाणसरीरो दीसइ । (ख)

**मन्त्री**—स्थूलायां विद्रधिरेष शत्रुमल्लः ।

**विदूषकः**—(सभयम् । संस्कृतमाश्रित्य ।)

प्राकारसप्तकमपि प्रसभं गृहीत्वा
स्वेद्यानि सप्त च विशोष्य तथैव कोषान् ।
उल्लुण्ठयिष्यति रिपोर्निवहो भटानां
म्लायंस्त्वमन्ध इव मूढ इव स्थितोऽसि ॥ ४७ ॥

**राजा**—धिक् प्रमादम् । हन्त विज्ञानशर्मन्, आक्रान्तमेवारिभिरान्तरम् ।

---

(क) अथ वेदिनीलोहितयोरुपरि केऽप्युल्लुठन्त इव दृश्यन्ते ।

(ख) अत्र पुनः स्थूलानाम्नि सप्तमे प्राकारे कोऽपि लोहकारभस्त्रिकेव पूर्यमाणशरीरो दृश्यते ।

**मन्त्री**—देव, धीरो भव । यदि नाहं प्राणिष्यस्तदिदमभविष्यत् ।

**विदूषकः**—(सकोपोपहासम् ।) एदं पच्चक्खं खु वट्टइ । तुमं उण अणुमाणेण एदं णत्थिक्ति वण्णेसि । ता अच्छरिअं तक्को विण्णाणसम्ममन्तिणो । वअस्स, आकण्णेहि मे वअणं । एसो अमच्चो एव्व सव्वदुवारेसु सत्तुहिं आकन्तेसु भिक्खुवेसं गेह्णिअ पलाइस्सदि । तुह पुणो दुल्लहो मोक्खो । ता एहि । सुरङ्गादुवारेण तुमं णइस्से । (इत्युत्थाय सर्वतो विलोक्य ।) हद्धी हद्धी । किं करेमि मन्दभग्गो । जलमत्तं वि कहिं वि ण दीसइ । सत्तापि जं परिहाओ रित्ताओ विअ दीसन्ति । (पुनर्दृष्ट्वा ।) वअस्स, किं एदं इन्दजालं विअ दीसइ जं सत्तावि परिहाओ दाणिं एव्व सुक्काओ पुणो वि अपरिमिदरसाओ दीसन्ति । कधं इमाओ उत्तरिअ गच्छह्म । (क)

**राजा**—अमात्य, श्रुतमेतस्य वचनम् ।

**मन्त्री**—

एतन्न किंचन ततस्तव मास्तु भीति-
रोजायितं रिपुजनस्य निरीक्ष्य किंचित् ।
यत्खेयपूरणविशोषणयोः समर्थं
तन्मूलमेव हि विजृम्भणमप्यरीणाम् ॥ ४८ ॥

अपि च ।

रिपवो लब्ध्वा मार्गं रसादिपरिखाः प्रकोप्य तन्मूलम् ।
देव भवन्ति यथेष्टं पुरमुल्लुण्ठयितुमीशानाः ॥ ४९ ॥

---

(क) एतत्प्रत्यक्षं खलु वर्तते । त्वं पुनरनुमानेनैतन्नास्तीति वर्णयसि । तदाश्चर्यं तर्को विज्ञानशर्ममन्त्रिणः । वयस्य, आकर्णय मे वचनम् । एषोऽमात्य एव सर्वद्वारेषु शत्रुभिराक्रान्तेषु भिक्षुवेषं गृहीत्वा पलायिष्यते । तव पुनर्दुर्लभो मोक्षः । तदेहि । सुरङ्गाद्वारेण त्वां नेष्ये । हा धिक् हा धिक् । किं करोमि मन्दभाग्यः । जलमात्रमपि कुत्रापि न दृश्यते । सप्तापि यत्परिखा रिक्ता इव दृश्यन्ते । वयस्य, किमेतदिन्द्रजालमिव दृश्यते यत्सप्तापि परिखा इदानीमेव शुष्काः पुनरप्यपरिमितरसा दृश्यन्ते । कथमिमा अवतीर्य गच्छामः ।

**कालः**—रसरक्तमांसमेदोस्थिमज्जशुक्ररूपाः परिखात्वेन निरूपिताः ।

**कर्म**—एषां वृद्धौ श्लेष्मविद्रधिरक्तविसर्पादयो भवन्ति । कार्श्ये तु रौक्ष्यश्रमशोषादयः ।

**कालः**—युक्तं भवतोक्तम् ।

**मन्त्री**—एवमेते स्वामिकार्ये बद्धपरिकरा यतन्तु नाम । सन्त्येवैषां प्रतीकारशस्त्राण्यस्मदायत्तानि ।

**विदूषकः**—किं एसा वादाली विअ मह अक्खीहिं आउलेदि । (क)

**राजा**—अहो प्रचण्डोऽयमनिलः । तथाहि ।

तारा३च्यावयितुं घनान्विकिरितुं कृत्वार्कतूलोपमा-
　　न्भित्त्वा पातयितुं भुवि क्षितिभृतां तुङ्गानि शृङ्गाणि च ।
सद्यः शोषयितुं समुद्रमवनीकर्तुं तु पांस्वात्मना
　　द्रागुन्मूल्य च भूरुहान्भ्रमयितुं शक्तो भवत्यम्बरे ॥ ९० ॥

**मन्त्री**—अयमेव वृद्धिशोषहेतुः परिखाणाम् । एनमुपजीव्योत्कुप्यन्ति शुष्यन्ति च सर्वतः परिखाः ।

**विदूषकः**—किं मूढो विअ पेक्खसि । करेहि एदाणं पडीआरं । (ख)

**मन्त्री**—अदृष्ट्वा किमेवं प्रलपसि ।

**विदूषकः**—(उच्चग्रीविकया विलोक्य ।) अच्चरिअं अच्चरिअं । एत्थ सत्तासत्ति वट्टइ । वड्ढन्तेसु सत्तुसु एदे वीरा रोअउलं पहरन्दि । (ग)

**मन्त्री**—तत्र श्लेष्मप्रभृतीन्रक्तपुत्रांश्चन्द्रप्रभा प्रहरति ।

**विदूषकः**—कधं इत्थिआ वि सूराअदि । (घ)

**मन्त्री**—रक्तपुत्राणां विसर्पप्लीहप्रभृतीनाममृतगुग्गुलुच(तृ ?)णपञ्चका-

---

(क) किमेषा वातालीव ममाक्षिणी आकुलयति ।

(ख) किं मूढ इव पश्यसि । कुर्वेतेषां प्रतीकारम् ।

(ग) आश्चर्यमाश्चर्यम् । अत्र शस्त्राशस्त्रि वर्तते । वर्धमानेषु शत्रुषु एते वीरा रोगकुलं प्रहरन्ति ।

(घ) कथं स्त्री अपि शूरायते ।

दयः प्रहर्तारः । तथा मांसपुत्राणां शाखोटकतैलप्रभृतयः । मेदसः पुत्राणां कफकेसरिप्रभृतयः ।

**कालः**—कर्मन्, एवं वातपित्तकफेषु वात एको रसरक्तमांसादिधातूनां शोषकः पोषकश्च ।

**कर्म**—एवमेवैतत् । धातूनां प्रकोपे धातुकार्श्ये च भिषजो वदन्ति 'कटुकादयो मांसवृद्धिहेतवः' इति ।

'कटुकाद्वर्धते मांसं कषायाच्छोणितो रसः ।
लवणाद्वर्धते ह्यस्थि मज्जा त्वम्लात्प्रवर्धते ।
मधुराद्वर्धते शुक्रं तिक्तान्मेदः प्रवर्धते ॥'

**विदूषकः**—(परिवृत्यावलोकितकेन ।) अज्ज एदं होदु जुज्झदंसणम् । पेक्खदु भवं पुरट्ठिदं अच्चरिअं । (क)

**राजा**—आर्य, किमेतत्पश्यसि ।

**मन्त्री**—(विहस्य ।) पश्याम्येतत् ।

एतत्पङ्गुद्वितयमनिलश्चारयत्याशयेषु
त्रिष्वश्रान्तं जरठगणिका काचिदेषा पुरस्तात् ।
आजान्वग्रप्रविततकुचा लोभयन्ती प्रसूते
हन्तानर्थाङ्कुरमनुगता सर्वदा देहभाजाम् ॥ ९१ ॥

**कालः**—सम्यगुक्तं मन्त्रिणा यत्पित्तकफौ पङ्गू इति भिषक्प्रसिद्धिः । आशयेष्विति कफपित्तवातानामाशया विवक्षिताः । अपथ्यतां जरठगणिकेति निरूपयन्ति । अनर्थाङ्कुर इति च तत्प्रभवरोगसमुदायम् ।

**कर्म**—साधु निरूपितम् ।

**राजा**—किमिदमप्यरिभिरेवं कृतम् ।

**मन्त्री**—कः संदेहः । श्रूयताम् ।

पाण्डुः स्वस्य निशम्य मत्सरमुखात्तूलायितं विक्रमं
सेर्ष्यो मामकवाचिकेन हृदये राज्ञा निषिद्धोऽपि सन् ।

---

(क) अद्यैतद्भवतु युद्धदर्शनम् । पश्यतु भवान्पुरःस्थितमाश्चर्यम् ।

प्रज्ञागर्ववशान्मदीयविजये जाताभिलाषोऽब्रवी-
दित्थं सान्त्वमपथ्यतां निजकुले स्नेहप्रकर्षान्विताम् ॥ ९२ ॥

**विदूषकः**—कहं सन्तं उत्तवन्तो पाण्डू । (क)

**मन्त्री**—एवम्

अप्यसत्कुलपक्षपातिनि पथा कामोपभोगप्रदे
किं नात्मप्रभवं कुलं गणयसि प्रक्षीयमाणं शनैः ।
औदासीन्यमिदं कुतस्तव विनोपेक्षां यदि व्यापृता
त्वं नालं बलवानपि प्रभुररिः स्थातुं कुतोऽस्यानुगाः ॥ ९३ ॥

अतस्त्वां विज्ञापयामि । संप्रति शत्रुपुरं प्रविशन्ती तत्तदभिमतेन तेन तेन रसेनाशयगतानसत्कुलकारकान्रसवाहिनीभिर्नाडीभिश्च पोषयन्ती राजानमपि स्ववशं नयन्ती भेदय विज्ञानहतकात् इत्युपदिश्य मन्दाग्निना सह प्रेषितवान् ।

**विदूषकः**—अच्चरिअं एदाए दूतत्तणं जाए पङ्गुणो वि चालिदा । पेक्ख दाणिं वि किं वि मन्तअन्ती चिट्ठदि । सुणाहि दाव तूह्णीओ भविअ । (ख)

(ततः प्रविशन्त्यपथ्यतया सह मन्दाग्निवातकफपित्ताः ।)

**मन्दाग्निवातकफपित्ताः**—अयि रसवति, किमु वक्तव्यमस्मदीया रोगा इति । यतस्त्वत्संततिः खल्वेते । त्वयैव वशीकृतेऽस्मिन्राजनि एतत्पुरे सुकरस्तेषां प्रवेशः । वयं तु तत्र निमित्तमात्रम् ।

**कालः**—कर्मन्, रसवतीत्यपथ्यताया नामान्तरेण भवितव्यम् ।

**कर्म**—रुचिमतीत्यप्येतस्या नाम ।

**विदूषकः**—एसा ताडआ विअ भीसणा अणुवट्टदि । (ग)

---

(क) कथं सान्त्वमुक्तवान्पाण्डुः ।

(ख) आश्चर्यमेतस्या दूतत्वं यया पङ्गवोऽपि चालिताः । पश्येदानीमपि किमपि मन्त्रयन्ती तिष्ठति । शृणु तावत्तूष्णीको भूत्वा ।

(ग) एषा ताडकेव भीषणानुवर्तते ।

**मन्त्री**—राजा चाहं च रामलक्ष्मणाविव वर्तावहे ।

**विदूषकः**—अहं वि कोसिओ विअ । (क)

**राजा**—(विहस्य ।) तादृक्प्रभावो महर्षिः खलु भवान् ।

**विदूषकः**—भो वअस्स, एसो अमच्चो एदाए मं बलिं दाऊण अप्पाणं मोचेदुं अहिलसन्तो विअ दीसइ । दाणिं भवं जेव मह सरणम् । (ख)

**मन्त्री**—वैधेय, क्षणं तूष्णीं तिष्ठ । शृणुमः शेषमपि वचनमेषाम् ।

**वातादयः**—अयि रुचिमति,

त्वां वीक्ष्य जागरूकां तस्यां तस्यां रुचिप्रविष्टायाम् ।
स्वत एव भिद्यतेऽसौ विज्ञानादञ्जसा राजा ॥ ९४ ॥

**राजा**—

आलापादेतेषां कुलालदण्डावघट्टनादिव मे ।
हृदयं भ्रमतीदानीं सहसा चक्रमिव किं न्वेतत् ॥ ९९ ॥

**विदूषकः**—अण्णं किम् । दिढं खु णिगिहीदो सि तुमं एदाए अपत्थदापिसाचिआए । अहं उण छवेदो बह्मणो होमित्ति सज्झसेण इमाए विसज्जिदो ह्मि । (ग)

**मन्त्री**—(विहस्य ।) षड्वेदा इत्यनया संख्ययैव सूचितं वेदविज्ञानम् ।

**राजा**—किं विस्मृतं त्वया यत्प्रागेव मम मनीषितार्थं विदूषकेण बोधितोऽसि ।

**मन्त्री**—(स्वगतम् ।) अहो त्रुटितसंघटिताया दास्या विलसितं यदियन्तं कालं विस्मृतापि बुभुक्षा स्मृता सती राज्ञो हृदयमाकुलयति । (प्रकाशम् ।) तदप्यग्रे भविष्यति । देवेन तु एतद्वैरिप्रयुक्तमिति निश्चित्य तद्वशे न भवितव्यमिति बहुशः प्रार्थये ।

---

(क) अहमपि कौशिक इव ।

(ख) भो वयस्य, एषोऽमात्य एतस्या मां बलिं दत्त्वा आत्मानं मोचयितुमभिलषन्निव दृश्यते । इदानीं भवानेव मम शरणम् ।

(ग) अन्यत्किम् । दृढं खलु निगृहीतोऽसि त्वमेतया अपथ्यतापिशाचिकया । अहं पुनः षड्वेदो ब्राह्मणो भवामीति साध्वसेनानया विसर्जितोऽस्मि ।

**राजा**—(सबहुमानम् ।) तथ्यं पथ्यं चाह भवान् । तदहमवहितोऽस्मि ।

**विदूषकः**—को एसो विज्जपुञ्जो विअ धगधग्गअमाणो सव्वदो वि मह अच्छी आउलेदि । (क)

**मन्त्री**—परिवारपरिवृतो ज्वरराज एषः । यमेनमुपरुध्य सर्वेऽपि रोगाः प्रहरन्ति । अत एवायं राजपदभागिति भिषग्व्यवहारः ।

**कर्म**—युक्तमाह मन्त्री । तथाहि ।

ज्वरो रोगपतिः पाप्मा मृत्युरोजोशनोऽन्तकः ।
क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥ ५७ ॥
जन्मान्तर्यो मोहमयः संतापात्मापचारजः ।
विविधैर्नामभिः क्रूरो नानायोनिषु वर्तते ॥ ५८ ॥

**कालः**—कर्मन्, नानायोनिष्विति सुष्ठूक्तं त्वया ।

पाकलस्तद्यथेभानामभितापो हयेषु च ।
वान्तादानामलर्कः स्यान्मत्स्येष्विन्द्रमदः स्मृतः ॥ ५९ ॥
ओषधीषु तथा ज्योतिश्चुणपा धान्यजातिषु ।
जलेषु नीलिका भूमावूषो नृणां ज्वरो मतः ॥ ६० ॥

**राजा**—पश्य सखे, पश्य ।

त्रिकूटाद्रेः कूटैस्त्रिभिरिव शिरोभिः प्रतिभयो
दिशः पश्यन्दृग्भिः शशरुधिरसोदर्यरुचिभिः ।
त्रयाणां पादानां तृणतरुसमुच्छ्रायजयिना-
मयं न्यासैर्भूमिं नमयति गदानामधिपतिः ॥ ६१ ॥

**कालः**—कर्मन्, पश्यायं यस्मिन्नुदेष्यति तस्य जनस्य ।

आलस्यमश्ममयतां पुलकोद्गमं च
गात्रे करोति न रतिं क्वचिदातनोति ।
जाताश्रु जृम्भयति सक्षिविघूर्णमल्प-
प्राणं तमम्बु च पिपासयतेऽनुवेलम् ॥ ६२ ॥

---

(क) क एष विद्युत्पुञ्ज इव धगधगायमानः सर्वतोऽपि ममाक्षिणी आकुलयति ।

**कर्म**—एवमेतत् । अपि चानेनाविष्टः ।

यद्भक्ष्यमम्लकटुतिक्तमपेक्षते त-
न्न स्वादु खादति च सूर्क्ष्यते हितोक्तम् ।
जङ्घां विवेष्टयति हुंकृतिमादधाति
बालेषु न क्वचन दर्शयते रुचिं च ॥ ६३ ॥

**विदूषकः**—दिट्ठी वि ण पहुवदि णं पेक्खिदुं । (क)

**मन्त्री**—एष ज्वरोऽपि यक्ष्मराजसखः ।

क्रोधनारोचकाध्मानैस्त्रिभिः पुत्रैरुपैधते ।
भार्यया पञ्चविधया ग्रहण्यभिधया सह ॥ ६४ ॥

**विदूषकः**—(अन्यतो विलोक्य सभयकम्पम् ।) वअस्स, अहं दाणिं ण जीविस्सं, जदो खु करगहिदखग्गखेडअसरकम्मुअपरिघसूलगदा पच्चत्थिराअसेणा अभिवड्ढइ साअरो विअ । (ख)

**मन्त्री**—(विलोक्य ।) एते व्रणराजपुत्रा अष्टविधा भगंदराः । एते च षड्विधा मूलाधिष्ठानमभिव्याप्नुवन्ति । एते च कफसंभवा दश मेहाः पित्तसंभवैः षड्भिर्वातसंभवैश्चतुर्भिश्च सह विंशतिसंख्याका यक्ष्मराजपुत्राः । अपरत्र च त्रयोदश मूत्रघाताः प्रसज्जन्ते । एतान्यपि च वातपित्तकफसंनिपातभुक्तविटधात्वश्मरीकृच्छ्राणीत्यष्टौ कृच्छ्राणि चतसृभिरश्मरीभिः सह सज्जीभवन्ति । एष गुल्मोऽपि शूलमवलम्ब्य विजृम्भते तथाष्टविधशूलाश्च निरुन्धन्ति ।

**कालः**—कर्मन, समर्थोऽयं मन्त्री रोगविशेषपरिज्ञाने ।

**मन्त्री**—तथान्येऽप्यत्र बहवः प्रभवन्ति । ये किल

मन्दाग्न्युत्थोदरस्थामयसुहृद उदावर्तभेदा अशीति-
र्वातोत्थाः पित्तजा विंशतियुगगणिता विंशतिः श्लेष्मजाश्च ।

---

(क) दृष्टिरपि न प्रभवत्येनं प्रेक्षितुम् ।

(ख) वयस्य, अहमिदानीं न जीविष्ये, यतः खलु करगृहीतखड्गखेटकशरकार्मुकपरिघशूलगदा प्रत्यर्थिराजसेनाभिवर्धते सागर इव ।

चत्वारोऽक्ष्णोर्वसन्तो नवतिरपि चतुःसप्ततिर्वक्त्रनिष्ठा

मूर्धस्थाः पङ्क्तिसंख्याः क्रिमिगदनिवहोऽप्यस्ति नैके च शोफाः ॥६५॥

तथा भूतोन्मादा विंशतिः ।

आमवात इति कोऽपि चतुर्धा जायते निखिलरोगनिवासः ।

वातपित्तकफशोणितमद्यक्ष्वेडजा षडुदयन्ति च मूर्छाः ॥ ६६ ॥

अपि च ।

एते षोढा भिन्ना उन्मादाश्च प्रवर्तन्ते ।
अभिवर्तन्ते चामी हृद्रोगाः पञ्चधा भिन्नाः ॥ ६७ ॥

**विदूषकः**—पमादो पमादो । एदेहिं अरिहिं दुवाराइं पाआरा परिखा कोसाआराइं अ सव्वं वि अक्कत्तम् । किं बहुजम्पिदेण । हृदयं गुम्मं करिअ अधिट्ठिदं । तिलप्पमाणो वि देसो अणक्कन्तो ण दीसइ । (अञ्जलिं बद्ध्वा ।) वअस्स, अदो वरं णत्थि मे जीविदासा । मम बह्मणीए विहुराए अन्धकूवणेत्ताए तुमं एव्व सुमरिअ जोअक्खेमं वहेहि । पढमं एव्व एसो अणत्थो सुणाविदो सि मए । तुमं उण दुम्मन्तिणो से वअणवीसम्भेण इमं दुरवत्थं पावदो सि । पेक्ख दाव तस्स फलं एदं संवुत्तं । (क)

**राजा**—अमात्य, संवदत्येव विदूषकवचनम् ।

त्वद्बुद्धिप्रसरोऽत्र धिग्विफलितो निक्षिप्य सर्वामपि
त्वय्येवात्मधुरां मया निवसता संप्राप्तमीदृक्फलम् ।
वैयग्र्यं हृदि सर्वथास्मि गमितो द्वाराणि कोषालयाः
प्राकाराः परिखाश्च हा निखिलमप्याक्रान्तमेवारिभिः ॥ ६८ ॥

---

(क) प्रमादः प्रमादः । एतैररिभिर्द्वाराणि प्राकाराः परिखाः कोषागाराणि च सर्वमप्याक्रान्तम् । किं बहुजल्पितेन । हृदयं गुल्मं कृत्वा अधिष्ठितम् । तिलप्रमाणोऽपि देशोऽनाक्रान्तो न दृश्यते । वयस्य, अतःपरं नास्ति मे जीविताशा । मम ब्राह्मण्या विधुराया अन्धकूपनेत्रायास्त्वमेव स्मृत्वा योगक्षेमं वह । प्रथममेव एषोऽनर्थः श्रावितोऽस्ति मया । त्वं पुनर्दुर्मन्त्रिणोऽस्य वचनविश्रम्भेणेमां दुरवस्थां प्रापितोऽसि । पश्य तावत्तस्य फलमिदं संवृत्तम् ।

एवं स्थिते किमन्यद्ब्रवीमि ।

गात्रं मे परितप्यते पदयुगं शक्नोति न स्पन्दितुं
स्तब्धं चोरुयुगं भुजौ च भजतः कम्पं मुखं शुष्यति ।
नास्त्यक्ष्णोर्विषयग्रहः श्रवणयोरप्येवमेव त्वचो-
ऽप्यन्यत्किं चलतीव हृन्निजपदादाशा भ्रमन्तीव च ॥ ६९ ॥

अपि च ।

ननु मे दुःखभागात्मा न धैर्यमवलम्बते ।
काठिन्यमिव मृत्पिण्डो घनवारिसमुक्षितः ॥ ७० ॥

किं च मया भवत्संविहितरसगन्धकौषधघटितरसायनप्रत्याशया

त्वदुपदेशवशंवदचेतसा वपुषि नश्वरके ममता वृथा ।
विदधता शिवभक्तिरसायनं शिवशिवान्तरितं परमार्थदम् ॥ ७१ ॥

**मन्त्री**—सत्यमेतच्छिवभक्तिरसायनं परमार्थदमिति सकलैहिकसंकटवि-
घटनं च । किं तु

पुराभिमानो न वृथा तद्दार्ढ्येन विना कथम् ।
चित्तस्वास्थ्यं विना तच्च शिवभक्तिर्दृढा कथम् ॥ ७२ ॥

अतो विज्ञापयामि ।

कृच्छ्रेऽपि धैर्यग्रहणं राज्ञो विजयसाधनम् ।
इति नीतिविदः प्राहुर्धैर्यमालम्ब्यतां ततः ॥ ७३ ॥

किं च तव निदर्शयामि तादृशमितिहासम् । यथा ।

श्रेयः प्रापदगस्तिना स नहुषः शप्तोऽपि धैर्यग्रहा-
न्नवालम्ब्य धृतिं शुभं नलहरिश्चन्द्रावपि प्रापतुः ।
कृत्वा छद्मकृतेऽरिणा प्रणयिनीचौर्येऽपि धैर्यं वह-
न्बद्ध्वा सेतुमुदन्वदम्भसि न किं रामो विजिग्ये रिपून् ॥७४॥

**विदूषकः**—वअस्स, सुदं किं दाणिं वि एदस्स मन्तिणो एदं एव्व वअ-

णम् । संपदं एसो अत्ताणं वि ण जाणादि राजकज्जं कुदो उण उम्मादं वा उवजावं वा सत्तुकिदम् । (क)

**मन्त्री**—(विहस्य ।) वैधेय, किं वृथा प्रलपसि । देव, अलं धैर्यत्यागेन । एते च मत्संनिहिता रसौषधिविशेषा भवत्सेवनमेव प्रतीक्षमाणा विपक्षक्षपणाय सज्जीभवन्ति तानेताननुगृहाण । (नेपथ्ये ।) देव, एते वयम्

शिवभक्तिप्रसादेन लब्धा मन्त्रिवरेण च ।
सम्यक्संविहिताः सर्वे विपक्षान्विजयामहे ॥ ७५ ॥

पुरस्तादचिरादेवास्माभिर्बाध्यमानं यक्ष्माणं सामात्यं सपुत्रकलत्रं ससैन्यं च पश्य ।

**राजा**—(दृष्ट्वा ।) प्रियं प्रियम् । सर्वे यूयमप्रमत्ता विपक्षक्षपणाय यतध्वम् ।

(ततः प्रविशति यक्ष्मा पाण्डुश्च ।)

**यक्ष्मा**—पाण्डो, क्व पुनरस्मदीया भटाः प्रहारार्थं वर्तन्ते ।

**पाण्डुः**—देव, पश्य । केचिदनुगच्छन्ति, केचित्पुरो गच्छन्ति ।

**कालः**—कर्मन्, यदुक्तं पाण्डुना तत्तथैव । यतः,

अनेकरोगानुगतो बहुरोगपुरोगमः ।
राजयक्ष्मा क्षयः शोषो रोगराडिति यः स्मृतः ॥ ७६ ॥

**कर्म**—जानामि यादृश एष इति ।

नक्षत्राणां द्विजानां च राजाभूद्यो विधुः पुरा ।
तं प्रजग्राह यक्ष्मासौ राजयक्ष्मा ततः स्मृतः ॥ ७७ ॥
देहेषु यः क्षयकृतेः क्षयस्तत्संभवाच्च सः ।
रसादिशोषणाच्छोषो रोगराड्रोगरञ्जनात् ॥ ७८ ॥

**यक्ष्मा**—सखे पाण्डो, प्रबलेषु सामदानभेदा न प्रसरन्ति, अतोऽन्तिम एव प्रयोगः संप्रतिपत्तव्यः । तदत्र किं विलम्बेन ।

---

(क) वयस्य, श्रुतं किमिदानीमप्येतस्य मन्त्रिण इदमेव वचनम् । सांप्रतमेष आत्मानमपि न जानाति राजकार्यं कुतः पुनरुन्मादं वा उपजापं वा शत्रुकृतम् ।

शस्त्राशस्त्रि प्रसह्याथ प्रवृत्ते रणवैशसे।
अजीवकमरोगं वा पुरमेतद्भविष्यति ॥ ७९ ॥

तदेहि। तत्क्षमां भूमिमेव गच्छामः। (इति पाण्डुना सह निष्क्रान्तः।)

**कालः**—कर्मन्, पश्य पश्य विपक्षविजयाय विज्ञानमन्त्रिप्रयुक्तान्भटान्।

**राजा**—वयस्य, मन्त्रिणा दर्शितेन विक्रमव्यापारेण हृदयं मम निर्वृणोति। यतः।

भूपतिरससिन्दूरज्वराङ्कुशानन्दभैरवैः साकम्।
चिन्तामणिश्च शत्रून्राजमृगाङ्कश्च जेतुमुद्युङ्क्ते ॥ ८० ॥

पश्य चात्रारोग्यचिन्तामणेरुत्तरेण।

कृतसिद्धरसेश्वरः पुरस्तात्करमालम्ब्य च वातराक्षसस्य।
समराङ्गणमेति पूर्णचन्द्रोदय एषोऽग्निकुमारदर्शिताध्वा ॥ ८१ ॥

प्रतापलङ्केश्वर एष यश्च प्रतापयत्यत्र निजप्रतापात्।
गदान्धनुर्वातमुखानशेषांल्लङ्केश्वरः शत्रुभिरप्रसह्यः ॥ ८२ ॥

वसन्तकुसुमाकरः सरभसं विधत्ते रणं
सुवर्णरसभूपतिर्वशयते रुजां मण्डलम्।
प्रसह्य वडवानलाभिधमिदं च चूर्णं जवा-
द्विशोषयति सर्वतः प्रबलमग्निमान्द्यारुचिम् ॥ ८३ ॥

सुदर्शनं चक्रमिवामरारीन्सुदर्शनं चूर्णमिदं रणाग्रे।
निहन्ति जीर्णज्वरमाशु पित्तजन्या रुजश्चूर्णयति प्रसह्य ॥ ८४ ॥

प्रबलानलसंकुलितं गदगहनं दुरवगाढमन्येन।
हन्ति धुरि तीक्ष्णसारो वातकुठारः समूलमुन्मूल्य ॥ ८५ ॥

असकृत्स्खलतः किंचिद्गतिमान्द्यविधायिनः।
प्रमेहान्माद्यतो हन्ति मेहकुञ्जरकेसरी ॥ ८६ ॥

गतिमन्थरताधायिवर्ष्मवैपुल्यशालिनः।
सर्वान्वातगजान्हन्ति वातविध्वंसनो हरिः ॥ ८७ ॥

**विदूषकः**—देव, अचेतणा वि एदे चिन्तामणिपहुदिणो संपदं संपहारं कुणन्ति त्ति अच्चरिअम् । ता इन्दजालं विअ एदं मे पडिभादि । (क)

**राजा**—धिङ्मूर्ख, अनभिज्ञोऽसि शास्त्रतत्त्वस्य । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः । अभिमानिदेवताश्चैषां सचेतनाः श्रूयन्ते । (कर्णं दत्त्वा ।) मन्त्रिन्, कोऽयं कलकलाविर्भावः ।

**मन्त्री**—पश्यतु देवः ।

शस्त्राशस्त्रि गदागदि प्रथमतो निर्वर्तिते संयुगे
मुष्टीमुष्टि तलातलि प्रववृते पश्चादिदं भीषणम् ।
जित्वारीनिह देव तावकभटैरापूर्यते काहला
शङ्खः संप्रति शब्द्यते दृढतरं संताड्यते दुन्दुभिः ॥ ८८ ॥

अपि च ।

आस्फालयन्ति दृढमूरुयुगं कराग्रैः
कुर्वन्ति कुण्ठितघनारवमन्दहासम् ।
जीवोऽयमस्मदधिपो जितवानमित्रा-
नित्युद्धतं युधि भटास्तव पर्यटन्ति ॥ ८९ ॥

**विदूषकः**—कहं एत्थ एव भग्गमणोरहदाए परुण्णो विअ जक्खराओ लक्खीअदि । (ख)

**राजा**—वयस्य, सम्यङ्निरूपितं भवता ।

गण्डस्थलप्रसृमराश्रु करं करेण
निष्पीडयन्कटकटाकृतदन्तपङ्क्तिः ।
यक्ष्मा ललाटघटितभ्रुकुटिः किलाय-
मन्तःस्पृशं रुषमभीक्ष्णमभिव्यनक्ति ॥ ९० ॥

**मन्त्री**—न केवलां रुषं शुचं च ।

---

(क) देव, अचेतना अप्येते चिन्तामणिप्रभृतयः सांप्रतं संप्रहारं कुर्वन्तीत्याश्चर्यम् । तदिन्द्रजालमिवैतन्मे प्रतिभाति ।

(ख) कथमत्रैव भग्नमनोरथतया प्ररुदित इव यक्ष्मराजो लक्ष्यते ।

**विदूषकः**—एसो सोएण पलवन्तो विअ दीसइ । (क)

**मन्त्री**—शृणुमस्तर्हि प्रलापमेतस्य । विषूचीमत्सरावप्येनमनुवर्तेते ।

(ततः प्रविशति विषूचीमत्सराभ्यां सहितो यक्ष्मा ।)

**यक्ष्मा**—हन्त कथं तादृशानामपि मत्सैन्यानामीदृशीयं दुरवस्था । आश्चर्यमाश्चर्यम् ।

जीवस्य ध्वजिनीचराननतिबलाञ्शक्नोति कः शासितुं
दुर्वारैर्युधि पातितानि मम यैः सर्वाणि सैन्यानि च ।
पाण्डुर्मे सचिवः परैरवधि वा भीतः पलायिष्ट वा
नो जाने मम जीवतो बत हताः पुत्रास्तथा बान्धवाः ॥ ९१ ॥

(सशोकावेगम् ।)

भो भोः सुताः क्व नु गताः स्थ विना भवद्भि-
र्जीर्णाटवीव जगती परिदृश्यते मे ।
आक्रम्यते च तमसा हरिदन्तरालं
शोकाग्निसंवलितमुत्तपते वपुश्च ॥ ९२ ॥

(इति मूर्छति ।)

**मत्सरः**—समाश्वसिहि समाश्वसिहि ।

**यक्ष्मा**—(समाश्वस्य ।)

वत्सा हे वदनाम्बुजानि मुदितो द्रक्ष्यामि केषामहं
केषां माक्षिकमाक्षिपन्ति वचनान्याकर्णयिष्ये मुदा ।
मर्त्यानां तनुषु प्रविष्टमचिरान्मां वर्धयिष्यन्ति के
यूयं यत्समरे परैरतिबलैर्नामावशेषीकृताः ॥ ९३ ॥

**कालः**—

पुत्रप्रविलयाद्दुःखं न सोढुं शक्यते जनैः ।
वसिष्ठोऽपि महान्येन ववाञ्छ पतनं भृगोः ॥ ९४ ॥

तदिमं पुत्रशोकसंतप्तं यक्ष्माणमवेक्षितुं न शक्नोमि ।

---

(क) एष शोकेन प्रलपन्निव दृश्यते ।

**कर्म**—अहमप्येवमेव ।

(इत्युभौ निष्क्रामतः ।)

**मत्सरः**—

देवालं शोकेन द्विपि जीवति न खलु धर्मोऽयम् ।
यावच्छक्ति ततोऽरीन्हत्वा शोचन्ति नैव तान्वीराः ॥ ९५ ॥

अत इदानीं पुनरानीय परिभवमरिहतानामस्मदीयानामानृण्यमृच्छतु भवान् ।

**विषूची**—

दाणिं खु एव दिट्ठा राअकुमारा कहिं गदा तुह्मे ।
डज्जइ हिअअं सोओ अग्गी विअ सुक्कतिणजालम् ॥ ९६ ॥ (क)

**यक्ष्मा**—

गण्डद्वयेऽपि गलितैर्नयनाम्बुपूरै-
रामृष्टपत्रलतमाकुलकेशपाशम् ।
पाणिद्वयप्रहतपाटलबाहुमध्य-
मस्या वपुर्मम शुचं द्विगुणीकरोति ॥ ९७ ॥

**मत्सरः**—राजन्, धैर्यमवलम्ब्यताम् । कृतं शोकेन । संप्रति हि कतिपये देवपादमूलोपजीविनः सैन्याः केनापि दुरपनेयप्रवृत्तयः ।

**यक्ष्मा**—ततः किम् ।

**मत्सरः**—ततश्च तत्प्रयोगेण कुण्ठितशक्तिर्भविष्यति विज्ञानमन्त्रिहतकः । तथा च वैरनिर्यातनं कर्तुमुचितमिति प्रतिभाति ।

**यक्ष्मा**—(सविमर्शम् ।) अवन्ध्योऽयं प्रयत्नः । तदर्थमेव शत्रून्मूलनाय गच्छामः । (इति विषूचीमत्सराभ्यां सह निष्क्रान्तः ।)

**मन्त्री**—मत्सरेण कर्णेऽसज्जयार्थं किमप्युपदिष्टो यक्ष्मा निष्क्रान्तः

---

(क) इदानीं खल्वेव दृष्टा राजकुमाराः कुत्र गता यूयम् ।
दहति हृदयं शोकोऽग्निरिव शुष्कतृणजालम् ॥

तद्वयमपि तदिङ्गितानुमितं पर्यालोच्य तत्प्रतिविधानाय व्याप्रियमाणा इष्टं साधयामः ।

(इति निष्क्रान्ताः सर्वे ।)

---

सप्तमोऽङ्कः ।

(ततः प्रविशति जीवराजो विज्ञानमन्त्री च )

**जीवराजः**—(सहर्षम् ।)

मन्त्रिस्त्वदीयमतिकौशलनौबलेन
तीर्णो रणाम्बुधिरभूदतिदुस्तरोऽपि ।
यस्मिन्भयंकरगतिर्ज्वरपाण्डुमुख्यो
रोगव्रजः किल तिमिंगिलतामयासीत् ॥ १ ॥

किं ब्रवीमि संकुलयुद्धेऽस्मदीयानां तदीयेषु प्रवृत्तमोजायितम् ।

एकत्र मण्डभेदो गुटिकाभेदः परत्र मन्दाग्निम् ।
निखिलामयजननकरं निजपानं प्रथममिदमहमदर्शम् ॥ २ ॥

अथ गुलूच्यादिपञ्चभद्रकषायं निकषा यन्नवं (?) तमवलोक्य पलायन्त पित्तसमीरज्वराः । तदनन्तरं जगदन्तरप्रसिद्धः स्वयमनश्वरसारो यक्ष्मपरिक्षपणदक्षिणः सन्नपि संननाह स्वयं त्रैलोक्यचिन्तामणिर्विनिपाताय संनिपातेन साकमष्टविधानामपि ज्वराणाम् ।

स्थावरजङ्गमगरलं ज्वरमामोत्थं व्रणोपजातं च ।
आरोग्यपूर्वचिन्तामणिरपि निघ्नन्मया रणे दृष्टः ॥ ३ ॥

ततः सर्वज्वरानपि निगृहीतवन्तं ज्वराङ्कुशमुत्तरेण गुल्मार्शः संग्रहिणीर्विपाटितवतो ग्रहिणीकपाटस्य पूर्वभागे

या पञ्चामृतपर्पटी ग्रहिणिकायक्ष्मातिसारज्वर-
स्त्रीरुक्पाण्डुगदाम्लपित्तगदरुक्क्षुन्मान्द्यविध्वंसिनी ।
तामद्राक्षमहं रणे स्त्रियमपि व्यातन्वतीं पौरुषं
चामुण्डामिव चण्डमुण्डसमरप्रक्रान्तदोर्विक्रमाम् ॥ ४ ॥

पश्चाद्भागे तस्याः

अरुचिप्लीहवमिज्वरकासार्शःश्वासशूलानाम् ।
सूक्ष्मैलादिमचूर्णं निरवर्णयमाशु युधि निहन्तारम् ॥ ९ ॥

तदनु जलजाक्ष इव दनुजलोकस्य सिद्धवसन्तः शुक्रदोषस्य गोक्षुरकादिचूर्णमिश्रितपयःपानविधिः पुंस्त्वदोषस्य त्रिविक्रमरसो मूत्रकृच्छ्राश्मर्योर्विष्यन्दनतैलयोगो भगंदरस्य लघुलङ्केश्वरः कुष्ठस्य नित्योदितरसो मूलानां विद्याधररसो गुल्मानां त्रिनेत्ररसः शूलानां महावह्निरस उदररोगाणां गिरिकर्ण्यादिविधिर्गुञ्जातैललेपश्च शिरोरोगस्य चन्द्रोदयवर्तिश्च चक्षूरोगस्य सौवीरादिपक्वतैलनिषेकः कर्णरोगाणां सिद्धार्थत्रिफलाद्यौषधयोगविशेषपानविधिः कृत्योन्मादविषज्वरसर्वग्रहाणां मधुसर्पिर्युतचूर्णविशेषलेहनविधिः पाण्डुहृद्रोगभगंदरशोफकुष्ठोदरार्शसां मेहकुञ्जरकेसरीप्रमेहाणां च विजयमहोत्सवेन समुत्सारितसर्वरोगखेदाः समरजनैरप्यस्तूयन्त । ततः किमप्यवशिष्यते कार्यमस्माकम् ।

**मन्त्री**—स्वामिन्, श्रूयताम् ।

जन्यार्णवोऽरिजनितः सुमहानिदानीं
तीर्णोऽप्यतीर्ण इति निश्चिनुते मनो मे ।
यन्मत्सरेण रणभुव्युपदिष्टकार्यः
कर्णे स तत्परमितो विदधीत यक्ष्मा ॥ ६ ॥

**राजा**—विज्ञानसचिव यथार्थनामधेय, मत्सरेण यक्ष्मणः कर्णे किमुक्तं भवेत् । यक्ष्मा च तदाकर्ण्य किं विदध्यात् । तद्विधानेन चास्माकमुत्तिष्ठेत कीदृशमत्याहितम् ।

**मन्त्री**—(क्षणं विचिन्त्य ।) किमन्यद्ब्रवीमि । केचिदसाध्यरोगा यक्ष्माणमुपासते तैरस्मान्बाधितुं यक्ष्माणं प्रति मत्सरेण संकेतितमिति शङ्के ।

**राजा**—(सवितर्कम् ।) एवमेवास्मासु यक्ष्मा यदि वक्रं विधिमुपक्रंस्यते तत्र कमुपायं पश्यति भवान् ।

**मन्त्री**—'भक्ताय भवते कदापि मया दर्शयिष्यते साम्बः' इति भगवत्या तुभ्यं जातुचिदावेदितं भक्त्या इति कदाचित्कथान्तरे देवेनैव मां

प्रति प्रागुक्तम्। तदिदानीं तामेव भगवतीं भक्तिं हृदि दृढमवलम्ब्य भगवद्दर्शनार्थं संनिधानानुग्रहः प्रार्थ्यताम्। तत एवासाध्यरोगाभिभवः सुलभः प्रतिभाति।

**राजा**—यद्येवमनुध्याय विध्यादिविबुधकृतनिषेवणं करोमि मनसा शरणं शंकरम्। (इत्यनुध्यायति।)

**मन्त्री**—आश्चर्यमाश्चर्यम्। भक्तवत्सलता भगवतश्चन्द्रचूडस्य परां कोटिमवलम्बते। यदनुध्यानमात्रमनुतिष्ठति स्वामिनि तदाविर्भावसूचनमेतदालक्ष्यते। यत्किल

शैलस्थूलशिरोभिरुग्रभुजगप्रायश्रवोभूषणै-
जानुस्पर्शिबृहत्पिचण्डचटुलैस्तालद्रुदीर्घाङ्घ्रिभिः।
प्रावृण्नैशतमिस्रनीलतनुभिर्भस्मत्रिपुण्ड्राङ्कितैः
शूलोद्भासिभुजैः समावृतमिदं भूतैरभूद्भूतलम्॥ ७॥

**राजा**—(ध्यानाद्विरम्य कर्णं दत्त्वा।) अहो भाग्यप्रकर्षो जीवलोकस्य। यतः।

'जय विश्वपते जयेन्दुमौले जय शंभो जय शंकरेति शंसन्।
परितः श्रुतिगोचरो जनानां कलुषं लुम्पति काहलीनिनादः॥८॥

**मन्त्री**—(सहर्षम्।) राजन्, फलितस्ते मनोरथः। पश्य।

आरूढः स्फाटिकक्ष्माधरनिभवृषभं सार्धमद्रीन्द्रपुत्र्या
वीतावष्टम्भकुम्भोदरकरयुगलोदस्तमुक्तातपत्रः।
गायद्गन्धर्वनृत्यत्सुरगणिकपुरोभागघोषन्मृदङ्गो
गङ्गाभृत्युत्तमाङ्गे शशिशकलधरः शंकरः संनिधत्ते॥ ९॥

अपि च।

मौलिन्यस्ताञ्जलीनां दरमुकुलितदृङ्गिर्यदानन्दबाष्प-
क्लिद्यद्गण्डस्थलानामविरलपुलकालंकृतस्वाकृतीनाम्।
वेदान्तप्रायभूरिस्तुतिमुखरमुखाम्भोजभाजामृषीणां
पङ्क्त्या पाश्चात्यभागो झटिति निबिडितो दृश्यतामस्य शंभोः॥१०॥

**राजा**—मन्त्रिन्, इतः परं प्रणिपातादिना भगवन्तं प्रसाद्य स्वाभीष्टमर्थं प्रार्थयिष्ये।

**मन्त्री**—अनितरसाधारणमेतस्य भक्ताभीप्सितप्रदानचातुर्यम् । यः प्रसादितवते पार्थाय पाशुपतमस्त्रं प्रतिपादितवान् । येन च निखिलक्षत्रियकुलजिघृक्षवे भार्गवाय प्रसादीकृतः परशुः ।

**राजा**—उपपन्नमिदम् । एवमपरिमितानि महान्त्याश्चर्यचरितानि देवस्य । यच्च कपिलभस्मीकृतप्रपितामहसंवसमुत्तारणकृतप्रयत्नभगीरथप्रसादितायाः सुरापगाया भुवमुत्तरन्त्या गर्वभञ्जनं नाम मृत्युंजयस्य चरितं तदपि परमाद्भुतमेव ।

**मन्त्री**—जगत्प्रसिद्धमेवेदम् । तथाहि ।

वेगाकृष्टोडुचक्रानुकरणनिपुणश्वेतडिण्डीरखण्ड-
　　श्लिष्टोर्मीनिर्मितोर्वीवलयविलयनाशङ्कसातङ्कदेवा ।
विभ्रम्याकाशगङ्गा विधिभुवनभुवः सर्वदुर्वारगर्वा
　　निर्विण्णा धूर्जटीयोद्भटघटितजटाजूटगर्भे निलिल्ये ॥ ११ ॥

किं च । अध्वरविधावपराधिनो दक्षप्रजापतेः शिक्षणावसरे रोषसंधुक्षितेन नीललोहितेन विसृष्टः स्वांशभूतः प्रभूतकोपविधूतविनयमुद्रो वीरभद्र एव किं न कृतवान् । तथाहि ।

शूलाग्रक्षतदक्षकण्ठरुधिरैः शोणे रणप्राङ्गणे
　　कीर्णा दन्तगणश्चपेटदलितादर्कस्य वक्त्रान्तरात् ।
वीरश्रीकरपीडनोत्सवविधावेतस्य वैश्वानर-
　　प्रक्षिप्तोज्ज्वललाजविभ्रमकरो नालोकि लोकेन किम् ॥ १२ ॥

**राजा**—किमिति वर्ण्यतामयमाश्चर्यचर्यो भगवान् ।

क्रोधारूढभ्रुकुटिरलिके क्रूरखड्गप्रहार-
　　श्छिन्नग्रीवत्रिदशनिकरच्छन्नसङ्ग्रामभूमिः ।
शक्रश्रीशद्रुहिणशरणालाभविद्राणविद्या-
　　दानोन्निद्रः प्रणतजनताभद्रदो वीरभद्रः ॥ १३ ॥

कः पुनरस्य स्वरूपं तत्त्वतः शक्नोत्यवधारयितुं यदन्तर्वाणयः सर्वेऽपि स्वच्छन्दानुरोधात्कलयन्ति स्वरूपमेतस्य । तथाहि—

कर्तारं कतिचित्किलानुमिमते कार्यार्थमुर्व्यादिभिः
केऽप्याहुः पुरुषस्य यस्य पुरतः सृज्यं प्रकृत्या जगत् ।
क्लेशैः कर्मभिराशयैश्च सकलैरस्पृष्टरूपोऽखिल-
प्रज्ञोऽनादिगुरुः स ईश्वर इति व्याख्यन्ति केचित्तु यम् ॥१४॥

अपि च ।

श्रुतमिति निगमान्तेष्वेकमेवाद्वितीयं
निरवधि परिपूर्णं ब्रह्म सच्चित्सुखात्म ।
विलसति किल यस्मिन्विश्वमेतत्तमिस्रे
स्रजि फणिवदबोधादित्थमाहुः किलान्ये ॥ १५ ॥

**मन्त्री**—तत्तादृशमेनमवाङ्मनसगोचरमहिमानं पङ्कजासनपाकशासनप्रभृतयो देवाः प्रणमन्ति भगवन्तम् । अतः सेवावसरं प्रतिपालय क्षणमात्रम् ।

**राजा**—सम्यङ्निरूपितममात्येन ।

नमदमरसहस्रमौलिमालापरिगलितैर्भुवि पारिजातपुष्पैः ।
अलिकुलमनवाप्तदिव्यगन्धग्रहणकुतूहलि कृष्यते समन्तात् ॥१६॥

**मन्त्री**—अवसरोऽयमखिलसुरासुरगुरोः सरोरुहाकरसंवेशविद्यादेशिककलाशेखरस्य सेवनाय देवस्य । अत एव

संभ्रान्तनन्दिकरघूर्णितवेत्रपात-
भीतापगत्वरगणव्रजवर्जितेन ।
एतेन कीर्णकुसुमेन पथा महेशं
सेवस्व भक्तिमददुर्लभसंनिधानम् ॥ १७ ॥

(ततः प्रविशति यथानिर्दिष्टः परमेश्वर्या सह परमेश्वरः ।)

**परमेश्वरः**—अयि गिरीन्द्रसुते,

अनितरसाधारणया भक्त्या जीवस्य मामनुसरतः ।
सपदि मयास्य पुरस्तात्संनिहितं सपरिवारेण ॥ १८ ॥

**देवी**—देव, तुरिअं तुह आगमणं एव्व दंसेदि अणण्णतुल्लं भत्तिमत्तणम् । (क)

---

(क) देव, त्वरितं तवागमनमेव दर्शयत्यनन्यतुल्यं भक्तिमत्त्वम् ।

**राजा**—(मन्त्रिणा सह त्वरितमुपसृत्य ।)

विधिहरिविषमेक्षणात्मकः सन्सृजति बिभर्ति निहन्ति यो जगन्ति ।
तदहममलमेकमेव सच्चित्सुखवपुषं परमेश्वरं नतोऽस्मि ॥ १९ ॥

(इति प्रणमति ।)

**भगवान्**—वत्स, मन्त्रिणा सममभिमतेन युज्यस्व ।

**जीवः**—(मन्त्रिणा सहोत्तिष्ठन् । शिरस्यञ्जलिं बद्ध्वा ।)

जय जय जगदीश देवासुरावध्यतादर्पवेगोद्धृतत्वत्पदाङ्गुष्ठनिष्पीडनस्तब्धकैलासमूलात्तदोर्विंशतिप्रस्तुतस्तोत्रपुष्यद्दयारक्षितोन्मुक्तलङ्कापते निष्प्रपञ्चाकृते

जननमरणलाभपौनःपुनोदीततद्भञ्जनारब्धघोरव्रतप्रीणितत्वत्कठोरश्रवःप्रार्थनाजातकोपोत्थशापामिषाशीभवत्तापसत्राणकृद्रामरूपग्रह स्वेषु सानुग्रह ।

अनुपमितगृहीततारुण्यलक्ष्मीनिरीक्षोन्मिषद्दारुकारण्यनारीव्रतभ्रंशकुप्यन्मुनीन्द्राभिचारोत्थितं तुङ्गनादं कुरङ्गं ज्वलज्ज्वालमग्निं कराभ्यां वहन्दृश्यसे सद्भिरामृश्यसे

कलशभवमहर्षिवातापिनिर्वापणादक्षिणोर्वीभरापादनाविन्ध्यसंस्तम्भनासिन्धुनाथाम्बुनिःशेषनिष्पानशक्तिप्रदायिस्वपादाम्बुजध्यानमाहात्म्य शंभो नमस्ते नमस्ते ॥ २० ॥

पुनः

प्रसूनशरदाहिने प्रबलकालकूटाशिने
　कृतान्तपरिपन्थिने त्रिपुरगर्वनिर्वासिने ।
जटापटलयन्त्रितामरतरङ्गिणीस्रोतसे
　प्रपन्नभयहारिणे प्रमथनाथ तुभ्यं नमः ॥ २१ ॥

निष्क्रियस्यापि देवस्य जगत्सृष्ट्यादिकर्मणि ।
प्रवृत्तिं कुर्वतीं देवीं प्रपद्ये भक्तवत्सलाम् ॥ २२ ॥

**देवी**—णाह, इमस्स मणोरहं पुच्छिअ झत्ति तं णिवत्तेहि ।(क)

---

(क) नाथ, अस्य मनोरथं पृष्ट्वा झटिति तं निर्वर्तय ।

**भगवान्**—प्रिये, किमत्र प्रष्टव्यम्। विदितमेव। यक्ष्मराजः कैश्चिदसाध्यरोगैः सहानुगतो विकुर्वाणो निर्मूलं छेत्तव्य इत्येतस्य मनोरथ इति तत एतस्मै योगसिद्धिमुपदिश्य निर्जितनिखिलरोगं ब्रह्मरन्ध्रस्थितचन्द्रमण्डलनिःष्यन्दमानामृताप्लुतशरीरं निजानन्दानुभवतुच्छीकृताखिलप्राकृतसुखान्तरं सफलमनोरथमेनं कृतार्थयिष्यामि।

**देवी**—(सहर्षम्।) सरिसं खु एदं तुम्हकेरस्स भत्तवच्छलस्स। (क)

**भगवान्**—वत्स जीव, योगसिद्धिमुपदिशामि ते।

**जीवः**—भगवन्, को नाम योगः कीदृशी वा तस्य सिद्धिः।

**भगवान्**—वत्स, श्रूयताम्। योगश्चित्तवृत्तिनिरोधः। चित्तं नामान्तःकरणम्। यच्चक्षुरादिकरणद्वारा बहिर्निगच्छद्विषयाकारेण परिणमति। यत्तादात्म्यापन्नो द्रष्टापि तद्रूपाकार एव परिभाव्यते। तदुक्तम्—

'ध्यायन्त्यां ध्यायतीवात्मा चलन्त्यां चलतीव च।
बुद्धिस्थे ध्यानचलने कल्प्येते बुद्धिसाक्षिणि॥' इति।

'ध्यायतीव लेलायतीव' इति श्रुतिः। तस्य वृत्तयो नाम कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्याद्याः श्रुतीरिता आन्तराः, बाह्याश्च शब्दस्पर्शादिविषयग्राहिण्यः। सत्त्वरजस्तमोरूपगुणत्रयात्मिकानां च तासां दैवासुरसंपद्रूपत्वेन द्वेधा विभाग उक्तो गीतायाम्—

'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥'

इत्यादिर्दैवी संपत्। 'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च' इत्यादिरासुरी संपत्। तत्र दैवी संपत्सात्त्विकी। आसुरी तु रजस्तमःप्रधाना। 'दैवी संपद्विमोक्षाय निबन्धायासुरी मता'। तासां च सर्वासामान्तरीणां बाह्यानां च चित्तवृत्तीनां निरोधो नाम स्वविषयेभ्यः प्रतिनिवर्त्य क्वचित्सगुणे निर्गुणे वा वस्तुनि चित्तस्य समवस्थानम्। तच्च दृढतरवैराग्यसत्कारनिरन्तरसेवनाभ्यां सबलेन लभ्यते। तदुक्तम्—

---

(क) सदृशं खल्वेतद्युष्मादृशस्य भक्तवत्सलस्य।

'असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥' इति ।

एतादृशस्य योगस्य सिद्धिर्नाम ध्येयवस्तुसाक्षात्काररूपावस्थितिः ।

मन्त्री—भगवन्,

एवंभूताः क इव घटते चित्तवृत्तीर्निरोद्धुं
वैराग्येणाभ्यसनविधिना स्याच्चिरात्तन्निरोधः ।
जेयः शीघ्रं रिपुरपरथा न स्थितिर्नः पुरेऽतो
योगे सिद्धिर्भवति च यथानुग्रहस्ते तथास्तु ॥ २३ ॥

जीवः—भगवन्,

स्मृतिस्ते सकलाभीष्टं दत्ते किमुत दर्शनम् ।
तत्प्राप्तममितैः पुण्यैः सद्यः सिद्धिं ददातु मे ॥ २४ ॥

देवी—(सदयम् ।) देव, संकप्पादो जेव्व से जोअसिद्धी होदु त्ति अणुगेह्णीअदु एसो । (क)

भगवान्—वत्स, देव्यैवमनुगृहीतोऽसि । संकल्पादेव ते योगसिद्धिर्भवतु ।

मन्त्री—राजन्, भगवत्या भगवता च संकल्पादेवाखिलयोगसिद्धिरनुगृहीता । तत्सर्वथा कृतार्थाः स्मः ।

राजा—(सप्रणामम् ।) अनुगृहीतैवेयम् । यतः ।

या प्रत्यक्षपदार्थमात्रविषया सा योगसंस्कारतः
संस्कारान्प्रतिबध्नतीतरकृतान्धीः कापि मे जृम्भते ।
सूक्ष्मं यत्तु विदूरमव्यवहितं सर्वान्विशेषान्स्फुटं
पश्याम्येष यथावदद्य परमार्थोद्भूतया प्रज्ञया ॥ २५ ॥

आश्चर्योऽयं भगवत्प्रसादमहिमा ।

भगवान्—देवि, एवं संप्रज्ञातसमाधिरेतस्य प्रादुर्भूतः, य एवमालम्बनामनुभवति ऋतंभरां नाम प्रज्ञाम् । अतः परं निर्बीजयोगसंज्ञमसंप्रज्ञातसमाधिमस्यानुगृह्णामि ।

---

(क) देव, संकल्पादेवास्य योगसिद्धिर्भवत्वित्यनुगृह्यतामेषः ।

**देवी**—अणुगेह्णीअदु अप्पणिव्विसेसो एसो । (क)

**जीवः**—(सहर्षोल्लासरोमाञ्चम् ।) आश्चर्यमाश्चर्यम् ।

भगवन्करुणासमित्समिद्धे दृढनिर्बीजसमाधियोगवह्नौ ।
प्रविलापितसर्वचित्तवृत्तिः परमानन्दघनोऽस्मि नित्यतृप्तः ॥ २६ ॥

**भगवान्**—देवि, झटिति विघटिताखिलपराग्वृत्तिः प्रत्यगात्मैक्यानुभवरूपोऽसंप्रज्ञातसमाधिराविर्भूतो वत्सस्य । यत एवमनुभूतमर्थमनुवदति ।

**देवी**—देव, किदत्थो खु एसो जो एवंविधस्स देवाणुग्गहस्स भाअणं जादो । (ख)

**भगवान्**—संप्रत्येनं व्युत्थाप्य प्रकृतकार्यप्रवणं करोमि । (जीवं प्रति ।) वत्स, अन्यदपि किंचिदनुशासनीयोऽसि ।

**जीवः**—(व्युत्थाय ।) भगवन्, अवहितोऽस्मि ।

**भगवान्**—

प्राचीनः सचिवः प्रियस्तव सुहृद्यो ज्ञानशर्मा मुनिः
सोऽन्यस्यापि सुदुर्लभः स भवता मान्यः सदाहं यथा ।
श्रेयःसंघटनाय हन्त भवतः सत्यं स एवार्हति
प्रेयस्त्वैहिकमातनोतु सततं विज्ञानशर्मापि ते ॥ २७ ॥
शश्वज्ज्ञानादभिन्नः सन्विज्ञानमपि मानय ।
एवं सति घटेयातां भुक्तिमुक्ती करे तव ॥ २८ ॥

**राजमन्त्रिणौ**—(साष्टाङ्गं प्रणम्योत्थाय ।) अनुगृहीतौ स्वः ।

**देवी**—सुमरणमेत्तसंणिहिदं णाणसम्माणं सचिवं विण्णाणेण समं मुत्तविरोहं करिअ दुवे वि मन्तिणो रण्णो हत्थे समप्पअन्तेण भअवदा बहुलीकिदं भत्तवत्सलत्तणम् । (ग)

---

(क) अनुगृह्यतामात्मनिर्विशेष एषः ।

(ख) देव, कृतार्थः खल्वेष य एवंविधस्य देवानुग्रहस्य भाजनं जातः ।

(ग) स्मरणमात्रसंनिहितं ज्ञानशर्माणं सचिवं विज्ञानेन समं मुक्तविरोधं कृत्वा द्वावपि मन्त्रिणौ राज्ञो हस्ते समर्पयता भगवता बहुलीकृतं भक्तवत्सलत्वम् ।

(नेपथ्ये ।)

जीवे शिवप्रापितयोगसिद्धौ कालो जनान्ध्येन समं तमोवत् ।
पापो विषूच्या सह राजयक्ष्मा गदैरसाध्यैः सह नाशमेति ॥ २९ ॥

ईशानस्य निदेशात्प्राप्ता साप्यत्र शांकरी भक्तिः ।
चत्वारोऽपि पुमर्थाः पुंभिर्यस्याः प्रसादतो लभ्याः ॥ ३० ॥

**मन्त्री**—(आकर्ण्य ।) प्रियं नः प्रियम् । भगवान्काल एष एवं नः प्रियमाचष्टे ।

**राजा**—(सहर्षोल्लासम् ।)

मूर्धन्यमण्डलनिकेतसुधांशुबिम्ब-
निःष्यन्दिशीतलसुधास्रुतिनिर्वृताङ्गः ।
मेघावृतिव्यपगमे गगनं यथाच्छं
चैतन्यमावरणवर्जितमस्मि तद्वत् ॥ ३१ ॥

**मन्त्री**—एवमेवायं जीवो राजा भगवतोः प्रसादान्नीरोगो नित्यमुक्तो निराबाधो बहुकालं जीयादिति प्रार्थये ।

**भगवान्**—तथैवास्तु ।

**देवी**—तह होदु । (क)

**राजा**—(सहर्षविस्मयं मन्त्रिणं प्रति ।)

मन्त्रिञ्जन्मैव दोषः प्रथममथ तदप्याधिभिर्व्याधिभिश्चे-
ज्जुष्टं कष्टं बतातः किमधिकमपि तु त्वन्मतेर्वैभवेन ।
देव्या भक्त्याः प्रसादात्परमशिवमहं वीक्ष्य कृच्छ्राणि तीर्णः
सर्वाणि द्राक्तदत्यद्भुतमिह शुभदं संविधानं तवेदम् ॥ ३२ ॥

**मन्त्री**—राजन्,

बहुजन्मार्जितैः पुण्यैस्तावकैरेष तोषितः ।
सर्वाभीष्टं ददातीशः संविधानं किमत्र मे ॥ ३३ ॥

**भगवान्**—वत्स, किमतः परमन्यत्तव प्रियं कुर्मः ।

---

(क) तथा भवतु ।

**राजा**—देवदेव भगवन्, सर्वमपि प्रियमाचरितमेव ।

सर्वेऽपि मे प्रशमिता रिपवः पुरेऽभू-
दारोग्यमैक्षिषि भवन्तमुमासहायम् ।
योगं ततस्त्वदुपदिष्टमवाप्य जीव-
न्मुक्तोऽस्मि ते करुणया किमतः प्रियं मे ॥ ३४ ॥

तथापीदमस्तु भरतवाक्यम् ।

पर्जन्यः समयेऽभिवर्षतु फलं वाञ्छानुरूपं महीं
प्रौढामात्यनिरूपिते पथि महीपालाः पदं तन्वताम् ।
कर्णालंकृतये भवन्तु विदुषां कान्ताः कवीनां गिरो
भूयादस्य कवेश्चिरायुररुजो भक्तिश्च शैवी दृढा ॥ ३५ ॥

(इति निष्क्रान्ताः सर्वे ।)

कृतिरियं श्रीमद्भारद्वाजकुलजलधिकौस्तुभस्य श्रीनरसिंहरायमन्त्रिवरनन्दनस्य श्रीमदानन्दरायमखिनः ।

**समाप्तोऽयं ग्रन्थः ।**

---

१. अयं जीवानन्दनप्रणेता श्रीमदानन्दरायमखी नृसिंहरायाध्वरिसूनुस्त्र्यम्बकदीक्षितस्य भ्रातृव्यस्तञ्जौरनगरमहीपतेरेकक्षितिपालवंशतिलकस्य शरभापरपर्यायस्य श्रीशाहराजस्य मन्त्रिप्रवर आसीदित्यादि सर्वं जीवानन्दनस्यैतत्प्रणीतस्यैव विद्यापरिणयनाटकस्य च प्रस्तावनातः प्रतीयते. स च शरभमहीपतिः ख्रिस्ताब्दीयसप्तदशशतकपूर्वार्धे आसीदिति स एवास्य समयः. एतत्कृतिषु जीवानन्दनं विद्यापरिणयं चेति नाटकद्वयमस्माभिरुपलब्धम्. जीवानन्दने यद्यपि नास्ति कवित्वचमत्कारस्तथापि संविधानकमनुच्छिष्टं चिकित्साशास्त्रानुकूलमिति कृत्वैवास्य काव्यमालायां प्रवेशः. तत्र जयपुरराजगुरुकुलप्रसूतभट्टश्रीकृष्णकुमाराणां संग्रहादेकमेवास्य शुद्धं पुस्तकमुपलब्धम्. चिरं विहितेऽप्यन्वेषणे पुस्तकान्तरालाभात्तस्मादेव पुस्तकादेतन्मुद्रणमकारीति भद्रम्.